श्रीः ।

# श्रीमद्बृहत्पाराशरहोराशास्त्रम्.

## ( पूर्वखण्डसारांशमूलम् )

## उत्तरखंडंच ।

जटाशंकरसूनुना ज्योतिर्विदा श्रीधरेण

विरचितया सुबोधिन्या संस्कृतटीकया सभाषया

समलंकृतः—

सोऽयंग्रन्थः

पूर्वखण्डे अमृतसरपुरनिवासि नानकचन्द्रतनय गिरिधरलाल शर्मणा,

उत्तरखण्डे च खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनूजन्मना

गोविन्द शर्मणा शास्त्रिणा संशोधितः

पंडित शिवलालात्मज श्रीधरेण

अस्य पुस्तकस्याधिकारिणआज्ञया

मुंबय्यां,

स्वीये "ज्ञानसागर" मुद्रणालये पुनर्वारं मुद्रयित्वा प्रकाशितः

भाद्रपदशु० १ शकः १८२१ संवत् १९५६



मूल्यं मंच मुद्रिकाः (१)





विद्याविनोदरसिकान् विज्ञापयामि.

अस्मिन्मुद्रणालये महाभारतादि पुराणग्रन्थाः व्याकरण
काव्य नाटक चंप्वादयोग्रन्थाः वैद्यकग्रन्थाः धर्मशास्त्र
ग्रन्थाः कर्मकाण्डग्रन्थाः वैदिकग्रन्थाः इत्यादि
सर्वेपिग्रन्थाः सीसकाक्षरैर्मुद्रिताः संति,
तेच ग्राहकगणेभ्यः यथार्थ
मूल्येन मिलिष्यंति.

---

॥ श्रीः ॥

# विद्वदभ्यर्थना।

स्वस्ति श्रीमदुदयददयदल्दलनजनितापरिमितविततदिगन्तविश्रान्तकान्तकीर्तिषु अतीतानागतवर्तमानसमयत्रितयसमालोचननिपुणेषु न पुनःस्वल्पीयसैवाध्ययनेनानुकृततलस्पृष्टखलखलायमानजलवैभवेषु श्रीमद्विद्वद्वृन्देषु सुविनीताविगीतस्य नीचैस्तनाभिधेयस्य मे परः सहस्रप्रणतिपुरःसरं प्रार्थना निकुरम्बैकसारभूता विज्ञापना समुल्लसतात्।

भोः पंडितप्रवराः! इतः पूर्वं बहुलपंडितैः कालज्ञानसाधनीभूता ज्योतिःशास्त्रग्रंथा अनेके संमुद्य प्रकाशिताः परोपकारैककर्तव्यताकाः समुपलभ्यन्ते। अपि च तानेव ग्रन्थाननुसृत्यार्वाचीनपंडिताः कालचर्यामवगत्य व्यवहरन्ति। परं च होराशास्त्रस्य कश्चिदप्यार्षग्रंथोऽद्यापि केनापि न संमुद्रितः नापि प्रकाशमानीतोऽतो न क्वचिदपि व्यवहृतोऽपि दृश्यते। किंचात्र भूतले होराशास्त्रग्रन्थाश्चाष्टादशसंख्याकाः सम्यक्प्रवृत्ताः संतीति तावत्कश्यपवचनाच्छास्त्रकर्तृनामनिर्देशनादनुमीयते। तत्र यथा—

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरंगिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो मनुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः॥ इति॥

अपरं चैतस्य ज्योतिःशास्त्रस्य काल्पनिकत्वम्, न प्रथमत उत्पत्तिरासीदिति ज्ञानलवदुर्विदग्धैरधुनातनैर्नव्यजनैर्न तिलमात्रमपि भ्रमितव्यम् यथोक्तमेतस्योत्पादनप्रवर्तनपारंपर्यं वासिष्ठेन महर्षिणा—

ज्योतिःशास्त्रं समग्रं प्रथमपुरुषतः स्वर्णगर्भाद्विदित्वा
पूर्वं ब्रह्मा ततोऽयं निखिलमुनिगणप्रार्थनाच्चचकार।

तच्चेदं सुप्रसन्नं मृदुपदनिकरैर्गृह्यमध्यात्मरूपम्
शश्वद्विश्वप्रकाशं ग्रहचरितविदां निर्मलं ज्ञानचक्षुः ॥ इति ॥

तथा च सर्वेऽपि महर्षिप्रोक्ता ज्योतिःशास्त्रग्रंथाः सर्वथैव सर्वदैव सर्वेषामेव मान्या भवितुमर्हन्तीति साम्प्रतमेव । तत्रापि प्रवर्तमानेऽस्मिंश्चतुर्थे कलीयुगे श्रीमन्महामुनिश्रीपराशरमुनेरेवानुभवसिद्धत्वेन प्राधान्यममिहितं दृश्यते यथा चोक्तम्—

कृते तु मानवं शास्त्रं त्रेतायां बादरायणिः ।
द्वापरे शंखलिखितौ कलौ पाराशरः स्मृतः ॥ इति ॥

अपरं च—

कृते पैतामहं शास्त्रं त्रेतायां बादरायणम् ।
गार्गीयं द्वापरे प्रोक्तं कलौ तार्तीयिकं स्मृतम् ॥ इति ॥

भोः पण्डिताः ! अतोऽस्माभिरयमारंभः समारब्धः खलु । अस्य बृहत्पाराशरहोराशास्त्रस्य परोपकारैकतात्पर्यवत्या मत्या प्रकाशनेन तत्कार्यसिषाधयिषया च पुस्तकसंपादनेऽद्य यावद्द्वादशवर्षं प्रकृष्टप्रयत्नं समारभ्य क्वचित्क्वचित् किंचिद्यथालब्धग्रन्थान्महता प्रयासेन देशविदेशातिलङ्घनविलङ्घनपरिश्रमेण संपाद्य संचित्य संमूढीकृतोऽयं ग्रंथः । तत्राप्यस्य ग्रन्थस्य परिमितिश्च शताध्यायसंख्यायुता वर्तते इति तावदस्यैव ग्रन्थस्यान्तिमश्लोकार्थतोनिष्पद्यते । तत्र च यथोक्तम्—

एवं होराशताध्यायी सर्वपापप्रणाशिनी ।
युगेषु च चतुर्ष्वेव प्रत्यक्षफलदायिनी ॥ इति ॥

तत्र चास्मिन् ग्रन्थे खंडद्वयम् । पूर्वखंडमुत्तरखंड च । तन्मध्ये पूर्वखंडसमुदिताध्यायसंख्या चाशीतिसंख्यापरिमिता वर्तते इति तावदस्यैवोत्तरखण्डस्य प्रथमश्लोकार्थत एवावगम्यते । यथोक्तं तत्र—

भगवन् सर्वमाख्यातं शातकं विस्तरेण मे ।
ससहस्रायुतग्रंथैरशीत्यध्यायसंयुतैः ॥ इति ॥

किंचास्य ग्रंथस्य समुदितपद्यसंख्या च द्वादशसहस्रपरिमिता विद्यते । तत्र पू-

पखंड तूपरितनश्लोकार्थतएवैकादशसहस्रपरिमिता। उत्तरखंडे चैकसहस्रपरिमितेति यथायथं सर्वमवधेयं सुधीभिः। तत्र विशेषश्च—

मया बहुलतरप्रयत्नसमारंभणेऽपि समग्रशताध्यायपरिमितो ग्रन्थो नोपलम्भितः अपि च समग्रमुत्तरार्धमाद्योपान्तं यथानुगतमुपलम्भितम्। पूर्वार्द्धं च खंडशः खंडशः संप्राप्तं न कुत्रापि समग्रं समुपलब्धमिति यथाप्राप्तं यथाप्राप्तं संचित्य संचित्य सम्यक्तया विषयान्समालोड्य क्वचित्क्वचिदपूर्णं दृष्ट्वाधुनातनविशेषप्रबलग्रंथकारसदुक्तिसमावेशनेन तत्स्थविषयसमीकरणेन संव्यवस्थाप्यैकपञ्चाशदध्यायपरिणद्धं कृतम्। तच्चापूर्णं दृष्ट्वा न टीकाविषयीकृतम्। उत्तरार्द्धं च समग्रमुपलभ्य प्रवर्तमानसमये तदुपयोगं चावलोच्य टीकाद्वयेन समलंकृतं कृतम्। अस्तु श्रीः।

अथ चैतद्ग्रन्थोपलम्भने यैर्यैः पण्डितैः पुस्तकप्रदानेन मम साहाय्यं कृतं तेषां तेषामुपकृतिस्मृतिसम्पादकनामाभिधानानि तावत्प्रदर्शयामि।

**प्रथमं च पुस्तकम्**—अस्मद्गुरूणां सम्प्रति वैकुंठपीठाविकुंठितलुंठनसादाराणां कोटाग्रामनिवासिनां श्रीमदौदीच्यसहस्रजातीयानां **अम्बालालशर्मणां** समीपतः किञ्चित्पूर्वखण्डं सम्प्राप्तम्।

**द्वितीयं च**—दाक्षिणात्यतंजावरग्रामनिवासि**विष्णुपंत**शर्मशास्त्रिणः सकाशाद्द्वादशशतश्लोकात्मकं पूर्वखण्डं संप्राप्तम्।

**तृतीयं च**—मुंबय्यां ज्योतिर्वित्पंडितहरजीवनशर्मशास्त्रिणः सकाशात् किंचित्पूर्वखण्डं समुपलब्धम्।

**तुर्यं च**—श्रीमन्महामोक्षनगरीश्रीकाशीपुरीतः प्रवरपण्डित**गौरीशङ्कर**शर्मणः शास्त्रिणः सकाशात्समग्रोत्तरखंडं समुपलब्धम्।

**पंचमं च**—अमृतसरनिवासिपंडितरामदत्तशर्मणः शास्त्रिणः समीपतः समग्रमुत्तरखंडं लब्धम्।

**षष्ठं च**—अस्मन्मित्रवर्यमहादेवदीक्षितसकाशात्समग्रमुत्तरखंडं लब्धम्।

एतेभ्यः शास्त्रिभ्यः एतद्ग्रन्थस्यास्माकं प्राप्तिरभूत्।

**अथ** चैतद्ग्रन्थोत्तरखंडस्थटीकाकरणे येषां येषां साहाय्यमासीत्तेषां तेषां चेमानि नामधेयानि—

# विद्वदभ्यर्थना।

प्रथमतः अमृतसरनगरनिवासिपंडितगिरिधारीलालशर्मणः

ततश्च—जयपुरनगरनिवासिपंडितशिवदत्तशर्मणः।

ततश्च—जयपुरनिवासिमगनीरामशर्मणः।

तदनंतरं च—धौरेयोपाव्हश्रीकृष्णशर्मणः।

ततश्च—औरंगाबादनिवासिज्योतिर्वित्पंडितश्रीहरिकृष्णशर्मणः।

तदुत्तरं च—खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टात्मज गोविंद शर्मणः शास्त्रिणः संशोधने विषयसमीकरणे च।

एवमुक्ताभिधेयानां च सर्वेषां शास्त्रिणां बहूनुपकारान्संस्मरामि।

विदुषामग्रतश्च प्रार्थयामि। यदि समग्रपूर्वखण्डसंपादनेन मां कृतार्थमकरिष्यंस्तर्हि तेषां बहूनुपकारानहमस्मरिष्यम्। इति सर्वं शिवम्।

| | |
|---|---|
| भाद्रपदशुक्लपक्षः शके १८२१<br>विक्रमशकाब्दाः १९५६ | श्रीमज्जटाशंकरसूनुज्योतिर्वित्-<br>श्रीधरशर्मा. |

---





# अथ श्रीमद्बृहत्पाराशरहोरापूर्वखंडसारांशस्थ-विषयानुक्रमणिका.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| ुदायाष्टकवर्गफलम् | १३९ |
| फलम् | १४० |
| शांतिफलम् | ,, |

## एकविंशोऽध्यायः २१.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| सादियोगनामसंज्ञाः | १४२ |
| श्रययोगाः | ,, |
| योगौ | ,, |
| कृतियोगाः | ,, |
| संख्यायोगनामानि | १४३ |
| षां फलानि क्रमेण | ,, |

## द्वाविंशोऽध्यायः २२.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| केसरीयोगफलम् | १४६ |
| लायोगफलम् | ,, |
| ाशुभयोगफलम् | ,, |
| तयोगफलम् | ,, |
| लयोगफलम् | १४७ |
| केमायोगफलम् | ,, |
| परयोगफलम् | ,, |
| वयोगफलम् | १४८ |
| योगफलम् | ,, |
| ंगयोगफलम् | ,, |
| नाथयोगफलम् | ,, |
| रदायोगफलम् | ,, |
| स्ययोगफलम् | १४९ |
| ियोगफलम् | ,, |
| ृगयोगफलम् | ,, |
| मोयोगफलम् | ,, |
| ुमयोगफलम् | १५० |
| रेजातयोगफलम् | ,, |
| ानिधियोगफलम् | ,, |
| रेजातादियोगाः | ,, |
| ाधियोगफलम् | ,, |
| चंद्रयोगाः | १५१ |
| आधियोगफलम् | ,, |
| सुनफाऽनफादुरुधराकेमद्रुमसंज्ञाः | ,, |
| सुनफाफलम् | ,, |
| अनफाफलम् | १५२ |
| दुरुधराफलम् | ,, |
| केमद्रुमफलम् | ,, |
| केमद्रुमभंगः | ,, |
| रवियोगाः | १५३ |
| वेसियोगफलम् | ,, |
| उभयचरीफलम् | ,, |
| पुंस्त्रीनपुंसकयोगाः | ,, |
| षट्क्लीबयोगाः | ,, |
| प्राणिनां वृत्तिनिर्णयः | १५४ |

## त्रयोविंशोऽध्यायः २३.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| अनेकविधमारकभेदाध्यायः | १५५ |

## चतुर्विंशोऽध्यायः २४.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| आयुर्दायाध्यायः | १५८ |
| दीर्घायनेकभेदानामायुष्यकम् | १६१ |

## पंचविंशोऽध्यायः २५.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| पुनः आयुर्दायाध्यायस्यद्वितीयःप्रकारः | १६७ |

## षड्विंशोऽध्यायः २६.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| रुद्रग्रहलक्षणम् | १७४ |
| माहेश्वरग्रहलक्षणम् | १८० |
| ब्रह्मग्रहलक्षणम् | ,, |
| ब्रह्ममाहेश्वरग्रहलक्षणम् | ,, |

## सप्तविंशोऽध्यायः २७.

| प्रतिपाद्यविषयाः । | पृ०सं० |
|---|---|
| पितृनिर्याणम् | १८२ |
| मातृनिर्याणम् | ,, |
| भ्रातृनिर्याणम् | ,, |
| भगिनीपुत्रनिर्याणम् | १८३ |

## षट्त्रिंशोऽध्यायः ३६.



## सप्तत्रिंशोऽध्यायः ३७.



## अष्टत्रिंशोऽध्यायः ३८.



## एकोनचत्वारिंशोऽध्यायः ३९.

## इति बृहत्पाराशरहोरापूर्वखंडस्थविषयानुक्रमणिका स०

---

## अथ बृहत्पाराशरहोरोत्तरभागस्थविषयानुक्रमणिका.

## तृतीयोऽध्यायः ३.



## चतुर्थोऽध्यायः ४.



## पंचमोऽध्यायः ५.

| प्रतिपाद्यविषयाः। | पृ०सं० |
| --- | --- |



## द्वादशोऽध्यायः१२.



## त्रयोदशोऽध्यायः १३.



## चतुर्दशोऽध्यायः १४.

## पंचदशोऽध्यायः १५.



## षोडशोऽध्यायः १६.

**इति श्रीमद्बृहत्पाराशरहोरोत्तरभागस्थ-विषयानुक्रमणिका संपूर्णम्.**

माधवप्रसाद ....
५४/८ ....
....

श्रीगणेशाय नमः।

# अथ बृहत्पाराशरहोरासारांशः

## पूर्वखंडम्।

श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः॥ अथ मंगलाचरणम्॥ प्रणम्य गिरिजापतिं हरिविरिंचिदेवैः स्तुतं विलोक्य च महत्तरां सुकृतिवृद्धपाराशरीम्॥ ततश्च कथयाम्यहं विविधभेदसारांशकं ग्रहादिफलसंग्रहं विबुधश्रीधराख्यो द्विजः॥ १॥

### मैत्रेय उवाच।

नमस्तस्मै भगवते बोधरूपाय सर्वदा॥ परमानंदकंदाय गुरवेऽज्ञानध्वंसिने ॥ २॥ इति स्तुत्या सुसंहृष्टो मुनिस्तत्त्वविदां वरः॥ अथादिदेश सच्छास्त्रं सारं यज्ज्योतिषां शुभम्॥ ३॥

### पराशर उवाच।

शुक्लांबरधरं विष्णुं शुक्लांबरधरां गिरम्॥ प्रणम्य पांचजन्यं च वीणां याम्यां धृतं हयम्॥ ४॥ सूर्यं नत्वा ग्रहपतिं जगदुत्पत्तिकारणम्॥ वक्ष्यामि वेदनयनं यथा ब्रह्ममुखाछ्रुतम्॥५॥ शांताय गुरुभक्ताय ऋजवेऽर्चितस्वामिने॥ आस्तिकाय प्रदातव्यं ततः श्रेयो ह्यवाप्स्यति॥ ६॥ न देयं परशिष्याय नास्तिकाय शठाय च॥ दत्ते प्रतिदिनं दुःखं जायते नात्र संशयः॥७॥ एको व्यक्तात्मको विष्णुरनादिः प्रभुरीश्वरः॥ शुद्धसत्त्वो जगत्स्वामी निर्गुणस्त्रिगुणान्वितः॥ ८॥ संसारकारकः श्रीमान्निमित्तात्मा प्रतापवान्॥ एकांशेन जगत्सर्वं सृजत्यवति लीलया ॥ ९॥ त्रिपादं तस्य देवस्य ह्यमृतं तत्त्वदर्शिनः॥ विदंति त-

त्प्रमाणं च सप्रधानं तथैकपात् ॥ १० ॥ व्यक्ताव्यक्तात्मको विष्णुर्वासुदेवस्तु गीयते ॥ यदव्यक्तात्मको विष्णुः शक्तिद्वयसमन्वितः ॥ ११ ॥ व्यक्तात्मकस्त्रिशक्तीभिः संयुतोऽनंतशक्तिमान् ॥ सत्वप्रधाना श्रीशक्तिर्भूशक्तिश्च रजोगुणा ॥ १२ ॥ शक्तिस्तृतीया या प्रोक्ता नीलाख्या ध्वांतरूपिणी ॥ वासुदेवश्चतुर्थोऽभूच्छ्रीशक्त्या प्रेरितो यदा ॥१३॥ संकर्षणश्च प्रद्युम्नोऽनिरुद्ध इति मूर्तिधृक् ॥ तमःशक्त्याऽन्वितो विष्णुर्देवः संकर्षणाभिधः ॥१४॥ प्रद्युम्नो रजसा शक्त्याऽनिरुद्धः सत्वया युतः ॥ महान्संकर्षणाज्जातः प्रद्युम्नाद्यदहंकृतिः ॥ १५ ॥ अनिरुद्धात्स्वयं जातो ब्रह्माहंकारमूर्तिधृक् ॥ सर्वेषु सर्वशक्तिश्च स्वशक्त्याऽधिकया युतः ॥ १६ ॥ अहंकारस्त्रिधा भूत्वा सर्वमेतदविस्तरात् ॥ सात्विको राजसश्चैव तामसश्चेदहंकृतिः ॥ १७ ॥ देवा वैकारिकाज्जातास्तैजसादिंद्रियाणि च ॥ तामसाच्चैव भूतानि खादीनि स्वस्वशक्तिभिः ॥ १८ ॥ श्रीशक्त्या सहितो विष्णुः सदा पाति जगत्त्रयम् ॥ भूशक्त्या सृजते विष्णुर्नीलशक्त्या युतोऽत्ति हि ॥ १९ ॥ सर्वेषु चैव जीवेषु परमात्मा विराजते ॥ सर्वं हि तदिदं ब्रह्मन् स्थितं हि परमात्मनि ॥ २० ॥ सर्वेषु चैव जीवेषु स्थितं ह्यंशद्वयं क्वचित् ॥ जीवांशमधिकं तद्वत्परमात्मांशकः किल ॥ २१ ॥ सूर्यादयो ग्रहाः सर्वे ब्रह्मकामद्विषादयः ॥ एते चान्ये च बहवः परमात्मांशकाधिकाः ॥ २२ ॥ शक्तयश्च तथैतेषामधिकांशाः श्रियादयः ॥ अन्येषु स्वस्वशक्तिषु ज्ञेया जीवांशकाधिकाः ॥ २३ ॥

## मैत्रेय उवाच ।

रामकृष्णादयो ये च ह्यवतारा रमापतेः ॥ तेऽपि जीवांशसंयुक्ताः किं वा ब्रूहि मुनीश्वर ॥ २४ ॥

## पराशर उवाच।

रामः कृष्णश्च भो विप्र नृसिंहः सूकरस्तथा ॥ एते पूर्णावताराश्च ह्यन्ये जीवांशकान्विताः ॥ २५ ॥ अवताराण्यनेकानि ह्यजस्य परमात्मनः ॥ जीवानां कर्मफलदो ग्रहरूपी जनार्दनः ॥ २६ ॥ दैत्यानां बलनाशाय देवानां बलवृद्धये ॥ धर्मसंस्थापनार्थाय ग्रहा जाताः शुभाः क्रमात् ॥ २७ ॥ रामोऽवतारः सूर्यस्य चंद्रस्य यदुनायकः ॥ नृसिंहो भूमिपुत्रस्य बुधः सोमसुतस्य च ॥ २८ ॥ वामनो विबुधेज्यस्य भार्गवो भार्गवस्य च ॥ कूर्मो भास्करपुत्रस्य सैंहिकेयस्य सूकरः ॥ २९ ॥ केतोर्मीनावतारश्च ये चान्ये तेऽपि खेटजाः ॥ परमात्मांशमधिकं येषु ते खेचराभिधाः ॥ ३० ॥ जीवांशमधिकं येषु जीवास्ते वै प्रकीर्तिताः ॥ सूर्यादिभ्यो ग्रहेभ्यश्च परमात्मांशनिःसृताः ॥ ३१ ॥ रामकृष्णादयः सर्वे ह्यवतारा भवंति वै ॥ तत्रैव ते विलीयंते पुनः कार्योत्तरे सदा ॥ ३२ ॥ जीवांशनिःसृतास्तेषां तेभ्यो जाता नरादयः ॥ तेऽपि तत्रैव लीयंते तेऽव्यक्ते समयंति हि ॥३३॥ इदं ते कथितं विप्र सर्वं यस्मिन्भवेदिति ॥ भूतान्यपि भविष्यंति तत्तत्सर्वज्ञतामियात् ॥ ३४ ॥ विना तज्ज्योतिषं नान्यो ज्ञातुं शक्नोति कर्हिचित ॥ तस्मादवश्यमध्येयं ब्राह्मणैश्च विशेषतः ॥३५॥ यो नरः शास्त्रमज्ञात्वा ज्योतिषं खलु निंदति ॥ रौरवं नरकं भुक्त्वा चांधत्वं चान्यजन्मनि ॥ ३६ ॥ इतिश्रीबृहत्पाराशरहोरापूर्वखंडसारांशे शास्त्रावतारणं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥

## अथ जन्मलग्नकुंडली भावविलोकनार्थं स्वरूपमाह।

तिर्यक्पंच ततोर्ध्वगाश्च लिखिता रेखाश्च राश्यात्मकं चक्रं स्यात्पुरुहूतदिग्ग्रहमुखा लग्नादिराशिग्रहाः ॥ सैंलेख्योदयचंद्र-

कारकपदारूढात्महोराघटी वर्गाणां च दशोक्तलग्नवशात्तत्तत्फलं वक्ष्यति ॥ १ ॥

## पराशर उवाच ।

कालात्मा च दिवानाथो मनःकुमुदबांधवः ॥ सत्त्वं कुजो विजानीयाद्बुधो वाणीप्रदायकः ॥ २ ॥ देवेज्यो ज्ञानसुखदो भृगुर्वीर्यप्रदायकः ॥ विचार्यतामिदं सर्वं छायासूनुश्च दुःखदः ॥ ३ ॥ राजानौ भानुहिमगू नेता ज्ञेयो धरात्मजः ॥ बुधो राजकुमारश्च सचिवौ गुरुभार्गवौ ॥ ४ ॥ प्रेष्यको रविपुत्रश्च सेनास्वर्भानुपुच्छकौ ॥ एवं क्रमेण वै विप्र सूर्यादीनि विचिंतयेत् ॥ ५ ॥ रक्तश्यामो दिवाधीशो गौरगात्रो निशाकरः ॥ अत्युच्चांगो रक्तभौमो दूर्वाश्यामो बुधस्तथा ॥ ६ ॥ गौरगात्रो गुरुर्ज्ञेयः शुक्रः श्यामः स्तथैव च ॥ कृष्णदेहो रवेःपुत्रो ज्ञायते द्विजसत्तम ॥७॥ वह्न्यंबुशिखिकाविष्णुबिडौजशचिका द्विज ॥ सूर्यादीनां खगानां च नाथा ज्ञेयाः क्रमेण च ॥ ८ ॥ क्लीबौ द्वौ सौम्यसौरी च युवतींदुभृगू द्विज ॥ नराः शेषाश्च विज्ञेया भानुर्भौमो गुरुस्तथा ॥ ९ ॥ अग्निभूमिनभस्तोयवायवः क्रमतो द्विज ॥ भौमादीनां ग्रहाणां च तत्वाश्चामी प्रकीर्तिताः ॥ १० ॥ गुरुशुक्रौ विप्रवर्णौ कुजार्कौ क्षत्रियौ द्विज ॥ शशिसौम्यौ वैश्यवर्णौ शनिः शूद्रो द्विजोत्तम ॥११॥ चंद्रसूर्यगुरुसौम्या भृग्वारशनयो द्विज ॥ सत्वं रजस्तम इति स्वभावो ज्ञायते क्रमात् ॥ १२ ॥ मधुपिंगलदृक्सूर्यश्चतुरस्रः शुचिर्द्विज ॥ पित्तप्रकृतिको धीमान्पुमानल्पकचो द्विज ॥१३॥ बहुवातकफःप्राज्ञश्चंद्रो वृत्ततनुर्द्विज॥शुभदृक् मधुवाक्यश्च चंचलोमदनातुरः॥१४॥क्रूररक्तारुणो भौमश्चपलो दारमूर्तिकः ॥ पित्तप्रकृतिकः क्रोधीकृशमध्यतनुर्द्विज॥१५॥वपुःश्रेष्ठो क्लिष्टवाक् च ह्यतिहास्यरु-

मिर्बुधः॥पित्तवान्कफवान्विप्र मारुतप्रकृतिस्तथा॥१६॥ वृद्धगात्रो गुरुश्चैव पिंगलो मूर्द्धजेक्षणः॥कफप्रकृतिको धीमान् सर्वशास्त्रविशारदः॥१७॥ सुखी कांतवपुः श्रेष्ठः सुलोचनभृगोः सुतः॥काव्यकर्ता कफाधिक्यानिलात्मा वक्रमूर्धजः॥१८॥कृशदीर्घतनुः शौरिः पिंगदृष्ट्यनिलात्मकः ॥ स्थूलदंतो लसत्पुंगःखररोमकचो द्विज॥ ॥ १९ ॥ धूम्राकारो नीलतनुर्वनस्थोऽपि भयंकरः ॥ वातप्रकृतिको धीमान् स्वर्भानुः प्रतिमः शिखी ॥ २० ॥ अस्थिरक्तस्तथा मज्जा त्वक्चर्म वीर्यस्नायवः ॥ तासामीशाः क्रमेणोक्ता ज्ञेयाः सूर्यादयो द्विज ॥ २१ ॥ देवालयजलं वह्निक्रीडादीनां तथैव च ॥ कोश शय्याद्युत्करणामीशाः सूर्यादयः क्रमात् ॥ २२ ॥ अयनक्षण वारर्तुमासपक्षसमा द्विज॥सूर्यादीनां क्रमाज्ज्ञेया निर्विशंकं द्विजोत्तम ॥ २३ ॥ कटुलवणतिक्तमिष्टमधुरेक्षुकषायकाः ॥ क्रमेण सर्वे विज्ञेयाः सूर्यादीनां द्विजोत्तम ॥ २४ ॥ बुधेज्यौ बलिनौ पूर्वे रविभौमौ च दक्षिणे॥वारुणः सूर्यपुत्रश्च सितचंद्रौ तथोत्तरे॥२५॥ निशायां बलिनश्चंद्रकुजसौरा भवंति हि ॥ सर्वदा ज्ञो बली ज्ञेयो दिनशेषा द्विजोत्तम ॥ २६ ॥ कृष्णे च बलिनः क्रूराः सौम्या वीर्ययुताः सिते॥सौम्यायने सौम्यखेटो बली याम्यायनेऽपरः॥२७॥ स्वदिवससमहोरामासपर्वः कालवीर्यकम् ॥ शकुबुगुशुचराद्या वृद्धितो वीर्यवत्तराः ॥ २८॥ स्थूलान् जनयति सूर्यो दुर्भगान्सूर्यपुत्रकः ॥ क्षीरोपेतांस्तथा चंद्रः कटुकाद्यान्धरासुतः ॥ २९ ॥ गुरुज्ञौ सफलान्विप्र पुष्पवृक्षान् भृगोःसुतः ॥ नीरसान्सूर्यपुत्रश्च एवं ज्ञेयाः खगा द्विज ॥ ३० ॥ राहुश्चांडालजातिश्च केतुर्जात्यंतरस्तथा ॥ शिखिस्वर्भानुमंदानां वल्मीकं स्थानमुच्यते ॥ ३१ ॥ चित्रकेथा फणींद्रस्य केतोश्छिद्रयुतो द्विज ॥ सीसं राहोर्नीलमणिः के-

तोर्ज्ञेयो द्विजोत्तम ॥ ३२ ॥ गुरोः पीतांबरं विप्र भृगोः क्षौमं तथैव च ॥ रक्तक्षौमं भास्करस्य इंदोः क्षौमं सितं द्विज ॥ ३३ ॥ बुधस्य तु कृष्णक्षौमं रक्तचित्रं कुजस्य च ॥ वस्त्रं चित्रं शनेर्विप्र पट्टवस्त्रं तथैव च ॥ ३४ ॥ भृगोर्ऋतुर्वसंतश्च कुजभान्वोश्च ग्रीष्मकः ॥ चंद्रस्य वर्षा विज्ञेया शरच्चैव तथा विदः ॥३५॥ हेमंतोऽपि गुरोर्ज्ञेयः शनेस्तु शिशिरो द्विज ॥ अष्टौ मासाश्च स्वर्भानोः केतोर्मासत्रयं द्विज ॥ ३६ ॥ राह्वारपंगुचंद्राश्च विज्ञेया धातुखेचराः ॥ मूलग्रहौ सूर्यशुक्रौ अपरा जीवसंज्ञकाः ॥ ३७ ॥ गृहेषु मंदो वृद्धोऽस्ति आयुर्वृद्धिप्रदायकः ॥ नैसर्गिके बहुसमान्ददाति द्विजसत्तम ॥ ३८ ॥

## अथ पंचांगस्थितग्रहेषु चालनमाह ।

स्वेष्टादग्रे भवेत्पंक्तिः पंक्तौ स्वेष्टं विशोधयेत् ॥ स्वेष्टात् पृष्ठे भवेत्पंक्तिः स्वेष्टे पंक्तिं विशोधयेत् ॥ ऋणं धनं तथा ज्ञेयं चालने विधिरेव हि ॥ ३९ ॥

## अथ ग्रहाणां तात्कालिकीकरणमाह ।

गतगम्यदिनाहतद्युभुक्तेः खरसाप्तांशवियुग्युतो ग्रहः स्यात् ॥ तत्कालभवस्तथा घटिघ्नाः खरसैर्लब्धकलोनसंयुतः स्यात् ॥४०॥

## ॥ टीका ॥

गतगम्येति । यस्मिन् दिवसे ग्रहसाधनं तस्माद्दिवसात् गतगम्या ये दिवसास्तैराहता गुणिता या द्युभुक्तिस्तत्सकाशात्खरसैः ६० षष्ट्याप्ता लब्धा येंऽशास्तैर्वियुक् रहितो युक् युतो ग्रहः कार्यः । गताश्चेद्दिवसास्तदा रहितः कार्यः । आगताश्चेद्दिवसास्तदा युक्तः कार्य इत्यर्थः । सः तत्कालभवस्तद्दिनजो ग्रहः स्यात् । तथा गतगम्यघटीघ्नाः गतेःसकाशात्खरसैर्लब्धः कलाभिरूनः युक्तः कार्यः स तात्कालिकः स्यादित्यर्थः ॥ ४० ॥

## अथ भयातभभोगसाधनम् ।

इष्टमधिकं नक्षत्रन्यूनं तदा इष्टादित्यनेन ज्ञेयम् ॥ इष्टाद्धिहीनं च दिनर्क्षनाडी भयातसंज्ञा भवतीह तस्य ॥ दिनर्क्षनाडी खरसेषु शुद्धा निजर्क्षयुक्तः सहिते भभोगः ॥ ४१ ॥ इष्टं न्यूनं नक्षत्रमधिकं तदा गतर्क्षनाड्येति ज्ञेयम् ॥ गतर्क्षनाडीखरसेषु शुद्धा सूर्योदयादिष्टघटीषु युक्ताः ॥ भयातसंज्ञा भवतीह तस्य निजर्क्षनाडीसहिते भभोगः ॥ ४२ ॥

## अथ चंद्रस्पष्टमाह ।

गतर्क्षं षष्टिगुणितं भभोगेन च भाजितम् ॥ दस्रादिषष्टिगुणितैर्लब्धं तत्र सुयोजयेत् ॥ ४३ ॥ तच्चापि द्विगुणं कृत्वा ह्यंकेन विभजेत्पुनः ॥ मृगांकलब्धमंशादीन्सुसाधय द्विजोत्तम ॥ ४४ ॥ खखशून्याष्टवेदेन गतिर्भभोगभाजिता ॥ एवं चंद्रस्य विज्ञेया रीतिः स्पष्टतरा बुधैः ॥ ४५ ॥

## अथोच्चनीचग्रहाः ।

अजो वृषमृगः कन्याकुलीरझषतौलिकाः ॥ सूर्यादीनां क्रमादेतास्तुंगसंज्ञाः प्रकीर्तिताः ॥ नीचास्तत्सप्तमा ज्ञेया ग्रहा नीचा विनिश्चिताः ॥ ४६ ॥ सूर्यस्य भागे दशमे तृतीये चंद्रस्य जीवस्य तु पंचमेंऽशे ॥ सौरस्य विंशे त्वधिसप्तकेतोर्विंधाद्भृगोः पंचदशे बुधस्य ॥ ४७ ॥ भौमस्य विंशेऽष्टयुते परोच्चैर्विंशल्लवे सूर्यसुतस्य नीचाः ॥ ४८ ॥

## अथ मूलत्रिकोणमाह ।

विंशतिरंशाः सिंहे कोणमपरे स्वभवनमर्कस्य ॥ उच्चं भागत्रितयं वृषमिंदोः स्यात्त्रिकोणमपरेंशाः ॥ ४९ ॥ द्वादशभागा मेषे त्रिकोणमपरे स्वभे तु भौमस्य ॥ उच्चफलं कन्यायां बुधस्य

तिथ्यंशकैः सदा चिंत्यम् ॥ ५० ॥ परतस्त्रिकोणजाते पंचभिरंशैः स्वराशिजं परतः ॥ दशभिर्भागैर्जीवत्रिकोणफलं स्वभं परं चापे ॥ ५१ ॥ शुक्रस्य तु तिथयोंऽशास्त्रिकोणमपरे तुले स्वराशिश्च ॥ कुंभे त्रिकोणनिजभे रविजस्य रविर्यथा सिंहे ॥ ५२ ॥

## अथ मित्रामित्रविधिमाह.

रवेः समो ज्ञः, सितसूर्यपुत्रावरी, परे ये सुहृदो वरायः॥ चंद्रस्य नारी, रविचंद्रपुत्रौ मित्रे, समाः शेषनभश्चराः स्युः ॥ ५३ ॥ समौ सितार्की,शशिजश्च शत्रुर्मित्राणि शेषाः पृथिवीसुतस्य॥शत्रुः शशी सूर्यसितौ च मित्रे, समाः परे स्युः शशिनंदनस्य ॥५४॥ गुरोर्ज्ञशुक्रौ रिपुसंज्ञकौ तु, शनिः समोऽन्ये सुहृदो भवंति ॥ शुक्रस्य मित्रे बुधसूर्यपुत्रौ, समौ कुजार्यावितरावरी तौ ॥५५॥ शनेः समो वाक्पतिरिंदुसूनुशुक्रौ च मित्रौ, रिपवः परेऽपि ॥ ध्रुवं ग्रहाणां चतुराननेन शत्रुत्वमित्रत्वसमत्वमुक्तम् ॥ ५६ ॥ दशायबंधुसहजस्वांत्यस्थास्ते परस्परम् ॥ सुहृद्भवेदधिसुहृत्समो मित्रं परः समः ॥ ५७ ॥ तथा त्रिकोणषष्ठाष्टसप्तैकस्थितखेचराः ॥ अन्योन्यं रिपुतां यांति तत्कालं तानि वै मुने ॥ ५८ ॥

तात्कालमैत्रीचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| चं. मं. शु. | सू. मं. बु. शु. | बृ. श. चं. र. बु. | चं. शु. मं. | श. मं. | चं. र. बु. | मं. बृ. |
| बु. बृ. श. | बृ. श. | शु. | सू. बृ. श. | शु. चं. र. बु. | श. मं. बृ. | शु. चं. र. बु. |
| मित्र. | २।३।४।१०।११।१२। | | | | | |
| शत्रु. | १।५।६।७।८।९। | | | | | |

निसर्गमैत्रीचक्रम्.

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रह |
|---|---|---|---|---|---|---|---|
| चं. मं. गु. | सू. बु. | र. चं. गु. | र. शु. | र. चं. मं. | बु. श. | बु. शु. | मित्र. |
| बु. | मं. गु. शु. श. | शु. श. | मं. गु. श. | श. | मं. गु. | गुरु | सम. |
| शु. श. | ० | बु. | चं. | बु. शु. | र. चं. | र. चं. मं. | शत्रु. |

अथ पंचधामैत्रीचक्रम्.

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रह. |
|---|---|---|---|---|---|---|---|
| चं. मं. | सू. बु. | बृ. सू. चं. | शु. | मं. | बु. | ० | ऽति मि. |
| ० | मं. शु. | श. | मं. | श. | ० | बृ. | मि. |
| शु. बृ. | ० | बु. | चं. र. | चं. र. | चं. र. | मं. शु. बु. | सम |
| बु. | बृ. श. | शु. | बृ. श. | ० | मं. बृ. | ० | शत्रु. |
| श. | ० | ० | ० | ० | शु. बु. | र. चं. | ऽति शत्रु |

अस्योदाहरणम्। उक्तस्थानादभीष्टग्रहः मित्रशत्रुसंज्ञो यथा सूर्यस्य चंद्रभौमभृगवो मित्राणि सौम्यगुरुशनयः शत्रवः। एवं सर्वत्र ज्ञेयम्। तात्कालिकनैसर्गिकमैत्रीचक्रयोरुभयोः संमीलितयोर्योगो भवति तदा पंचधा मैत्री भवति। मित्रे मित्रेऽतिमित्रं। समे मित्रे मित्रं। शत्रुमित्रे समं। सम शत्रू शत्रुः। शत्रु शत्रुरतिशत्रुः। यथा सूर्यस्य चंद्रभौमावतिमित्रं गुरुभृगू समौ, सौम्यः शत्रुः शनिरतिशत्रुः। एवं सर्वत्र ज्ञेयम्।

अथ शुभबलचक्रम्.

| उच्च. | मूल. | स्व. | मित्र. | सम. | नीच. | शत्रु. |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| ० | ४५ | ३० | १५ | ७ | ० | ० |
| ० | ० | ० | ० | ३० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० |

अथाशुभबलचक्रम्.

| उच्च. | मूल. | स्व. | मित्र. | सम. | नीच. | शत्रु. |
|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | १ | १ |
| ० | ७ | ४५ | ३० | ४५ | ० | ० |
| ० | ३० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० |

## अथ ग्रहाणां बलमाह.

स्वोच्चे शुभं बलं पूर्णं त्रिकोणे पादवर्जितम्॥ स्वर्क्षे दलं मित्रगेहे पादमात्रं प्रकीर्तितम्॥ ५९॥ पादार्धं समभे प्रोक्तं व्यर्थं नीचास्तशत्रुगे॥ तद्वदुष्टबलं ब्रूयाद्व्यत्ययेन विचक्षणः॥ ६०॥

## अथ धूमाद्यप्रकाशकग्रहस्पष्टीकरणम्.

नखलिप्ताधिके धूमे कृतिलिप्ताविहीनकाः ॥ केतौ कार्या गुरोर्बाक्याद्दक्षपादावसानकाः ॥ ६१ ॥ चत्वारो राशयो भानौ युक्तभागास्त्रयोदश ॥ धूमो नाममहादोषः सर्वकर्मविनाशकः ॥६२॥ धूमो मंडलतः शुद्धो व्यतीपातोत्रदोषदः॥ स षड्भेत्र व्यतीपाते परिवेषस्तु दोषकृत् ॥ ६३ ॥ परिवेषश्च्युतश्चक्रादिंद्रचापश्च दोषदः ॥ अत्यष्ट्यंशयुते चापे केतुखेटः परोविषम् ॥ ६४ ॥ एकराशियुते केतौ सूर्यः स्यात्पूर्ववत्समः ॥ अप्रकाशग्रहाश्चैते दोषाः पापग्रहाः स्मृताः ॥ ६५ ॥

### अस्योदाहरणम्.

सूर्य २।४।२८।१ चतुर्भवनसहितः सत्र्यंशैः त्रयोदशभागैरन्वितः ४।१३।२० अयं धूमः ६।१७।४८।१ पूर्वोक्तधूमः मंडलतो १२ द्वादशराशितः शुद्धोऽयं व्यतीपातः ५।१२।११।५९ अयं षड्राशियुक्तः परिवेषः ११।१२।११।५९। अयं चक्रात् १२ च्युतः इंद्रचापः १७।४८।१ अयं अत्यष्ट्यंशः सप्तदशांशा वित्र्यंशास्तैः १६।४० भागैरन्वितोऽयं ध्वजः १।४।२८।१ एकराशियुतो ध्वजः पूर्वतुल्यो रविः स्यादित्यर्थः २।४।२८।१।।१।२।३।४।५

| अप्रकाशिकक्षेपकाः स्युः | | | | | |
|---|---|---|---|---|---|
| धूमः + | | व्यतीपातः | परिवेषः | इंद्रधनुः | ध्वजः |
| रा. | ४ | १२ | ६ | १२ | ० |
| अंश. | १३ | ० | ० | ० | १६ |
| क. | २० | ० | ० | ० | ४० |

| अप्रकाशिकग्रहाः स्पष्टाः स्युः | | | | | | |
|---|---|---|---|---|---|---|
| धूमः | व्यतीपातः | परिवेषः | इंद्रधनुः | ध्वजः | गुलिकः | प्राणपदः |
| ६ | ५ | ११ | ० | १ | ५ | ३ |
| १७ | १२ | १२ | १७ | ४ | ६ | ४ |
| ४८ | ११ | ११ | ४८ | २८ | ० | ० |
| १ | ५९ | ५९ | १ | १ | ० | ० |

## अथ किंचिद्धूमादिकफलविचारमाह.

भान्विंदुलग्नगेष्वेषु वंशायुर्ज्ञाननाशनम् ॥ एषां ग्रहर्कदोषाणां स्थितिः पद्मासनोदिता ॥ ६६ ॥

॥ टीका ॥

भान्विति । जन्मकालीनसूर्यचंद्रलग्नानां पृथक् परिवेषादिभिस्त्रिभिस्त्रिभिर्योगवशात्फलत्रयनाशनं द्वयोर्द्वयमेकस्मिन्नेकफलनाशः एवं यथा यो य आधिक्ययोगस्तथाऽनिष्टफलाधिक्यमिति भावः ॥ ६६ ॥

## अथ जन्मकालइष्टलग्ननिश्चयार्थं गुलिकसाधनमाह.

रविवारादि शन्यंतं गुलिकादि निरूप्यते ॥ दिवसानष्टधा कृत्वा वारेशाद्गणयेत्क्रमात् ॥ ६७ ॥ अष्टमांशो निरंशः स्याच्छन्यंशो गुलिकः स्मृतः ॥ रात्रिरप्यष्टधा भक्ता वारेशात्पंचमादितः ॥ ६८ ॥ गणयेदष्टमः खंडो निष्पत्तिः परिकीर्तितः ॥ शन्यंशे गुलिकः प्रोक्तो गुर्वंशे यमघंटकः ॥ ६९ ॥ भौमांशे मृत्युरादिष्टो रव्यंशे कालसंज्ञकः ॥ सौम्यांशेऽर्द्धप्रहरकः स्पष्टकर्मप्रदेशकः ॥ ७० ॥

॥ टीका ॥

रव्यादिसप्तवारेषु दिनमानमष्टधा विभज्य तत्तद्वारेशं प्रथमखंडाधिपं कृत्वाऽग्रिमखंडेषु तत्तद्वारेशादग्रिमग्रहान् क्रमेणेशत्वेन जानीयात् । अष्टमः खंडस्तु निरीशः । एवंच सप्तसु वारेषु शन्यंशो गुलिकनामा । तथा च रविवारे सप्तमः सोमे षष्ठः भौमे पंचमः बुधे चतुर्थः गुरौ तृतीयः शुक्रे द्वितीयः शनौ प्रथमः खंडो गुलिको भवति । सप्तस्वपि वारेषु रात्रिमानमष्टधा विभज्य तद्वारेशात्पंचमाद्याः खंडाधिपाः ज्ञेयाः । रात्रावप्यष्टमः खंडो निरीशः । एवं च रविरात्रौ तृतीयः खंडः, सोमे द्वितीयः भौमे प्रथमः बुधे सप्तमः गुरौ षष्ठः शुक्रे पंचमः शनौ चतुर्थः खंडो गुलिको भवति । एवं सर्वदिने-रात्रौ च गुरुखंडो यमघंटनामा बुधखंडोऽर्द्धप्रहरकाख्यः रव्यंशः कालसंज्ञः भौमांशो मृत्युनामेति ज्ञेयम् । स्पष्टकर्म इति ॥ ७० ॥

## अस्योदाहरणम्.

दिनमानं ३३।१४ अष्टधाविभज्य ४।९।१५ लब्धं सौम्यदिने जन्म तर्हि सौम्यवारगुणकेन ४ गुण्यं १६।३७ गुलिकेष्टमस्योपरि लग्नानयनरीत्या नीतं गुलिकलग्नं ५।६ स्पष्टं एवं सर्वत्र ज्ञेयं ७।८।९।१०

| गुलिकगणकध्रुवांकाः स्युः | | | | | | | |
|---|---|---|---|---|---|---|---|
| रवि | चंद्र | मंगल | बुध | गुरु | शुक्र | शनि | ग्रहाः |
| ७ | ६ | ५ | ४ | ३ | २ | १ | दिवा. |
| ३ | २ | १ | ७ | ६ | ५ | ४ | रात्रिः |

## अथ प्राणपदसाधनमाह.

घटी चतुर्गुणा कार्या तिथ्या १५ सैश्च पलैर्युता ॥ दिनकरेणापहृतं शेषं प्राणपदं स्मृतम् ॥ ७१ ॥ शेषात्पलांता द्विगुणी विधाय राश्यंशसूर्यर्क्षनियोजिताय ॥ तत्रापि तद्राशिचरान् क्रमेण लग्नांशप्राणांशपदैक्यता स्यात् ॥ ७२ ॥ पुनः कोणात् क्रमांतरादीनां तथा प्राणपदादपि ॥ स्वेष्टकालं पलीकृत्य तिथ्याप्तं भादिकं च यत् ॥ ७३ ॥ चरागद्विभगे भागे भानौ युङ्नवमे सुते ॥ स्फुटं प्राणपदं तस्मात्पूर्ववच्छोधयेत्तनुः ॥७४॥ विना प्राणपदाच्छुद्धो गुलिकाद्वा निशाकरात् ॥ तदशुद्धं विजानीयात् स्थावराणां तदैव हि ॥ ७५ ॥ द्वयोर्हीनबलेऽप्येवं गुलिकात्परिचिंतयेत् ॥ तस्मात्तत्सप्तमस्थानात्तदंशाच्च कलत्रतः ॥ ७६ ॥ तत्रैव तत्रिकोणे वा जन्मलग्नं विनिर्दिशेत् ॥ मनुष्याणां पशूनां च द्वितीये दशमे रिपौ ॥ ७७ ॥ तृतीये मदने लाभे विहंगानां विनिर्दिशेत् ॥ कीटसर्पजलस्थानां शेषस्थानेषु संस्थितः ॥ ७८ ॥ इ० बृ० हो० पू० सा० द्वितीयोऽध्यायः ॥ २ ॥

## अस्योदाहरणम्.

इष्टं ६।१७ चतुर्गुणं २५।२ पंचदशभक्तशेषं १०।२ शेषं पलं द्विगुणीकृतं १०।४ यदा दिनेशेनाधिष्ठितं चरराशी तदा तत्रैव गणनीयं। यदा स्थिरद्वि-स्वभावराशेः सूर्ये स्थिते सति तदा कोणभं सः तेषां मध्ये यो वै चरराशिस्त-स्मात् क्रमगणनया पंचदशपलात्मकं प्राणपदं भवतीत्यर्थः। अत्र तु सूर्ये द्वि-स्वभावराशौ स्थिते सति सूर्यः २।४।२८।१ मिथुनात्पंचमं ७ कोणमं तस्मा-द्गणनीयम् ३।४ प्राणपदमागमं सूर्यांश ४ प्राणांशः द्वयोरैक्यं लग्नांशप्राणां-शैक्यता तदा लग्नागमं भवति। ननु सर्वत्र ज्ञेयम् ॥७८॥ इति श्रीवृहत्परा-शरहोरापूर्वखंडसारांशे ग्रहप्रादुर्भूताध्यायो द्वितीयः ॥ २ ॥

## पराशर उवाच।

मेषो वृषश्च मिथुनः कर्कसिंहकुमारिकाः ॥ कुलालिधनुषो नक्रे कुंभमीनास्ततः पराः ॥ १ ॥ अहो रात्राद्यंतलोपाद्धोरेति प्रोच्यते बुधैः ॥ तस्य हि ज्ञानमात्रेण जातकर्मफलं वदेत् ॥२॥ पदव्यक्तात्मको विष्णुः कालरूपो जनार्दनः ॥ तस्यांगानि नि-बोध त्वं क्रमान्मेषादिराशयः ॥ ३ ॥ शीर्षाननौ तथा बाहू हृ-त्क्रोडकटिवस्तयः ॥ गुह्योरुयुगुले जानुयुग्मे वै जंघके तथा ॥ ४ ॥ चरणौ द्वौ तथा लग्नात् ज्ञेयाः शीर्षादयः क्रमात् ॥ च-रस्थिरद्विस्वभावाः क्रूराक्रूरौ नरस्त्रियौ ॥ ५ ॥ पित्तानिलत्रिधात्वै-क्यं श्लेष्मिकाश्च क्रियादयः ॥ रक्तवर्णो बृहद्गात्रश्चतुष्पाद्रात्रि-विक्रमी ॥ ६ ॥ पूर्ववासी नृपज्ञातिः शैलचारी रजोगुणी ॥ पृष्ठो-दयी पावकी च मेषराशिः कुजाधिपः ॥ ७ ॥ श्वेतः शुक्राधिपो दीर्घश्चतुष्पाच्छर्वरी बली ॥ याम्येट् ग्राम्यो वणिक्भूमिरजी-पृष्ठोदयो वृषः ॥ ८ ॥ शीर्षोदयी नृमिथुने सगदं च सवीण-कम् ॥ प्रत्यक्शामी द्विपाद्रात्रिबली ग्राम्यो मजोऽनिली ॥ ९ ॥ समगात्रो हरिद्वर्णो मिथुनाख्यो बुधाधिपः ॥ पाटल्ये वनचारी

च ब्राह्मणो निशिवीर्यवान् ॥ १० ॥ बहुपटुतरः स्थौल्यतनुः सत्त्वगुणी जली ॥ पृष्ठोदयी कर्कराशिर्मृगांकोऽधिपतिः स्मृतः ॥ ११ ॥ सिंहः सूर्याधिपः सत्त्वी चतुष्पात्क्षत्रियो बली ॥ शीर्षोदयी बृहद्गात्रः पांडुः पूर्वेट् द्युवीर्यवान् ॥ १२ ॥ पार्वतिश्चाथ कन्याख्या राशिर्दिनबलान्विता ॥ शीर्षोदया च मध्यांगा द्विपाद्याम्यचरा च सा ॥ १३ ॥ स सस्यदहना वैश्या चित्रवर्णा प्रभंजिनी ॥ कुमारी तमसा युक्ता बालभावा बुधाधिपः ॥ १४ ॥ शीर्षोदयी द्युवीर्याढ्यस्तथा कृष्णो रजोगुणी ॥ पंचमोद्भूचरो घाती शूद्रो मध्यतनुर्द्विपात् ॥ १५ ॥ शुक्रोऽधिपोऽथ स्वल्पांगो बहुपाद्ब्राह्मणो बली ॥ सौम्यस्थो दिनवीर्याढ्यः पिशंगो जलभूवहः ॥१६॥ रोमस्वाढ्योऽतितीक्ष्णांगो वृश्चिकश्च कुजाधिपः ॥ पृष्ठद्वयी त्वथ धनुर्गुरुस्वामी च सात्विकः ॥ १७ ॥ पिंगलो निशिवीर्याढ्यः पावकः क्षत्रियो द्विपात् ॥ आदावंते चतुष्पादः समगात्रो धनुर्धरः ॥ १८ ॥ पूर्वस्थो वसुधाचारी तेजस्वान्पृष्ठतोद्गमी ॥ मंदाधिपस्तमी भौमी याम्येट् च निशि वीर्यवान् ॥ १९ ॥ पृष्ठोदयी बृहद्गात्रः कर्बुरो वनभूचरः ॥ आदौ चतुष्पादंते तु विपदो जलगोमतः ॥ २० ॥ कुंभः कुंभी नरो बभ्रूवर्णमध्यतनुर्द्विपात् ॥ द्युवीर्यो जलमध्यस्थो वातशीर्षोदयी तमः ॥ २१ ॥ शूद्रः पश्चिमदेशस्य स्वामी दैवाकरिः स्मृतः ॥ मीनौ पुच्छास्यसंलग्नौ मीनराशिर्दिवा बली ॥ २२ ॥ जली सत्त्वगुणाढ्यश्च स्वस्थो जलचरो द्विजः ॥ अपदो मध्यदेही च सौम्यस्थो ह्युभयोदयी ॥ २३ ॥ सुराचार्योधिपश्चास्य राशीनां गदितं मया ॥ त्रिंशद्भगणात्मकः स्थूलसूक्ष्माकरफलाय च ॥ २४ ॥ अथातः संप्रवक्ष्यामि शृणुष्व मुनिपुंगव ॥ जन्मलग्नं च संशोध्य निषेकं परिशो-

धयेत् ॥ २५ ॥ तदहं संप्रवक्ष्यामि मैत्रेय त्वं विधारय ॥ जन्मलग्नात् परिज्ञानं निषेकं सर्वजंतु यत् ॥ २६ ॥ यस्मिन् भाते भानविस्थस्तस्य मांदेर्यदंतरम् ॥ लग्नभाग्यांतरं योज्यं यच्च गर्भादि जायते ॥ २७ ॥ मासादिस्तन्मितं ज्ञेयं जन्मतः प्राक् निषेकजम् ॥ यद्यद्दृश्यदलेंगेशस्तदेंदोर्भुक्तभागयुक् ॥ २८ ॥ तत्काले साधयेल्लग्नं शोधयेत्पूर्ववत्तनुः ॥ तस्मात्फलाफलं वाच्यं गर्भस्थस्य विशेषतः ॥ २९ ॥ शुभाशुभं वदेत् पित्रोर्जीवनं मरणं तथा ॥ एवं निषेकलग्नेन सम्यक् ज्ञेयं स्वकल्पनात् ॥ ३० ॥

## अथ लग्नचतुर्थादिद्वादशभावसाधनमाह.

अयनांशाः ॥ वेदाब्ध्यब्ध्यूनः खरसहृतः शकोऽयनांशाः

॥ टीका ॥

शालिवाहनाख्यः इष्टशकः चतुश्चत्वारिंशदधिकचतुःशत ४४४ हीनः । ततः खरस ६० हृतः षष्टिभक्तः फलमयनांशाः स्युः ।

## अथ पलभाज्ञानं चरखंडसाधनमाह.

मेषो रविरयनांशयुतो भवति यद्दिने ॥ शंकुच्छायादिनार्द्धे तु पलभेत्युच्यते बुधैः ॥ ३१ ॥ स्थानत्रये च सा स्थाप्या गुण्यादिग्वसुपालकैः ॥ अंते गुणोद्धृते सद्भिश्चरखंडः प्रकीर्तितः ॥ ३२ ॥

॥ टीका ॥

अयनस्य भागा अयनांशाः पूर्ववक्ष्यमाणास्तैः सहवर्तमानो युक्तः यः सूर्यस्तस्मिन्सूर्ये मेषादिगे राशिभागकलादिना शून्यमिते सति तस्मिन् दिने दिनार्द्धे मध्यान्हे समभुविमध्ये समतलमस्तकपरिधिः समसिद्धो दंतिदंतजः द्वादशांगुलशंकुर्निवेश्यः । तस्य शंकोर्मध्यान्हे या छाया या भवति सा पलभा भवेदित्यर्थः । सा पलभा त्रिस्था त्रिषु स्थानेषु तिष्ठतीति त्रिस्था. दशभिः १० वसुभिः अष्टभिः ८ दिक्पालैः १० हता गुणिता ततोऽन्तिमांकः गुणैस्त्रिभिः ३ उद्धृता भक्ता सती त्रीणि चरखंडकानि भवंति ।

## अथ लंकोदयमाह.

वसुसागरनेत्राणि पलानि लंकोदये मेषराशौ ॥ शंकांकनेत्रे वृषभे मिथुनेऽग्नियुङ्नेत्रसंख्यातम् ॥ ३३ ॥ विपर्ययमग्रिमत्रितये षड्लग्नेष्वेवमेव निर्दिष्टम् ॥ हीनं खंडत्रितयं युक्तः स्वदेशलग्नोऽयम् ॥ ३४ ॥

## अथ लग्नसाधनमाह.

यस्मिन्काले लग्नं साध्यं च यदा तदा भवेद्विज्ञैः ॥ तात्कालिकसूर्यो वै युक्तः कार्योऽथ सायनांशेन ॥ ३५ ॥ तद्राशेर्यस्त्वादेश्य उदयस्तेनाथ भोग्यांशाः ॥ निघेश्च भागास्त्रिंशच्च्युतास्तथा भुक्तभागाश्च गुण्याः ॥ ३६ ॥ भूताद्यग्न्युद्धृतास्ते च ह्यंकाग्निभाजिता यदि ॥ भोग्यकालोऽथ द्युमणेर्विज्ञेयश्च द्विजोत्तम ॥ ३७ ॥ इति सायनयातांशैर्भुक्तकालो विधीयते ॥ इष्टघट्याः पलैः शोध्यो भोग्यकाल इति स्थितिः ॥ ३८ ॥ हातव्या राश्युदयकालात्तावंतः शोधयेदथ । यच्छेषं खगुणघ्नं तद्धृतमशुद्धोदयेनाथ ॥३९॥ यल्लब्धं च लवाद्यं चायनांशहीनैर्लग्नं स्यात् ॥ जानीहि द्विजसत्तम नतोन्नतप्रकारमेवैतत् ॥ ४० ॥

## अस्यार्थः

यस्मिन्काले लग्नं साध्यते तत्कालिनः सूर्यः सायन अयनांशयुक्तः कार्यः। सूर्यस्य राशिवशाद्यः स्वदेशियः उदयस्तेन भोग्यांशाः रवेः त्रिंशत् च्युताः भुक्तभागा गुण्याः ते खऽग्न्युद्धृतास्त्रिंशद्भक्ताः संतः कलाद्यो रवेः भोग्यकालः स्यात् । एवं अमुनेव प्रकारेण सायनयातांशैः भुक्तभागैः यातको भुक्तकालः स्यात् । स यथा—उदयगुणः भुक्तभागास्त्रिंशद्भक्ताः इति लग्नभुक्तकालार्थमिदमुक्तं । भोग्यकालः इष्टघटीनां पलेभ्यः शोध्यः । ततः किंविधेयमित्यत आह । तदनु तदनंतरं ग्रहोदयान् तदग्रराश्युदयात्तस्मात्कालाद्धातव्याः हीनाः कार्याः। यावंतः शुद्ध्यंति तावतः शोधयेदित्यर्थः । यच्छेषं तद्गगनगुणघ्नं त्रि-

शद्गुणं अशुद्धेनोदयेन हृतं भक्तं लब्धं भागाद्यं यल्लब्धं तदजादिशुद्धैः अशुद्ध-पूर्वैः सहितं अशुद्धोदयतः पूर्वं यावंतो मेषादयो राशयस्ते तस्य ऊर्ध्वस्थाने स्थाप्याः तदयनांशहीनं सत् तात्कालिकं राश्यादिकं लग्नं भवतीति व्याख्या।

## अथ नतोन्नतसाधनमाह।

दिनगतघटीभिर्हीनं कार्य्यं मुनिभिश्च दिवसार्द्धम् ॥ पूर्वनतं तद्रात्रौ लक्षणमेतद्धि विज्ञेयम् ॥ ४१ ॥ यदा दिनार्द्धादुपरीष्ट-कालो भगोदयादिष्टघटीषु शोध्यम् ॥ तदा दिनार्द्धस्य नतं परं तद्वयमुं च सर्वं खलबोधहेतुम्॥ ४२॥ रात्र्यर्द्धादुपरिचेत्स्यादि-ष्टकालो विचक्षण॥ सूर्यास्तेष्टघटीशुद्धं रात्र्यर्द्धे पश्चिमं नतम्४३

## अस्यार्थः-

दिनखंडम् दिनार्द्धं दिनगतघटीभिर्हीनम् कार्यम् रात्रौ पूर्वनतंस्यात् एतल्लक्षणम् दिनार्द्धपूर्वमिष्टकाले सति यदा दिनार्द्धादुपरीष्टकालस्तदा सू-र्योदयादिष्टघटीषु शुद्धं शोध्यम् द्युखंडं दिनार्द्धं दिवसे अपरं नतं पश्चिमनतं स्यात् तथा रात्र्यर्द्धादुपरीष्टकाले सति सूर्यास्तादिष्टघटीषु शोध्यं रात्र्यर्द्धं रात्रौ पश्चिमं नतं स्यात् ॥ ४१ ॥ ४२ ॥ ४३ ॥

## अथ चतुर्थदशमसाधनमाह।

एवं लंकोदयैर्भुक्तं भोग्यं शोध्यं पलीकृतात् ॥ पूर्वपश्चान्नताद-न्यत्प्राग्वत्तद्दशमं भवेत् ॥ ४४ ॥

## अस्यार्थः-

एवमनया रीत्या लंकोदयैः कृत्वा खेर्भुक्तं भोग्यं शोध्यं तत्पलीकृतात् पूर्वपश्चिमनताच्छोध्यम् अन्यदवशिष्टं यत्कर्म तत्प्राग्वत्पूर्वरीत्या लग्नवत्साध्यं तद्दशमं भवेत् लग्नसे षड्युक्ते सति जायातुर्यौ भवतः ॥ ४४ ॥

## अथ भावसंधिमाह।

लग्नं सुखात्सुखं कामात्कामं खात्खं च लग्नतः ॥ अंशमेकं

द्विगुणितं युंज्याल्लग्नादिषु क्रमात् ॥ ४५ ॥ पूर्वापरयुतेरर्द्धं संधिः स्याद्भावयोर्द्वयोः ॥ एवं द्वादशभावाः स्युर्भवन्ति हि ससंधयः॥४६॥

## अस्यार्थः-

लग्नतः खं खात् कामं कामात् सुखं सुखात् लग्नं चकारात्सर्वत्रैव ऊनं कार्यम् यथा सुखाल्लग्नमूनं तस्य शेषांकस्य ष्यंशं त्रिभागो ग्राह्यस्तदेकेन गुणितं यदंकं तल्लग्ने योज्यं तदा द्वितीयभावो भविष्यति पुनः ष्यंशं द्विगुणितं कृत्वा लग्ने योज्यं तदा तृतीयभावो भविष्यति एवं सर्वत्र बोध्यं एवं द्वादश भावाः स्युः पूर्वापरयुते लग्नद्वितीययोर्योगस्तस्यार्द्धं द्वयोर्भावयोः संधिः स्यात् हि इति निश्चयेन संधयो भवंतीत्यर्थः ॥ ४५ ॥ ४६ ॥

## अथ भोग्यकालादल्पेष्टकाले सति लग्नसाधनम् ।

भोग्यतोऽल्पेष्टकालात्खरामाहतात्स्वोदयाप्तांशयुग्भास्करः स्यात्तनुः ॥

## अस्यार्थः-

भोग्यतोभोग्य कालतः अल्पेष्टकालात्खरामाहतात्त्रिंशद्गुणितात्स्वोदयेन स्वराश्युदयेन हतात् तस्माद्ये आप्तांशा लग्नभास्तद्युक्तो भास्करस्तनुर्लग्नं स्यात् ।

## अथ लग्नपत्रभावपत्रमाह ।

सूर्यराश्यंशमानेन फलं ग्राह्यं च कोष्टकम् ॥ इष्टघट्या समायुक्तं लग्नं तात्कालिकं भवेत् ॥ ४७ ॥

## लग्नपत्रस्योदाहरणम्.

यथा सूर्यः २।४ लग्नपत्रकोष्टाङ्क १२ ।५४ इष्टघटी ६।१७ उभयोर्योगः १९।११ पुनः लग्नपत्रमवलोकनेन ३।८ लग्नमागतम् ॥

## भावपत्रस्योदाहरणम्.

सूर्यः २।४ भावपत्रकोष्टांकः १४।१७ पूर्वनतं १०।२० अयं त्रिंशच्च्युतोन्नतांकं १९।४० उभयोर्योगः ३३।५७ पुनः भावपत्रमवलोकनेन ६।३ जातं चतुर्थभवनमेवं सर्वत्र बोध्यम् ॥ ४७ ॥

## अथ लग्नपत्रमिदमाह-

| अंश | मे. १ | वृ. २ | मि. ३ | क. ४ | सिं. ५ | क. ६ | तु. ७ | वृ. ८ | ध. ९ | म. १० | कुं. ११ | मी. १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २<br>५४ | ७<br>१४ | १२<br>१२ | १७<br>४१ | २३<br>१४ | २८<br>३५ | ३३<br>५३ | ३९<br>२१ | ४४<br>५५ | ५०<br>१२ | ५४<br>५१ | ५८<br>५७ |
| २ | ३<br>२ | ७<br>२३ | १२<br>२३ | १७<br>५३ | २३<br>२५ | २८<br>४६ | ३४<br>४ | ३९<br>३२ | ४५<br>६ | ५०<br>२३ | ५५<br>० | ५९<br>४ |
| ३ | ३<br>१० | ७<br>३२ | १२<br>३३ | १८<br>४ | २३<br>३४ | २८<br>५६ | ३४<br>१४ | ३९<br>४३ | ४५<br>१८ | ५०<br>३३ | ५५<br>९ | ५९<br>१२ |
| ४ | ३<br>१८ | ७<br>४१ | १२<br>४३ | १८<br>१५ | २३<br>४७ | २९<br>७ | ३४<br>२५ | ३९<br>५४ | ४५<br>२९ | ५०<br>४२ | ५५<br>१८ | ५९<br>२० |
| ५ | ३<br>२६ | ७<br>४९ | १२<br>५४ | १८<br>२६ | २३<br>५८ | २९<br>१८ | ३४<br>३६ | ४०<br>५ | ४५<br>४० | ५०<br>५४ | ५५<br>२६ | ५९<br>२८ |
| ६ | ३<br>३४ | ७<br>५८ | १३<br>४ | १८<br>३७ | २४<br>९ | २९<br>२८ | ३४<br>४६ | ४०<br>१६ | ४५<br>५१ | ५१<br>४ | ५५<br>३५ | ५९<br>३६ |
| ७ | ३<br>४२ | ८<br>७ | १३<br>१४ | १८<br>४९ | २४<br>२० | २९<br>३९ | ३४<br>५७ | ४०<br>२७ | ४६<br>३ | ५१<br>१४ | ५५<br>४४ | ५९<br>४४ |
| ८ | ३<br>५० | ८<br>१६ | १३<br>२५ | १९<br>० | २४<br>३१ | २९<br>४९ | ३५<br>७ | ४०<br>३८ | ४६<br>१४ | ५१<br>२४ | ५५<br>५३ | ५९<br>५२ |
| ९ | ३<br>५८ | ८<br>२५ | १३<br>३५ | १९<br>११ | २४<br>४२ | ३०<br>० | ३५<br>१८ | ४०<br>४९ | ४६<br>२५ | ५१<br>३५ | ५६<br>२ | ६०<br>० |
| १० | ४<br>७ | ८<br>३५ | १३<br>४६ | १९<br>२२ | २४<br>५३ | ३०<br>११ | ३५<br>२९ | ४१<br>० | ४६<br>३५ | ५१<br>४४ | ५६<br>१० | ०<br>८ |
| ११ | ४<br>१६ | ८<br>४६ | १३<br>५७ | १९<br>३३ | २५<br>३ | ३०<br>२१ | ३५<br>४० | ४१<br>११ | ४६<br>४५ | ५१<br>५३ | ५६<br>१८ | ०<br>१६ |
| १२ | ४<br>२५ | ८<br>५६ | १४<br>९ | १९<br>४४ | २५<br>१९ | ३०<br>३२ | ३५<br>५१ | ४१<br>२३ | ४६<br>५६ | ५२<br>२ | ५६<br>२६ | ०<br>२४ |
| १३ | ४<br>३४ | ९<br>६ | १४<br>२० | १९<br>५५ | २५<br>२९ | ३०<br>४३ | ३६<br>२ | ४१<br>३४ | ४७<br>६ | ५२<br>११ | ५६<br>३४ | ०<br>३२ |
| १४ | ४<br>४३ | ९<br>१७ | १४<br>३१ | २०<br>६ | २५<br>३५ | ३०<br>५३ | ३६<br>१३ | ४१<br>४५ | ४७<br>१७ | ५२<br>२० | ५६<br>४२ | ०<br>४० |
| १५ | ४<br>५१ | ९<br>२७ | १४<br>४२ | २०<br>१७ | २५<br>४६ | ३१<br>४ | ३६<br>२४ | ४१<br>५६ | ४७<br>२७ | ५२<br>२८ | ५६<br>५० | ०<br>४८ |
| १६ | ५<br>० | ९<br>३७ | १४<br>५३ | २०<br>२८ | २५<br>५६ | ३१<br>१४ | ३६<br>३५ | ४२<br>७ | ४७<br>३७ | ५२<br>३७ | ५६<br>५८ | ०<br>५६ |
| १७ | ५<br>९ | ९<br>४८ | १५<br>५ | २०<br>३९ | २६<br>७ | ३१<br>२५ | ३६<br>४६ | ४२<br>१९ | ४७<br>४८ | ५२<br>४६ | ५७<br>५ | १<br>३ |
| १८ | ५<br>१८ | ९<br>५८ | १५<br>१६ | २०<br>५० | २६<br>१७ | ३१<br>३५ | ३६<br>५७ | ४२<br>३० | ४७<br>५८ | ५२<br>५५ | ५७<br>१३ | १<br>११ |
| १९ | ५<br>२७ | १०<br>८ | १५<br>२७ | २१<br>१ | २६<br>२८ | ३१<br>४६ | ३७<br>८ | ४२<br>४१ | ४८<br>८ | ५३<br>४ | ५७<br>२१ | १<br>१९ |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २० | ५<br>३६ | १०<br>१९ | १५<br>३८ | २१<br>१२ | २६<br>३९ | ३१<br>५७ | ३७<br>१९ | ४२<br>५२ | ४८<br>१९ | ५३<br>१३ | ५७<br>२९ | १<br>२७ |
| २१ | ५<br>४५ | १०<br>२९ | १५<br>४९ | २१<br>२३ | २६<br>४९ | ३२<br>७ | ३७<br>३० | ४३<br>३ | ४८<br>२९ | ५३<br>२२ | ५७<br>३७ | १<br>३५ |
| २२ | ५<br>५४ | १०<br>३९ | १६<br>५ | २१<br>३४ | २७<br>० | ३२<br>१८ | ३७<br>४१ | ४३<br>१५ | ४८<br>३९ | ५३<br>३१ | ५७<br>४५ | १<br>४३ |
| २३ | ६<br>३ | १०<br>५० | १६<br>१२ | २१<br>४६ | २७<br>१० | ३२<br>२८ | ३७<br>५३ | ४३<br>२६ | ४८<br>५० | ५३<br>४० | ५७<br>५३ | १<br>५१ |
| २४ | ६<br>१२ | ११<br>० | १६<br>२३ | २१<br>५७ | २७<br>२१ | ३२<br>३९ | ३८<br>४ | ४३<br>३७ | ४९<br>० | ५३<br>४९ | ५८<br>१ | १<br>५९ |
| २५ | ६<br>२० | ११<br>१० | १६<br>३४ | २२<br>८ | २७<br>३२ | ३२<br>५० | ३८<br>१५ | ४३<br>४८ | ४९<br>१० | ५३<br>५७ | ५८<br>९ | २<br>७ |
| २६ | ६<br>२९ | १६<br>२१ | १६<br>४५ | २२<br>१९ | २७<br>४२ | ३३<br>० | ३८<br>२६ | ४३<br>५९ | ४९<br>२१ | ५४<br>६ | ५८<br>१७ | २<br>१५ |
| २७ | ६<br>३८ | ११<br>३१ | १६<br>५७ | २२<br>३० | २७<br>५३ | ३३<br>११ | ३८<br>३७ | ४४<br>११ | ४९<br>३१ | ५४<br>१५ | ५८<br>२५ | २<br>२३ |
| २८ | ६<br>४७ | ११<br>४१ | १७<br>८ | २२<br>४१ | २८<br>३ | ३३<br>२१ | ३८<br>४८ | ४४<br>२२ | ४९<br>४१ | ५४<br>२४ | ५८<br>३३ | २<br>३१ |
| २९ | ६<br>५६ | ११<br>५२ | १७<br>१९ | २२<br>५२ | २८<br>१४ | ३३<br>३२ | ३८<br>५९ | ४४<br>३३ | ५९<br>५२ | ५४<br>३३ | ५८<br>४१ | २<br>३९ |
| ३० | ७<br>५ | १२<br>२ | १७<br>३० | २३<br>३ | २८<br>२५ | ३३<br>४३ | ३९<br>१० | ४४<br>४४ | ५०<br>२ | ५४<br>४२ | ५८<br>४९ | २<br>४७ |

## अथभावपत्रमिदमाह.

| अंश | मे.१ | वृ.२ | मि० ३ | क.४ | सिं.५ | क.६ | तु.७ | वृ.८ | ध.९ | म.१० | कुं.११ | मी.१२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ३<br>२४ | ८<br>१७ | १३<br>३४ | १८<br>५७ | २४<br>२ | २८<br>४६ | ३३<br>२४ | ३८<br>१७ | ४३<br>३४ | ४८<br>५७ | ५४<br>२ | ५८<br>४६ |
| २ | ३<br>३३ | ८<br>२७ | १३<br>४५ | १९<br>८ | २४<br>१२ | २८<br>५५ | ३३<br>३३ | ३८<br>२७ | ४३<br>४५ | ४९<br>८ | ५४<br>१२ | ५८<br>५५ |
| ३ | ३<br>४२ | ८<br>३७ | १३<br>५५ | १९<br>१८ | २४<br>२२ | २९<br>४ | ३३<br>४२ | ३८<br>३७ | ४३<br>५५ | ४९<br>१८ | ५४<br>२२ | ५९<br>४ |
| ४ | ३<br>५२ | ८<br>४७ | १४<br>६ | १९<br>२९ | २४<br>३२ | २९<br>१४ | ३३<br>५२ | ३८<br>४७ | ४४<br>६ | ४९<br>२९ | ५४<br>३२ | ५९<br>१४ |
| ५ | ४<br>१ | ८<br>५७ | १४<br>१७ | १९<br>४० | २४<br>४२ | २९<br>२३ | ३४<br>१ | ३८<br>५७ | ४४<br>१७ | ४९<br>४० | ५४<br>४२ | ५९<br>२३ |
| ६ | ४<br>१० | ९<br>७ | १४<br>२८ | १९<br>५१ | २४<br>५२ | २९<br>३२ | ३४<br>१० | ३९<br>७ | ४४<br>२८ | ४९<br>५० | ५४<br>५२ | ५९<br>३२ |
| ७ | ४<br>१९ | ९<br>१७ | १४<br>३८ | २०<br>१ | २५<br>२ | २९<br>४१ | ३४<br>१९ | ३९<br>१७ | ४४<br>३८ | ५०<br>१ | ५५<br>२ | ५९<br>४१ |
| ८ | ४<br>२९ | ९<br>२७ | १४<br>४९ | २०<br>१२ | २५<br>१२ | २९<br>५१ | ३४<br>२९ | ३९<br>२७ | ४४<br>४९ | ५०<br>१२ | ५५<br>१२ | ५९<br>५१ |

| ९ | ४<br>३८ | ९<br>३७ | १५<br>० | २०<br>२३ | २५<br>२२ | ३०<br>० | ३४<br>३८ | ३९<br>३७ | ४५<br>० | ५०<br>२३ | ५५<br>२२ | ०<br>२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | ४<br>४८ | ९<br>४४ | १५<br>११ | २०<br>३३ | २५<br>३१ | ३०<br>९ | ३४<br>४८ | ३९<br>४८ | ४५<br>११ | ५०<br>३३ | ५५<br>३१ | ०<br>९ |
| ११ | ४<br>५८ | ९<br>५९ | १५<br>२२ | २०<br>४३ | २५<br>४१ | ३०<br>१९ | ३४<br>५८ | ३९<br>५९ | ४५<br>२२ | ५०<br>४३ | ५५<br>४१ | ०<br>१९ |
| १२ | ५<br>८ | १०<br>९ | १५<br>३२ | २०<br>५३ | २५<br>५० | ३०<br>२८ | ३५<br>८ | ४०<br>९ | ४५<br>३२ | ५०<br>५३ | ५५<br>५० | ०<br>२८ |
| १३ | ५<br>१८ | १०<br>२० | १५<br>४३ | २१<br>३ | २५<br>५९ | ३०<br>३७ | ३५<br>१८ | ४०<br>२० | ४५<br>४३ | ५१<br>३ | ५५<br>५९ | ०<br>३७ |
| १४ | ५<br>२८ | १०<br>३१ | १५<br>५४ | २१<br>१३ | २६<br>८ | ३०<br>४६ | ३५<br>२८ | ४०<br>३१ | ४५<br>५४ | ५१<br>१३ | ५६<br>८ | ०<br>४६ |
| १५ | ५<br>३८ | १०<br>४२ | १६<br>५ | २१<br>२३ | २६<br>१८ | ३०<br>५६ | ३५<br>३८ | ४०<br>४२ | ४६<br>५ | ५१<br>२३ | ५६<br>१८ | ०<br>५६ |
| १६ | ५<br>४८ | १०<br>५२ | १६<br>१५ | २१<br>३३ | २६<br>२७ | ३१<br>५ | ३५<br>४८ | ४०<br>५२ | ४६<br>१५ | ५१<br>३३ | ५६<br>२७ | १<br>५ |
| १७ | ५<br>५८ | ११<br>३ | १६<br>२६ | २१<br>४३ | २६<br>३६ | ३१<br>१४ | ३५<br>५८ | ४१<br>३ | ४६<br>२६ | ५१<br>४३ | ५६<br>३६ | १<br>१४ |
| १८ | ६<br>८ | ११<br>१४ | १६<br>३७ | २१<br>५३ | २६<br>४५ | ३१<br>२३ | ३६<br>८ | ४१<br>१४ | ४६<br>३६ | ५१<br>५३ | ५६<br>४१ | १<br>२३ |
| १९ | ६<br>१८ | ११<br>२५ | १६<br>४८ | २२<br>३ | २६<br>५५ | ३१<br>३३ | ३६<br>१८ | ४१<br>२५ | ४६<br>४८ | ५२<br>३ | ५६<br>५१ | १<br>३३ |
| २० | ६<br>२८ | ११<br>३५ | १६<br>५८ | २२<br>१३ | २७<br>४ | ३१<br>४२ | ३६<br>२८ | ४१<br>३५ | ४६<br>५८ | ५२<br>१३ | ५७<br>३ | १<br>४३ |
| २१ | ६<br>३८ | ११<br>४६ | १७<br>९ | २२<br>२३ | २७<br>१२ | ३१<br>५१ | ३६<br>३८ | ४१<br>४५ | ४७<br>९ | ५२<br>२३ | ५७<br>१३ | १<br>५१ |
| २२ | ६<br>४६ | ११<br>५७ | १७<br>२० | २२<br>३३ | २७<br>२२ | ३२<br>० | ३६<br>४८ | ४१<br>५७ | ४७<br>२० | ५२<br>३३ | ५७<br>२२ | २<br>० |
| २३ | ६<br>५८ | १२<br>८ | १७<br>३१ | २२<br>४३ | २७<br>३२ | ३२<br>१० | ३६<br>५८ | ४२<br>८ | ४७<br>३१ | ५२<br>४३ | ५७<br>३२ | २<br>१० |
| २४ | ७<br>८ | १२<br>१९ | १७<br>४२ | १२<br>५३ | २७<br>४१ | ३२<br>१९ | ३७<br>८ | ४२<br>१९ | ४७<br>४२ | ५२<br>५३ | ५७<br>४१ | २<br>१९ |
| २५ | ७<br>१७ | १२<br>२९ | १७<br>५२ | २३<br>२ | २७<br>५० | ३२<br>२८ | ३७<br>१७ | ४२<br>२९ | ४७<br>५२ | ५३<br>२ | ५७<br>५० | २<br>२८ |
| २६ | ७<br>२७ | १२<br>४० | १८<br>३ | २३<br>१२ | २८<br>० | ३२<br>३८ | ३७<br>२७ | ४२<br>४० | ४८<br>३ | ५३<br>१२ | ५८<br>० | २<br>३८ |
| २७ | ७<br>३७ | १२<br>५१ | १८<br>१४ | २३<br>२२ | २८<br>९ | ३२<br>४७ | ३७<br>३७ | ४३<br>५१ | ४८<br>१४ | ५३<br>२२ | ५८<br>९ | २<br>४७ |
| २८ | ७<br>४७ | १३<br>२ | १८<br>२५ | २३<br>३२ | २८<br>१८ | ३२<br>५६ | ३७<br>४८ | ४२<br>२ | ४८<br>२५ | ५३<br>३२ | ५८<br>१८ | २<br>५६ |
| २९ | ७<br>५७ | १३<br>१२ | १८<br>३५ | २३<br>४२ | २८<br>२७ | ३३<br>५ | ३७<br>५७ | ४३<br>१२ | ४८<br>३५ | ५३<br>४२ | ५८<br>२७ | ३<br>५ |
| ३० | ८<br>८ | १३<br>२३ | १८<br>४६ | २३<br>५३ | २८<br>३७ | ३३<br>१५ | ३८<br>१७ | ४३<br>२४ | ४८<br>४७ | ५३<br>५३ | ५८<br>३७ | ३<br>१५ |

## अथ मेषादीनां संज्ञामाह।

क्रियतावुरिजितुमकुलीरलेयपाथो नजूककौर्प्याख्या॥ तौक्षिक आकोकेरोहृद्रोगश्चांत्यभं चेत्थम्॥ ४८॥

## अथ मेषादिराशीनां स्वामिनः।

मेषवृश्चिकयोर्भौमस्तुलावृषभयोर्भृगुः ॥ कन्यामिथुनयोर्ज्ञः स्याद्धनुर्मीनाधिपो गुरुः ॥ ४९॥ शनिर्मकरकुंभे च कुलीरस्य तु चन्द्रमाः ॥ सिंहस्याधिपतिः सूर्यो राशीनामधिपा मताः॥ ५०॥

## पुनः राशीशाः।

चंद्रज्ञशुक्रधूमार्कपरिवेषारकार्मुकाः ॥ गुरुपातः शनिः केतुर्ग्रहाः स्युर्द्वादशक्रमात् ॥ ५१ ॥

## अथाग्रे षोडशवर्गानाह।

वर्गान् षोडशसंख्याकान् ब्रह्मा लोकपितामहः ॥ तानहं संप्रवक्ष्यामि मैत्रेय श्रूयतामिति॥ ५२ ॥ क्षेत्रं होरा च द्रेष्काणस्तुर्यांशः सप्तमांशकः॥ नवांशो दशमांशश्च सूर्यांशः षोडशांशकः ॥ ५३ ॥ विंशांशो वेदवान्हंसो भांशस्त्रिंशांशकस्ततः ॥ खवेदांशोऽक्षवेदांशः षष्टयंशश्च ततः परम् ॥ ५४ ॥ तत्क्षेत्रं तस्य खेटस्य राशेर्योयस्य नायकः ॥ सूर्येन्द्वोर्विषमे राशौ समे तद्विपरीतकम् ॥ ५५ ॥ पितरश्चन्द्रहोरेशा देवाः सूर्यस्य कीर्तिताः॥ राशेरर्द्धम्भवेद्धोरा ताश्चतुर्विंशति स्मृताः ॥ मेषादि तासां होराणां परिवृत्तिद्वयं भवेत्॥ ५६ ॥

## अस्योदाहरणम्.

यदा यदा विषमराशिः तदा तदा सूर्यमारम्य गणनीयं यदा यदा समराशिस्तदा तदा चंद्रात्प्रथमं गणनीयं लग्नं ३।८ अस्य होरा चंद्राद्गणनीयं

पंचदशांशपरिमितं ४ चंद्रहोरा सूर्य २।४ विषमराशिः अत एव सिंहहोरायामेवं सर्वत्र ज्ञेयम् ॥

**होराचक्रमिदम्.**

| स्वा. | राशि | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मीन. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दे. | १५ | र.५ | चं.४ | सू.५ | चं.४ | सू.५ | चं.४ | सू ५ | चं.४ | र.५ | चं.४ | सू.५ | चं.४ |
| पितरः | ३० | चं.४ | सू.५ | चं.४ | सू.५ | चं.४ | सू.५ | चं.४ | सू.५ | चं.४ | सू.५ | चं.४ | सू.५ |

## अथ द्रेष्काणमाह ।

राशित्रिभागा द्रेष्काणास्ते च षट्त्रिंशदीरिताः ॥ परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत् ॥५७॥ स्वपंचनवमानां च विषमेषु समेषु च ॥ नारदागस्तिदुर्वासाद्रेष्काणेशाश्वरादयः ॥ ५८ ॥

## अस्योदाहरणम्.

त्रिंशदंशात्मको राशिस्तस्य त्रिभागं कार्यम् प्रथमभागे यस्मिन् राशिर्वर्तते स एव द्रेष्काणः यदा द्वितीयभागे तदास्वराशेः पंचमराशिद्रेष्काणः तृतीयभागे सति तदा स्वराशेर्नवमराशिद्रेष्काणो ज्ञेयः यथा लग्न ३।८ प्रथमभागे अत एव स्वद्रेष्काणे एवं सर्वत्र ज्ञेयम् ॥

**द्रेष्काणचक्रम्.**

| स्वामी. | राशी. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नारदः | अंश. १० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| अगस्तिः | २० | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ |
| दुर्वासाः | ३० | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |

## अथ चतुर्थांशमाह ।

स्वर्क्षादिकेंद्रपतयस्तुर्यांशेशाः क्रियादयः ॥ सनकश्च सनंदश्च कुमारश्च सनातनः ॥ ५९ ॥

## अस्योदाहरणम्.

स्वर्क्षादिकेंद्रपतय इति स्वर्क्षे यद्गृहसंबंधी सराशिस्तदादिकेंद्राणि तत्पतयः चतुर्थांशस्वामिनः तद्यथा राशेस्त्रिंशदंशास्तस्य चतुर्थांशः सार्द्धाः सप्त ७।३० तत्र प्रथमविभागमध्ये ७।३० स्वर्क्षस्वराशिस्वामिन एवाधिपत्यं द्वितीयविभागमध्ये १५।० केंद्रपतयः स्वराशेः सकाशाच्चतुर्थो योराशिः तत्स्वामिन एवाधिपत्यं तृतीयविभागमध्ये २२।३० स्वराशेः सकाशात्सप्तमो यो राशिस्तत्स्वामिन एवाऽधिपत्यं चतुर्थविभाग ३० मध्ये स्वराशेः सकाशाद्दशमो राशिस्तत्स्वामिन एवाऽधिपत्यं यथालग्नं ३।८ द्वितीयभागमध्ये ७० आगतमेवं सर्वत्र ज्ञेयम् ॥ ५९ ॥

| चतुर्थांशचक्रम्. | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वामी | अंश | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| सनकः | ७<br>३० | १<br>मं. | २<br>शु. | ३<br>बु. | ४<br>शु. | ५<br>सू. | ६<br>बु. | ७<br>शु. | ८<br>मं. | ९<br>बृ. | १०<br>श. | ११<br>श. | १२<br>बृ. |
| सनंद-नः | १५<br>० | ४<br>चं. | ५<br>सू. | ६<br>बु. | ७<br>शु. | ८<br>मं. | ९<br>बृ. | १०<br>श. | ११<br>श. | १२<br>बृ. | १<br>मं. | २<br>शु. | ३<br>बु. |
| कुमारः | २२<br>३० | ७<br>शु. | ८<br>मं. | ९<br>बृ. | १०<br>श. | ११<br>श. | १२<br>बृ. | १<br>मं. | २<br>शु. | ३<br>बु. | ४<br>चं. | ५<br>सू. | ६<br>बु. |
| सनात-नः | ३०<br>० | १०<br>श. | ११<br>श. | १२<br>बृ. | १<br>मं. | २<br>शु. | ३<br>बु. | ४<br>चं. | ५<br>सू. | ६<br>बु. | ७<br>शु. | ८<br>मं. | ९<br>बृ. |

## अथ सप्तमांशमाह ।

सप्तांशपास्त्वोजगृहे गणनीया निजेशतः ॥ युग्मराशौ तु विज्ञेयाः सप्तमर्क्षादिनायकात् ॥ ६० ॥ क्षारक्षीरौ च दध्याज्यौ तथेक्षुरससंभवः ॥ मद्यशुद्धजलावाजे समे शुद्धजलादिकाः ॥ ६१ ॥

## अस्योदाहरणम्.

ओजराशौ ग्रहे सति निजराशितो गणनीयम् यदा समराशेः तदा सप्तमराशितो गणनीयम् यथा लग्नं ३ । ८ चेत्समराशिः अत एव मकरात्तृतीयं सप्तांशमध्ये मीन १२ एवं सर्वत्र ज्ञेयम् ॥ ६०।६१ ॥

**सप्तमांशचक्रम्.**

| स्वामी | लग्न | मे.१ | वृ.२ | मि.३ | क.४ | सिं.५ | क.६ | तु.७ | वृ.८ | ध.९ | म.१० | कुं.११ | मी.१२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्षार | ४ १७ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ |
| क्षीर | ८ ३४ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ |
| दधि | १२ ५१ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ |
| आज्य | १७ ८ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ |
| इक्षुरस | २१ २५ | ५ | १२ | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० |
| मद्य | २५ ४२ | ६ | १ | ८ | ३ | १० | ५ | १२ | ७ | २ | ९ | ४ | ११ |
| शुद्धजलम्. | ३० ० | ७ | २ | ९ | ४ | ११ | ६ | १ | ८ | ३ | १० | ५ | १२ |

## अथ नवमांशमाह ।

नवांशेशाश्चरस्तस्मात्स्थिरे तन्नवमादितः ॥ उभये तत्पंचमादेरितिचिंत्यं विचक्षणैः ॥देवान्नृराक्षसाश्चैव चरादिषु ग्रहेषु च ६२

### अस्योदाहरणम्.

नवमांशगणनया यदा चरराशिस्तदा तत्रैव गणना यदा स्थिरराशेः सकाशान्नवमराशेर्गणनीयाः यदा द्विस्वभावस्तदा पंचमराशेर्गणनीयाः यथा लग्नं ३।८।४।५ चरराशेस्तत्रैव गणना कर्कात्तृतीयं कन्यानवमांश एवं सर्वत्र विलोकनीयम् ॥६२॥

**नवमांशचक्रम्.**

| [illegible] | | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | अंशाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| [illegible] | १ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | ३ २० |
| [illegible] | २ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | र.५ | ६ ४० |
| [illegible] | ३ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | १० ० |
| [illegible] | ४ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | १३ २० |
| [illegible] | ५ | र.५ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | १६ ४० |
| [illegible] | ६ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | २० ० |
| [illegible] | ७ | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | शु.७ | चं.४ | मं.१ | श.१० | २३ २० |
| नृ. | ८ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | मं.८ | र.५ | शु.२ | श.११ | २६ ४० |
| राक्षस. | ९ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | बृ.९ | बु.६ | बु.३ | बृ.१२ | ३० ० |

## अथ दशमांशमाह।

दिगंशया ततश्चौजे युग्मे तन्नवमाद्वदेत् ॥ पूर्वादिदशदिक्पाला इंद्राग्नियमराक्षसाः ॥ ६३ ॥ वरुणो मारुतश्चैव कुबेरेशानपद्मजाः ॥ अनंतश्चक्रमादोजे समेवाव्युत्क्रमेणतु ॥ ६४ ॥

### अस्योदाहरणम्.

अथ विषमराशिदशमांशे विषममेव गणनीयं समराशिदशमांशे तस्मान्नवमराशितो गणनीयम् यथालग्नं ३।८।४।५ मीनाद्गणनीयम्। वृषमं दशमांशमेवं सर्वत्र चिंतनीयम् ॥

अथदशांशचक्रम्.

| विषमाः स्वामिनः | | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | समाः स्वामि० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| इंद्रः | ३ | मं. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | अनंतः |
| अग्निः | ६ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | र. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | पद्मजः |
| यमः | ९ | बु. ३ | बृ. १२ | र. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. १ | श. १० | ईशानः |
| राक्षसः | १२ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | सू. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | कुबेरः |
| वरुणः | १५ | सू. ५ | शु. २ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. १ | श. १० | बु. ३ | बृ. १२ | मारुतः |
| मारुतः | १८ | बु. ६ | बु. ३ | मं. ८ | र. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | वरुणः |
| कुबेरः | २१ | शु. ७ | चं. ४ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | राक्षसः |
| ईशानः | २४ | मं. ८ | सू. ५ | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | यमः |
| पद्मजः | २७ | बृ. ९ | बु. ६ | श. ११ | मं. ८ | मं. १ | श. १० | बु. ३ | बृ. १२ | सू. ५ | शु. २ | शु. ७ | चं. ४ | अग्निः |
| अनंतः | ३० | श. १० | शु. ७ | बृ. १२ | बृ. ९ | शु. २ | श. ११ | चं. ४ | मं. १ | बु. ६ | बु. ३ | मं. ८ | र. ५ | इंद्रः |

कारकेन्द्रोऽपि स ज्ञेय आत्मा कारक उच्यते ॥ ३ ॥अंशसाम्यग्रहो यत्र कलाधिक्यं च पश्यति ॥ कलासाम्ये पलाधिक्यमात्मा कारक ईर्यते ॥ ४ ॥ तत्र राशिकलाधिक्ये नैव ग्राह्यःप्रधानकः ॥ अंशाधिक्ये कारकः स्यादल्पभागोंतकारकः ॥ ५ ॥ मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि ॥ अधोऽधः कारका ज्ञेयाश्चराणि सप्त कारकाः ॥ ६ ॥ तेषां मध्ये प्रधानं तु आत्मकारक उच्यते ॥ जातकराट् स विज्ञेयः सर्वेषां मुख्यकारकः ॥ ७ ॥ यथा भूमौ प्रसिद्धोऽस्ति नराणां क्षितिपालकः ॥ सर्ववार्ताधिकारी च बंधकृन्मोक्षकृत्तथा ॥ ८ ॥ पुत्रामात्यप्रजानां तु तत्तद्दोषगुणैस्तथा ॥ बंधकृन्मोक्षकृद्विप्र तथा सन्मानकारकः ॥ ९ ॥ तथैव कारको राजन् ग्रहाणां फलकारकः ॥ आत्मेत्यादि फलं तत्ते चान्यथास्थापयेद्द्विज ॥ १० ॥ यथा राजाज्ञया विप्र पुत्रामात्यादयोऽपि च ॥ समर्थालोककार्येषु तथैवान्योपकारकः ॥ ११ ॥ कारकराजवश्येन फलदातान्यकारकः ॥ यथा राजनि क्रुद्धे च सर्वेऽमात्यादयो द्विज ॥१२॥ स्वजनानां कार्यकर्तुमसमर्था भवंति हि ॥ स्निग्धे भूपे अमात्यादिः स्वशत्रूणांद्विजोत्तम ॥ १३ ॥ अकार्यं कर्तुं नो शक्तस्तथैवान्योऽपकारकः ॥ आत्मकारकवश्येन अमात्यादिफलं ददुः ॥ १४ ॥ इत्यात्मकारकः ॥

आत्मकारकखेटेन न्यूनभागो हि तद्ग्रहः ॥अमात्यसंज्ञा तस्यैव ज्ञायते द्विजसत्तम ॥ १५ ॥ अमात्यन्यूनभ्राता च भ्रातृन्यूनं च मातृकम् ॥ मातृकारक खेटेन न्यूनभागो हि यो ग्रहः ॥ १६॥ सपुत्रकारको ज्ञेयस्तद्धीनो ज्ञातिकारकः ॥ ज्ञातिकारकखेटेन हीनभागो हि यो ग्रहः ॥ १७ ॥ दारकारकविज्ञेयो निर्विशंकं द्विजोत्तम ॥ चराश्चकारकाः सप्त ब्रह्मणा चोदिताः पुरा ॥१८॥ अंशसा-

न्यौ ग्रहौ द्वौ च जायेतांयस्य जन्मनि ॥ स्वकारकं विना विप्र लुप्यति चान्यकारकः ॥ १९ ॥ तत्कारको लुप्यति चेदन्यन्नैवास्ति कारकम् ॥ कारकाणां स्थिराणां च मध्ये संचिंतयेद्विज ॥ २० ॥ अधुना संप्रवक्ष्यामि खेटान् कारकसंज्ञकान् ॥ यस्य जन्मनि भावानां यथास्थाने च वै द्विज ॥ २१ ॥ स्वर्क्षे तुंगे च मित्रर्क्षे कंटके संस्थिता ग्रहाः ॥ अन्योन्यकारका विप्र कर्मगास्तु विशेषतः॥२२॥ लग्ने सुखे तथा लाभे ग्रहभाववशे न च॥भवंति कारका विप्र विशेषेण न भैरवौ ॥ २३ ॥ स्वमित्रर्क्षोच्चगे हेतुरन्योऽस्य यदिकर्मगः ॥ स सुहृद्गुणसंपन्नः सो पि कारक एव वै ॥ २४ ॥ नीचान्वये यस्य जन्म बभूवद्विजसत्तम ॥ पतंति कारकं लग्ने प्रधानं च न वाप्नुयात् ॥ २५ ॥ राज्ञां कुले समुत्पन्नो राजा भवति निश्चितम् ॥ एवं कुलानुसारेण कारकाणां फलं भवेत् ॥ २६ ॥ अधुना संप्रवक्ष्यामि स्थिराणि कारकाणि च ॥ सूर्यादीनां ग्रहाणां च वीर्यवान् कारको भवेत् ॥ २७ ॥ वीर्यवान् जायते विप्र जन्मानि रविशुक्रयोः ॥ स पितृकारको ज्ञेयो निर्विशंकं द्विजोत्तम ॥ २८ ॥ चंद्रारयोश्च बलवान् मातृकारक उच्यते ॥ भौमद्वयं विशेषेण भगिनी दारभ्रातृकौ ॥ २९ ॥ बुधान्मातुलतो ज्ञेयो मातृतुल्यानपि द्विज ॥ गुरुणाऽत्र च विज्ञेयाः पुत्रस्वामिपितामहाः ॥ ३० ॥ स्वभार्यामातृपितरौ तथा मातामही द्विज ॥ भृगुद्वारा विजानीयादेतेषां शुक्रकारकः ॥३१॥ अर्यम्णः पुण्यभे तात इंदोर्माता च तूर्यतः ॥ कुजात्तृतीयतो भ्राता मातुलो रिपुभाद्बुधात् ॥ ३२ ॥ देवेज्यात्पंचमात्पुत्रो दैत्येज्याद्द्यून मात्स्त्रियः ॥ मंदादष्टमतो मृत्युस्तातादीनां विचिन्तयेत् ॥ ३३ ॥

## अथ भावकारकमाह.

अधुना संप्रवक्ष्यामि विशेषं भावकारकान् ॥ जनुर्लग्नं च वि-

याद्दे आत्मा कारकमेव च ॥ ३४ ॥ धनभावं विजानीयाद्दारकार-
कमेव च ॥ एकादशे ज्येष्ठभ्रातुस्तृतीये तु कनिष्ठकः ॥ ३५ ॥ सुते
सुतं विजानीयात्तथा सप्तमभावतः ॥ सुतस्थाने ग्रहस्तिष्ठेत्सोपि
कारक उच्यते ॥ ३६ ॥ सूर्यो १ गुरुः २ कुजः ३ सोमो ४ गुरु ५
भौमः ६ सितः ७ शनिः ८॥ गुरु ९ श्चंद्रसुतो १० जीवो ११
मंदश्च १२ भावकारकाः ॥ ३७ ॥ पुनस्तन्वादयो भावाः स्थाप्या-
स्तेषां शुभाऽशुभम् ॥ लाभं तृतीयं रंध्रं च शत्रुस्वस्त्रीव्ययं तथा
॥ एषां योगेन यो भावस्तन्नाशं प्राप्नुयाद्ध्रुवम् ॥ ३८ ॥ चत्वारो
राशयो भद्राः केंद्रकोणशुभावहाः ॥ तेषां संयोगमात्रेण ह्यशुभोऽ
पि शुभो भवेत् ॥ ३९ ॥

## चरकारकग्रहाः स्युः।

सर्वग्रहेभ्योधिकांशादिनात्मकारकस्तत्क्रमेण ज्ञेयः । आत्माऽमात्यभ्रातृ-
मातृपुत्रज्ञातिदारा इत्यादिचरकारकग्रहाः स्युः ।

| चरकारकग्रहाणां चक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| शुक्रः | बृहस्पतिः | शनिः | चंद्रमाः | मंगलः | बुध | सूर्यः | ग्रहाः |
| आत्मकारक | अमात्यकारक | भ्रातृकारक | मातृकारक | पुत्रकारक | ज्ञातिकारक | दाराकारक | चरकारक ग्रह |

## अथ सूर्यादिग्रहकारकमाह.

राज्यविद्रुमरक्तवस्त्रमाणिक्यराजवनपर्वतक्षेत्रपितृकारको र-
विः ॥ ४० ॥ मातृमनःपुष्टिगंधरसेक्षुगोधूमक्षारकद्विजशक्तिका-
र्यसस्यरजतादिकारकश्चंद्रः ॥ ४१ ॥ सत्वसद्मभूमिपुत्रशीलचौ-
र्यरोगब्रह्मभ्रातृपराक्रमाग्निसाहसराजशत्रुकारकः कुजः ॥ ४२ ॥
ज्योतिर्विद्यामातुलगणितकार्यनर्तनवैद्यहासभीश्रीशिल्पविद्यादि-
कारको बुधः ॥ ४३ ॥ स्वकर्मयजनदेवब्राह्मणधनस्वर्णकांचनवस्त्र-

पत्रमित्रांदोलनादिकारको गुरुः ॥ ४४ ॥ कलत्रकार्मुकसुखगीतशास्त्रकाव्यपुष्पसुकुमारयौवनाभरणरजतयानगर्वलोकमौक्तिकविभवकवितारसादिकारकः शुक्रः ॥ ४५ ॥ महिषहयगजतैलवस्त्रशृंगारप्रयाणसर्वराज्यदार्वायुधगृहयुद्धसंचारशूद्रनीलमणिविघ्नकेशशल्यशूलरोगदासदासीजनायुष्यकारकः शनिः ॥ ४६ ॥ प्रयाणसमयसर्परात्रिसकलसुप्तार्थद्यूतकारको राहुः ॥४७॥ व्रणरोगचर्मातिशूलस्फुटक्षुधार्तिकारकः केतुः॥४८॥इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे कारकाध्यायकथनं नाम अष्टमोऽध्यायः॥८॥

## अथ कारकांशोदाहरणम्.

कारकांशकुंडली.

सू.८ रा. शु.७ ६
बु.९ ५
श. ४
१० गु.११
के. १ मी. ३
चं.१२ २

अत्र तु आत्मकारको भृगुः। स च तुला नवमांशः अतएव तुलालग्नस्थापितसर्वे ग्रहाः यथायथा नवमांशस्थितास्तत्र तत्र स्थापितः।

| कारकग्रहाः स्युः | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. | गु. |
| ८ | १२ | ३ | ९ | ११ | ७ | ७ | ७ | १ | ११ |

## अथ कारकांशग्रह फलमाह.

अधुना संप्रवक्ष्यामि कारकस्याधिपान् ग्रहान् ॥ योगसंबंधमात्रेण यथावद्वदतो मम ॥ १ ॥ स्वांशकारककुंडल्यांनवमांशाधिपोऽथवा ॥ यस्मिन्राशौ स्थितो विप्र तद्राशिफलमुच्यते ॥ २ ॥ मेषादिमीनपर्यन्तं सर्वेषां फलमादिशेत् ॥ यथावद्भाषितं शूलिप्रोक्तं यद्रुद्रयामले ॥ ३ ॥ अजांशकारकांशेषु तिष्ठंति च यदा ग्रहाः ॥ तथा मूषकमार्जारौ दुःखदौ भयकारकौ ॥ ४ ॥ सुयोगे च यदा विप्र मार्जारादिप्रसिद्धिदौ ॥ वृषे कारकांशके च भयार्ती

च चतुष्पदात् ॥ ५ ॥ शुभे चतुष्पदात्सिद्धिरिति तत्त्वं द्विजोत्तम् ॥ युग्मकारकांशके खेटे गंडवादिरोगसंभवः ॥ ६ ॥ कर्कांशे च जलादुःखं जलभीतिर्न संशयः ॥ कुष्ठादिरोगसंभूतिः शुभे फलविपर्ययः ॥ ७ ॥ सिंहांशे कारके खेटे तिष्ठत्येव द्विजोत्तम ॥ शुनकादिभयं दद्याच्छुभे सिद्धिप्रदायकः ॥ ८ ॥ कन्यायां कारकांशे च तिष्ठत्येव यदा ग्रहः ॥ मृत्युवत्कंडुरोगार्ति वन्हिदोषेण दुःखभाक् ॥ ९ ॥ तुलाख्य कारकांशे च व्यापारेषु रतोऽधिकः ॥ क्रयविक्रयकर्ता च यदि जातोनृपालये ॥१०॥ वृश्चिके कारकांशे च सर्पादिभयकारकः ॥ मातुः पयोधरे पीडा जायते द्विजसत्तम ॥ ११ ॥ धनुर्धरकारकांशे वाहनाद्भयमादिशेत् ॥ उच्चात्प्रपतनं वापि कोपि वस्तुसमन्वितः ॥ १२ ॥ नक्रकारकांशे विप्र सिद्धिर्जलचरादयः ॥ शंखमुक्तप्रवालादिमत्स्यखेचरदेवताः ॥ १३ ॥ कुंभाख्यकारकांशे च तडागादीनि कारयेत् ॥ कीर्तिमान्धर्मवान्सोपि ज्ञायते द्विजसत्तम ॥ १४ ॥ पश्यति कंडुरोगादि भवतीह न संशयः ॥ मीने च कारकांशेषु सायुज्यमुक्तिभाग्भवेत् ॥१५॥

## अथ कारकांशग्रहाणां फलमाह.

शुभराशौ शुभांशे वा कारके धनवान्भवेत् ॥ तदंशकेंद्रेषु शुभो नूनं राजा प्रजायते ॥ १६ ॥ कारके शुभराश्यंशे लग्नांशस्थे शुभग्रहे ॥ उपग्रहस्य यश्चांत्ये स्वोच्चस्वर्क्षे शुभर्क्षगे॥१७॥ पापदृग्योगरहिते कैवल्यं तस्य निर्दिशेत्॥मिश्रे मिश्रं विजानीयाद्विपरीते विपर्ययम् ॥१८॥चंद्रभृगुवारवर्गस्थे कारके पारदारिकः॥वृषतौल्यंशकगते तस्मिन्वाणिज्यवान्भवेत् ॥१९॥ मेषसिंहांशके तस्मिन्ब्रूयान्मूषकदंशकः ॥ कारके कामुकांशस्थे वाहनात्पतनं भवेत् ॥ २० ॥ अथैकः कारकांशेषु रव्यादिस्तिष्ठति ग्रहः ॥ तेषां

फलं प्रवक्ष्यामि शृणु त्वं द्विजसत्तम ॥ २१ ॥ कारकांशे यदा सूर्यस्तिष्ठति द्विजवीर्ययुक् ॥ आदावंते पुमान्सोऽपि राजकार्येषु तत्परः ॥ २२ ॥ कारकांशे तु पूर्णेन्दुर्दैत्याचार्येण वीक्षितः ॥ शतभोगी भवेत्सोऽथ विद्याजीवी भवेद्द्विजः ॥ २३ ॥ कारकांशे यदा भौमे बलाढ्येन युतेक्षिते ॥ रसवादी कुंतधारी वह्निकृज्जीवनं भवेत् ॥ २४ ॥ कारकांशे यदा सौम्ये तिष्ठत्येव बलाढ्यकः ॥ शिल्पको व्यवहारी च वणिकृत्यपरो द्विज ॥ २५ ॥ कारकांशे गुरौ विप्र कर्मनिष्ठापरो भवेत् ॥ सर्वशास्त्राधिकारी च विख्यातः क्षितिमंडले ॥२६॥ कारकांशे यदा शुक्रे राजमानी सदा भवेत् ॥ सदिंद्रियः शताब्दायुः कथनीयं द्विजोत्तम ॥ २७ ॥ कारकांशे यदा सौरिर्मृत्युलोके प्रसिद्धिवान् ॥ महतां कर्मणां वृत्तिः क्षितिपालेन पूजितः ॥ २८ ॥ कारकांशे यदा राहुर्धनुर्धारी प्रजायते ॥ जांगल्यलोहयंत्रादिकारकश्चौरसंगमी ॥ २९ ॥ कारकांशे यदा केतुस्तिष्ठति द्विजसत्तम ॥ व्यवहारी गजादीनामुशांति परद्रव्यके ॥ ३० ॥ कारकांशे यदा विप्र संस्थितौ रविसैंहिकौ ॥ सर्पाद्भीतिर्भवेन्मृत्युः शुभदृष्ट्या निवर्तते ॥ ३१ ॥ कारकांशे भानुतमौ शुभषड्वर्गसंयुतौ ॥ विषवैद्यो भवेन्नूनं विषहर्ता विचक्षणः ॥ ३२ ॥ भौमेक्षिते कारकांशे भानुस्वर्भानुसंयुते ॥ अन्यग्रहा न पश्यंति स्ववेश्मपरदाहकः ॥ ३३॥ यदि सौम्येक्षिते विप्र ह्यग्निदो नैव जायते ॥ पापर्क्षे च गुरौ दृष्टे समीपग्रहदाहकः ॥३४॥ सगुलिके कारकांशे पूर्णेन्दुवीक्षिते द्विज ॥ सति चौरैर्नीतधनः स्वयं चोरोऽथ वा भवेत् ॥ ३५ ॥ सगुलिके कारकांशे अन्यग्रहयुतेक्षिते ॥ बुधदृष्टियुते वापि अंडवृद्धिः प्रजायते ॥ ३६ ॥ कारकांशे केतुयुक्ते पापग्रहनिरीक्षिते ॥ श्रोत्रच्छेदो भवेन्नूनं कर्णरोगा-

र्तिना द्विज ॥३७॥ कारकांशे स्थिते केतौ भृगुणा च समीक्षिते ॥ युते वा जायते विप्र क्रियाकर्मसमन्वितः ॥३८॥ कारकांशे स्थिते केतौ शनिसौम्यनिरीक्षिते ॥ बलवीर्येण रहितो जायते सोऽपि मानवः ॥ ३९ ॥ सकेतौ कारकांशे च बुधशुक्रनिरीक्षिते ॥ जायते योनियुतिको दासीपुत्रोऽथ वा भवेत् ॥ ४० ॥ सकेतौ कारकांशे च अन्यग्रहनिरीक्षिते ॥ शनिदृष्टिविहीने च सत्याचरहितो भवेत् ॥ ४१ ॥ कारकांशे यदा विप्रभृगुभास्करवीक्षिते ॥ राजप्रेष्यो भवेद्बालो जायते नात्र संशयः ॥ ४२ ॥

## अथ कारकांशदशमफलमाह ।

दशमे कारकांशे च बुधेन समवीक्षिते॥व्यापारे बहुलाभश्च महत्कर्मविचक्षणः ॥४३॥ कारकांशे च दशमे रविणा च युते यदि ॥ गुरुदृष्टे तथा विप्र जायते योगकारकः ॥ ४४ ॥ कारकांशे च दशमे शुभखेटनिरीक्षिते ॥ स्थिरचित्तोभवेद्बालो गंभीरो बहुवीर्यवान् ४५

## अथ कारकांशे चतुर्थस्थानफलं ।

पाताले कारकांशे च शशिशुक्रयुतेक्षिते ॥ प्रासादवान् भवेद्बालो विचित्रहर्म्यवान्द्विज ॥ ४६ ॥ कारकांशे च पाताले तुंगखेः कोपि संस्थितः ॥ हर्म्यमंदिरसंयुक्तो हर्म्युच्चो बहुदीप्तिमान् ॥४७॥ कारकांशे च पाताले शनिराहुयुतेक्षिते ॥ विप्रेच्छाटनपट्टीयुक्त जायते मंदिरं द्विज ॥४८॥कारकांशे च पाताले कुजकेतुशनीक्षिते॥ ऐष्टिकं मंदिरं तस्यजायते नात्रसंशयः॥४९॥कारकांशे च पाताले गुरुयुक्तनिरीक्षिते॥ऐष्टिकं मंदिरं तस्य जायते नात्र संशयः॥५०॥ कारकांशे च पाताले गुरुयुक्तनिरीक्षिते ॥ कणवेष्टितसंयुक्तं जायते तस्य मंदिरम् ॥ ५१ ॥

## अथ कारकांशे नवमभावफलमाह ।

कारकांशे च नवमे शुभखेटयुतेक्षिते ॥ सत्यवादी गुरौ भक्तः स्वधर्मनिरतो भवेत् ॥५२॥ कारकांशे च नवमे पापग्रहयुतेक्षिते ॥ स्वधर्मनिरतो बाल्ये मिथ्यावादी भवेद्विजः ॥ ५३ ॥ कारकांशे च नवमे शनिराहुयुतेक्षिते ॥ गुरुद्रोही भवेद्विप्र शास्त्रेषु विमुखो नरः ॥ ५४ ॥ कारकांशे च नवमे गुरुभानुयुतेक्षिते ॥ तदाऽपि च गुरुद्रोही गुरुवाक्यं न मन्यते ॥ ५५ ॥ कारकांशे च नवमे भृगु-भौमयुतेक्षिते ॥ षड्वर्गाधिकयोगे च मरणं पारदारिकः ॥ ५६ ॥ कारकांशे च नवमे क्षतयुक्तेक्षिते द्विज ॥ परस्त्रीसंगमाद्बालो बंधको भवति ध्रुवम् ॥ ५७ ॥ कारकांशे च नवमे गुरुयुक्तेक्षिते द्विज ॥ स्त्रीलोलुपो भवेद्बालो विषयी नैव जायते ॥ ५८ ॥

## अथ कारकांशे सप्तमभावफलमाह ।

कारकांशे च द्यूनस्थे गुरुचंद्रयुते द्विज ॥ सुंदरी गेहिनी तस्य पतिभक्तिपरायणा ॥ ५९ ॥ राहुणा विह्वला बाला जायते चांगना द्विज ॥ शनिना च वयोधिक्या रोगिणी वा तपस्विनी ॥ ६० ॥ भौमेनविकलांगी च तथा कांताद्यलक्षणा ॥ रविणास्वकुलेगुप्ता आसक्ता परवेश्मनि ॥ ६१ ॥ बुधे कलावती ज्ञेया कलाभिज्ञा प्रजायते ॥ शुक्रेण तद्वज्ज्ञेया च निर्विशंकं द्विजोत्तम ॥ ६२ ॥

## अथ कारकांशे तृतीयभावफलमाह ।

कारकांशे तृतीये च पापखेटयुतेक्षिते ॥ स शूरो जायते बालो वीर्यवान्बहुविक्रमी ॥६३॥ कारकांशे तृतीयेपि शुभखेटयुतेक्षिते ॥ जायते तत्त्वहृदयः कातरोऽपि विशेषतः ॥ ६४ ॥ कारकांशे तृतीये च षष्ठे पापयुतेक्षिते ॥ कृषिकर्मरतो नित्यं जायते च न संशयः ॥ ६५ ॥

## अथ कारकांशे द्वादशभावफलमाह ।

कारकांशे व्ययस्थाने उच्चस्थेऽपि शुभग्रहोऽसद्गतिर्जायते तस्य शुभलोकमवाप्नुयात् ॥ ६६ ॥ कारकांशे व्यये केतौ शुभखेटैर्युतेक्षिते ॥ तदापि जायते मुक्तिः सायुज्यपदमाप्नुयात् ॥ ६७ ॥ मेषे थ धनुषि वापि कारकांशे व्यये शिखी॥शुभग्रहेण संदृष्टे कैवल्यपदमाप्नुयात् ॥ ६८ ॥ केवलेपि व्यये केतुः पापग्रहयुतेक्षितः ॥ न मुक्तिर्जायते तस्य शुभलोकं न पश्यति ॥ ६९ ॥ रविणा संयुते केतौ कारकांशे व्ययस्थिते ॥ गौर्यां भक्तिर्भवेत्तस्य शाक्तिको जायतेनरः ॥ ७० रविभक्तिर्भवेत्तस्य निर्विशंकंद्विजोत्तम ॥ चंद्रेण संयुते केतौ कारकांशे व्ययस्थिते ॥ ७१ ॥ शुक्रेण संयुते केतौ कारकांशे व्ययस्थिते ॥ समुद्रतनयाभक्तिर्जायतेऽसौ समृद्धिमान् ॥ ७२ ॥ कुजेन स्कंदभक्तोवा जायते द्विजसत्तम ॥ वैष्णवो बुधशौरिभ्यां गुरुणा शिवभक्तिमान् ॥ ७३ ॥ राहुणा तामसीं दुर्गां भूतप्रेतादिसेवकृत्॥ हेरंबभक्तः शिखिना स्कंदभक्तोथ वा भवेत् ॥ ७४ ॥ कारकांशे व्यये शौरिः पापराशौ यदा भवेत् ॥ तदैव क्षुद्रदेवस्य भक्तिस्तस्य न संशयः ॥ ७५ ॥ पापर्क्षेपि व्यये शुक्रस्तदापि क्षुद्रसेवकः ॥ कारकान्यूनभागोहि अमात्यो जायते ग्रहः ॥ ७६ ॥ कारके च फलं ब्रूयादमात्येऽनुचरो भवेत् ॥ आदित्येंदुधरापुत्राद्गणनीयोऽष्टमो ग्रहः ॥ ७७ ॥ तस्मिन् ग्रहेप्येव फलं वक्तव्यं नात्र संशयः ॥ अमात्याद्द्वादशेराशौ पापर्क्षे पापसंयुते ॥ तथापि क्षुद्रदेवस्य भक्तिर्भवति निश्चितम् ॥ ७८ ॥ अमात्यो वर्तते तत्र तन्वादौ द्विजसत्तम ॥ सूर्यादिग्रहसंयुक्ते तत्फलंपूर्ववद्द्विज ॥ ७९ ॥

## अथ कारकांशे त्रिकोणफलमाह ।

कारकांशे त्रिकोणस्थे खेटे च तांत्रिको भवेत्॥पापेन क्षुद्रदेवस्य

शुभेन शुभसेवकः ॥८०॥ कारकांशे त्रिकोणस्थे पापयुक् पापवीक्षिते ॥ भूतानुग्रहकर्तास्यान्निर्विशंकं द्विजोत्तम ॥ ८१ ॥ कारकांशे त्रिकोणस्थे पापयुक् शुभवीक्षिते ॥ पुत्रैश्वर्यप्रदोनित्यं राजानुग्रहकारकः ॥ ८२ ॥ कारकांशे लग्ने चंद्रे कुजराहुनिरीक्षिते ॥ क्षयरोगो भवेत्तस्य श्वासकासादिरोगयुक् ॥ ८३ ॥ लग्ने वित्ते प्रबंधे च पापद्वययुते द्विज ॥ तांत्रिको जायते विप्र निर्विशंकं कुले द्विज ॥ ८४ ॥ पापौ निरीक्षितौ तत्र तंत्रनिग्राहको भवेत् ॥ शुभैर्निरीक्षितो वापि तंत्रानुग्रहकारकः ॥ ८५ ॥ कारकांशेंदुशुक्रौ च शुभदृष्टिनिरीक्षिते ॥ रसवादी भवेद्बालो धातूनां भस्मकारकः ॥८६॥ शुक्रेंदुबुधसंदृष्टौ सद्वैद्यो हि भवेन्नरः ॥ पीयूषपाणिः कुशलः सर्वरोगहरो द्विज ॥८७॥ कारकांशेंदुतुर्यस्थे दैत्याचार्यनिरीक्षितः ॥ श्वेतकुष्ठीभवेन्नूनं निर्विशंकं द्विजोत्तम ॥८८॥ कारकांशेंदुचापस्थे यदि शुक्रयुतेक्षिते ॥ पांडुश्वित्री भवेद्बालः श्वेतकुष्ठांगपीडितः ॥ ८९ ॥ कारकांशेंदुचापस्थे धरापुत्रेण वीक्षिते ॥ राजरोगो भवेत्तस्य रक्तपित्तार्तिको द्विज ॥ ९० ॥ कारके चंद्रधनुषि शिखिना वीक्षिते सति ॥ नीलकुष्ठं भवेत्तस्य निर्विशंकं द्विजोत्तम ॥ ९१ ॥ चतुर्थे पंचमे रंध्रे धने राहुकुजौ यदि ॥ क्षयरागो भवेत्तस्य चंद्रदृष्ट्या विशेषतः ॥ ९२ ॥ कारकांशे लग्नस्थाने केवलः संस्थितः कुजः ॥ पिटकादि भवेत्तस्य निर्विशंकं द्विजोत्तम ॥ ९३ ॥ कारकांशे लग्ने केतुर्ग्रहणीरोगपीडितः ॥ स्वर्भानुतुलको रंध्रे विषवैद्यः प्रजायते ॥ ९४ ॥ कारकांशे धने तुर्ये केवले संस्थिते शनौ ॥ धनुर्विद्याधरो बालो जायतेपि न संशयः ॥ ९५ ॥ कारकांशे सुखे वित्ते केवले संस्थिते शिखी ॥ घटिकायंत्रवादी स्यादिष्टशोधनतत्परः ॥ ९६ ॥ उच्चस्थाने स्थिते सौम्ये तत्परमहंसके ॥ तथा संन्यस्त

ज्ञेयो निर्विशंकं द्विजोत्तम ॥ ९७ ॥ उच्चस्थानस्थिते राहौ यंत्राद्विकारकः ॥ शिखिना खड्गकारी च कुजेन कुंतधारकः॥९८॥ चंद्रेज्यौ कारकांशे च लग्ने वा नवपंचमे ॥ ग्रंथकर्ता भवेन्नूनं सर्वविद्याविशारदः॥९९॥उच्चस्थानगते शुक्रे स्वल्पग्रंथकरो द्विजः॥उच्चस्थानगते सौम्ये किंचिद्ग्रंथकरो ह्यसौ ॥१००॥शुक्रेण काव्यकर्ता च प्राकृतग्रंथतत्परः॥गुरुणा सर्व ग्रंथानां कारको द्विजसत्तम ॥ १॥ वाक्यहीनो भवेद्बालः सभाक्षोभो न जायते ॥ वैयाकरणश्चवेदांगे जायते तर्कशास्त्रकृत॥२॥उच्चस्थानगतः शौरिः सभाजाड्यो भवेन्नरः॥मीमांसकोभवेन्नूनमुच्चस्थानगते बुधे॥३॥कारकांशे धरासूनुर्लग्ने वा नवपंचमे ॥ नैयायिको भवेन्नूनं सुष्ठुकाव्यधरो नरः ॥ ४ ॥ कारकांशे निशानाथे त्रिकोणे चाथ लग्नगे ॥ सांख्यशास्त्रज्ञनिपुणो जायतेमतिमान्नरः ॥ ५ ॥ भाग्ये लब्धे प्रबंधे वा कारकांशे शिखी तथा॥गणितज्ञो भवेन्नूनं ज्योतिःशास्त्रविशारदः॥६॥सुराचार्येणसंबंधे सांप्रदायिकशास्त्रधृक् ॥ ये योगा भाग्यभावे तु यथावद्भाषितं मया ॥ ७ ॥ वित्तस्थानेपि ते ज्ञेयाः पूर्ववज्जायते फलम् ॥ कोपि तृतीयभावे तु कथयंति पुरा द्विज ॥ ८ ॥ कारकांशे धने केतौ तथा भाग्यालये गते ॥ पापग्रहेण संदृष्टे वाचालश्चभवेन्नरः ॥ ९ ॥ कारकांशे तथारूढे धने रंध्रे स्थिते द्विज॥ ग्रहसाम्येतिविज्ञेयो योगः केमद्रुमो भवेत् ॥ १० ॥ उच्चस्थाने ग्रहो नास्ति तदा केमद्रुमो भवेत् ॥ चंद्रदृष्टे विशेषेण दारिद्र्यार्तियुतो भवेत् ॥११॥ आरूढाज्जन्मलग्नाद्वा पापाः स्त्रीहानिगा यदि ॥ केवले संग्रहत्वेपि समसौख्यौ शुभाशुभौ ॥ १२ ॥ चंद्रदृष्टिविशेषेण योगे केमद्रुमो फलः ॥ द्वितीयाष्टमभावाभ्यां योगोयं कथ्यते द्विज ॥ १३ ॥ कारकांशेषु ये योगाः पूर्वोक्ता गदिता मया ॥ तत्तद्राशिदशापाके

सर्वेषां फलमादिशेत् ॥ १४ ॥ एवं दशाप्रदो राशिर्द्वितीयाष्टमयोर्द्विज ॥ ग्रहसाम्येतिविज्ञेयाः केमुद्रः शशिनेक्षिते ॥ ११५ ॥ दशाप्रारंभसमये शोधयेज्जन्मलग्नवत् ॥ सूर्यादिखेचरान्स्पष्टान् साधयेज्जन्मवद्द्विजः ॥ १६ ॥ तत्र वित्ताष्टमे भावे ग्रहसाम्ये तु यद्भवेत् ॥ तदा केमद्रुमो ज्ञेयश्चंद्रदृष्ट्या विशेषतः ॥ १७ ॥ एवं तन्वादिभावानां दशारंभेषु योजयेत् ॥ तत्तद्ग्रहानुसारेण फलं वाच्यं बुधैः सदा ॥ ११८ ॥ इति बृहत्पाराशरहोरापूर्वखंडसारांशे कारकांशफलकथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

## अथ भावलग्नमाह ।

वर्णादशेति नाम्ना वै कथयामि तवाग्रतः ॥ यस्य विज्ञानमात्रेण आयुर्दायफलं वदेत् ॥ १ ॥ तत्रादौ लग्नभावस्य साधयेद्द्विजसत्तम ॥ सूर्योदयात्समारभ्य कलापंचप्रमाणतः ॥ २ ॥ जन्मेष्टकालपर्यन्तं गणनीयं प्रयत्नतः॥ओजलग्ने यदालग्नं सूर्यराश्यनुसारतः ॥ ३ ॥ समलग्ने जन्मलग्नाद्यत्संख्या प्राप्यते द्विज ॥ भावलग्नं विजानीयाद्धोरालग्नं तदोच्यते ॥ ४ ॥

## अथ भावलग्नोदाहरणमाह ।

सूर्योदयादिष्टं ६ । १७ जन्मलग्नम् ३ । ८ पंचघटी ८ प० ९ पर्यंतमेकभावलग्नम् अत्र तु समलग्ने जन्मकर्काद्गणनीयं सिंहभावलग्नमागतं एवं ओजलग्ने जन्म सूर्यराशिमारभ्य गणनीयं ॥ ४ ॥

## अथ होरालग्नमाह ।

द्विसार्धघटिका विप्र कालादितिविलग्नभात् ॥ प्रयांति लग्नात्तन्नाम होरालग्नं द्विजोत्तम ॥ ५ ॥ यज्जन्म ओजलग्नेषु सूर्यादिगणयेत् क्रमात् ॥ समलग्ने यदा जन्म गणयेज्जन्मभाद्द्विज ॥ ६ ॥

केचिद्भ्रमाद्वदंत्येव होरालग्नं विचिंतयेत् ॥ भावलग्नांतहोरांतं चिं-
तयेद्द्विजसत्तम ॥ ७ ॥

## अस्योदाहरणम् ।

यथा लग्ने ३ । ८ । ४५ । इष्टम् ६ । १७ अत्र तु समलग्नं अत एव सार्द्धद्वि-
घटिकापरिमितात् लग्नाद्गणनीयं तृतीयं कन्यालग्नम् ॥ ७ ॥

## अथ वर्णदलग्नमाह ।

जन्महोराख्यलग्नर्क्षसंख्याग्राह्या पृथक्पृथक् ॥ ओजे लग्ने तु
युग्मे तु चक्रशुद्धैकसंयुता ॥ ८ ॥ युग्मौजसाम्ये संयोज्य वियो-
ज्यान्योन्यमन्यथा ॥ मेषादितः क्रमादोजे मीनादेरुतक्रमात्समे
॥ ९ ॥ एवं यल्लग्नमायातं वर्णदं तत् प्रकीर्तितम् ॥ एवं द्वादशभा-
वानां वर्णदं लग्नमानयेत् ॥ १० ॥

## टीका ।

ओजलग्नप्रसूतानां मेषादितो जन्मलग्नांतं होरालग्नांतं च गणयित्वा त-
योर्द्वयोरोजत्वेन युग्मत्वेन वा साजात्ये संख्याद्वयं संयोजनीयं एकस्य ओ-
जत्वेन अपरस्य युग्मत्वेन वैजात्येऽधिकसंख्यायां न्यूनसंख्या शोधनीया एवं
च यद्योजनोत्तरं वा तन्मेषादितो गणनीयं तत्र योराशिरंतिमो लभ्यते सवर्ण-
दराशिर्भवति युग्मलग्नप्रसूतानां मीनाद्यपसव्यक्रमेण जन्मलग्नांतं होरालग्नां-
तं च गणयित्वा तयोः संख्या पृथक् पृथक् ग्राह्या तयोरोजत्वेन युग्मत्वेन वा
साजात्ये संख्याद्वयं योजनीयं एवमोजअपरंयुग्ममितिवैजात्ये परस्परं वि-
योजनीयं ततश्च मीनाद्यपसव्यमार्गेण गणनायां यो यो राशिर्लभ्यते सवर्ण-
न्दइति वेदितव्यम् ।

## अथ वर्णदलग्नोदाहरणम् ।

अत्र तु युग्मलग्नमध्ये जन्म जन्मलग्नं ३ । ८ अतएव मीनादिविपरीतमा-
र्गे गणनीयं जन्मलग्नांतं ८ संख्याएवं होरालग्नांतं ६ संख्या द्वयोः साजा-
त्यएव योजनीयम् द्वयोर्योगसंख्या १४ द्वादशाधिकं द्वादशतष्टं शेषं २ मी-

नापसव्यं गणनीयं द्वयं वर्णदलग्नं एवं सर्वत्र ओजलग्नमेषादि क्रमाद्ग-णनीयम् ॥ १० ॥

## अथ वर्णदविचारमाह ।

यदि द्वावोजराशौ वा समराशौ यदा द्विज ॥ द्वयं संयोजनीयं वै संज्ञे या वर्णदा दशा ॥ ११ ॥ एकस्थाने ओजराशावपरे समभे द्विज ॥ वैजात्येधिकसंख्याया न्यूनसंख्यां विशोधयेत् ॥ १२ ॥ मेषादिकेन गणयेत्सव्यमार्गेण वै द्विज ॥ यल्लब्धमंतिमो राशिः सराशिर्वर्णदा भवेत् ॥ १३ ॥ युग्मलग्नेषु यज्जन्म मीनादिरपसव्यतः ॥ क्रमेण लग्नहोरांतं गणयेद्द्विजसत्तम ॥ १४ ॥ ओजराशौ द्वयं लब्धं तथा द्वौ समराशिगे ॥ साजात्ये योजनं कार्यं जायते वर्णदा दशा ॥ १५ ॥ अजात्ये पूर्ववत्कार्यावैक्ये न्यूनं विशोधयेत् ॥ मेषाद्यपसव्यमार्गेण गणनीयं प्रयत्नतः ॥ १६ ॥ यल्लब्धमंतिमो राशिस्तद्राशिर्वर्णदा भवेत् ॥ वर्षसंख्या विजानीयाच्चरपर्यायप्रमाणतः ॥ १७ ॥ होरालग्नभयोर्ज्ञेया दुर्बला वर्णदा दशा ॥ यत्संख्या वर्णदा लग्नात्तत्र संख्या क्रमेण तु ॥ १८ ॥ क्रमव्युत्क्रमभेदेन दशास्यात्पुरुषस्त्रियोः ॥ वर्णदा राशिमेषादि मीनादि गणयेत् क्रमात् ॥ १९ ॥ वर्णदा स्यात्त्रिकोणे च पापयुक् पापराशिकः ॥ पापयोगकृते विप्र दशापर्यंतजीवनम् ॥ २० ॥ रुद्रशूले यथा वायुर्निर्विशंकं द्विजोत्तम ॥ वर्णदा सप्तमाद्राशेः कलत्रायुर्विचिंतयेत् ॥ २१ ॥ पंचमे पुत्र आयुः स्यान्मातुः स्यात्तुर्यपंचके ॥ तृतीये भ्रातुरायुः स्याज्ज्येष्ठभ्रातुर्भवेद्द्विज ॥ २२ ॥ पितुस्तु नवमान्मातुः पंचमाद्वर्णदस्य तु ॥ शूलराशिदशायां वै प्रबलायामरिष्टकम् ॥ २३ ॥ एवं तन्वादिभावानां कारयेद्वर्णदा दशा ॥ पूर्ववत्फलं ज्ञेयं शुभाशुभं द्विजोत्तम ॥ २४ ॥ ग्रहाणां वर्णदा नैव रा-

शीनांवर्णदा दशा ॥ ग्रहारूढपदत्वेन चिंतयेद्ग्रहवर्णदा ॥ २५ ॥
दशाया अंतरंकार्यं भानुभागं प्रदापयेत् ॥ चरस्थिरदशायां वै
वर्णदा यास्तथैवच ॥ २६ ॥ यल्लब्ध्वा पूर्वमब्दानां भानुभागं च
कारयेत् ॥ क्रमव्युत्क्रमभेदेन संलिखेद्वै दशांतरम् ॥ २७ ॥ पूर्णा-
यां कारकस्यैव केंद्रस्थानां दशा भवेत् ॥ ततः पणफरस्थानामा-
पोक्लिमदशां ततः ॥ जन्मांगं जन्मलग्नं च कालं होरा प्रश-
स्यते ॥ २८ ॥

## अथ घटीलग्नमाह ।

घटीलग्नं प्रवक्ष्यामि शृणु त्वं द्विजसत्तम ॥ सूर्योदयात्समार-
भ्य जन्मकालावधि क्रमात् ॥ २९ ॥ याश्चिंत्या घटिका जाता
तन्मध्ये चार्कभाजिता ॥ एकैकघटिका विप्र एकैकंलग्नसंज्ञकः
॥ ३० ॥ भानुस्तिष्ठेच्छिष्टघटीर्गणयेज्जन्मलग्नतः ॥ यावंतिमोरा
शिलब्धं तद्राशिघटिकातनुः ॥ सूर्यादि यत्र ऋक्षे च जन्मवत्सं-
लिखेद्द्विज ॥ ३१ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे भा-
वहोरावर्णदघटीलग्नफलकथनं नाम दशमोऽध्यायः ॥ १० ॥

## अथ घटीलग्नोदाहरणम्.

यथा लग्नं ३ । ८ । ४५ इष्टम् ६ । १७ कर्कलग्नाद्गणनीयम् मकरलग्नं
भवतीत्यर्थः ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशेभावहोरावर्णदघटील-
ग्नादिकथनंनामदशमोऽध्यायः ॥ १० ॥

---

## अथाऽऽरूढमाह ।

अधुना संप्रवक्ष्यामि राश्यारूढपदं द्विज ॥ राशीनां द्वादशा-
नां तु यावदीशाश्रयो भवेत् ॥ १ ॥ संख्यामीशोदयाद्भे समा-
सान्तपदमुच्यते ॥ राशिवद्ग्रहआरूढं ज्ञायते गणकोत्तमैः ॥ २ ॥

यावद्दूरं यस्य राशिस्तावत्संख्याक्रमेण वै ॥ अग्रे खगारूढपदं ज्ञायते द्विजसत्तम ॥ ३ ॥ जनुर्लग्नाल्लग्नस्वामी यावद्दूरंहि तिष्ठति॥ तावद्दूरं तदग्रे च लग्नारूढं च कथ्यते ॥ ४ ॥ यदि लग्नेश्वरः स्वर्क्षे कलत्रे संस्थितोथवा॥आरूढलग्नमित्याहुर्जन्मलग्नं द्विजोत्तम ॥५॥ एवं तन्वादिभावानां भावारूढपदं भवेत् ॥ यत्र यत्र ग्रहा लग्ने तत्र तत्र सुसंलिखेत् ॥ ६ ॥

उदारहणार्थमारूढकुंडलीमाह.

धनारूढः १
शु.
भाग्यारूढ.
पुत्रारूढ.
बृ. २
के. १२
लग्नारूढ.
लाभारूढ.
पराक्रमारूढ.
११
१०
९
व्ययारारूढ.
सूर्य. बुध.
३
कर्मारूढ.
६
रा.
जायारूढ.
श.८
४
मं.५
मातुलारूढ.
निधनारूढ.
चं. ७
सुखारूढ.

## अथारूढोदाहरणम्

यथा कर्कलग्नस्वामिनि चंद्रएकादशस्थिते तस्मादेकादशगणनान्मीनलग्नमारूढं भवतीत्यर्थ ॥

## पराशर उवाच ।

अधुना संप्रवक्ष्यामि तन्वारूढफलं द्विज ॥ यस्य विज्ञानमात्रेण जायते कर्मसूचकः ॥ ७ ॥ यावदीशात्त्वयंराशिरित्युक्तं मुनिभिः पुरा ॥ पदमारूढसंज्ञर्धितदारब्धविधिं द्विज ॥ ८ ॥

## अथैकादशस्थानमाश्रित्य फलमाह ।

पदादेकादशे स्थाने शुभग्रहयुतेक्षिते ॥ लक्ष्मीवान्जायते बालः प्रज्ञावाञ्छीलसंयुतः ॥ ९ ॥ वित्तोपार्जनन्यायेन नीतिवाञ्जायते सदा ॥ नरो न नास्तिको नूनं न तु शास्त्रविरुद्धकृत

॥ १० ॥ पदादेकादशे विप्र पापखेटयुतेक्षिते ॥ अन्यायोपार्जितं वित्तं विरुद्धं शास्त्रमार्गतः ॥ ११ ॥ मिश्रैर्मिश्रफलं ज्ञेयमुच्च-मित्रादिक्षेत्रगः ॥ बहुधा जायते लाभो यत्र यत्र द्विजोत्तम ॥ १२ ॥ आरूढाल्लाभभवनंग्रहः पश्येत्तु न व्ययं ॥ यस्य जन्मनि सोपि स्यात्प्रबलो धनवानपि ॥ १३ ॥ दृष्टग्रहाणां बाहुल्ये तदादृष्ट्यरितुंगगे ॥ सार्गले चापि तत्रापि बह्वर्गलसमागमे ॥ १४ ॥ शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले ॥ सुखानि स्वामिना दृष्टे लग्नभाग्यादिकेन वा ॥ १५ ॥ जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरं॥उक्तयोगेषु ये खेटा द्वादशं तु न पश्यति ॥१६॥

## अथ द्वादशराशिमाश्रित्य फलमाह ।

पदारूढे व्यये विप्र शुभपापयुतेक्षिते ॥ बाहुल्यव्ययमित्येवं विशेषोपार्जनात्सदा ॥ १७ ॥ शुभग्रहे सुमार्गेषु कुमार्गात्पापखेचरैः ॥ मिश्रैर्मिश्रफलं वाच्यं यथालाभेषु पूर्ववत् ॥ १८ ॥ पदारूढे व्यये शुक्रे भानुस्वर्भानुवीक्षिते ॥ राजमूलाद्व्ययं वाच्यं चंद्रदृष्ट्या विशेषतः ॥ १९ ॥ पदारूढे व्यये सौम्ये शुभखेटयुतेक्षिते ॥ ज्ञातिमध्ये व्ययो नित्यं पापदृक्कलहाद्व्ययः ॥ २० ॥ पदव्यये सुराचार्ये वीक्षिते चान्यखेचरैः ॥ करमूलाद्व्ययं वाच्यं करव्याजेन वै द्विज ॥ २१ ॥ आरूढे द्वादशे सौरे धरापुत्रेण संयुते ॥ अन्यग्रहेक्षिते विप्र भ्रातृमूलाद्धनव्ययं ॥ २२ ॥ पदेषु द्वादशे स्थाने ये योगास्तान्वदाम्यहम् ॥ लाभभावेषु ये योगा लाभयोगकराः सदा ॥ २३ ॥ पदेषु सप्तमे राहुरथवा संस्थिते शिखी ॥ उदरव्यथायुतो बालः शिखिना पीडितेधिकं ॥ २४ ॥ पदे च सप्तमे केतुः पापखेटयुतेक्षिते ॥ साहसी [illegible] च दीर्घलिंगी भवेन्नरः ॥ २५ ॥ पदे च सप्तमे स्थाने गुरुशुक्रनि-

शाल्करा: ॥ एको द्वयं त्रयं तत्र लक्ष्मीवान्कारयेद्ध्रुवम् ॥ २६ ॥ तुंगर्क्षे सप्तमे खेटे शुभो वाप्यशुभः पदे ॥ श्रीमान्सोपि भवेन्नूनं सत्कीर्तिसहितो द्विज ॥ २७ ॥ ये योगाः सप्तमे भावे राह्वादिकथितं मया ॥ ते योगा वित्तभावेषु धूनवच्चिंत्यते द्विज ॥२८ ॥ उच्चो वाथहिरण्यं वा जीवो वा शुभएव वा ॥ एको बली धनगतःश्रियं दिशति देहिनः ॥ २९ ॥ ये योगाश्चपदे लग्ने यथावद्वदतो मम ॥ कारकांशस्य कुंडल्यां निर्बाधका विचिंतयेत् ॥ ३० ॥ आरूढादष्टमे पापे सौरिःस्याच्छुभवर्जितः ॥ तथा वित्तालये पापे पूर्ववज्ज्ञायते फलम् ॥३१॥आरूढाद्वित्तभे सौम्ये सर्वदेशाधिपो भवेत्॥ सर्वज्ञो यदि चेन्नस्यात्कविर्वादी च भार्गवः ॥ ३२ ॥ आरूढात्केंद्रकोणेषु तथालाभपदे द्विज ॥ लग्नसप्तमराशिपदे सबले खेटसंयुते ॥ ३३ ॥ श्रीमांश्च जायते नूनं देशे विख्यातिवान् भवेत् ॥ षष्ठाष्टमे व्यये स्थाने श्रीमान्स न भवेत्कदा ॥ ३४ ॥ पदाल्लग्नेसप्तमेवाकेंद्रेत्रिकोणोपचये ॥ सुवीर्यसंस्थिते खेटे भार्याभर्तृसुखप्रदः ॥ ३५ ॥ एवं लग्नपदाद्विप्र पुत्रभवादि चिंतयेत् ॥ मित्रामित्रे विजानीयाद्द्वयभावेषु वै द्विज ॥ ३६ ॥ षष्ठाष्टमे व्यये खेटस्तत्तद्भावेषु तिष्ठति ॥ यद्यद्भावेषु यद्वैरं लग्नारूढे विचिंतयेत् ॥३७॥ लग्नारूढं दारपदं मिथः केंद्रगतं यदि ॥ लाभे वापि त्रिकोणे वा तथा राजवराधिपः ॥ ३८ ॥ आरूढः पुत्रमित्रैस्तु त्रिलाभकेंद्रगो यदि ॥ द्वयोर्मैत्री त्रिकोणेषु साम्यं द्वेषोन्यथा भवेत्॥ ३९ ॥ एवं दारादिभावानामर्जयित्वारिमित्रता ॥ जातकद्वयमालोक्य चिंतनीयं विचक्षणैः ॥४० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे आरूढफलकथनं नामएकादशोध्यायः ॥ ११ ॥

## पराशर उवाच ।

अधुना संप्रवक्ष्याम्युपपदं च द्विजोत्तम ॥ यस्यविज्ञानमात्रेण जायते फलसूचकः ॥ १ ॥ पदारूढाद्व्ययस्थाने पदं चोपपदं स्मृतं ॥ लग्नानुचरसंज्ञोपपदं च द्विजसत्तम ॥ २ ॥

## उपपदस्थोपपदद्वितीये वा गुणविशेषफलमाह ।

पापाक्रांते पापयुते पापर्क्षे पापवीक्षिते ॥ पापसंबंधसंयोगे उपपदद्वितीयके ॥ ३ ॥ प्रव्रज्यायोगोविज्ञेयः संन्यासो भवति ध्रुवं ॥ तथा भार्याविरोधी स्यादथवा स्त्रीविनाशकृत् ॥ ४ ॥ रविपापत्वनाद्येव सिंहर्क्षे पापदे सति ॥ पूर्वोक्तं नो फलं ज्ञेयं जायते गृहिणीसुखं ॥ ५ ॥ मेषादिपापराशौ च संस्थिते दिवसाधिपे ॥ पूर्वोक्तं च फलं ज्ञेयं प्रव्रज्यादारनाशकः ॥ ६ ॥ उपपदे द्वितीये वा शुभसंबंधदृष्टियुक् ॥ शुभर्क्षे शुभसंयोगे पूर्वोक्तफलदो भवेत् ॥ ७॥ उपपदे द्वितीये वा नीचांशे नीचखेटयुक् ॥ नीचसंबंधयोगे वा प्रणीतादारनाशकृत् ॥ ८ ॥ उच्चांशे उच्चसंस्थे वा उच्चसंबंधदृष्टियुक् ॥ बहुदारा भवेयुश्च रूपलक्षणसंयुताः ॥ ९ ॥ उपपदद्वितीयेपि युग्मर्क्षे मेषराशितः॥ मिथुनेपि स्थिते विप्रबहुदारयुतो भवेत् ॥ १० ॥ उपपदे द्वितीयेपि स्वस्वामिखेटसंयुते ॥ उत्तरायुषि निर्दारो भवत्येव न संशयः ॥ ११ ॥ वृषस्थे वा तुले वापि दैत्येज्ये दारकारके ॥ अन्यराशौ च वा विप्र निर्दार उत्तरायुषि ॥१२॥ स्वराशौ संस्थिते खेटे नित्याख्ये दारकारके ॥ उत्तरायुषि निर्दारो भवत्येव न संशयः ॥ १३ ॥ उपपदेशोपि तुंगर्क्षे नित्याख्येदारकारके ॥ उत्तमकुलाद्दारलाभो नीचस्थेपि विपर्ययः ॥ १४ ॥ शुभसंबंधयुक् दृष्टे उपपदे दारकारके ॥ सुंदरी लभ्यते भार्या भव्या रूपवती द्विज ॥ १५ ॥ संबंधे शनिराहुभ्यामुपपदे च शनिर्द्विज ॥

निर्दारकारके चापि शनिराहुयुतेक्षिते ॥ १६ ॥ अथ वाक्‌युतो विप्र भार्यया सहितो द्विज ॥ स्त्रीविनाशो भवेन्नूनं तथा स्त्रीपरित्यागवान् ॥१७॥ उपपदे च संयुक्तौ शिखिशुक्रौ द्विजोत्तम ॥ रक्तप्रदररोगार्ता जायते तस्य भामिनी ॥ १८ ॥ उपपदादिषु संयोगे बुधकेत्वोर्द्विजोत्तम ॥ अस्थिस्रावयुता बाला गृहे तस्य न संशयः ॥ १९ ॥ रवीराहुस्तथा पंगुरुपपदे योगकारकः ॥ अस्थिज्वरवती बाला तप्तांगा च दिवानिशं ॥ २० ॥ उपपदे बुधकेतुभ्यां योगसंबंधके द्विज ॥ स्थूलांगी गृहिणी तस्य जायते नात्र संशयः ॥ २१ ॥ उपपदे बुधक्षेत्रे भौमर्क्षे चाथवा द्विज ॥ मंदारौ संस्थितौ तत्र प्राणरोगार्तिपित्तयुक् ॥२२॥ सौम्यारौ चान्यक्षेत्रे वा उपदिश्ये शनिर्युते ॥ कर्णरोगवती बाला नेत्ररोगयुता तथा ॥ २३ ॥ कुजसौम्यौ चान्यक्षेत्रे उपपदे द्विजोत्तम ॥ योगे स्वर्भानुदेवेज्यौ दंतार्ता गृहिणी भवेत् ॥ २४ ॥ उपपदे तु कन्यास्थे अन्यर्क्षेपि तथा द्विज ॥ शनिस्वर्भानुयोगं च पंग्वंगी तस्य भामिनी ॥ २५ ॥ ये योगाः पूर्वकथिता मया ते विप्रसत्तम ॥ शुभयुक् दृष्टिसंयोगे न भवेयुः फलप्रदाः ॥ ॥ २६ ॥ लग्नादुपपदाद्वापि यो राशिः सप्तमो द्विज ॥ तन्नवांशा राशयांशाः स्वसप्तमतदंशकाः ॥ २७ ॥ तत्र पापे स्थिते दृष्टे उक्तयोगफलं विदुः ॥ शनिः शुक्रस्तथा चांद्रः सप्तमांशग्रहेषु च ॥ त्रिकयोगकृते विप्र अपत्यरहितो नरः ॥ २८ ॥ पदोपपदलग्नेषु पुत्रकारकके द्विज ॥ पंचमस्थे गुरौ भानौ तत्र स्वर्भानुयोगकृत् ॥२९॥ बहुपुत्रो भवेन्नुनं प्रतापी बलवीर्ययुक् ॥ प्रचंडविजयी विप्र रिपुनिग्रहकारकः ॥ ३० ॥ उक्तस्थाने निशानाथे एकपुत्रो भवेद्विज ॥ उक्तस्थाने शुभे पापे पुत्रसौख्यं विलंबितं ॥ ३१ ॥ उक्त-

स्थाने कुजश्चांद्रिर्जायते च ह्यपुत्रवान् ॥ परपुत्रयुतो वापि सहोद-सुतवान् भवेत् ॥३३॥ उक्तस्थाने चोजराशौ बहुपुत्रप्रदो भवेत् ॥ मिथुने युग्मराशौ चेत्स्वल्पापत्यो भवेन्नरः ॥३४॥ ग्रहक्रमात्कुक्षि-संज्ञे तदीशं पंचमांशतः॥सिंहाधीशे रवौ विप्र स्वल्पापत्यो भवे-न्नरः॥३५॥उपपदे सिंहलग्ने निशानाथयुतेक्षितः॥ स्वल्पप्रजो भवे-द्विप्र तथा कन्याप्रजो भवेत् ॥३६॥ सुतभावनवांशाच्च तथापि पु-त्रकारकात्॥यद्वा त्रिंशांशकुंडल्यां पंचमांशात्तदा द्विज॥३७॥अंतर्दा-शाश्चिंतयेद्विप्र संततेर्योगमुत्तमम्॥एवं सर्वप्रकारेण चिंतनीयं सदा बुधैः ॥ ३८ ॥ उपपदे शनीराहुर्भ्रातृस्थौ भ्रातृनाशकृत् ॥ एका-दशे ज्येष्ठभ्रातुस्तृतीये च कनिष्ठकम् ॥ ३९ ॥ उपपदेकादशस्थाने तृतीये दानवेज्यके ॥ व्यवहितार्थनाशः स्याद्यथा संभवति द्विज ॥४०॥ लग्ने वापि लये वापि दैत्याचार्ययुतेक्षिते ॥ व्यवहितांगना-शः स्यान्निर्विशंकं द्विजोत्तम ॥ ४१ ॥ तृतीयैकादशे विप्र कुजेज्य-बुधचंद्रमाः ॥ भ्रातृबाहुल्यता वाच्या प्रतापी बलवत्तरः ॥४२॥ शनेरसंयुते दृष्टे तृतीयैकादशे द्विज ॥ कनिष्ठज्येष्ठयोर्नाशं भिन्न-स्थे भिन्नभावहृत् ॥ ४३ ॥ भ्रातृस्थाने युते सौरो लाभस्थे वा तृ-तीयगे ॥ स्वस्य माता स्वस्तिमती अन्यन्नश्यति वै द्विज ॥४४॥ तृतीयैकादशे केतुर्बाहुल्यं भगिनीसुतं ॥ भ्रातृस्वल्पसुखं तस्य निर्विशंकं द्विजोत्तम ॥ ४५ ॥ सप्तमे द्वादशे स्थाने सैंहिकेययुते-क्षिते ॥ ज्ञानवांश्च भवेद्बालो बहुभाग्ययुतो द्विज ॥४६॥सप्तमेशा-द्वितीयस्थे पुच्छनाथयुतेक्षिते॥स्तब्धवाग् जायते बालस्तथा स्ख-लितवाग् द्विज ॥४७॥ आरूढे शत्रुभावस्थे पापस्थे शुभवर्जिते ॥ शुभसंबंधरहिते चोरो भवति निश्चितं॥४८॥आरूढे वापि सौम्येतु सर्वदेशाधिपो भवेत् ॥ सर्वज्ञस्तत्र जीवः स्यात्कविर्वादी च भार्ग-

वः ॥ ४९ ॥ आरूढेपि पदे वापि धनस्थे शुभखेचरे ॥ सर्वद्रव्याधिपो धीमाञ्जायते द्विजसत्तम ॥ ५० ॥ उपपदाद्धनपो यत्र वर्तते तस्य वित्तभे ॥ पापखेचरसंयुक्ते चौरो भवति निश्चितं ॥ ५१ ॥ सप्तमेशाद्द्वितीये च राहुस्थे मूक एव च ॥ खलस्थिते यदा विप्र दंतानामधिकं भवेत् ॥ ५२ ॥ शिखिना वातव्याधिः स्याद्यद्वास्यादस्फुटोक्तिवान् ॥ तत्र नानाग्रहैर्योगे सिद्धं फलमुदाहरेत् ॥ ५३ ॥ सप्तमेशाद्द्वितीये च छायासूनुयुतेद्विज ॥ गौरः श्यामो नीलपीतो जायते बुद्धिमान्नरैः ॥५४॥ अमात्यानुचराद्विप्र देवभक्तिं विचिंतयेत् ॥ नीचत्वादेव नीचत्वं शुभपापाच्छुभाशुभं ॥ ५५ ॥ कारकांशे पापखगैः पापांशे पापयोगकृत् ॥ पापवर्गे शुभैर्हीने जायते परजातवान्॥५६॥कारकांशे भवेत्पापो न ज्ञेयः परजातकः ॥ अन्येषां पापखेटानां योगं घटत्वमाप्नुयात् ॥ ५७ ॥ अथ वा रंध्रभे पापे नायं योगो विचिंत्यते ॥ शनिराहुयुतौ यत्र शनिराह्वोः क्षेत्रके द्विज ॥ ५८ ॥ परजातः प्रसिद्धोस्ति ह्यन्येभ्यो गुप्त एव च ॥ शुभवर्गे यदा खेटो वर्गोक्तानां यथा द्विज ॥ ५९ ॥ जारजः कथनमात्रे न तु जारज इत्यपि ॥ यत्र कुत्रापि स्वोच्चे द्वौ कुलमुख्यो भवेन्नरः ॥ ६० ॥ आदिषट्कं च पर्यन्ता ग्रहाः सौख्यं विचिंतयेत् ॥ सारं सारमहं वक्ष्ये तवाग्रे द्विजसत्तम ॥ ६१ ॥

## अस्योदाहरणम् ।

जन्मलग्नारूढाद्द्वादशस्थानाधिपीर्तबुधः तस्य पदमुपपदसंज्ञम् । अत्र तु मिथुनलग्नमागतं एवं सर्वत्र ज्ञेयम्.

उपपदकुंडलीमाह.

४   चं. २
मं. ५   सू. ३ बु.   शु. १
६ रा.   के. १२
गु. ७   ९   ११
श. ८   १०

## अथ कारकमारकादिविचारमाह ।

पंचमं नवमं चैव विशेषधनमुच्यते ॥ चतुर्थं दशमं चैव विशेषं सुखमुच्यते ॥ १ ॥ चंद्रभानू विनासर्वे मारके मारकाधिपाः ॥ षष्ठाष्टमव्ययेशास्तु राहुः केतुस्तथैव च ॥ २ ॥ केंद्राधिपतयः सौम्याः शुभं नैव दिशंति च॥क्रूरा नैवाशुभं कुर्युःकोणपौ शुभदायकौ ॥ ३ ॥ धनेशो हि व्यये यश्च संयोगात्फलदो मतौ ॥ लाभारि अधिपाः पापा रंध्रेशो न शुभप्रदः ॥ ४ ॥ जायाकुटुंबकाधीशौ मारकौ परिकीर्तितौ ॥ क्रूराः कंद्राधिपा भूपात्क्षीणचंद्रो रविस्तथा ॥ ५ ॥ शनिर्भौमश्च विज्ञेयाः प्रबलात्युत्तरोत्तराः ॥ लग्नांबुद्यूनकर्माणि प्रबलान्युत्तराणि हि ॥ ६ ॥ सुतधर्मौ तथा स्थानौ प्रबलौ चोत्तरोत्तरौ ॥ लाभारित्रितयस्थाने त्वधोधः प्रबलं भवेत् ॥ ७ ॥ पुनर्मारकयोर्मध्ये ह्युत्तरं प्रबलं मतं ॥ भाग्यस्थानाद्व्ययं रंध्रं तस्माच्चैवाशुभं वदेत् ॥ ८ ॥ एतत्स्थानानुसारेण ग्रहाणां मानमालिखेत् ॥ चंद्रश्चांद्री गुरुसितौ केन्द्रदोषोत्तरोत्तरं ॥ ९ ॥ तथैव च ग्रहाः क्रूरा बलं चैवोत्तरोत्तरं ॥ भाग्येशः सर्वदा सौम्यो न क्रूरः फलदायकः ॥ १० ॥ पुत्राधिपोपि शुभदः क्रूरोपि सुखदः स्मृतः ॥ त्रिलाभारिपुमृत्यूनां पतयो दुःखदायकाः ॥ ११ ॥ शुभोपि शुभदो नैव दशायोगे चरोपि वा ॥ अष्टमाधिपतिर्दोषस्तुला मेषे न हि क्वचित् ॥ अलौषष्ठाष्टदोषो न वृषभोपि न दोषभाक् ॥ १२ ॥ यद्यद्भावगतो राहुः केतुश्च जनने नृणां ॥ यद्यद्भावेशसंयुक्तस्तत्फलं प्रदिशेदलम् ॥ १३ ॥

## अथ मेषलग्नम् ।

मंदसौम्यसिताः पापाः शुभौ गुरुदिवाकरौ ॥ न शुभं योगमात्रेण प्रभवेच्छनिजीवयोः ॥ १४ ॥ परतंत्रेण जीवस्य पापक-

मोपि निश्चितं ॥ कविः साक्ष्यनिहंतास्यान्मारकत्वेन लक्षितः ॥ १५ ॥ मंदादयो निहंतारो भवेयुः पापिनो ग्रहाः ॥ शुभाशुभ-फलान्येवं ज्ञातव्यानि क्रियोद्भवैः ॥ १६ ॥

अथ वृषलग्नम् ।

जीवशुक्रेंदवः पापाः शुभौ शनिदिवाकरौ ॥ राजयोगकरः सा-क्षादेकएव रवेःसुतः ॥ १७ ॥ जीवादयो ग्रहाः पापाः संति मा-रकलक्षणाः ॥ बुधस्तत्र फलान्येवं ज्ञेयानि वृषजन्मनः ॥ १८ ॥

अथ मिथुनलग्नम् ।

भौमजीवारुणाःपापा एक एव कविः शुभः॥शनैश्चरेण जीवस्य योगो मेषभवो यथा ॥ १९ ॥ नायं शशी निहंता स्याल्लक्षणं पा-पनिष्फलम् ॥ ज्ञातव्यानि द्वंद्वजस्य फलान्येतानि सूरिभिः ॥२०॥

अथ कर्कलग्नम् ।

भार्गवेंदुसुतौ पापौ भूसुतांगिरसौ शुभौ ॥ एक एव ग्रहःसा-क्षाद्भूसुतो योगकारकः ॥ २१ ॥ निहंता रविजोन्ये तु मानिनो मा-रकाह्वयाः ॥ कुलीरसंभवस्यैव फलान्युक्तानि सूरिभिः ॥ २२ ॥

अथ सिंहलग्नम् ।

रौहिणेयः सुतौ पापौ कुजजीवौ शुभावहौ ॥ प्रभवेद्योगमात्रेण न शुभं गुरुशुक्रयोः ॥ २३ ॥ घ्नंति सौम्यादयः पापा मारकत्वेन लक्षिताः ॥ एवं फलानि वेद्यानि सिंहे यस्य जनुर्भवेत् ॥ २४ ॥

अथ कन्यालग्नम् ।

कुजजीवेंदवः पापा एक एव भृगुः शुभः ॥ भार्गवेंदुसुतावेव भवेतां योगकारकौ ॥ २५ ॥ निहंता कविरन्ये तु मारकास्तु कुजा-दयः ॥ प्रतीक्षेत फलान्युक्तान्येवं कन्याभवेबुधैः ॥ २६ ॥

## अथ तुलालग्नम् ।

जीवार्कमहिजाः पापाः शनैश्चरबुधौ शुभौ ॥ भवेतां राजयोगस्य कारकौ चंद्रतत्सुतौ ॥ २७ ॥ कुजो निहंति जीवाद्याः परे मारकलक्षणाः ॥ निहंतारः फलान्येवं काव्यो न तु तुलाभवः॥२८॥

## अथ वृश्चिकलग्नम् ।

सौम्यभौमाः सिताः पापाः शुभौ गुरुनिशाकरौ॥ सूर्यचंद्रमसावेवं भवेतां योगकारकौ ॥ २९ ॥ जीवो निहंता सौम्याद्या हंतारो मारकाह्वयाः ॥ तत्तत्फलानि विज्ञेयान्येवं वृश्चिकजन्मनः ॥ ३० ॥

## अथ धनुर्लग्नम् ।

एक एव कविः पापः शुभौ सौम्यदिवाकरौ॥योगो भास्करसौम्याभ्यां निहंता भास्वतः सुतः ॥ ३१ ॥ घ्नंति शुक्रादयः पापा मारकत्वेन लक्षिताः ॥ ज्ञातव्यानि फलान्येवं चापजस्य मनीषिभिः ॥ ३२ ॥

## अथ मकरलग्नम् ।

कुजजीवेंदवः पापाः शुभौ भार्गवचंद्रजौ ॥ स्वयं चैव निहन्ता स्यान्मंदो भौमादयः परे ॥ ३३ ॥ तल्लक्षणानि हंतारः कविरेकः सुयोगकृत् ॥ ज्ञातव्यानि फलान्येवं विबुधैर्मृगजन्मनः ॥ ३४ ॥

## अथ कुंभलग्नम् ।

जीवचंद्रकुजाः पापा एको दैत्यगुरुः शुभः ॥ राजयोगकरो भौमः कविश्चैव बृहस्पतिः ॥ ३५ ॥ निहंता घ्नंति भौमाद्या मारकत्वेन लक्षिताः ॥ एवमेव फलान्यूह्यान्येतानि घटजन्मनः॥३६॥

## अथ मीनलग्नम् ।

मंदशुक्रांशवः पापाः सौम्यो भौमविधू शुभौ ॥ महीसुतगु-

वीर्ययोगे कारणेनैव भूसुतः ॥ ३७ ॥ मारकान्कारकान्वीक्ष्य मंदज्ञौ घ्नंति पापिनः ॥ इत्यूह्यानि फलान्येवं बुधैस्तु झषजन्मनः ॥ ३८ ॥ एतच्छास्त्रानुसारेण मारकान्निर्दिशेद्बुधः ॥ चंद्रसूर्यौ विना सर्वे मारकाः परिकीर्तिताः ॥ ३९ ॥ स्वदशायां स्वभुक्तौ च नराणां निधनं नहि ॥ क्वचिद्दशायामिच्छंति स्वभुक्तौ न कदाचन ॥ ४० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे कारकमारकादिविचारकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ द्वादशभावनिरीक्षणमाह।

तनोरूपं च ज्ञानं च वर्णं चैव बलाबलम् ॥ शीलं वै प्रकृतिश्चाथ तनुस्थानान्निरीक्षयेत् ॥ १ ॥ धनस्यापि कुटुंबस्य मृत्युजालममित्रकं ॥ धातुरत्नादिकं सर्वं धनस्थानान्निरीक्षयेत् ॥ २ ॥ विक्रमं भृत्यभ्रात्रादि उपदेशप्रयाणकम् ॥ पित्रोर्वै मरणं विद्याद्दुश्चिक्याच्चनिरीक्षयेत ॥ ३ ॥ वाहनस्याथ बंधूनां मातृसौख्यादिकानपि ॥ निधिक्षेत्रगृहं चापि हर्म्यारामादिकानपि ॥ ४ ॥ धर्मस्य विमलस्थानं पातालाच्चनिरीक्षयेत् ॥ यंत्रमंत्रौ तथा विद्या बुद्धेश्चैव प्रबंधकाः ॥ पुत्रराज्यापभ्रंशादि पश्येत्पुत्रालयाद्बुधः ॥ ५ ॥ मातुलांतकशंकानां शत्रूंश्चैव व्रणादिकान् ॥ सपत्नीमातरश्चापि ह्यरिस्थानान्निरीक्षयेत् ॥ ६ ॥ जाया मध्यप्रयाणं च व्ययभावं तथा निशि ॥ मरणं च स्वदेहस्य जायाभावान्निरीक्षणं ॥ ७ ॥ ऋणदानग्रहणयोर्गुदे चैवांकुरादयः ॥ गत्यनुक्तादिकं सर्वं पश्येद्रंध्राद्विचक्षणः ॥ ८ ॥ हर्म्यं धर्मश्च श्यालश्च भ्रातृपत्न्यादयस्तथा ॥ तीर्थयात्रादिकं सर्वं धर्मस्थानान्निरीक्षयेत् ॥ ९ ॥ राज्यं चाकाशवृत्तिंच मानं चैव पिता तथा ॥ प्रवासस्य ऋणस्यापि व्योमस्थानान्निरीक्षणं ॥ १० ॥ नानावस्तुभवस्यापि पुत्रजाया-

दिकानपि ॥ रिपूणां रिपवश्चैव भवस्थानान्निरीक्षणम् ॥ ११ ॥ व्ययं च वैरिवृत्तांतं रिष्फमंत्यादिकं तथा ॥ एवं भावफलं सम्यक् तत्तत्संज्ञानपूर्वकम् ॥ १२ ॥ व्ययाच्चैव हि ज्ञातव्यं वेत्ति सर्वत्र बुद्धिमान् ॥ यो यो भावपतिर्नष्टस्त्रिकेशाद्यैश्च संयुतः ॥ भावं न वीक्षते सम्यग्ग्रहो वापि मृतो यदा ॥ १३ ॥ स्थविरो वा भवेत्खेटः सुप्तो वापि प्रपीडितः ॥ तदा तद्भावजं सौख्यं नष्टं ब्रूयाद्विशंकितः ॥ १४ ॥ यदा सौम्यग्रहैर्दृष्टो भावो भावेशसौम्ययुक् ॥ युवा प्रबुद्धराजस्थः कुमारो वापि तद्भवेत् ॥ १५ ॥ ईशेक्षणवशात्तत्र भावसौख्यं वदेद्बुधः ॥ शुक्रः शुक्रश्च नेत्रश्च चंद्रमा मनसस्तथा ॥ १६ ॥ आत्मा वै दिनकृत्तत्र जीवो जीवितसौख्यकम् ॥ क्रोधः पराक्रमो भौमो बुधो बालत्वधीमतः ॥ १७ ॥ शनिर्दुःखप्रदानाच्च प्रपदः पार्श्वकस्तथा ॥ १८ ॥ राहुरैश्वर्यकं विद्धि मुखनाभिपदस्तलः ॥ शिरो नेत्रे तथा कर्णं नासा चापि कपोलकौ ॥ १९ ॥ हनूमुखं तथा वाच्यं कंठांसौ बाहुकौ तथाः ॥ पार्श्वे बाहुद्वये चैव क्रोडे नाभौस्तथैव च ॥ २० ॥ बस्तिर्लिंगगुदे वृष्णावूरू जानू च जंघके ॥ पदेति चैव सर्वांगे संस्थां ब्रूयुर्विचक्षणाः ॥ २१ ॥ लग्ने तत्कालद्रेष्काणे शिरादि परिकल्पयेत् ॥ तस्माद्यस्मिन्स्थितः खेटस्तत्र चिन्हं स्फुटं वदेत् ॥ २२ ॥ एवं भेदानुभेदेन सर्वत्रैवोपलक्षयेत् ॥ संक्षेपेणैतदुदितमन्यद्बुद्ध्यनुसारतः ॥ २३ ॥

## अथ प्रथमभावफलम् ।

देहाधिपः पापयुतोऽष्टमस्थो व्ययारिगोऽवांगसुखं निहन्ति ॥ सर्वत्र भावेषु च योजनीयमेवं बुधैर्भाववशात्फलं हि ॥ २४ ॥ एवं तृतीयेपि च सप्तमेपि फलं विमृश्य कृतिभिः प्रयत्नात् ॥ तथा व्यये मित्रगृहे रिपौ स्वते स्थिते विलग्नाधिपतौ फलं स्यात् ॥ २५ ॥

पापो विलग्नाधिपतिर्विलग्ने चंद्रे विलग्ने यदि बालकः स्यात् ॥ तदाऽतिरोगं स हि केंद्रसंस्थत्रिकोणलाभेषु गदं निहंति ॥ २६ ॥ बलो न तामेव तु पापवत्तामेतस्य वित्तं फलमानुरूप्यताम् ॥ नीचारिसूर्यस्य गृहेषु तिष्ठन् स्वर्क्षादिगृक्षादिग्रहत्रये च ॥ २७ ॥ देहाधिपश्चंद्रगृहाधिपो वा तृतीयरिष्फारिगतो बलः स्यात् ॥ नीचास्तगहृयष्टगृहे स्थितो वा कार्श्यं शरीरेऽतिगदं करोति ॥२८॥ लग्नाधिपो वा जीवो वा शुक्रो वा यदि केंद्रगः ॥ तस्य पुत्रस्य दीर्घायुर्धनवान्राजवल्लभः ॥ २९ ॥ लग्नाधिपोन्नतबलैश्च शुभैर्नवकेन दृष्टस्य ॥ केंद्रस्थिते शुभावलोक्ये मृत्युहीनेपि दीर्घायुः ॥ ३० ॥ केन्द्रत्रिकोणेषु न यस्य पापे लग्नाधिपे सुरगुरुश्चतुरष्टमस्थः ॥ भुक्त्वा सुखानि विविधानि च पुण्यकर्मा जीवेत्तु वर्षशतमेव विमुक्तरोगः ॥ ३१ ॥ लग्नेशे चरराशिस्थे शुभग्रहनिरीक्षिते ॥ कीर्तिश्रीमान्महाभोगी देहपुष्टिसमन्वितः ॥ ३२ ॥ जीवः शुक्रो बुधश्चंद्रो लग्ने शशिसमन्वितः ॥ लग्नात्केंद्रगतश्चैव राजलक्षणसंयुतः ॥ ३३ ॥ लग्ने राहुसमायुक्ते लग्ने सोमनिरीक्षिते ॥ लग्नांशे मंदसूरीचेज्जातश्च यमलो भवेत् ॥ ३४ ॥ जातो नरो बालवेष्टीवितांगो लग्ने फणिर्मन्दसमन्वितश्च ॥ लग्ने च पार्श्वे द्वितये च पापैर्निरीक्षिते जीवबुधेंदुशुक्रैः ॥ ३५ ॥ रविचंद्रौ चहोकस्थावेकांशकसमन्वितौ ॥ त्रिमात्रा च त्रिभिर्मासैर्भ्रात्रा पित्रा च पोषितः ॥३६॥

## अथ द्वितीयभावफलम् ।

शुक्रेण युक्तो यदि नेत्रनाथः शुक्रस्य वार्क्षादिग्रहत्रयस्य ॥ संबंधवान्स्याद्यदि देहपेन नेत्रं विधत्ते विपरीतभावम् ॥ ३७ ॥ तत्र स्थितौ चंद्ररवी निशांध्यं जात्यंधतां नेत्रपदेहपाकौः ॥ पैत्रधनाथेन युतास्तदांध्यं कुर्वन्ति मात्रादिफलं तथैव ॥३८॥ दो-

षष्ठम च सर्वत्र स्वोच्चस्वर्क्षगतोग्रहः ॥ षडादित्रयसंस्थाश्चेत्त-
द्विना दोषकृच्छुभः ॥ ३९ ॥ वागीशवाग्ग्रहाधीशौ षडादित्रय-
संस्थितौ ॥ मूकतां कुरुतोप्येवं पितृमातृग्रहाधिपाः ॥ ४० ॥
वागीशवाग्ग्रहाधीशा युतास्ते त्रयसंस्थिताः ॥ कुर्वंति तेषां मूक-
त्वमेवमूह्यं मनीषिभिः ॥ ४१ ॥ कुटुंबकारकाः केन्द्रत्रिकोणेषु गता
ग्रहाः ॥ सकुटुंबकलत्रेशाः कलत्रं वा कुटुम्बकम् ॥ ४२ ॥ पश्यं-
ति च द्वयस्था वा यावत्तावत्प्रमाणकम् ॥ कलत्रं निर्दिशेत्प्राज्ञोऽ-
थवा तेषां च नो वदेत् ॥ ४३ ॥ विद्याधिपो जीवबुधावविद्यामरि-
त्रयस्थौ कुरुतोथ तौ चेत् ॥ केंद्रत्रिकोणस्थग्रहोच्चसंस्थौ प्रयच्छ-
तां द्रागनवद्यविद्याम् ॥ ४४ ॥ एवं बुधस्यांगिरसः षडादित्रय-
स्थितौ नीचग्रहोरिनाथः ॥ केन्द्रत्रिकोणस्थगृहोच्चसंस्थो धनाभि-
वृद्धिःकुरुतस्तदेव ॥ ४५ ॥ धनाधिपो गुरुर्यस्य धनराशिस्थितो
यदि ॥ भौमेन सहितो वापि धनवान् स नरोभवेत् ॥ ४६ ॥ ध-
नेशे लाभराशिस्थे लाभेशे वा धनं गते ॥ तावुभौ केंद्रराशिस्थौ
धनवान्स नरोभवेत् ॥ ४७ ॥ धनेशे केंद्रराशिस्थे लाभेशे तत्त्रि-
कोणगे ॥ गुरुशुक्रयुते दृष्टे धनलाभमुदीरयेत् ॥ ४८ ॥ वित्तेशे
रिपुभावस्थे लाभेशे तद्गते यदि ॥ वित्तलाभौ पापयुक्तौ दृष्टे नि-
र्धन एव सः ॥ ४९ ॥ वित्तलाभाधिपौ द्विस्थे पापखेचरसंयुते ॥
जन्मप्रभृतिदारिद्र्यं भिक्षान्नं लभते नरः ॥ ५० ॥ षष्ठाष्टमव्य-
यस्थेषु धनलाभाधिपौ स्थितौ ॥ लाभे कुजे धने राहौ राजदंडाद्धन-
क्षयम ॥ ५१ ॥ लाभे जीवे धने शुक्रे तदीशे शुभसंयुते ॥ व्यये
शुभग्रहयुते धर्ममूलाद्धनव्ययम् ॥ ५२ ॥ कुटुंबराशेरधिपः स-
सौम्ये केंद्रेथ सौम्ये च सुहृद्गृही वा ॥ सौम्यर्क्षयुक्तो यदि जातपुं-
सः कुटुंबसंरक्षणमाभिभूतः ॥ ५३ ॥ कुटुंबनाथे परमोच्चयुक्ते

देवेंद्रपूज्ये च समीक्षिते वा ॥ तथाविधे तद्भवनेऽभिजातः सहस्र-रक्षो भुवनप्रतापी ॥ ५४ ॥ तन्नाथे भृगुणा बुधेन सहिते पाराव-तांशे तथा ॥ स्वोच्चे सुहृदंगगृहे धनपतौ स्वस्थानकोलाहलः ॥ ॥ ५५ ॥ कुटुंबराशिस्थपतौ यदि स्याद्भृगौ बुधे तादृशभावनाथे॥ स्वोच्चे सुहृत्क्षेत्रगतेऽथवा स्यात्परोपकारी जनरक्षकःस्यात् ॥ ५६ ॥ नेत्रेशे बलसंयुक्ते शोभनाक्षो भवेन्नरः ॥ षष्ठाष्टमव्यये युक्ते नेत्रे वैकल्यमादिशेत् ॥ ५७ ॥ धनेशे पापसंयुक्ते धने पापसमन्विते ॥ असत्यवादी पिशुनः पवनव्याधिसंयुतः ॥ ५८ ॥

## अथ तृतीयभावफलम् ।

सभौमो भ्रातृभावेशः षडादित्रयसंस्थितः ॥ भ्रातृक्षेत्रगतो वापि भ्रातृभावं विनिर्दिशेत् ॥ ५९ ॥ तौ पापयोगतः पापक्षेत्र-योगेन वा पुनः ॥ उत्पाद्य सहजान्सद्यो निहंता शास्त्रनिश्चयात् ॥ ६० ॥ स्त्रीग्रहो भ्रातृभावेशः स्त्रीग्रहो भ्रातृगोऽपि वा ॥ भगि-नी स्यात्तदा भ्राता पुंगृहे पुंग्रहो यदि ॥ मिश्रे मिश्रफलं चात्र बलाबलविनिर्णयः ॥ ६१ ॥ नाशस्थितौ सोदरनाथभौमैः पापेक्षिते सोदरनाथमाहुः ॥ पापेक्षितौ पापसमागमौ वा त्रिस-स्थविद्याप्रविनाशहेतुः ॥ ६२ ॥ भ्रातृभे कारके वापि शुभयुक्तनि-रीक्षिते ॥ भावे वा बलसंपूर्णे भ्रातृणां वर्धनं भवेत् ॥ ६३ ॥ केंद्र-त्रिकोणगे वापि स्वोच्चमित्रस्ववर्गगे ॥ नाथे वा कारके वापि भ्रा-तृलाभं वदेद्बुधः ॥ ६४ ॥ भ्रातृभे बुधसंयुक्ते तदीशे चंद्रसंयुते ॥ कारके मंदसंयुक्ते भगिन्येकाग्रतो भवेत् ॥ ६५ ॥ पश्चात्सहोदरो-प्येतत्तृतीयस्तु मृतं भवेत् ॥ कारके राहुसंयुक्ते विक्रमेशस्तुनीचगः ॥ ६६ ॥ पश्चात्सहोदराभावात्पूर्वस्तु त्रयकृद्भवेत् ॥ भ्रातृस्थाना-धिपे केन्द्रे कारके तत्त्रिकोणगे ॥ ६७ ॥ जीवेन सहितस्वोच्चे संख्या

द्वादश सोदराः ॥ ६८ ॥ अयं तृतीयगर्भश्च प्रथमाञ्च तृतीयके ॥ सप्तमश्चैव नवमद्वादशश्च मृतिप्रदः ॥ ६९ ॥ शेषाः सहोदरादीर्घाः षड्भार्या यमलो भवेत् ॥ व्ययेशेन युते भौमे गुरुणा सहितोऽपि वा ॥ ७० ॥ भ्रातृस्थाने शशियुते सप्तसंख्यास्तु सोदराः ॥ एतेषां द्विप्रजानाथः शुक्रयुक्तेक्षितेन हि ॥ ७१ ॥

## अथ चतुर्थभावफलम् ।

गेहाधिनाथेन युते तु गेहे देहाधिपेनापि गृहाभिलब्धिः ॥ युते षडाद्यौ तु विपर्ययः स्याद्गृहाधिपे देहपतौ च तद्वत् ॥ ७२ ॥ केंद्रत्रिकोणेषु शुभग्रहेण युते समीचीनगृहाभिलब्धिः ॥ क्षेत्रस्य चिंता सदनाधिपेन जीवेन चिंता तु सुखस्य कार्या ॥ ७३ ॥ दिव्यांगनावाहनवस्तुभूषाचिंता तु कार्या भृगुणा बुधेन्द्रैः ॥ तमः शनिभ्यामभिचिंत्यमायुरर्केण तातः शशिनात्र माता ॥ ७४ ॥ बुधेन बुद्धिः सदनर्क्षसंस्थां गतेन सप्तेशयुतेन च स्यात् ॥ केंद्रत्रिकोणेषु गतेषु सप्त प्रपश्यता वापि स्वतुंगगेन ॥ ७५ ॥ स्वकीयस्वांशगे स्वोच्चे सुतस्थानस्थितो यदि ॥ सुखवाहनवृद्धिः स्याच्छंखभेर्यादिवाद्ययुक् ॥ ७६ ॥ विचित्रसौधप्राकारं मंडितं गृहमादिशेत् ॥ कर्माधिपेन सहिते नाथे चंद्रार्कसूनुना ॥ ७७ ॥ बंधुस्थानेश्वरे सौम्यशुभग्रहनिरीक्षिते ॥ शशिजे लग्नसंयुक्ते बुधपूज्यो भवेन्नरः ॥ ७८ ॥ मातृस्थाने शुभयुते तदीशे स्वोच्चराशिगे ॥ कारके बलसंयुक्ते मातृदीर्घायुरादिशेत् ॥ ७९ ॥ स्वतुंगसंस्थे हिबुकाधिनाथे स्वर्क्षे त्रिभे मित्रगृहे स्थिते च ॥ शुभेन दृष्टे शुभसंयुते च क्षेत्राभिवृद्धिं प्रवदेन्नराणाम् ॥ ८० ॥ सुखेशे केंद्रभावस्थे तथा केंद्रे स्थितो भृगुः ॥ शशिजे स्वोच्चराशिस्थे विद्वन्पंडित एव सः ॥ ८१ ॥ सुखे मंदे रवियुते चंद्रो भाग्यगतो यदि ॥

लाभस्थानगते भौमे गोमहिष्यादिलाभकृत् ॥ ८२ ॥ चरग्रहस-
मायुक्ते सुखे तद्राशिनायके ॥ षष्ठे भौमे व्ययगते मूकत्वं प्राप्नुते
नरः ॥ ८३ ॥ लग्नस्थानाधिपे सौम्ये सुखेशे नीचराशिगे ॥ कारके
व्ययराशिस्थे सुखेशे लाभसंयुते ॥ ८४ ॥ द्वादशे वत्सरे प्राप्ते
नरवाहनलाभकृत् ॥ वाहने रविसंयुक्ते स्वोच्चे तद्राशिनायके।८५।
युते शुक्रेण संयुक्ते द्वात्रिंशे वाहनं भवेत् ॥ कर्मेशेन युते बंधुना-
शे तुंगांशसंयुते ॥ ८६ ॥ द्विचत्वारिंशके प्राप्ते नरो वाहनभाग्भ-
वेत् ॥ लाभेशे सुखराशिस्थे सुखेशे लाभसंयुते ॥ द्वादशे
वत्सरे प्राप्ते नरवाहनलाभकृत् ॥ ८७ ॥

## अथ पंचमभावफलम् ।

षडादित्रयसंस्थे तु सुताधीशे त्वपुत्रता ॥ केंद्रत्रिकोणसंस्थे तु
पुत्रलाभाभिसम्भवः ॥ ८८ ॥ सत्पुत्रलाभः सुतपे सुरेज्ये शुभेषु
गेहेषु गते च भानौ ॥ एकः स्थिरः स्यात्सुत एक एव स्थितः
शुभः केंद्रनवात्मजस्थे ॥ ८९ ॥ पितापि चिंत्यो नवमे सुतर्क्षे एवं
विधं चिंतनमूहनीयम् ॥ ९० ॥ क्षेत्रस्य कारको भौमः कर्मस्थाने
ऽप्ययं विधिः ॥ अस्तंगते पंचमेशे पापाक्रांते च दुर्बले ॥ ९१ ॥
षष्ठे नीचे सुताधीशे काकवंध्या विशेषतः ॥ षष्ठस्थाने सुताधीशो
लग्नेशो कुजवेश्मनि ॥ म्रियते प्रथमापत्यं काकवंध्यात्वमाप्नुयात्
॥ ९२ ॥ सुताधीशो हि नीचस्थः षडादित्रयसंस्थितः ॥ काकवंध्या
भवेन्नारी सुते केतुबुधौ यदि ॥ ९३ ॥ सुतेशो नीचगो यत्र सुत-
स्थानं न पश्यति ॥ तत्र सौरिबुधौ स्यातां काकवंध्यात्वमाप्नुयात्
॥ ९४ ॥ भाग्येशो मूर्तिवर्ती च सुतेशो नीचगो यदि ॥ सुते केतु-
बुधौ स्यातां सुतं कष्टाद्विनिर्दिशेत् ॥ ९५ ॥ षडादित्रयसंस्थोपि
नीचो वाऽप्यरिसंस्थितः ॥ पापाक्रांते सुतस्थाने पुत्रं कष्टाद्विनि-

दिशेत् ॥ ९६ ॥ पुत्रस्थाने बुधक्षेत्रे मंदक्षेत्रेऽथवा पुनः ॥ मंदिमां-
धयुते दृष्टे तदा दत्तादयः सुताः॥रविचन्द्रौ यदैकस्थावेकांशकसम
न्वितौ ॥९७॥त्रिमात्राभिरसौ भ्राता द्विपित्राऽपि च पोषकः॥पंचमे
षड्गृहे युक्ते तदीशे व्ययराशिगे ॥ लग्नेशेंदुबलो यस्य दत्तपुत्रभ-
वोदयः ॥९८॥ सुतभवने भृगुजीवसौम्यनाथे बलसहिते रविलो-
कितेयुते वा॥बहुसुतजननं वदंति संतः सुतभवनेशबलेन चिंत्यमे-
तत् ॥ ९९ ॥ सुतेशे शशियुक्ते च त्रिराश्यंशगतेऽपि च ॥ तथैव
कन्यकालाभं प्रवदेन्मतिमान्नरः ॥ १०० ॥ सुतेशे नरराशिस्थे
राहुणा सहितः शशी ॥ पुत्रस्थानं गते मंदे परजातं वदेच्छिशुम
॥ १०१ ॥ सुतेशे राहुसंयुक्ते सुतस्थानं समाश्रितं ॥ नवीक्षेच्चंद्र-
गुरुणा परजातो भवेन्नरः ॥ १०२ ॥ न लग्नमिंदुं च गुरुर्निरी-
क्ष्यते न वा शशांको रविणा समागतः ॥ सपापकर्केण युते नवां-
शके परेण जातः प्रवदंति निश्चितम् ॥ १०३ ॥ लग्नाद्दादशगे
चंद्रे लग्नादष्टमगो गुरुः ॥ पापयुक्तेन संदृष्टे अन्यबीजं न संशयः
॥ १०४ ॥ पुत्रस्थानाधिपे स्वोच्चे लग्नाच्चेद्विःत्रिकोणगे ॥ गुरुणा
संयुते दृष्टे पुत्रभाग्यमुपैति सः ॥ १०५ ॥ त्रिचतुःपापसंयुक्ते सु-
तेशेनाधिपे तु युक् ॥ सुतेशे नाशराशिस्थे नीचसंस्थो भवेच्छि-
शुः ॥ १०६ ॥ पुत्रस्थानं गते जीवे तदीशे भृगुसंयुते ॥ द्वात्रिंशे
च त्रयस्त्रिंशे वत्सरे पुत्रलाभकृत् ॥ १०७ ॥ सुतेशे केंद्रभावस्थे
कारकेण समन्विते ॥ षट्त्रिंशे त्रिंशदब्दे च पुत्रोत्पत्तिं विनिर्दि-
शेत् ॥ १०८ ॥ लग्नाद्भाग्यगते जीवे जीवाद्भाग्यगते भृगौ ॥ लग्ने-
शे भृगुसंयुक्ते चत्वारिंशे सुतं लभेत् ॥ १०९ ॥ पुत्रस्थानं
गते राहुस्तदीशे पापसंयुते ॥ नीचराशिगते जीवे द्वात्रिंशे
पुत्रमृत्युदः ॥ ११० ॥ जीवात्पंचमगे पापे लग्नात्पुत्रे गतेऽपि

च ॥ षड्विंशे च त्रयस्त्रिंशे चत्वारिंशे सुतक्षयः ॥ १११ ॥ लग्ने मांदिसमायुक्ते लग्नेशे नीचराशिगे ॥ षट्पंचाशद्दशाब्देषु पुत्रशोकसमाकुलः ॥ ११२ ॥ चतुर्थे पापसंयुक्ते षष्ठे पापसमन्विते ॥ सुतेशे परमोच्चस्थे लग्नेशेन समन्विते ॥ ११३ ॥ कारके शुभसंयुक्ते दशसंख्यास्तु सूनवः ॥ परमोच्चगते जीवे धनेशे राहुसंयुते ॥ ११४ ॥ भाग्येशे भाग्यसंयुक्ते संख्याता नवसूनवः ॥ पुत्रभाग्यगते जीवे सुतेशे बलसंयुते ॥ ११५ ॥ धनेशे कर्मराशिस्थे वसुसंख्यास्तु सूनवः ॥ पंचमात्पंचमे मंदे सुतस्थे च तदीश्वरे ॥ ११६ ॥ सूनवः सप्तसंख्याश्च द्विगर्भे यमलं भवेत् ॥ वित्तेशे पंचमस्थे च सुतस्थे पंचमाधिपे ॥ ११७ ॥ षट्संख्या च सुतप्राप्तिस्तेषां च त्रिप्रजामृतिः ॥ लग्नात्पंचमगे जीवे जीवात्पंचमगे शनौ ॥ ११८ ॥ मंदात्पंचमगे राहौ पुत्रमेकं विनिर्दिशेत् ॥ पंचमे पापसंयुक्ते गुरोः पंचमगः शनिः ॥ ११९ ॥ कलत्रान्तरे पुत्रलाभं कलत्रत्रयभाग्भवेत् ॥ पंचमे पापसंयुक्ते गुरोः पंचमगे शनौ ॥ १२० ॥ पंचमे भौमसंयुक्ते लग्नेशे धनसंगते ॥ जातं जातं विनाशं च दीर्घायुश्चैव मानसः ॥ १२१ ॥

## अथ षष्ठभावफलम्।

षष्ठाधिपोपि पापश्चेद्देहे वाप्यष्टमे स्थितः ॥ तदा व्रणो भवेद्देहे कर्मस्थानेऽप्ययं विधिः ॥ १२२ ॥ एवं पित्रादिभावेशास्तत्तत्कारकसंयुताः ॥ व्रणाधिपयुताश्चापि षष्ठाष्टमयुता यदि ॥ १२३ ॥ तेषामपि व्रणं वाच्यमादित्येन शिरोव्रणं ॥ इंदुना च मुखे कंठे भौमेन ज्ञेन नाभिषु ॥ १२४ ॥ गुरुणा नासिकायां च भृगुणा नयने पदे ॥ शनिना राहुणा कुक्षौ केतुना च तथा भवेत् ॥ १२५ ॥ लग्नाधिपः कुजक्षेत्रे बुधस्य यदि संस्थितः ॥ यत्र कुत्र स्थितो ज्ञेन वीक्षि-

तो मुखरुक्प्रदः ॥ १२६ ॥ लग्नाधिपो कुजबुधौ चंद्रेण यदि संस्थितौ ॥ राहुर्वा शनिना सार्द्धं कुष्ठं तत्र विनिर्दिशेत ॥ १२७ ॥ लग्नाधिपं विना लग्ने स्थितश्चेत्तमसा शशी ॥ श्वेतकुष्ठं तदा कृष्णकुष्ठं च शनिना सह ॥ १२८ ॥ कुजेन रक्तकुष्ठं स्यात्तत्तदेवं विचारयेत् ॥ लग्ने षष्ठाष्टमाधीशौ रविणा यदि संस्थितौ ॥१२९॥ ज्वरगंडुः कुजे ग्रंथिः शस्त्रव्रणमथापि वा ॥ बुधेन पित्तं गुरुणा रोगाभावं विनिर्दिशेत् ॥ १३० ॥ स्त्रीभिः शुक्रेण शनिना वायुना संयुतो यदि ॥ गण्डश्चाण्डालतो नाभौ तमः केत्वोर्गृहे भयम् ॥ १३१ ॥ चंद्रेण गण्डसलिलैः कफश्लेष्मादिना भवेत् ॥ एवं पित्रापि भावानां तत्तत्कारकयोगतः ॥ १३२ ॥ गण्डे तेषां भवेदेवमूह्यमत्र मनीषिभिः ॥ हतशत्रुग्रहादीप्तिगजवाजिधनाधिपाः ॥ १३३ ॥ श्रीपतिः स्वोच्चतेजस्वी गृहारामसुखी भवेत् ॥ दीप्ते विरचितं पुंसां प्रभावरिपुनीचयोः ॥ १३४ ॥ लक्ष्म्या संलिंगितो देहे गजमेदिनी सहस्रभृत् ॥ रोगस्थानगते पापे तदीशे पापसंयुते ॥ १३५ ॥ राहुणा संयुते मंदे सर्वदा रोगसंयुतः ॥ रोगस्थानगते भौमे तदीशे रंध्रसंयुते ॥ १३६ ॥ षड्वर्षद्वादशे वर्षे ज्वररोगी भवेन्नरः॥षष्ठस्थानगते जीवे तद्गृहे चंद्रसंयुते॥१३७॥ द्वाविंशकोनविंशेब्दे कुष्ठरोगं विनिर्दिशेत्॥ रोगस्थानं गतो राहुः केंद्रे मांदिसमन्वितः ॥ १३८ ॥ लग्नेशे नाशराशिस्थे षड्विंशे क्षयरोगता ॥ व्ययेशे रोगराशिस्थे तदीशे व्ययराशिगे ॥ १३९ ॥ त्रिंशद्वर्षेकोनवर्षे गुल्मरोगं विनिर्दिशेत् ॥ रिपुस्थानगते चंद्रे शनिना संयुते यदि ॥ १४० ॥ पंचपंचाशताब्देषु रक्तकुष्ठं विनिर्दिशेत् ॥ लग्नेशे लग्नराशिस्थे मंदे शत्रुसमन्विते॥ १४१ ॥ एकोनषष्टिवर्षे तु वातरोगार्दितो भवेत् ॥ रंध्रेशे रिपुराशिस्थे व्ययेशे

लग्नसंस्थिते ॥ १४२ ॥ चंद्रे षष्ठेशसंयुक्ते वसुवर्षे मृगाद्भयम् ॥ षष्ठाष्टमगतो राहुस्तस्मादष्टगते शनौ ॥ १४३ ॥ वत्सराग्निभयं तस्य त्रिवर्षे पक्षिदोषभाक् ॥ १४४ ॥ षष्ठाष्टमगते सूर्ये तद्व्ये चंद्रसंयुते ॥ पंचमे नवमेऽब्दे तु जलभीतिं विनिर्दिशेत् ॥ १४५ ॥ अष्टमे मंदसंयुक्ते रंध्राद्द्वादशमे कुजः ॥ त्रिंशाब्दं च दशोष्टे तु स्फोटकादिविनिर्दिशेत् ॥ १४६ ॥ रंध्रांशे राहुसंयुक्ते तदंशे रंध्रकोणगे ॥ द्वाविंशेऽष्टादशे वर्षे ग्रंथिमेहादिपीडनम् ॥ १४७ ॥ लाभेशे रिपुभावस्थे तदीशे लाभराशिगे ॥ एकत्रिंशैकचत्वारिंशत्रुमूलाद्धनव्ययः ॥ १४८ ॥ सुतेशे रिपुभावस्थे षष्ठेशे गुरुसंयुते ॥ व्ययेशे लग्नभावस्थे तस्य पुत्रो रिपुर्भवेत् ॥१४९॥ लग्नेशे षष्ठराशिस्थे तदंशे षष्ठराशिगे ॥ दशमैकोनविंशेऽब्दे शुनकाद्भीतिरुच्यते ॥ १५० ॥

## अथ सप्तमभावफलम् ।

कलत्रपो विना स्वर्क्षं षडादित्रयसंस्थितः ॥ रोगिणीं कुरुते नारीं तथा तुंगादिकं विना ॥ १५१ ॥ स्त्रीपुत्रयात्राफलचिंतनानि कार्याण्यनेनापि सहाधिपेन ॥ शुभेन कार्यं शुभमं तथैव पापेन पापं फलमूहनीयम् ॥ १५२॥ सप्तमे तु स्थिते शुक्रेऽतीवकामी भवेन्नरः ॥ यत्रकुत्रस्थिते पापयुते स्त्रीमरणं भवेत् ॥१५३॥दाराधिपःपुण्यग्रहेण युक्तो दृष्टोपि वा पूर्णबलः प्रसन्नः ॥ सौभाग्ययुक्तो गुणवान्प्रभुश्च दाता विभोग्यं बहुधान्यमाहुः ॥ १५४ ॥ कलत्रेशे बहुगुणे तुंगवक्रादिहेतुभिः ॥ बहुभार्यान्तरंगे विद्याच्छत्रुनीचास्तगेषु च ॥१५५॥ परमोच्चगते मंदाधिनाथे मंदराशौ शुभखेचरेण दृष्टे ॥ अथवा भृगुसदने तुंगे बहुभार्यं प्रवदंति बुद्धिमंतः ॥१५६॥ वंध्यासंगो मदे भानौ चंद्रराशिसमः स्त्रियः ॥ कुजे रजस्वलासं-

गो वंध्यासंगश्च कीर्तितः ॥ १५७ ॥ बुधे वेश्या च हीना च व-णिक्स्त्री वा प्रकीर्तितः ॥ गुरोर्ब्राह्मणभार्या स्याद्गर्भिणीसंग एव च ॥ १५८ ॥ हीना च पुष्पिणी वाच्या मन्दराहुफणीश्वरैः ॥ कुजोक्ते सुस्तना मन्दाव्याधिदौर्बल्लिनस्तथा ॥ १५९ ॥ कठिनो-र्ध्वकुजाचार्ये श्रेष्ठस्थूलोन्नतस्तना ॥ पापे द्वादशकामस्थे क्षी-णचन्द्रस्तु पंचगे ॥१६०॥ जातश्च भार्यावश्यः स्यादितिजाति-विरोधकृत् ॥ जामित्रे मंदभौमस्थे तदीशे मंदभूमिजे ॥ १६१ ॥ वेश्या वा जारिणी वाऽपि तस्य भार्या न संशयः ॥ भौमांशकगते शुक्रे भौमक्षेत्रगतेऽथवा ॥ १६२ ॥ भौमयुक्ते च दृष्टे वा भगचुं-बनभाग् भवेत् ॥ मंदांशकगते शुक्रे मन्दक्षेत्रगतेऽपि च ॥१६३॥ मंदयुक्ते च दृष्टे च शिश्नचुंबनतत्परः ॥ दारेशे स्वोच्चराशिस्थे दारे शुभसमन्विते ॥ १६४ ॥ लग्नेशे बलसंयुक्ते स कलत्रसम-न्वितः ॥ १६५ ॥ कलत्रनाथे रिपुनीचसंस्थे मूढेऽथवा पापनिरी-क्षिते वा कलत्रभे पापयुते च दृष्टे कलत्रहानिं प्रवदंति संतः ॥ १६६ ॥ षष्ठाष्टमव्ययस्थेषु मदेशो दुर्बलो यदि नीचराशिगते शुक्रे दारनाशं विनिर्दिशेत् ॥ कलत्रस्थानगे चंद्रे तदीशे व्यय-राशिगे ॥ कारको बलहीनश्च दारसौख्यं न विद्यते ॥ १६७ ॥ भार्याधिपे नीचगृहे च पापपापर्क्षगे वा बहुपापयुक्ते ॥ क्लीबे ग्रहे सप्तमराशिसंस्थे तस्योदयांशे द्विकलत्रसिद्धिः ॥ १६८ ॥ कलत्रस्थानगे भौमे शुक्रे जामित्रगे शनौः ॥ १६९ ॥ लग्नेशे रंध्रराशिस्थे कलत्रत्रयवान् भवेत् ॥ द्विस्वभावगते शुक्रे स्वोच्चतद्राशिनायके ॥ १७० ॥ दारेशे बलसंयुक्ते बहुदारसम-न्वितः ॥ दारेशे शुभराशिस्थे ॥ स्वोच्चस्वर्क्षगे भृगुः ॥ १७१ ॥ पंचमे नवमेऽब्दे तु विवाहः प्रायशो भवेत् ॥ दारस्थानं गते सूर्ये

तदीशे भृगुसंयुते ॥ १७२ ॥ सप्तमैकादशे वर्षे विवाहः प्रायशो भवेत् ॥ कुटुंबस्थानगे शुक्रे दारेशे लाभराशिगे ॥ दशमे षोडशाब्दे च विवाहः प्रायशो भवेत् ॥ १७३ ॥ लग्नकेंद्रगते शुक्रलग्नेशे मंदराशिगे ॥ वत्सरैकादशे प्राप्ते विवाहं लभते नरः ॥ १७४ ॥ लग्नात्केंद्रगते शुक्रे तस्मात्कामगते शनौ ॥ द्वादशैकोनविंशे च विवाहः प्रायशो भवेत् ॥ १७५ ॥ चंद्राज्जामित्रगे शक्रे शुक्राज्जामित्रगे शनौ ॥ वत्सरेऽष्टादशे प्राप्ते विवाहं लभते नरः ॥ १७६ ॥ धनेशे लाभराशिस्थे लग्नेशे कर्मराशिगे ॥ अब्दे पंचदशे वर्षे विवाहं लभते नरः ॥ १७७ ॥ धनेशे लाभराशिस्थे लाभेशे धनराशिगे ॥ अब्दे त्रयोदशे प्राप्ते विवाहं लभते नरः ॥ १७८ ॥ रन्ध्राज्जामित्रगे शुक्रे तदीशे भौमसंयुते ॥ द्वाविंशे सप्तविंशाब्दे विवाहं लभते नरः ॥ १७९ दारांशकगते लग्ने नाथे दारेश्वरे व्यये ॥ त्रयोविंशे च षड्विंशे विवाहं लभते नरः ॥ १८० ॥ रंध्रांशेदारराशिस्थे लग्नांशे भृगुसंयुते ॥ पंचविंशे त्रयस्त्रिंशे विवाहं लभते नरः ॥१८१॥ भाग्याद्भाग्यगते शुक्रे तद्व्ये राहुसंयुते ॥ एकत्रिंशात्त्रयस्त्रिंशे दारलाभं विनिर्दिशेत् ॥ १८२ ॥ भाग्याज्जामित्रगे शुक्रे तद्युते द्वारनायके ॥ त्रिंशे वा सप्तविंशाब्दे विवाहं लभते नरः ॥ १८३ ॥ दारे च नीचराशिस्थे शुक्रे रंध्रारिसंयुते ॥ अष्टादशे त्रयस्त्रिंशे वत्सरे दारनाशनम् ॥ १८४ ॥ मंदेशेनाशराशिस्थे व्ययेशे मंदराशिगे ॥ वत्सरैकोनविंशाब्दे दारनाशं विनिर्दिशेत् ॥ १८५ ॥ कुटुंबस्थानगो राहुः कलत्रे भौमसंयुते ॥ पाणिग्रहे च त्रिदिने सर्पदष्टे वधूमृतिः ॥ १८६ ॥ रंध्रस्थानगते शुक्रे तदीशे सौरिराशिगे ॥ द्वादशैकोनविंशाब्दे दारनाशं विनिर्दिशेत् ॥ १८७ ॥ लग्नेशे नीचराशिस्थे धनेशे निधनं गते ॥

शे तु संप्राप्ते कलत्रस्य मृतिर्भवेत् ॥ १८८ ॥ शुक्राज्जामित्रगे चंद्रे चंद्राज्जामित्रगे बुधे ॥ रंध्रेशे सुतभावस्थे प्रथमं दशमाब्दिकं ॥ १८९ द्वाविंशे च द्वितीये च त्रयस्त्रिंशे तृतीयके ॥ विवाहं लभते मर्त्यो नाऽत्र कार्या विचारणा ॥ १९० ॥

## अथाष्टमभावफलम् ।

आयुःस्थानाधिपः पापैः सहैव यदि संस्थितः ॥ करोत्यल्पायुषं जातं लग्नेशोऽप्यत्र संस्थितः ॥ १९१ ॥ एवं हि शनिना चिंता कार्या तर्कैर्विचक्षणैः ॥ कर्माधिपेन च तथा चिंतनं कार्यमायुषः ॥ १९२ ॥ षष्ठे व्ययेऽपि षष्ठेशो व्ययाधीशो रिपौ व्यये ॥ लग्नेऽष्टमे स्थितो वापि दीर्घमायुः प्रयच्छति ॥ १९३ ॥ स्वस्थाने स्वांशकेनापि मित्रेशे मित्रमंदिरे ॥ दीर्घायुषं करोत्येव लग्नेशोऽष्टमपः पुनः ॥ १९४ ॥ लग्नाष्टपकर्मेशमंदाः केंद्रत्रिकोणयोः ॥ लाभे वा संस्थितास्तद्वद्दिशेयुर्दीर्घमायुषम् ॥ येषु यो बलवांस्तस्यानुसारादायुरादिशेत् ॥ १९५ ॥ अष्टमाधिपतौ केंद्रे लग्नेशे बलवर्जिते ॥ विंशद्वर्षाणि सो जीवेद्द्वात्रिंशत्परमायुषम् ॥ १९६ ॥ रंध्रेशे नीचराशिस्थे रंध्रे पापग्रहैर्युते ॥ लग्नेशे दुर्बले यस्य अल्पायुर्भवति ध्रुवम् ॥ १९७ ॥ रंध्रेशे पापसंयुक्ते रंध्रे पापग्रहैर्युते ॥ व्यये क्रूरग्रहैर्जाते जातमात्रं मृतिर्भवेत् ॥ १९८ ॥ केंद्रत्रिकोणपापस्थाः षष्ठाष्टसुभगा यदि ॥ लग्ने रंध्रेशनीचस्थे जातः सद्यो मृतिर्भवेत् ॥ १९९ ॥ पंचमे पापसंयुक्ते रंध्रेशे पापसंयुते ॥ रंध्रे पापग्रहैर्युक्ते अल्पायुष्यः सजायते ॥ २०० ॥ रंध्रेशे रंध्रराशिस्थे चंद्रे पापसमन्विते ॥ शुभदृष्टेन सफलं मासांते च मृतिर्भवेत् ॥ ॥ २०१ ॥ लग्नेशे स्वोच्चराशिस्थे चंद्रे लाभसमन्विते ॥ रंध्रस्थानगते जीवे दीर्घायुष्यं न संशयः ॥ २०२ ॥

# अथ नवमभावफलम् ।

भाग्याधिनाथोऽपि च भाग्यकर्ता शुक्रोऽपि पापैः सह चेत्त्रिषु स्यात् ॥ त्रिषडादिभावेषु च भाग्यहीनं केंद्रत्रिकोणोपगतोऽतिभाग्यम् ॥ २०३ ॥ अनेन धर्मः परिकल्पनीयः पिता तु चिंत्यं निजमातुलस्य ॥ शुभे शुभस्थानगते शुभं स्याद्विपर्यये तत्र विपर्ययः स्यात् ॥ २०४ ॥ भाग्यस्थिते वाहनराशिसंस्थे शुक्रे च जीवे शुभराशियुक्ते ॥ भाग्याधिपे कोणचतुष्टये वा बहुत्वदेशाभरणं न यानम् ॥ २०५ ॥ गुरुस्थानगते जीवे नदीशे केंद्रसंस्थिते ॥ लग्नेशे बलसंयुक्ते बहुभाग्याधिपो भवेत् ॥ २०६ ॥ भाग्येशे बलसंयुक्ते भाग्ये भृगुसमन्विते ॥ बलात्केंद्रगते जीवे पितृभाग्यसमन्वितः ॥ २०७ ॥ भाग्यस्थानाद्द्वितीये वा सुखे भौमसमन्विते ॥ भाग्येशे नीचराशिस्थे पिता निर्धन एव सः ॥ २०८ ॥ भाग्येशे परमोच्चस्थे भाग्यांशे जीवसंयुते ॥ लग्नाच्चतुष्टये शुक्रे पिता दीर्घायुरादिशेत् ॥ २०९ ॥ भाग्येशे केंद्रभावस्थे गुरुणा च निरीक्षते ॥ तत्पिता वाहनैर्युक्तो राजा वा तत्समो भवेत् २१० भाग्येशे कर्मभावस्थे कर्मेशे भाग्यराशिगे ॥ कर्मेशे च धनाढ्यश्च कीर्तिमांस्तत्पिता भवेत् ॥ २११ ॥ परमोच्चांशगे सूर्ये भाग्येशे लाभसंस्थिते ॥ धर्मिष्ठो नृपवात्सल्यः पितृपुण्यो भवेन्नरः ॥ ॥ २१२ ॥ लग्नात्त्रिकोणगे सूर्ये भाग्येशे सप्तमस्थिते ॥ गुरुणा सहिते दृष्टे पितृभक्तिसमन्वितः ॥ २१३ ॥ भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ॥ द्वात्रिंशात्परतो भाग्यं वाहनं कीर्तिसंभवः ॥ २१४ ॥ लग्नेशे भाग्यराशिस्थे षष्ठेशे भाग्यराशिगे ॥ अन्योन्यवैरं ब्रुवते जनकः कुत्सितो भवेत् ॥ २१५ ॥ कर्मज्ञे रिपुरंध्ररिःफभवने जीवेच्च भिक्षाशनः ॥ भाग्येशे यदि जन्मकालसमये प्रा-

प्नोति दीक्षां रविः ॥ २१६ ॥ कर्माधिपेन सहितो विक्रमेशो वि-
धिर्बलः ॥ नीचराशिविमूढस्थो योगी भिक्षाशनात्प्रभुः ॥ २१७॥
षष्ठाष्टमव्यये भानू रंध्रेशे भाग्यसंयुते ॥ व्ययेशे लग्नराशिस्थे ष-
ष्ठांशपंचमे स्थिते ॥ २१८ ॥ जातस्य जननात्पूर्वं जनकस्य मृ-
तिर्भवेत् ॥ रंध्रस्थानगते सूर्ये रंध्रेशे भाग्यनायके ॥ २१९ ॥ जा-
तस्य प्रथमाब्दे तु पितुर्मरणमादिशेत् ॥ व्ययेशे भाग्यराशिस्थे
नीचांशे भाग्यनायके ॥ २२० ॥ तृतीये षोडशे वर्षे जनकस्य मृ-
तिर्भवेत् ॥ लग्नेशे नाशराशिस्थे रंध्रेशे भानुसंयुते ॥ २२१ ॥ द्वि-
तीये द्वादशे वर्षे पितुर्मरणमादिशेत् ॥ भाग्याद्रंध्रगते राहौ भा-
ग्याद्भाग्यगते रवौ ॥ २२२ ॥ षोडशेऽष्टादशे वर्षे जनकस्य मृति
र्भवेत् ॥ भाग्याद्रंध्रगते राहौ भाग्याद्भाग्यगते रवौ ॥ २२३ ॥ रा-
हुणा सहिते सूर्ये चंद्राद्भाग्यगते शनौ ॥ २२४ ॥ सप्तमैकोनविंशा-
ब्दे तातस्य मरणं ध्रुवम् ॥ २२५ ॥ भाग्येशे व्ययराशिस्थे व्ययेशे
भाग्यराशिगे ॥ चतुश्चत्वारिवर्षाब्द पितुर्मरणमादिशेत् ॥ २२६ ॥
रव्यंशे च स्थिते चंद्रे लग्नेशे रंध्रसंयुते ॥ पंचत्रिंशैकचत्वारित्वस-
रे पितृनाशनम् ॥ २२७ ॥ पितृस्थानाधिपे सूर्ये मंदभौमसमन्वि-
ते ॥ पंचाशद्वत्सरे प्राप्ते जनकस्य मृतिर्भवेत् ॥ २२८ ॥ भाग्यात्स-
प्तमगे सूर्ये भ्रातृसप्तमगस्तमः ॥ षष्ठभे पंचविंशाब्दे पितुर्मरण-
मादिशेत् ॥ २२९ ॥ रंध्रजामित्रगे मंदे मंदाज्जामित्रगे रवौ ॥
त्रिंशैकविंशे षड्विंशे जनकस्य मृतिर्भवेत् ॥ २३० ॥ भाग्येशे नी-
चराशिस्थे तदीशे भाग्यराशिगे ॥ षड्विंशगे त्रयस्त्रिंशे पितुर्मर-
णमादिशेत् ॥ २३१ ॥ रव्यंशकस्थिते चंद्रे लग्नेशे रंध्रसंयुते ॥
पंचत्रिंशैकचत्वारिवत्सरे पितृनाशनम् ॥ २३२ ॥ पितृस्थानाधि-
पे सूर्ये चंद्रभौमसमन्विते ॥ पंचाशद्वत्सरे प्राप्ते जनकस्य मृति-

भवेत् ॥ २३३ ॥ परमोच्चांशगे शुक्रे भाग्येशेनसमन्विते ॥ भ्रातृ-स्थाने शनियुते बहुभाग्याधिपो भवेत् ॥ २३४ ॥ गुरुणा संयुते भाग्ये तदीशे केंद्रराशिगे ॥ विंशद्वर्षात्परं चैव बहुभाग्यं विनिर्दिशेत् ॥ २३५ ॥ परमोच्चांशगे सौम्ये भाग्येशे भाग्यराशिगे ॥ षट्त्रिंशाच्च परं चैव बहुभाग्यं विनिर्दिशेत् ॥ २३६ ॥ लग्नेशे भाग्यराशिस्थे भाग्येशे लग्नसंयुते ॥ गुरुणा संयुते द्यूने धनवाहनलाभकृत् ॥ २३७ ॥ भाग्याद्भाग्यगतो राहुर्भोग्यस्थे निधनं गते ॥ भाग्येशे नरराशिस्थे भाग्यहीनो भवेन्नरः ॥ २३८ ॥ भाग्यस्थानगते मंदे शशिनाचसमन्विते ॥ लग्नेशे नीचराशिस्थे भिक्षाशी च नरो भवेत् ॥ २३९ ॥

## अथ दशमभावफलम् ।

कर्माधिपो बलोनश्चेत्कर्मवैकल्यमादिशेत् ॥ सौंहिःकेंद्रत्रिकोणस्थो ज्योतिष्टोमादियागकृत् ॥ २४० ॥ अत्रायुषश्चिंतनं च कार्यं स्यात्कर्मणस्तथा ॥ शत्रुनीचगृहं त्यक्त्वा षष्ठाष्टमगृहं तथा ॥ २४१ ॥ दशमे पापसंयुक्ते लग्ने पापसमन्विते ॥ दुष्कृतिं लभते मर्त्यः स्वजनानां विदूषकः ॥ २४२ ॥ कर्मेशे नाशराशिस्थे कर्मेशे राहुसंयुते ॥ जनद्वेषी महामूर्खो दुष्कृतिं लभते नरः॥कर्मेशे द्यूनराशिस्थे मंदभौमेसमन्विते ॥२४३ ॥ द्यूनेशे पापसंयुक्ते शिश्नोदरपरायणः ॥ तुंगराशिं समाश्रित्य कर्मेशे गुरुसंयुते ॥ २४४ ॥ भाग्येशे कर्मराशिस्थे मानैश्वर्यप्रतापवान् ॥ लग्नेशे कर्मराशिस्थे कर्मेशे लग्नसंयुते॥२४५॥तावुभौ केंद्रगौ वापि सुखजीवनभाग् भवेत् ॥ कर्मेशे बलसंयुक्ते माने गुरुसमन्विते ॥२४६॥ वस्त्राभरणसौख्यादिलभते नात्र संशयः ॥ लाभस्थानगते सूर्ये राहुभौमसमन्विते ॥ २४७ ॥ रविपुत्रेण संयुक्ते कर्मछेत्ता भवेन्नरः ॥ माने च

गा [illegible] भागीरथीस्नानफलं लभेन्नरः ॥ माने च मी-
ने [illegible] सयोगं प्रवदंति तस्य ॥२४८॥ माने त्रोत्रे
मृग [illegible] ते ॥ स्वोच्चराशिगते चंद्रे सम्यग्ज्ञानार्थ-
वान् [illegible] भराशिस्थे लाभेशे लग्नसंस्थिते ॥२४९॥
कर्म [illegible] नवान् स नरो भवेत् ॥ केंद्रत्रिकोणगे क-
र्मन [illegible] ॥ २५० ॥ गुरुणा सहिते दृष्टे सकर्मस-
हिते [illegible] ग्नभावस्थे लग्नेशेन समन्विते ॥ २५१ ॥
केंद्र [illegible] कर्मनिरतो भवेत् ॥ कर्मस्थानगते मंदे
नीच [illegible] २५२ ॥ कर्मांशे पापसंयुक्ते कर्महीनो भ-
वेन्नरः [illegible] शिस्थे रंध्रेशे कर्मसंस्थिते ॥ पापग्रहेण
संयुक्ते [illegible] वेत् ॥ २५३ ॥ कर्मेशे नीचराशिस्थे क-
र्मस्थे पापखेचरे ॥ कर्मात्कर्मस्थिते पापे कर्मवैकल्यमादिशेत् ॥
कर्मस्थानगते चंद्रे तदीशे तत्त्रिकोणगे ॥ २५४ ॥ लग्नेशे केंद्र-
भावस्थे सत्कीर्तिसहितो भवेत् ॥ लाभेशे कर्मभावस्थे कर्मेशे
बलसंयुते ॥२५५॥ देवेंद्रगुरुणा दृष्टे सत्कीर्तिसहितो भवेत् ॥ कर्म-
स्थानाधिपे भाग्ये लग्नेशे कर्मसंयुते ॥ लग्नात्पंचमगे चंद्रे ख्याति-
तिकीर्तिर्विनिर्दिशेत् ॥ २५६ ॥

## अथैकादशभावफलम् ।

लाभाधिपो यदा लाभे तिष्ठेत्केंद्रत्रिकोणयोः ॥ बहुलाभं तदा
कुर्यादुच्चसूर्यांशगोऽपि वा ॥ २५७ ॥ लाभेशे धनराशिस्थे ध-
नेशे केंद्रसंस्थिते ॥ गुरुणा सहिते भावे गुरुलाभं विनिर्दिशेत्
॥ २५८ ॥ षट्त्रिंशे वत्सरे प्राप्ते सहस्रद्वयनिष्कभाक् ॥ केंद्रत्रि-
कोणगे भावे नाथे शुभसमन्विते ॥ चत्वारिंशे तु संप्राप्ते सहस्रार्धं
च निष्कभाक् ॥ २५९ ॥ लाभस्थाने गुरुयुते धने चंद्रसमन्वि-

ते ॥ भाग्यस्थानगते शुक्रे षट्सहस्राधिपो [illegible] भाव लाभगे जीवे गुरुचंद्रेण संयुते ॥ धन [illegible] लाद्याभरणैर्युतः ॥ २६१ ॥ लाभेशे लग्न [illegible] संयुते ॥ त्रयस्त्रिंशे तु संप्राप्ते सहस्त्रनिष्क [illegible] २ ॥ धनेशे लाभराशिस्थे तदीशे धनराशिगे ॥ [illegible] बहु भाग्यं समादिशेत् ॥ २६३ ॥ धैर्येशे लाभ [illegible] भ्रातृसंस्थिते ॥ भ्रातृभावाद्धनप्राप्तिर्दिव्या [illegible] ४ ॥ लाभे पापे च व्यये पापयुक्ते दृष्टे पापे क्षे [illegible] लाभा-त्कामे लाभविघ्ने निरर्थं सौम्यार्थं यो वीक्ष [illegible] ६५॥

## अथ द्वादशभावफ[illegible]

चंद्रो व्ययाधिपो धर्मलाभमंत्रेषु सं[illegible] वक्षोनि-जांशे वा लाभधर्मात्मजांशके ॥ २६६ ॥ दिव्यागारादिपर्यंको दिव्यगंधैकभोगवान् ॥ परार्ध्यरमणो दिव्यवस्त्रमाल्यादिभूषणः ॥ २६७ ॥ परार्ध्यसंयुतो वित्तो दिनानि नयति प्रभुः ॥ एवं स्व-शत्रुनीचांशे अष्टांशे वाष्टमे रिपौ ॥ २६८ ॥ संस्थितः कुरुते जातं कांतासुखविवर्जितम् ॥ व्ययाधिक्यपरिक्रांतं दिव्यभोग-निराकृतम् ॥ २६९ ॥ स हि केंद्रत्रिकोणस्थः स्वस्त्रियालंकृतः स्व-यम् ॥ एवं भ्रात्रादिभावेषु तत्तत्सर्वं विचारयेत् ॥ २७० ॥ लग्नस्य पूर्वार्द्धे १० । ११ । १२ । १ । २ । ३ । गता न भोगाः फलं प्रद-द्युस्त्वपरोक्षकं ते ॥ परार्द्धे ४ । ५ । ६ । ७ । ८ । ९ । षट्कोपगताः परोक्षं फलं वदंतीति बुधाः पुराणाः ॥ २७१ ॥ व्ययस्थानगतो राहुर्भौमार्करविसंयुतः ॥ तदीशेनार्कसंयुक्ते नरके पतनं भवेत् ॥२७२॥ व्ययस्थानगते सौम्ये तदीशे स्वोच्चराशिगे ॥ शुभयुक्ते शुभैर्दृष्टे परोक्षः स्यान्न संशयः ॥२७३॥ व्ययेशे पापसंयुक्ते व्यये

गुस्वामी भक्तियुक्तैकतेजसा ॥ ४९ ॥ सुतेशे आयुषि वित्ते बहुपुत्री न संशयः ॥ कासश्वासी सुखी न स्यात् क्रोधयुक्तो धनान्वितः ॥ ५० ॥ सुतेशे नवमे कर्मे पुत्रो भूपसमो भवेत् ॥ अथवा ग्रंथकर्ता च विख्यातः कुलदीपकः ॥ ५१ ॥ सुतेशे लग्नभवने पंडितो जनवल्लभः ॥ ग्रंथकर्ता महादक्षो बहुपुत्रधनान्वितः ॥ ५२ ॥ सुतेशे लग्नसहजे मायावी पिशुनो महान् ॥ लोष्टं तु दत्तवान्नैव कश्चिद्द्रव्यस्य का कथा ॥ ५३ ॥ सुतेशे मातृभवने चिरं मातृसुखं भवेत् ॥ लक्ष्मीयुक्तः सुबुद्धिश्च सचिवोऽप्यथवा गुरुः ॥ ५४ ॥

## अथ षष्ठेशद्वादशभावस्थितफलमाह।

षष्ठेशे रिपुभावस्थे स्वज्ञातिः शत्रुवद्भवेत् ॥ परजातिर्भवेन्मित्रं भूमौ न चलति ध्रुवम् ॥ ५५ ॥ षष्ठेशे सप्तमे लाभे लग्ने वा कीर्तिमान् भवेत् ॥ धनवान् गुणवान् मानी साहसी पुत्रवर्जितः ॥ ५६ ॥ षष्ठेशेऽष्टमरिष्फस्थे रोगी शत्रुर्मनीषिणाम् ॥ परजायाभिगामी च जीवहिंसासु तत्परः ॥ ५७ ॥ षष्ठेशो नवमे यस्य धने पाषाणविक्रयी ॥ व्यवहारे क्वचिद्धानिः क्वचिद्वृद्धिर्भवेत्किल ॥ ५८ ॥ षष्ठेशे कर्मवित्तस्थे साहसी कुलविश्रुतः ॥ परदेशसुखी वक्ता स्वकर्मे चैकनिष्ठिकः ॥ ५९ ॥ षष्ठेशे सहजे तुर्ये क्रोधेनारक्तलोचनः ॥ मनस्वी पिशुनो द्वेषी चलचित्तोऽतिवित्तवान् ॥ ६० ॥ षष्ठेशे पंचमे यस्य चलमित्रधनादिकम् ॥ दयायुक्तः सुखी सौम्यः स्वकार्ये चतुरो महान् ॥ ६१ ॥

## अथ सप्तमेश द्वादशभावस्थितफलमाह।

सप्तमेशे तनौ चास्ते परजायासु लंपटः ॥ दुष्टो विचक्षणो धीरो वातरुक् स्थीयते हृदि ॥ ६२ ॥ जायेशे चाष्टमे षष्ठे सरोगी कामिनीं लभेत् ॥ क्रोधयुक्तो भवेच्चापि न सुखं लभते क्वचित्

॥ ६३ ॥ द्यूनेशे नवमे वित्ते नानास्त्रीभिः समागमः ॥ आरंभी दीर्घसूत्री च स्त्रीषु चित्तं हि केवलम् ॥ ६४ ॥ द्यूनेशे दशमे तुर्ये नास्य जाया पतिव्रता ॥ धर्मात्मा सत्यसंयुक्तः केवलं दंतरोगवान् ॥ ६५ ॥ द्यूनेशे सहजे लाभे मृतपुत्रः प्रजायते ॥ कदाचिज्जीवती कन्या यत्नात्पुत्रोऽपिजायते ॥ ६६ ॥ द्वादशस्थे सप्तमेशे दरिद्रः कृपणो महान् ॥ चारकन्या भवेद्भार्या वस्त्राजीवी च निर्धनी ॥ ६७ ॥ सर्वगुणयुतो मानी भवेत्सर्वधनाधिपः ॥ सदैव हर्षसंयुक्तः सप्तमेशे सुते स्थिते ॥ ६८ ॥

## अथाष्टमेशद्वादशभावस्थितफलमाह ।

द्यूती चोरोऽन्यथावादी गुरुनिंदासु तत्परः ॥ अष्टमे ह्यष्टमस्थाने भार्या पररता भवेत् ॥६९॥ अष्टमेशे तपःस्थाने महापापी च नास्तिकः ॥ सुतहा ह्यथवा वंध्या परभार्याधने रुचिः ॥७०॥ अष्टमेशे सुखे कर्मपिशुनो बंधुवर्जितः ॥ मातापित्रोर्भवेन्मृत्युः स्वल्पकालेन भीतियुक् ॥ ७१ ॥ अष्टमेशे सुते लाभे तस्य वृद्धिर्न जायते ॥ द्रव्यं न स्थीयते गेहे स्थिरबुद्धिर्भवेज्जनः ॥७२॥ अष्टमेशे व्यये षष्ठे नित्यं रोगी प्रजायते ॥ जलसर्पादिकाद्भीतो भवेत्तस्य च शैशवे ॥ ७३ ॥ अष्टमेशे तनौ कामे भार्याद्वयं समादिशेत् ॥ विष्णुद्रोहरतो नित्यं व्रणरोगी प्रजायते ॥ ७४ ॥ धनं तस्य भवेत्स्वल्पं गतं वित्तं न लभ्यते ॥ अष्टमेशे धने बाहुबलहीनः प्रजायते ॥ ७५ ॥

## अथ भाग्येशद्वादशभावस्थितफलमाह ।

धनधान्ययुतो नित्यं गुणसौंदर्यसंयुतः ॥ बहुभ्रातृसुखं युक्तं भाग्येशे नवमे स्थिते ॥ ७६ ॥ भाग्येशे दशमे तुर्ये मंत्री सेना-

पतिर्भवेत् ॥ पुण्यवान्यशवान्वाग्मी साहसी क्रोधवर्जितः ॥ ७७ ॥ भाग्येशे पंचमे लाभे भाग्यवान् जनवल्लभः ॥ गुरुभक्तिरतो मानी धीरो धीरगुणैर्युतः ॥ ७८ ॥ भाग्येशे तु तुले रिःफे भाग्यहीनो भवेद्ध्रुवम् ॥ मातुलस्य सुखं न स्याज्जेष्ठभ्रातृसुखं तथा ॥ ७९ ॥ भाग्येशे च मदे कल्पे गुणवान्कीर्तिमान् भवेत् ॥ कदाचिन्न भवेत्सिद्धं यत्कार्यं कर्तुमिच्छति ॥ ८० ॥ भाग्येशे सहजे वित्ते सदा भाग्यानुचिंतकः ॥ धनवान् गुणवान्कामी पंडितोजनवल्लभः ॥ ८१ ॥

## अथ दशमेशद्वादशभावस्थितफलमाह ।

दशमेशे सुखे कर्मे ज्ञानवान्सुखविक्रमी ॥ गुरुदेवार्चनरतो धर्मात्मा सत्यसंयुतः ॥ ८२ ॥ दशमेशे सुते लाभे धनवान्पुत्रवान् भवेत् ॥ सर्वदा हर्षसंयुक्तः सत्यवादी सुखी नरः ॥ ८३ ॥ कर्मेशोऽरिव्यये यस्य शत्रुभिः परिपीडितः ॥ चातुर्यगुणसंपन्नः क्वचिच्च न सुखी नरः ॥ ८४ ॥ दशमाधिपतौ लग्ने कवितागुणसंयुतः ॥ बाल्ये रोगी सुखी पश्चादर्थवृद्धिर्दिने दिने ॥ ८५ ॥ धने मदे च सहजे कर्मेशो यदि संस्थितः ॥ मनस्वी गुणवान्वाग्मी सत्यधर्मसमन्वितः ॥ ८६ ॥

## अथ लाभेशद्वादशभावस्थित फलमाह ।

लाभेशे संस्थिते लाभे स वाग्मी जायते ध्रुवम् ॥ पांडित्यकविता चैव वर्द्धते च दिने दिने ॥ ८७ ॥ प्राप्तिस्थानाधिपे रिःफे म्लेच्छसंसर्गकारकः ॥ कामिको बहुकांतश्च क्षणिको लम्पटः सदा ॥ ८८ ॥ लाभेशे संस्थिते लग्ने धनवान्सात्विको महान् ॥ समदृष्टिर्महान्वक्ता कौतुकी च भवेत्सदा ॥ ८९ ॥ लाभेशे च धने पुत्रे नानासुखसमन्वितः ॥ पुत्रवान्धार्मिकश्चैव सर्वसिद्धिप्रदायकः ॥ ९० ॥ लाभेशे सहजे वित्ते तीर्थेषु तत्परो

महान् ॥ कुशलः सर्वकार्येषु केवलं शूलरोगवान् ॥ ९१ ॥ लाभेशे षष्ठभवने नानारोगसमन्वितः ॥ सर्वं सुखं भवेत्तस्य प्रवासी परसेवकः ॥ ९२ ॥ लाभेशे सप्तमे रंध्रे भार्या तस्य न जीवति ॥ उदारो गुणवान्कर्मी मूर्खो भवति निश्चितम् ॥ ९३ ॥ लाभेशे गगने धर्मे राजपूज्यो धनाधिपः ॥ चतुरः सत्यवादी च निजधर्मसमन्वितः ॥ ९४ ॥

## अथ व्ययेशद्वादशभावस्थितफलमाह ।

व्ययेशेऽरिव्यये पापी मातृमृत्युविचिंतकः ॥ क्रोधी संतानदुःखी च परजायासु लंपटः ॥ ९५ ॥ व्ययेशे मदने लग्ने जायासौख्यं भवेन्नहि ॥ दुर्बलः कफरोगी च धनविद्याविनिर्जितः ॥९६॥ व्ययेशे द्वितये रंध्रे विष्णुभक्तिसमन्वितः ॥ धार्मिकः प्रियवादी च सकलगुणसंयुतः ॥ ९७ ॥ भार्याद्वेषी प्रियद्वेषी गुरुद्वेषी भवेन्नरः ॥ व्ययेशे सहजे धर्मे स्वशरीरस्य पोषकः ॥ ९८ ॥ व्ययेशे दशमे लाभे पुत्रसौख्यं भवेन्नहि ॥ मणिमाणिक्यमुक्तानि धत्ते किंचित्समालभेत् ॥ ९९ ॥ एतत्ते कथितं विप्र भावानां च फलाफलम् ॥ बलाबलविवेकेन सर्वेषां फलमादिशेत् ॥ १०० ॥ वक्री चेत्स्वचतुर्थः स्यात्फलं भौमो ददातिच ॥ बुधतुर्येऽथदेवेज्ये पंचमे शशिभार्गवौ ॥ १०१ ॥ सप्तमस्य तमध्वंसी पुत्रस्य नवमस्य च ॥ वित्तस्य विषुवत्यर्के ददाति स्वफलं विधुः ॥ १०२ ॥ ग्रहे पूर्णफले प्राप्ते फलं पूर्णं समादिशेत् ॥ अर्द्धमर्द्धं पादहीने तत्रेदं पादमंघ्रिणा ॥ १०३ ॥ भावानां द्वादशानां च सर्वेषां फलमादिशेत् ॥ भावस्थानां ग्रहाणां च फलं ते कथितं मया ॥१०४॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे भावस्थग्रहाणां फलकथनं नाम पंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥

## अथ प्राणिनां पूर्वजन्मशापद्योतकम्।

### पार्वत्युवाच।

देवदेव जगन्नाथ शूलपाणे वृषध्वज ॥ केन योगेन मर्त्यानां बालाख्यशिशुनाशनम् ॥ १ ॥ तत्सर्वमत्र योगेन ब्रूहि मे शशिशेखर ॥ शापमोक्षं च कृपया प्राणिनामल्पमेधसाम् ॥ २ ॥

### शङ्कर उवाच।

साधु पृष्टं त्वयादेवि कथयामि सविस्तरात् ॥ शृणुष्वेकमना भूत्वा बलाबलवशादपि ॥३॥ ज्ञेयं सुनिश्चितं सर्वं राशिचक्रे विशेषतः ॥ मेषादिमीनपर्यन्तं मूर्त्यादिद्वादशक्रमात् ॥४॥ भावं च भावजं ज्ञात्वा फलं ब्रूयाद्विचक्षणः ॥ तनुर्वित्तं बंधुमातृपुत्रशत्रुस्मरो मृतिः ॥ ५ ॥ पितृकर्म च लाभं च व्ययांता भावसंज्ञकाः ॥ गुरुर्लग्नेशदारेशपुत्रस्थानाधिपेषु च ॥६॥ सर्वेषु बलहीनेषु वक्तव्यानपत्यता ॥ रव्यारराहुशनयः पुत्रस्था बलसंयुताः ॥७॥ कारकाद्यात्क्षीणबलादनपत्यत्वमादिशेत् ॥ पुत्रस्थानगते राहौ कुजेनापिनिरीक्षिते ॥ कुजक्षेत्रगते वापि सर्पशापात्सुतक्षयः ॥८॥ पुत्रेशे राहुसंयुक्ते पुत्रस्थे भानुनन्दने ॥ चंद्रदृष्टे युते वापि सर्पशापात्सुतक्षयः ॥९॥ कारके राहुसंयुक्ते पुत्रेशे बलवर्जिते ॥ विलग्नेशे भौमयुते सर्पशापात्सुतक्षयः ॥१०॥ कारके भौमसंयुक्ते लग्ने च राहुसंयुते ॥ पुत्रस्थानेश्वरे दुःस्थे सर्पशापात्सुतक्षयः ॥ ११ ॥ भौमांशे भौमसंयुक्ते पुत्रेशे सोमनंदने ॥ राहुमांदियुते लग्ने सर्पशापात्सुतक्षयः ॥ १२ ॥ पुत्रस्थाने कुजक्षेत्रे पुत्रे राहुसमन्विते ॥ सौम्यदृष्टे युते वापि सर्पशापात्सुतक्षयः ॥ १३ ॥ पुत्रस्था भानुमंदाराः स्वर्भानुः शशिजोंगिराः ॥ निर्बलौ पुत्रलग्नेशौ सर्पशापात्सुतक्षयः ॥ १४ ॥ लग्नेशे राहुसंयुक्ते पुत्रेशे भौमसंयुते ॥ कारके

राहुसंदृष्टे सर्पशापात्सुतक्षयः ॥ १५ ॥ तद्दोषपरिहारार्थं नागपूजां समारभेत् ॥ १६ ॥ स्वगृह्योक्तविधानेन प्रतिष्ठां कारयेत्सुधीः ॥ नागमूर्तिं सुवर्णेन कृत्वा पूजां समाचरेत् ॥ १७ ॥ गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः ॥ एवं कृते तु नागेंद्रप्रसादाद्वर्धते कुलम् ॥ १८ ॥ पुत्रस्थानं गते भानौ नीचे मंदांशकस्थिते ॥ पार्श्वयोः क्रूरसंबंधे पितृशापात्सुतक्षयः ॥ १९ ॥ पुत्रस्थानाधिपे भानौ त्रिकोणे पापसंयुते ॥ क्रूरेन्तरे पापदृष्टे पितृशापात्सुतक्षयः ॥ २० ॥ भानुराशिस्थिते जीवे पुत्रेशे भानुसंयुते ॥ पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः ॥ २१ ॥ लग्नेशे दुर्बले पुत्रे पुत्रेशे भानुसंस्थिते ॥ पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः ॥ २२ ॥ पितृस्थानाधिपे पुत्रे पुत्रेशे वा तथा स्थिते ॥ लग्ने पुत्रे पापयुते पितृशापात्सुतक्षयः ॥ २३ ॥ पितुः स्थानाधिपो भौमः पुत्रेशेन समन्वितः ॥ लग्ने पुत्रे पितृस्थाने पापात्संततिनाशनम् ॥ २४ ॥ पितृस्थानाधिपे दुःस्थे कारके पापराशिगे ॥ पुत्रे लग्नेश्वरे पापे पितृशापात्सुतक्षयः ॥२५॥ लग्नपंचमभावस्था भानुभौमशनैश्चराः ॥ रंध्रे रिःफे राहुजीवौ पितृशापात्सुतक्षयः॥२६॥लग्नादष्टमे भानौ वै पुत्रस्थे भानुनंदनौ॥ पुत्रेशे राहुसंयुक्ते लग्ने पापे सुतक्षयः॥ २७॥ व्ययेशे लग्नभावस्थे रंध्रेशे पुत्रराशिगे॥पितृस्थानाधिपे रंध्रे पितृशापत्सुतक्षय ः॥२८॥ रोगेशे पुत्रभावस्थे पितृस्थानाधिपे तथा॥ कारके राहुसंयुक्ते पितृशापात्सुतक्षयः ॥ २९ ॥ तद्दोषपरिहारार्थं गयाश्राद्धं च कारयेत् ॥ ब्राह्मणान् भोजयेदत्र अयुतं वा सहस्रकम् ॥ ३० ॥ कन्यादानं ततः कृत्वा गां च दद्यात्सवत्सकाम् ॥ एवं कृते पितुः शापान्मुच्यते नात्र संशयः ॥ ३१ ॥ वर्द्धते च कुलं तस्य पुत्रपौत्रा-

दिभिस्तदा ॥ दृष्टियोगपदैः सर्वं फलं ब्रूयाद्विचक्षणः ॥ ३२ ॥ पुत्रस्थानाधिपे चंद्रे नीचे वा पापमध्यगे ॥ हिबुके पंचमे पापे मातृशापात्सुतक्षयः ॥ ३३ ॥ लाभे मंदसमायोगे मातृस्थाने शुभेतरे ॥ नीचे पंचमगे चंद्रे मातृशापात्सुतक्षयः ॥ ३४ ॥ पुत्रस्थानाधिपे दुःस्थे लग्नेशे नीचराशिगे॥ चंद्रपापसमायोगे मातृशापात्सुतक्षयः ॥३५॥ पुत्रस्थानाधिपे दुःस्थे चंद्रे पापांशसंयुते॥ लग्ने पुत्रे पापयुते मातृशापात्सुतक्षयः ॥३६॥ पुत्रस्थानाधिपे चन्द्रे मंदराह्वारसंयुते ॥ भाग्ये वा पुत्रराशौ वा कारके पुत्रनाशनम् ॥३७॥मातृस्थानाधिपे भौमे शनिराहुसमन्विते॥भानुचन्द्रयुते पुत्रे लग्ने संततिनाशनम् ॥३८॥ लग्नात्मजेशौ शत्रुस्थौ रंध्रे मात्रधिपे स्थितौ ॥ पितृनाशाधिपौ लग्ने मातृशापात्सुतक्षयः ॥३९॥ षष्ठाष्टमेशौ लग्नस्थौ व्यये मात्रधिपे सुते॥चंद्रे जीवे पापयुते मातृशापात्सुतक्षयः॥४०॥पापमध्यगते लग्ने क्षीणे चंद्रे च सप्तमे ॥ मातृपुत्रे राहुमंदौ मातृशापात्सुतक्षयः ॥४१॥ नाशस्थानाधिपे पुत्रे पुत्रेशे नाशराशिगे ॥ चंद्रमातृपतौ दुःखे मातृशापात्सुतक्षयः ॥ ४२ ॥ चंद्रक्षेत्रे यदा लग्ने कुजराहुसमन्विते ॥ चन्द्रमंदौ पुत्रसंस्थौ मातृशापात्सुतक्षयः ॥ ४३ ॥ लग्ने पुत्रे रंध्ररिःफौ आरराहुरविः शनिः ॥ मातृलग्नाधिपौ दुःस्थौ मातृशापात्सुतक्षयः ॥ ४४ ॥ नाशस्थानं गते जीवे कुजराहुसमन्विते ॥ पुत्रस्थाने मन्दचंद्रौ मातृशापात्सुतक्षयः ॥ ४५ ॥ ग्रहयोगपदैः सर्वं फलं ब्रूयाद्विचक्षणः ॥ शुभे सौख्यं विनिर्दिष्टं मिश्रे मिश्रं प्रकीर्तितम् ॥ ४६ ॥ सेतुस्नानं प्रकुर्वीत गायत्रीलक्षसंज्ञके ॥ ग्रहदानं च कर्तव्यं रौप्यपात्रे पयःस्थितिः ॥ ४७ ॥ ब्राह्मणान् भोजयेत्तद्वदश्वत्थस्य प्रदक्षिणाम् ॥ कर्तव्यं भक्तियुक्तेन चाष्टविंशत्सहस्रकम् ॥

॥ ४८ ॥ एवं कृते यदा देवि शापान्मोक्षो भविष्यति ॥ सत्पुत्रं लभते पश्चाद्वृद्धिः स्यात्तस्य संततेः ॥ ४९ ॥ अतःपरं प्रवक्ष्यामि भ्रात्रादौ शापकारणम् ॥ पापयोगेन भावेन कारकेण बलाबले ॥ ५० ॥ भ्रातृस्थानाधिपे पुत्रे कुजराहुसमन्विते ॥ पुत्रलग्नेश्वरौ रंध्रे भ्रातृशापात्सुतक्षयः ॥५१॥ लग्ने सुते कुजे मंदे भ्रातृपे भाग्यराशिगे ॥ कारके नाशराशिस्थे भ्रातृशापात्सुतक्षयः ॥५२॥ भ्रातृस्थाने गुरौ नीचे मंदः पंचमगो यदि ॥ नाशस्थौ न तु पुण्यारौ भ्रातृशापात्सुतक्षयः ॥ ५३ ॥ मूर्तिस्थानाधिपे रिःफे भौमः पंचमगो यदि ॥ पुत्रेशे रंध्रपापस्थे भ्रातृशापात्सुतक्षयः ॥ ५४ ॥ पापमध्यगते लग्ने सुतभे पापमध्यगे ॥ नाथौ च कारकौ दुःस्थे भ्रातृशापात्सुतक्षयः ॥ ५५ ॥ कर्मेशे भ्रातृभावस्थे पापयुक्ते सुते शुभे ॥ पुत्रे च कुजसंयुक्ते भ्रातृशापात्सुतक्षयः ॥ ५६ ॥ पुत्रस्थाने बुधक्षेत्रे शनिराहुसमन्विते ॥ रिःफे विदारौ शापत्वाद्भ्रातृशापात्सुतक्षयः ॥ ५७ ॥ लग्नेशे भ्रातृराशिस्थे भ्रातृस्थानाधिपे सुते ॥ लग्नभ्रातृसुते पापे भ्रातृशापात्सुतक्षयः ॥ ५८ ॥ भ्रात्रीशे नाशराशिस्थे पुत्रस्थे कारके तथा ॥ राहुमांदियुते दृष्टे भ्रातृशापात्सुतक्षयः ॥५९॥नाशस्थानाधिपे पुत्रे भ्रातृनाथेन संयुते ॥ रंध्रे आरार्किसंयुक्ते भ्रातृशापात्सुतक्षयः ॥ ६० ॥ भ्रातृशापविमोक्षार्थं श्रवणं विष्णुकीर्तनम् ॥ चांद्रायणं चरेत्पश्चात्कावेर्यां विष्णुसन्निधौ ॥ ६१ ॥ अश्वत्थस्थापनं कार्यं दशधेनूः प्रदापयेत् ॥ प्राजापत्यं चरेत्तत्र भूमिं दद्यात्फलान्विताम् ॥ ६२ ॥ एवं यः कुरुते भक्त्या पुत्रवृद्धिः प्रजायते ॥ ६३ ॥ पुत्रस्थाने बुधे जीवे कुजराहुसमन्विते ॥ लग्ने मंदसमायोगे मातुलात्सुतनाशनम् ॥ ६४ ॥ लग्नपुत्रेश्वरौ पुत्रे बुधभौमसमन्विते ॥ मंदे मातुलशापत्वात्पुत्रस-

तत्तिनाशनम् ॥ ६५ ॥ लुप्ते पुत्राधिपे लग्ने सप्तमे भानुनन्दने ॥ लग्नेशे बुधसंयुक्ते तस्यसंततिनाशनम् ॥ ६६ ॥ ज्ञातिस्थानाधिपे लग्ने व्ययेशेन समन्विते ॥ शशिसौम्यकुजे पुत्रे तस्य संततिनाशनम् ॥ ६७ ॥ पुत्रलग्नाधिपौ युक्तावन्योन्यं वाथ वीक्षितौ ॥ पुत्रे परस्परस्थौ वा पुत्रयोगा इमे स्मृताः ॥ ६८ ॥ तद्दोषपरिहारार्थं विष्णुस्थापनमुच्यते॥वापीकूपतडागादिबंधनं सेतुदर्शनम्॥६९॥ पुत्रवृद्धिर्भवेत्तस्य संपद्वृद्धिः प्रजायते ॥ इदं योगग्रहेणैव फलं ब्रूयाद्विचक्षणः ॥ ७० ॥ गुरुक्षेत्रे यदा राहुः पुत्रे जीवारभानुजाः ॥ धर्मस्थानाधिपे नाशे ब्रह्मशापात्सुतक्षयः ॥ ७१ ॥ विद्यागर्वेण यो मर्त्यो ब्राह्मणानवमन्यते ॥ तद्दोषं ब्रह्मशापत्वात्संततेस्तस्य नाशनम् ॥ ७२ ॥ धर्मेशे पुत्रभावस्थे पुत्रेशे नाशराशिगे ॥ जीवारराहुमृत्युस्थे ब्रह्मशापात्सुतक्षयः ॥ ७३ ॥ धर्माधिपे नीचगते व्ययेशे पुत्रराशिगे ॥ राहुयुक्तेक्षिते वापि ब्रह्मशापात्सुतक्षयः ॥ ७४ ॥ जीवे नीचगते राहुर्लग्ने वा पुत्रराशिगे ॥ पुत्रस्थानाधिपे दुःखे ब्रह्मशापात्सुतक्षयः ॥ ७५ ॥ पुत्रस्थानाधिपे जीवे रंध्रे पापसमन्विते ॥ पुत्रेशावर्कचंद्रौ वा ब्रह्मशापात्सुतक्षयः ॥ ७६ ॥ मंदांशे मंदसंयुक्ते जीवे भौमसमन्विते ॥ पुत्रेशे व्ययराशिस्थे ब्रह्मशापात्सुतक्षयः ॥ ७७ ॥ लग्ने गुरुयुते मंदे भाग्ये राहुसमन्विते ॥ व्यये गुरुसमायोगे ब्रह्मशापात्सुतक्षयः ॥ ७८ ॥ तस्य दोषस्य शांत्यर्थं कुर्याच्चांद्रायणं नरः ॥ ब्रह्मकूर्चत्रयं कृत्वा धेनुं दद्यात्सदक्षिणाम् ॥ ७९ ॥ पंचरत्नानि देयानि सुवर्णेन समन्वितम् ॥ अन्नदानं ततः कुर्यादयुतं वा सहस्रकम् ॥ ८० ॥ एवं कृते तु सत्पुत्रं लभते नात्र संशयः॥मुक्तशापो विशुद्धात्मा स पुमान्सुखमेधते ॥ ८१ ॥ दारेशे पुत्रभावस्थे दारेशस्थांशपे शनौ ॥ पुत्रेशे नाशराशिस्थे पत्नीशापात्सुतक्षयः ॥ ८२ ॥ कलत्रेशे

नाशसंस्थे रिःफेशे पुत्रराशिगे ॥ कारके पापसंयुक्ते पत्नीशापात्सुतक्षयः ॥ ८३ ॥ पुत्रस्थानगते शुक्रे कामपे रंध्रमाश्रिते ॥ कारके पापसंयुक्ते पत्नीशापात्सुतक्षयः ॥ ८४ ॥ कुटुंबे पापसंबंधे कामेशे नाशराशिगे ॥ पुत्रे पापग्रहैर्युक्ते पत्नीशापात्सुतक्षयः ॥ ८५ ॥ भाग्यस्थानगते शुक्रे दारेशे नाशराशिगे ॥ लग्ने पापे सुते पापे पत्नीशापात्सुतक्षयः ॥ ८६ ॥ भाग्यस्थानाधिपे शुक्रे पुत्रेशे शत्रुराशिगे ॥ गुरुलग्नेशदारेशा दुःस्थाः संततिनाशनम् ॥ ८७ ॥ पुत्रस्थाने भृगुक्षेत्रे राहुचंद्रसमन्विते ॥ व्यये लग्ने धने पापे स्त्रीशापात्सुतनाशनम् ॥ ८८ ॥ सप्तमे मंदशुक्रौ च रंध्रेशे पुत्रभैरवौ ॥ लग्ने राहुसमायोगे पत्नीशापात्सुतक्षयः॥८९॥ धने कुजे व्यये जीवे पुत्रस्थे भृगुनंदने ॥ राहुयुक्तेक्षिते वापि पत्नीशापात्सुतक्षयः ॥ ९० ॥ नाशस्थौ वित्तदारेशौ पुत्रे लग्ने कुजे शनौ ॥ कारके पापसंयुक्ते पत्नीशापात्सुतक्षयः ॥ ९१ ॥ लग्नपंचमभाग्यस्था राहुमन्दकुजाः क्रमात् ॥ रंध्रस्थौ पुत्रदारेशौ पत्नीशापात्सुतक्षयः ॥ ९२ ॥ तस्य दोषस्य शांत्यर्थं कन्यादानं समाचरेत् ॥ लक्ष्मीनारायणं देवं सर्वाभरणभूषितम् ॥ ९३ ॥ मूर्तिदानं च कर्तव्यं दशधेनूः प्रदापयेत् ॥ शय्यां च भूषणं चैव दंपत्योर्दापयेत्सुधीः ॥ ९४ ॥ पुत्रं प्रसूयते तस्य भाग्यवृद्धिश्च जायते ॥ मंत्रशापमिदं मर्त्यः पिशाचं बाध्यते सदा ॥ ९५ ॥ कर्मलोपं पितृभ्यश्च तच्छापाद्वंशनाशनम् ॥ पुत्रस्थितौ मंदसूर्यौ क्षीणचंद्रस्तु सप्तमे ॥९६॥ लग्ने व्यये राहुजीवौ प्रेतशापात्सुतक्षयः॥ पुत्रस्थानाधिपे मंदे नाशस्थे लग्नगे कुजे॥ कारके नाशराशिस्थे प्रेतशापात्सुतक्षयः ॥ ९७ ॥ लग्ने पापे व्यये भानौ सुते चारार्किसोमजाः ॥ पुत्रेशे रंध्रभावस्थे प्रेतशापात्सुतक्षयः ॥९८॥

लग्ने पापा व्यये भानौ सुते चारार्किसोमजाः ॥ पुत्रेशे रंध्रभावस्थे प्रेतशापात्सुतक्षयः ॥९९॥ लग्ने राहुसमायोगे पुत्रस्थे भानुनंदने ॥ कारके नाशराशिस्थे प्रेतशापात्सुतक्षयः ॥ १०० ॥ लग्ने राहौ च शुक्रेज्ये चंद्रे मंदयुते तथा॥लग्नेशे मृदुराशिस्थे प्रेतशापात्सुतक्षयः ॥१०१॥ लग्ने राहुसमायोगे पुत्रस्थे भानुनंदने॥कुजदृष्टे युते वापि प्रेतशापात्सुतक्षयः ॥१०२॥ कारके नीचराशिस्थे पुत्रस्थानाधिपे स्थिरे ॥ नीचदृष्टे नीचयुते प्रेतशापात्सुतक्षयः ॥ १०३ ॥ लग्ने मंदे सुते राहौ रंध्रे भानुसमन्विते॥व्यये भौमसमायोगे प्रेतशापात्सुतक्षयः ॥ १०४ ॥ कामस्थानाधिपे दुःस्थे पुत्रे चंद्रसमन्विते ॥ मंदमांदियुते लग्ने प्रेतशापात्सुतक्षयः ॥ १०५ ॥ बाधस्थानाधिपे पुत्रे शनिशुक्रसमन्विते ॥ कारके नाशराशिस्थे प्रेतशापात्सुतक्षयः ॥ १०६ ॥ तद्दोषस्य प्रशांत्यर्थं विष्णुश्राद्धं च कारयेत् ॥ रुद्रस्नानं प्रकुर्वीत ब्रह्ममूर्तिं प्रदापयेत् ॥ १०७ ॥ धेनूं रजतपात्रं च नीलं चैव प्रदापयेत्॥ एतत्कर्म कृते तत्र शापमोक्षः प्रजायते ॥ १०८ ॥ पुत्रप्राप्तिर्भवेत्तस्य विप्रेभ्यो दक्षिणां दिशेत् ॥ पुत्रे राहुरविसौम्याः कारके शुभसंयुते ॥ शुभेन वीक्षिते वापि बहुपुत्रं समादिशेत् ॥ १०९ ॥ पुत्रेशे शुभराशिस्थे शुभदृष्टिसमन्विते ॥ कारके केन्द्रभावस्थे बहुपुत्रं समादिशेत् ॥ ११० ॥ लग्नेशे पुत्रराशिस्थे पुत्रेशे लग्नमाश्रिते ॥ केंद्रत्रिकोणगे जीवे बहुपुत्रं समादिशेत्॥ १११ ॥ पुत्रस्थानगते राहौ मंदांशकविवर्जिते ॥ बहुपुत्रं नरं विद्याच्छुभग्रहनिरीक्षिते ॥११२॥ पुत्रस्थानाधिपे स्वोच्चे लग्नेशे शुभसंयुते ॥ कारके शुभसंयुक्ते बहुपुत्रं समादिशेत् ॥ ११३ ॥ पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते ॥ शुभेन सहिते वापि बहुपुत्रं समादिशेत् ॥११४॥ परिपूर्णबले जीवे

लग्नेशे पुत्रराशिगे॥ पुत्रेशे बलसंयुक्ते बहुपुत्रं समादिशेत् ॥११५॥ पुत्रस्थानगते जीवे परिपूर्णबलान्विते ॥लग्नेशे बलसंयुक्ते पुत्रयोगा इमे स्मृताः ॥ ११६ ॥ वर्गोत्तमांशगे जीवे लग्नेशस्यांशपे शुभे ॥ पुत्रेशेन युते दृष्टे पुत्रयोगा इमे स्मृताः ॥११७॥ वित्तेशे पुत्रभावस्थे परिपूर्णबलान्विते॥वैशेषिकांशके जीवे पुत्रयोगा इमे स्मृताः ॥ ११८॥ लग्नात्पुत्राधिपे स्वोच्चे अन्योन्यत्वादिवीक्षिते ॥ परस्परस्थानगते पुत्रयोगा इमे स्मृताः ॥ ११९ ॥ पुत्रस्थानाधिपस्थांशराशीशे शुभसंयुते ॥ शुभेन वीक्षिते वापि पुत्रयोगा इमे स्मृताः ॥ १२० ॥ लग्नपुत्राधिपौ केन्द्रे शुभग्रहसमन्विते ॥कुटुंबेशे बलाढ्ये तु पुत्रयोगा इमे स्मृताः ॥ १२१ ॥ लग्नेशे दारभावस्थे दारेशे लग्नमाश्रिते ॥ द्वितीयेशे विलग्नस्थे पुत्रयोगा इमे स्मृताः ॥ १२२ ॥ दारेशे ग्रहसंयुक्ते नवांशभवनाधिपे ॥ पुत्रवित्तविलग्नेशे पुत्रयोगा इमे स्मृताः ॥ १२३ ॥ ॥ इतिबहुपुत्रयोगः ॥ पुत्रवित्तकलत्रेशाः संयुक्तानवभागपाः ॥ पापांशकाः पापयुता अनपत्यत्वमादिशेत् ॥ १२४ ॥ गुरुर्लग्नेशदारेशपुत्रस्थानाधिपेषु वा ॥ सर्वेषु बलहीनेषु वक्तव्या त्वनपत्यता ॥१२५ ॥ व्ययेशसंयुतांशेशे मृत्युराशौ स्थिते यदि ॥ पुत्रेशे क्रूरषष्ट्यंशे अनपत्यत्वमादिशेत् ॥ १२६ ॥ लग्नपुत्रेश्वरौ दुःस्थे कारके नीचराशिगे ॥ अनपत्यग्रहे पुत्रे अनपत्यत्वमादिशेत् ॥ १२७ ॥ क्रूरषष्ट्यंशके जीवे पुत्रस्थे नाशराशिगे ॥ पुत्रेशे नाशराशिस्थे अनपत्यत्वमादिशेत ॥१२८॥ लग्नाधिपे कुजे स्वोच्चे रंध्रे मंदयुते रवौ ॥ शुभदृष्टिसमायोगे चिरात्पुत्रमुपैति सः ॥ १२९ ॥ लग्ने मंदे गुरौ रंध्रे व्यये भौमसमन्विते ॥शुभदृष्टे स्वतुंगे वा चिरात्पुत्रमुपैति सः ॥ ॥ १३० ॥ पुत्रस्था मंदजीवज्ञा लग्ने पुत्राधिपे शुभे ॥ पुत्रेशे शुभ

राशिस्थे चिरात्पुत्रमुपैति सः ॥१३१॥लग्ने मंदे गुरौ रंध्रे व्यये भौमसमन्विते॥शुभदृष्टे स्वतुंगे वा चिरात्पुत्रमुपैतिसः ॥१३२॥ सुते राह्वर्कशुक्रेज्याः शुभर्क्षे शुभवीक्षिते ॥ पुत्रेशे शुभराशिस्थे चिरात्पुत्रमुपैति सः ॥१३३॥ लग्ने सौम्ये धने पापे तृतीये पापखेचरे ॥ पुत्रेशे शुभराशिस्थे चिरात्पुत्रमुपैति सः ॥ १३४ ॥ इति पुत्रयोगाः ॥ पुत्रस्थाने कुजे मंदे बुधक्षेत्रे विलग्नपे ॥ बुधदृष्टे युते वापि तदा दत्ताः सुतादयः ॥ १३५ ॥ पुत्रस्थाने बुधक्षेत्रे मंदक्षेत्रेऽथवा भवेत् ॥ मंदमांदियुते दृष्टे तदा दत्ताः सुतादयः ॥ १३६ ॥ पुत्रस्थाने बुधक्षेत्रे बुधसंस्थेक्षितेऽपिवा ॥ लग्नाधिपे शनौ वापि दत्तपुत्रा भवंति हि ॥ १३७ ॥ पुत्रेशे मंदसंयुक्ते कुजे सौम्यनिरीक्षिते ॥ लग्नाधिपे बुधांशे वा दत्तपुत्रा भवंति हि ॥ १३८ ॥ कामेशे लाभभावस्थे पुत्रेशे शुभसंयुते ॥ पुत्रे मंदे बुधे वापि दत्तपुत्रा भवंति हि ॥ १३९ ॥ पुत्रेशे भाग्यभावस्थे भाग्येशे कर्मराशिगे ॥ पुत्रे मंदजदृष्टे तु दत्तपुत्रेण संततिः ॥ १४० ॥ लग्नाधिपे भृगोश्चोच्चे पुत्रे मंदसमन्विते ॥ कारके बलसंयुक्ते दत्तपुत्रात्तु संततिः ॥ १४१ ॥ पुत्रस्थानाधिपे चंद्रे लग्ने पुत्रे शनैश्चरे ॥ परिपूर्णबले जीवे दत्तपुत्रात्सुतो भवेत् ॥ १४२ ॥ पुत्राधिपे रवौ लग्ने पुत्रस्थौ शनिसोमजौ ॥ पुत्राधिपे बलयुते दत्तपुत्रात्सुतो भवेत् ॥ १४३ ॥ लग्नाधिपे बुधे पुत्रे कुजदृष्टिसमन्विते ॥ कारके लाभराशिस्थे दत्तपुत्रात्सुतो भवेत् ॥ १४४ ॥ लग्नाधिपे गुरौ पुत्रे शनिदृष्टिसमन्विते ॥ पुत्रेशे भौमराशिस्थे दत्तपुत्रा भवंति हि ॥१४५॥ हरिवंशो रविणा शशी त्रिपुरहा भौमे च रुद्रीक्रिया सौम्ये संपुटकांस्यपात्रविधिवर्जीवे च पैत्र्यातिथिः ॥ शुक्रे गोप्रतिपालनं च कथितं मंदे च मृत्युंजयः कन्यादानभुजंगकेतुकपिला सं-

तानसौख्यप्रदाः ॥ १४६ ॥ यावत्संख्या भवेद्राशिस्तावद्वारं वि- निर्दिशेत् ॥ शिवविष्णुस्थापनाद्वा लक्षयोगात्सुखं भवेत् ॥१४७॥ इति बृहत्पाराशरहोरापूर्वखंडसारांशे संतानभावफलादेशवर्णनं नाम षोडशोध्यायः ॥ १६ ॥

## अथ त्रिकोणशोधनमाह ।

राशिचक्रं यथामार्गं निक्षिप्याष्टग्रहस्य च ॥ त्रिकोणशोधनं कुर्यादादौ सर्वेषु राशिषु ॥ १ ॥

## उदाहरणार्थमिमानि चक्राणि ।

अथ रवेरष्टकवर्गः ४८

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ३ | ५ | ६ | १ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ |
| ४ | १० | ४ | ६ | ९ | १२ | ४ | ६ |
| ७ | १० | ७ | ९ | ११ | ० | ७ | १० |
| ८ | ० | ८ | १० | ० | ० | ८ | ११ |
| ९ | ० | ९ | ११ | ० | ० | ९ | १२ |
| १० | ० | १० | १२ | ० | ० | १० | ० |
| ११ | ० | ११ | ० | ० | ० | ११ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

चंद्राष्टकवर्गः ४९

| सू. | चं. | मं. | बु. | गु. | शु | श. | ल. |
|---|---|---|---|---|---|---|---|
| ३ | १ | २ | १ | १ | ३ | ३ | ३ |
| ६ | ३ | ३ | ३ | २ | ४ | ५ | ६ |
| ७ | ६ | ५ | ४ | ४ | ५ | ६ | १० |
| ८ | ७ | ६ | ५ | ७ | ७ | ११ | ११ |
| १० | ९ | १० | ७ | ८ | ९ | ० | ० |
| ११ | १० | ११ | ८ | १० | १० | ० | ० |
| ० | ११ | ० | १० | ११ | ११ | ० | ० |
| ० | ० | ० | ११ | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

भौमस्याष्टकवर्गः ३९

| र. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० |
| ३ | ३ | १ | ३ | ६ | ६ | १ | १ |
| ६ | ६ | २ | ५ | १० | ८ | ४ | ३ |
| १० | १० | ४ | ६ | ११ | ११ | ७ | ६ |
| ११ | ० | ७ | ११ | १२ | १२ | ८ | १० |
| ० | ० | ८ | ० | ० | ० | ९ | ११ |
| ० | ० | १० | ० | ० | ० | १० | ० |
| ० | ० | ११ | ० | ० | ० | ११ | ० |

बुधस्याष्टकवर्गः ५४

| र. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | ० | १ | १ | ० | १ | १ | ० |
| ५ | २ | २ | ३ | ६ | २ | २ | १ |
| ६ | ४ | ४ | ५ | ८ | ३ | ४ | २ |
| ९ | ६ | ७ | ६ | ११ | ४ | ७ | ४ |
| ११ | ८ | ८ | ९ | १२ | ५ | ८ | ६ |
| १२ | १० | ९ | १० | ० | ८ | ९ | ८ |
| ० | ११ | १० | ११ | ० | ९ | १० | १० |
| ० | ० | ११ | १२ | ० | ११ | ११ | ११ |

**गुरोरष्टकवर्गः ५६।**

| र | चं | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | १ | २ | ३ | १ |
| २ | ५ | २ | २ | २ | ५ | ५ | २ |
| ३ | ६ | ४ | ४ | ३ | ६ | ६ | ४ |
| ४ | ९ | ७ | ५ | ४ | ९ | १२ | ५ |
| ७ | ११ | ८ | ६ | ७ | १० | ० | ६ |
| ८ | ० | १० | ९ | ८ | ११ | ० | ७ |
| ९ | ० | ११ | १० | १० | ० | ० | ८ |
| १० | ० | ० | ११ | ११ | ० | ० | १० |
| ११ | ० | ० | ० | ० | ० | ० | ११ |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

**शुक्रस्याष्टकवर्गः ५२।**

| र | चं | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ८ | १ | ३ | ३ | ५ | १ | ३ | १ |
| ११ | २ | ४ | ५ | ८ | २ | ४ | २ |
| १२ | ३ | ६ | ६ | ९ | ३ | ५ | ३ |
| ० | ४ | ९ | ९ | १० | ४ | ८ | ४ |
| ० | ५ | ११ | ११ | ११ | ५ | ९ | ५ |
| ० | ८ | १२ | ० | ० | ८ | १० | ८ |
| ० | ९ | ० | ० | ० | ९ | ११ | ९ |
| ० | ११ | ० | ० | ० | १० | ० | ११ |
| ० | १२ | ० | ० | ० | ११ | ० | ० |
| ० | | | | | | | |
| ० | | | | | | | |
| ० | | | | | | | |

**शनेरष्टकवर्गः ३९।**

| र | चं | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | ६ | ५ | ६ | ३ | १ |
| २ | ६ | ५ | ८ | ६ | ११ | ५ | ३ |
| ४ | ११ | ६ | ९ | ११ | १२ | ६ | ४ |
| ७ | ० | १० | १० | १२ | ० | ११ | ६ |
| ८ | ० | ११ | ११ | ० | ० | ० | १० |
| १० | ० | १२ | १२ | ० | ० | ० | ११ |
| ११ | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

**लग्नाष्टकवर्गः ५२।**

| र | चं | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | १ | १ | १ | १ | ३ |
| ४ | ६ | ३ | २ | २ | २ | ३ | ६ |
| ६ | १० | ६ | ४ | ४ | ३ | ४ | १० |
| १० | ११ | १० | ६ | ५ | ४ | ६ | ११ |
| ११ | १२ | ११ | ८ | ६ | ५ | १० | ० |
| १२ | ० | ० | १० | ७ | ८ | ११ | ० |
| ० | ० | ० | ११ | ९ | ९ | ० | ० |
| ० | ० | ० | ० | १० | ० | ० | ० |
| ० | ० | ० | ० | ११ | ० | ० | ० |

## अथसूर्यरेखाचक्रम्·।

| राशयः | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | र·बु | शु·मं | ल· | | | | | | | | चंद्र· | श·गु |
| रवि | १ | १ | ० | १ | ० | ० | १ | १ | १ | १ | १ | ० |
| चंद्र | १ | ० | ० | १ | ० | ० | ० | १ | १ | ० | ० | ० |
| मंगल | ० | १ | १ | ० | १ | ० | ० | १ | १ | १ | १ | १ |
| बुध | ० | १ | ० | १ | १ | ० | ० | १ | १ | १ | १ | ० |
| गुरु | ० | ० | ० | ० | १ | १ | ० | ० | १ | ० | १ | ० |
| शुक्र | १ | ० | ० | ० | ० | ० | १ | १ | ० | ० | ० | ० |
| शनि· | १ | ० | १ | ० | ० | १ | १ | १ | ० | १ | ० | १ |
| ल· | १ | १ | ० | ० | १ | १ | ० | १ | १ | ० | ० | १ |
| यो·रे | ५ | ४ | २ | ३ | ४ | ३ | ३ | ७ | ६ | ४ | ४ | ३ |
| यो·बि | ३ | ४ | ६ | ५ | ४ | ५ | ५ | १ | २ | ४ | ४ | ५ |

## अथ सूर्यत्रिकोणैकाधिपत्यशोधनम्·।

| ग्रहाः | र·बु | शु·मं | ल· | | | | | | | | चंद्र | श·गु· |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म |
| रेखा | ५ | ४ | २ | ३ | ४ | ३ | ३ | ७ | ६ | ४ | ४ | ३ |
| त्रि·शो | १ | १ | ० | ० | ० | ० | १ | ४ | २ | १ | २ | ० |
| ए·शो· | १ | १ | ० | ० | ० | ० | १ | ० | ० | ० | २ | ० |
| | ग्रहपिंडः ८० राशिपिंडः ८१ उभयोर्योगपिंडः १६१ | | | | | | | | | | | |

## अथचंद्ररेषाचक्रम्·

| राशयः | ध | म | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | चं | श·बु | र·गु· | शु·मं | ल· | | | | | | | |
| रवि· | १ | ० | ० | ० | १ | ० | ० | १ | १ | १ | ० | १ |
| चंद्र | १ | ० | १ | ० | ० | ० | १ | ० | १ | १ | १ | ० |
| मंगल | १ | १ | ० | ० | १ | ० | ० | १ | १ | ० | ० | ० |
| बुधः | ० | १ | ० | १ | १ | ० | ० | १ | १ | ० | १ | १ |
| गुरुः | १ | ० | १ | १ | ० | ० | ० | ० | १ | १ | ० | १ |
| शुक्रः | १ | १ | ० | ० | १ | ० | १ | ० | १ | ० | १ | ० |
| शनि· | ० | ० | ० | १ | ० | ० | १ | ० | ० | ० | ० | १ |
| लग्न· | ० | १ | १ | ० | ० | ० | १ | ० | ० | १ | ० | ० |
| रेखा | ५ | ४ | ३ | ३ | ३ | ६ | ४ | ४ | ५ | ५ | २ | ५ |
| बिंदव· | ३ | ४ | ५ | ५ | ५ | २ | ४ | ४ | ३ | ३ | ६ | ३ |

## अथचंद्रत्रिकोणैकाधिपत्यशोधनम्·

| ग्रहाः | चं | श·बु | र·गु | शु·मं | ल· | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | ध | म | कुं | मी | मे | वृ | मि | क | सिं | क | तु | वृश्चि |
| रेखा· | ५ | ४ | ३ | ३ | ३ | ६ | ४ | ४ | ५ | ५ | २ | ५ |
| त्रि·शो· | २ | ० | १ | ० | ० | २ | २ | १ | २ | १ | ० | २ |
| ए·शो· | २ | ० | १ | ० | ० | ० | १ | १ | २ | १ | ० | ० |

ग्रहपिंडः २५ राशिपिंडः ६६ उदाहरणयोग· ९१

### अथ गुरोः रेखाचक्रम्।

| राशयः | कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | गुर | मंशु | ल | | | | | | | | चं | शबु |
| रविः | । | । | । | । | ० | ० | । | । | । | । | । | ० |
| चंद्रः | ० | ० | । | ० | । | ० | । | ० | । | ० | ० | । |
| भौमः | ० | । | । | ० | । | ० | ० | । | । | ० | । | । |
| बुधः | । | ० | । | । | । | ० | ० | । | । | । | ० | । |
| गुरुः | । | । | । | । | ० | ० | । | । | ० | । | । | ० |
| शुक्रः | ० | ० | । | ० | ० | । | । | ० | ० | । | । | । |
| शनिः | ० | । | ० | । | । | ० | ० | ० | ० | ० | । | ० |
| लग्नम् | । | ० | । | । | ० | । | । | । | । | ० | । | । |
| रेखाः | ४ | ४ | ७ | ५ | ४ | २ | ५ | ५ | ५ | ४ | ६ | ५ |
| बिन्दवः | ४ | ४ | १ | ३ | ४ | ६ | ३ | ३ | ३ | ४ | २ | ३ |

### अथ गुरुत्रिकोणैकाधिपत्यशोधनम्।

| ग्रहाः | बु.र. | शु.मं. | ल. | | | | | | | | चं. | श.बु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | कु | मी | मे | वृ | मि | कर्क | सिं | क | तु | वृ | ध | म |
| रेखाः | ४ | ४ | ७ | ५ | ४ | २ | ५ | ५ | ५ | ४ | ६ | ५ |
| त्रि०शो० | ० | २ | ३ | ० | ० | ० | ० | ० | १ | २ | १ | ० |
| ए०शो० | ० | २ | १ | ० | ० | ० | ० | ० | ० | २ | १ | ० |
| | ग्रहपिण्डः २० राशिपिण्डः २१ यु० योगपिण्डः ४१ | | | | | | | | | | | |

### अथ भृगुरेखाचक्रम्।

| राशयः | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | शु.मं | ल. | | | | | | | | चं | श.बु | र.गु |
| रविः | ० | ० | ० | ० | ० | ० | । | ० | ० | । | । | ० |
| चंद्रः | । | । | ० | ० | । | । | ० | । | । | । | । | । |
| मंगलः | ० | ० | । | । | ० | । | ० | ० | । | ० | । | । |
| बुधः | । | ० | । | । | ० | ० | । | ० | । | ० | ० | ० |
| गुरुः | ० | ० | ० | । | ० | ० | । | । | । | । | ० | ० |
| शुक्रः | । | । | । | । | । | ० | ० | । | । | । | । | ० |
| शनिः | । | । | । | ० | ० | । | । | । | । | ० | ० | ० |
| लग्नम् | ० | । | । | । | । | । | ० | ० | । | । | ० | । |
| रेखाः | ४ | ४ | ५ | ५ | ३ | ४ | ४ | ४ | ७ | ५ | ४ | ३ |
| बिन्दवः | ४ | ४ | ३ | ३ | ५ | ४ | ४ | ४ | १ | ३ | ४ | ५ |

### भृगुत्रिकोणैकाधिपत्यशोधनम्।

| ग्रहाः | शु.मं. | ल. | | | | | | | | चं. | श.बु. | र.गु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशयः | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु |
| रेखाः | ४ | ४ | ५ | ५ | ३ | ४ | ४ | ४ | ७ | ५ | ४ | ३ |
| त्रि०शो० | १ | ० | १ | २ | ० | ० | ० | १ | ४ | १ | ० | ० |
| ए०शो० | १ | ० | ० | ० | ० | ० | ० | ० | ० | १ | ० | ० |

ग्रहपिंडः ३५ राशिपिंडः ५६ योगपिंडः ९१

### अथ शनिरेखाचक्रम् ।

| मकर | कुंभ | मीन | मेष | वृष. | मिथु. | कर्क | सिंह | कन्या | तुल | वृश्चि. | धन | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श बु | र गु | शु.मं. | लग्न. | | | | | | | | चंद्रः | ग्रहाः |
| ० | । | । | ० | । | ० | ० | । | । | ० | । | । | रविः |
| ० | । | ० | ० | । | ० | ० | ० | ० | । | ० | ० | चंद्रमाः |
| । | । | ० | ० | । | ० | । | । | ० | ० | ० | । | भौमः |
| ० | ० | ० | ० | ० | । | ० | । | । | । | । | । | बुधः |
| । | ० | ० | ० | ० | । | । | ० | ० | ० | ० | । | बृहस्पतिः |
| । | । | ० | ० | ० | ० | ० | । | ० | ० | ० | ० | शुक्रः |
| ० | ० | । | ० | । | । | ० | ० | ० | ० | । | ० | शनिः |
| । | । | ० | । | ० | । | । | ० | । | ० | ० | ० | लग्न |
| ४ | ५ | २ | १ | ४ | ४ | ३ | ४ | ३ | २ | ३ | ४ | रेखा |
| ४ | ३ | ६ | ७ | ४ | ४ | ५ | ४ | ५ | ६ | ५ | ४ | बिंदवः |

### अथ शनित्रिकोणैकाधिपत्यशोधनम् ।

| श.बु. | सू.बृ. | शु.मं. | लग्न | | | | | | | | चं. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मकर | कुं. | मी. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | राशयः |
| ४ | ५ | २ | १ | ४ | ४ | ३ | ४ | ३ | २ | ३ | ४ | रेखा |
| १ | ३ | ० | ० | १ | २ | १ | ३ | ० | ० | १ | ३ | त्रि० शो. |
| १ | ३ | ० | ० | ० | ० | १ | ३ | ० | ० | ० | ३ | ए० शो. |

ग्रह पिं० ७० राशि पिंड ९९ उ० यो० पिं० १६९

### अथ लग्न रेखा चक्रम् ।

| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ल. | | | | | | | | चं. | श.बु. | र.गु. | शु.मं. | ग्रहाः |
| । | । | ० | । | ० | ० | ० | । | । | । | ० | ० | रविः |
| ० | । | ० | ० | ० | । | । | । | ० | ९ | । | ० | इन्दुः |
| ० | । | ० | ० | । | ० | ० | ० | । | । | ० | । | भौमः |
| ० | । | । | । | । | ० | । | । | । | ० | । | । | बुधः |
| । | । | । | । | ० | ० | । | । | ० | ० | ० | । | गुरुः |
| । | । | । | । | ० | ० | । | । | ० | ० | ० | । | शुक्रः |
| । | ० | । | ० | ० | ० | । | । | ० | । | ० | । | शनिः |
| ० | ० | । | ० | ० | । | ० | ० | ० | । | । | ० | लग्नम् |
| ४ | ५ | ५ | ३ | ३ | २ | ५ | ६ | ३ | ५ | ४ | ४ | रेखा |
| ४ | ३ | ३ | ५ | ५ | ६ | ३ | २ | ५ | ३ | ४ | ४ | बिं० |

| अथ लग्नत्रिकोणैकाधिपत्यशोधनम् । | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क. | | | | | | | | चं. | श.बु. | सू.गु. | शु.मं. | ग्रहाः |
| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | राशयः |
| ४ | ५ | ५ | ३ | ३ | २ | ५ | ६ | ३ | ५ | ४ | ४ | रेखा |
| १ | ३ | १ | २ | २ | २ | १ | ३ | ० | ३ | ० | १ | त्रि० शो. |
| १ | २ | ० | ० | ० | ० | १ | २ | ० | ३ | ० | १ | ए० शो. |
| ग्रहपिंडः ४५ रा. पिंडः ७७ उ० योग पिंडः २२ | | | | | | | | | | | | |

त्रिकोणं तु कथं प्रोक्तं मेषसिंहादयः क्रमात् ॥ वृषकन्यामृगाख्येषु तुलाकुंभयुगेषु च ॥ २ ॥ कर्कवृश्चिकमीनास्ते त्रिकोणाःस्युः परस्परम् ॥ त्रिकोणेषु च यन्न्यूनं तत्तुल्यं त्रिषु शोधयेत् ॥ ३ ॥ एकस्मिन् भवने शून्यं तत्त्रिकोणं न शोधयेत् ॥ समत्वे सर्वगेहेषु सर्वं संशोध्य बुद्धिमान् ॥ ४ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे त्रिकोणशोधनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७७ ॥

## अथ त्रिकोणशोधनोदाहरणमाह ।

जन्मांचक्रमिदम्.

२ के. | शु. १२ मं. | बु. सू. ११ | ३ | १ | ४ | श. गु. १० | चं. ९ | ५ | ७ | ६ | रा. ८

त्रिकोणत्रयस्थानेषु यन्न्यूनं फलं तत्स्थानत्रयेषु शोध्यम् तद्यथा सूर्याष्टकवर्गे मेषाधो रेखाफलं २, सिंहाधः फलं ३, धनाधःफलं ४, एतदूनं फलं त्रिषु शोधिते जातम् धनाधः २, मेषाधः ०, सिंहाधः १, तथा वृषाधः ३, कन्याधः ७, मकराधः ३, इदं त्रिषु शोधिते मकराधः०, वृषाधः०, कन्याधः४, तथा कुंभाधः५, मिथुनाधः४, तुलाधः६ । एवं त्रिषु शोधिते तुलाधः२, मिथुनाधः०, कुंभाधः१ । तथा मीनाधः४, कर्काधः३, वृश्चिकाधः ४, इदं त्रिषु शोधिते कर्काधः०, वृश्चिकाधः १, मीनाधः१, इत्येकःप्रकारः॥ त्रिषु त्रित्रिकोणेषु एकस्थाने शून्यं भवति तदा त्रिकोणशोधनं तत्र न कार्यम् त्रिषु स्थानेषु यथास्थितरेखाफलं स्थाप्यं अत्र तु कल्पितोदाहरणम् वृषाधो रेखाफलं३, कन्याधः५,मकराधः०, अतएव यथास्थितं फलं स्थापितम् तत्त्रिकोणशोधनाभावः एवं सर्वत्र ज्ञेयम् इति द्विती-

[illegible]:॥ त्रिषु त्रिकोणेषु रेखाफलं समानं भवति तदा स्थानत्रयेषु [illegible] शोधयेदित्यर्थात् त्रिषु शून्यमेव स्थाप्यम् तद्यथा गुरोरष्टकवर्गे वृषाधो रेखाफलं ५, कन्याधः ५, मकराधः ५, अत्र फलसाम्यत्वात्रिषु स्थानेषु शून्यं स्थापितं एवं सर्वत्र ज्ञेयम्। इति तृतीयः प्रकारः ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे त्रिकोणशोधनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अथैकाधिपत्यशोधनमाह।

एवं त्रिकोणं संशोध्य पश्चादेकाधिपत्यता॥ क्षेत्रद्वयं फलानि स्युस्तदा संशोधयेद्बुधः॥ १॥ क्षीणेन सह चान्यस्मिञ्छोधयेद्ग्रहवर्जिते॥ ग्रहयुक्ते फले हीने ग्रहाभावे फलाधिके॥ २॥ अनेन सह चान्यस्मिञ्छोधयेद्ग्रहवर्जिते ॥ फलाधिके ग्रहैर्युक्ते चान्यस्मिन्सर्वमुत्सृजेत्॥३॥ उभयोर्ग्रहसंयुक्ते न संशोध्यः कदाचन॥ उभयोर्ग्रहहीनाभ्यां समत्वं सकलं त्यजेत्॥४॥ सग्रहा ग्रहतुल्यत्वात्सर्वं संशोध्यमग्रहात् ॥ कुलीरसिंहयोराश्योः पृथक् क्षेत्रं पृथक् फलम्॥५॥ इति बृहत्पाराशरहोरापूर्वखंडसारांशे एकाधिपत्यशोधनं नामाऽष्टादशोऽध्यायः॥ १८॥ ॥ छ॥ ॥ छ॥

## अथैकाधिपत्यशोधनोदाहरणम्।

भौमादीनां क्षेत्रद्वयमस्ति तत्र विचारः क्षेत्रद्वये एकं ग्रहयुक्तं फलं हीनं भवति, द्वितीयं ग्रहहीनं फलाधिकं भवति तदा ऊनं फलं अन्यत्र ग्रहहीने अधिकफलं क्षेत्रे शोध्यमितिभावः शोध्यावशिष्टग्रहहीने क्षेत्रे स्थाप्यम् अत्र तु कल्पितोदाहरणमाह यथा मिथुनो ग्रहसहितः त्रिकोणशोधनफलेनानेन ३ हीनः कन्याग्रहरहितस्त्रिकोणशोधनफलेनानेन ४ अधिकं तेन मिथुनाधस्त्रिकोणशोधनेन १ कन्याधःस्थिताधिकफले शोधिते शेषं ३ स्थापितं मिथुनाधः १, कन्याधः ३, पुनः एकत्र राशौ फलाधिके ग्रहयुक्ते अन्यत्र ग्रहाभावे फले हीने सति तदा फलाधिके ग्रहयुक्ते राशौ तस्याधो [illegible] [illegible] स्थाप्यम् ग्रहवर्जिते फलहीने राशौ सर्वमुत्सृजेदित्यत्र [illegible] [illegible]

स्थाप्यम् अत्र तु कल्पितोदाहरणम् मीनो ग्रहयुक्तः फलाधिक ४ धनग्रहरहितस्त्रिकोणशोधनफलेन हीनः तेन मीनाधो यथास्थितफलं स्थापितं ४,धनाधः शून्यं स्थापितं पुनः उभयक्षेत्रे ग्रहसंयुक्ते सति तत्रशोधनं न कार्यम् तद्यथा सूर्याष्टकवर्गे मीनो ग्रहसहितःफलं १, धनोऽपि ग्रहसहितं फलं २ अत्र शोधनं नास्ति तेन यथास्थितफलं स्थापितं पुनः क्षेत्रद्वये ग्रहहीने फलसाम्ये सकलं त्यजेदिति स्थानद्वये शून्यं स्थाप्यं तद्यथा भृगोरष्टकवर्गे वृषाधःफलं १, तुलाधः त्रिकोणशोधनफलं १, वृषतुलौ ग्रहरहितौ फलेन तुल्यौ तेनात्र स्थानद्वये शून्यं स्थापितं अथवा एकत्र फलं १, अन्यस्मिन्शून्यं०, तदा फलाधः शून्यं, शून्याधः०शून्यंस्थाप्यं तद्यथा शनेरष्टकवर्गे मेषाधः त्रिकोणशोधनफलं ०, वृश्चिकाधः फलं १ अत्रोभयस्थाने शून्यं स्थापितं यदा एकत्र फलमधिकं अन्यत्र फलमूनं तदा ऊनफलेनाधिकफलं संशोध्यावशेषं संस्थाप्य तद्यथा लग्नाष्टकवर्गे त्रिकोणशोधितफलं वृषाधः ३,तुलाधः १,अत्र शोध्यं वृषाधः २, तुलाधः १ स्थाप्यं पुनः यदेको राशिर्ग्रहसहितः अन्यो ग्रहरहितः द्वयोः फलं तुल्यं भवति तदा सग्रहराशौ यथास्थितं फलं स्थाप्यम् ग्रहरहिते राशौ शून्यं स्थाप्यं अत्र तु कल्पितोदाहरणं मेषोग्रहरहितस्तत्रस्थं फलं ३ वृश्चिकग्रहरहितं तत्रस्थं फलं ३ अत्र फलतुल्यत्वात्सग्रहमेषाधः यथास्थितं फलं स्थापितं ३, वृश्चिकाधः शून्यं० स्थाप्यं पुनः कुलीरसिंहयोः सर्वत्र यथास्थितं फलं स्थाप्यं एकाधिपत्यशोधनाभावः एवं सर्वत्र ज्ञेयं। इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे एकाधिपत्यशोधनं नाम अष्टादशोऽध्यायः॥ १८ ॥

---

## अथ पिंडोत्पत्तिमाह।

शोध्यावशेषं संस्थाप्य राशिमानेन वर्द्धयेत् ॥ ग्रहयुक्तेऽपि तद्राशौ ग्रहमानेन वर्द्धयेत् ॥ १ ॥

## अथ गुणकध्रुवांकानाह।

गोसिंहौ दशगुणितौ वसुभिर्मिथुनालिनौ ॥ वणिग्मेषौ तु मुनिभिः कन्यकामकरौ शरैः ॥ शेषाः स्वमानगुणिता राशिमाना

भागुणकाः ॥ बुधस्य संख्या शेषाणां ग्रहगुणैर्गुणयेत् पृथक् पृथक्कार्याः ॥ ३ ॥ इति बृहत्पाराशरहोरापूर्वखंडसारांशे पिंडोत्पत्तिकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

| अथ राशिगुणकचक्रम् । | | | | | | | | | | | | | अथ ग्रहगुणकचक्रम् । | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी | रा | सू | चं | मं | बु | गु | शु | श | ग्रहाः |
| ७ | १० | ८ | ४ | १० | ५ | ७ | ८ | ९ | ५ | ११ | १२ | गु० | ५ | ५ | ८ | ५ | १० | ७ | ५ | गुणकाः |

## अथ ग्रहराशिपिंडानयनोदाहरणम् ।

एकाधिपत्य शोधितसिद्धांकेषु तत्तद्ग्रहाश्रितराश्यधः स्थितमंकानां तत्तद्ग्रहगुणकैर्गुणयित्वा गुणितांकानां योगे ग्रहपिंडो भवति पुनः राशिगुणकगुणितराश्यंको राशिपिंडो भवति । तद्यथा कुंभस्थौ रविगुरू कुंभाधःस्थांक १ रविगुणकाः ५, गुरौ गुणांकाः १० गुणयेत् गुणितांकाः ५ । १० मीनाश्रितौ शुक्रभौमौ तयोः राशेरधःस्थांक १ शुक्रगुणकाः ७, भौमगुणकाः ८ गुण्येन गुणितांकाः ७ । ८ धनराशिसहितश्चंद्रस्तस्य राशेरधःस्थांकौ २, चंद्रगुणितौ ५, गुणितांकाः १० मकराश्रितौ शनिबुधौ तयो राशेरधःस्थांकः ०, गुणितानां योगे ग्रहपिंडः ४० पुनः राशिपिंडः कुंभाधः १ कुंभगुणकाः ११ गुणितांकाः ११ मीनाधःस्थांकः १ मीनगुणकाः १२ गुणितांकाः १२, सिंहाधः १, सिंहगुणकाः १० गुणितांकाः १० धनाधः २ धनगुणकाः ९ गुणितांकाः १८, गुणितानां योगे राशिपिंडः ५१ उभयोर्योगे योगपिंडः ९१ एवं सूर्याष्टकवर्गे पिंडं अनया रीत्या सर्वत्र ज्ञेयम् । इति श्रीबृहत्पराशरहोरापूर्वखंडसारांशे पिंडोत्पत्तिकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथाष्टकवर्गफलमाह ।

आत्मप्रभावशक्तिश्च पितृचिंता रवेः फलम् ॥ मनोबुद्धि प्रसादं च मातृचिंतामृगांकतः ॥ १ ॥ भ्रातृसत्वं गुणं भूमिं भौमेन तु विचिंतयेत् ॥ २ ॥ वाणिज्यकर्मवृत्तिश्च बुधेन तु विचिंतयेत् ॥ गुरुणा देहपुष्टिं च बुद्धिपुत्रार्थसंपदः ॥३॥ भृगोर्विवाहकर्माणि भोगस्थानं च वाहनम् ॥ वेश्यास्त्रीजनगात्राणि शुक्रेणैव निरीक्ष-

येत् ॥ ४ ॥ आयुष्यं जीवनोपायं दुःखशोकमहद्भयम् ॥ सर्वंस्वयं च मरणं मंदेनैव निरीक्षयेत् ॥ ५ ॥ रविः पिता शशी माता भ्राता भौमो बुधः सुहृत् ॥ मातुलेयः स्मृतो जीवो ज्ञानपुण्ये स्त्रियः सितः ॥ एषामृक्षेच तत्काले मरणं कुरुते शनिः ॥ ६ ॥ तत्तत्कारकभावकर्णगुणितं शोध्यावशिष्टं फलं विंशत्या सह सप्तभिश्च विहृतं तच्छेषतारा शनौ ॥ तातः स्याज्जननी सहोदरजवो बंधुः सुतः स्त्री स्वयं ततुल्यं विलयं प्रयांति विपुलं श्रीनाथहेतुश्च वा ॥ ७ ॥ आदित्याष्टकवर्गं च निक्षिप्याकाशचारिषु ॥ अर्कस्थितस्य नवमो राशिः पितृगृहं स्मृतम् ॥ ८ ॥ तद्राशिफलसंख्याभिर्वर्द्धयेद्योगपिंडकम् ॥ सप्तविंशोद्धृतं शेषं नक्षत्रं याति भानुजम् ॥ ९ ॥ तस्मिन्काले तस्य तस्य भावस्यार्तिं विनिर्दिशेत् ॥ तस्मिन्काले पितृक्लेशो भवतीति न संशयः ॥ १० ॥ तत्त्रिकोणगते वापि पितापितृसमोऽपि वा ॥ मरणं तस्य जानीयाद्दशाछिद्रेषु कल्पयेत् ॥ ११ ॥ अर्कात्तु तुर्यगे राहौ मंदे वा भूमिनंदने ॥ गुरुशुक्रेक्षणमृते पितृहा जायते नरः ॥ १२ ॥ लग्नाच्चंद्राद्गुरुस्थाने याते सूर्यसुते यदि ॥ पित्रोर्नाशं तदा काले वीक्षिते पापसंयुते ॥ १३ ॥ दशानुकूलकालेन योजयेत्कालवित्तमः ॥ लग्नात्सुखेशराशीशदशायां च पितृक्षयः ॥ १४ ॥ सुखनाथदशायां तु बहुप्राप्तेश्च संशयः ॥ पितृजन्माष्टमे जातस्तदीशे लग्नगेपि वा ॥ १५ ॥ तनैव पितृकार्याणि कारयेन्नात्र संशयः ॥ सुखेशे लग्नलग्नस्थे चंद्रलग्नाद्विशेषतः ॥ १६ ॥ पितृगृहं समायुक्ते जातः पितृवशानुगः ॥ तेनैव पितृकार्याणां कर्मशेषं समापयेत् ॥ ॥ १७ ॥ पितृजन्मतृतीयर्क्षे जातः पितृधनाश्रितः ॥ पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः ॥ १८ ॥ तदीशे लग्नगेऽपि

पितृश्रेष्ठो भवेत्सुतः ॥ सूर्याष्टवर्गे यच्छून्यं मासं संवत्सरं प्रति ॥ १९ ॥ विवाहव्यवहारादिमासेऽस्मिन्वर्जयेत्सदा ॥ कष्टा मासदुःखानि शून्यमासे भवंति च ॥ २० ॥ एवमादिफलं ज्ञात्वा मासं प्रति समाचरेत् ॥ संशोध्य पिंडं सूर्यस्य रंध्रमानेन वर्द्धयेत् ॥ २१ ॥ द्वादशादिहताच्छेषं मेषादिगणयेत्पुनः ॥ तस्मिन्मासे मृतिं विंद्यात्तत्रिकोणगतेपि वा ॥२२॥ सूर्यादिकल्पयेत्त्वन्ये परतो भास्करे मृतिः ॥ विशेषं भावसूत्रेग्रे पितुर्दायादिकं दिशेत् ॥ २३॥

## अस्योदाहरणम् ।

अर्कस्थितस्य नवमो राशिः पितृगृहं अत्र सूर्यः कुंभस्थः अस्मान्नवमो राशिः तुला तत्रस्थं फलं ६ सूर्यस्य संशुद्धिः पिंडयोगः ९१ अयं तुलायां फलस्य गुणितांकाः ५४६ इदं सप्तविंशति २७ भक्तेर्लब्धम् २० व्यर्थं शेषं ६ आर्द्रानक्षत्रगते शनौ पितृकष्टं तत्रिकोणगते कष्टम् आर्द्रास्वातिशतभिषानक्षत्रगते शनौ पितृकष्टम् अथवा संशोध्य सूर्यपिंडः ९१ तुलायां रंध्रमानेन ३ गुणितांकाः २७३ द्वादश १२ भक्तेर्लब्धं व्यर्थं २२ शेषं ९ धनराशिः तत्रिकोणगे ९ । १ । ५ धनमेषसिंहराशिगते शनौ पितृकष्टम् पितुरभावे पितृसमस्यकष्टम् ॥ २३ ॥

## अथ चंद्रफलम् ।

चंद्राच्चतुर्थगे मातुः प्रासादग्रामचिंतनम् ॥ चंद्राष्टवर्गे शून्यं च शून्यराशिगते विधौ ॥२४॥ तन्नक्षत्रं परित्यज्य शुभकर्माणि कारयेत् ॥ चंद्राष्टमे शनिक्षेत्रत्रितयेषु विशेषतः ॥ २५ ॥ आयामव्याधिदुःखानि लभते नात्र संशयः ॥ चन्द्रात्सुखफलात्पिण्डं वर्धयेच्छोध्यपूर्ववत् ॥ २६ ॥ शेषे मृगे शनौ याते मातृहानिं विनिर्दिशेत् ॥ तत्रिकोणेषु वा केचिद्दशाछिद्रेषु कल्पयेत् ॥ २७॥ चन्द्राच्छभात्सुतस्थाने भौमे वा भास्करात्मजे ॥ दृश्यते वा तयोः स्थानं पूर्वोक्ते कालसंगते ॥ २८ ॥ तदभावे स्वयं मृत्युर्देशात्त-

रगतेऽपि वा ॥ चन्द्रात्सुखेष्टमे राशेस्त्रिकोणे दिवसाधिपे ॥ २९ ॥ मात्रावियोगमस्तीति निर्दिशेच्छ्रमतः पितुः ॥ पितुर्वा मातृचिन्ताया भास्करादीन् प्रकल्पयेत् ॥ ३० ॥ ॥ छ ॥

## अस्योदाहरणम् ।

चंद्रो धनराशावस्ति, अष्टमः सिंहराशिस्तस्येशः सूर्यः, अयं धनिष्ठानक्षत्रेऽस्ति अतः धनिष्ठा ज्येष्ठा रेवती एतेषु नक्षत्रेषु आयामो व्याधिदुःखादि लभेत् । तस्मादेतेषु नक्षत्रतृतीयेषु शोभनं न कुर्यात् । तथा चंद्रात्सुखस्थानं मीनः १२ अत्रस्थफलं ३ चंद्रस्य शुद्धयोगपिंडः ९१ फलेन गुणितांकाः २७३ सप्तविंशति २७ भक्तेर्लब्धं १० व्यर्थं शेषं ३ कृत्तिकानक्षत्रं तत्रिकोणे कृत्तिका उत्तराफाल्गुनी उत्तराषाढानक्षत्रगते शनौ मातृकष्टम् । अथवा योगपिंडः ९१ रंध्रमानेन २ गुणितांकाः १८२ द्वादशभक्तेर्लब्धं १५ व्यर्थं शेषं २ वृषभकन्यामकरराशिगते शनौ मातृकष्टं मात्रभावे तत्समानस्य कष्टम् ॥ ३० ॥

## अथ भौमफलमाह ।

भौमाष्टवर्गे संचिंत्यं भ्रातृविक्रमधैर्यकम् ॥ भौमस्थितस्य सहजो राशिर्भ्रातृगृहं स्मृतम् ॥ ३१ ॥ त्रिकोणे शोधनं कृत्वा यत्र भूयांसि तत्र च ॥ भूमिर्भवति भार्या वा ग्रहगेहोऽथवा यदि ॥ ३२ ॥ भौमो बलविहीनश्चेद्दीर्घायुर्भ्रातृको भवेत् ॥ फलानि यत्र क्षीयंते तत्र भूमितराः स्मृताः ॥ ३३ ॥ तद्राशिफलसंख्यैश्च वर्धयेच्छोध्य पूर्ववत् ॥ शेषमृक्षं शनौ याते भ्रातृहानिं विनिर्दिशेत् ॥ ३४ ॥ ॥ छ ॥ ॥ छ ॥

## अस्योदाहरणम् ।

भौमः मीनराशिस्थः अस्मात्तृतीयराशिः वृषभः तस्य फलं २ भौमस्य योगपिंडः ५९ फलेन गुणितांकाः ११८ सप्तविंशति २७ भक्तेर्लब्धं ४ व्यर्थं शेषं १० मघा तत्त्रिकोणमघामूलाश्विनीनक्षत्रगते शनौ भ्रातृकष्टं अथवा भौमयोगपिंडः ५९ रंध्रमानेन ३ वर्द्धितः १७७ द्वादश १२ भक्तेर्लब्धं १४ व्यर्थं शेषं ९ धनराशिः तत्त्रिकोणे धनमेषसिंहराशिगते शनौ भ्रातृकष्टम् ॥ ३४ ॥

## अथ बुधफलम् ।

बुधात्तुर्यं कुटुंबं च धनपुत्रादिमातुलाः ॥ तत्पंचमे मंत्रविद्यालिपिबुद्ध्यादि चिंतयेत् ॥ ३५ ॥ बुधाष्टवर्गं संशोध्य शेषमृक्षगते शनौ ॥ बंधुमित्रविनाशादींल्लभते नात्र संशयः ॥ ३६ ॥

## अस्योदाहरणम् ।

बुधो मकरेऽस्ति, अस्माच्चतुर्थः मेषः १, तत्रस्थं फलं ४. बुधस्य योगपिंडः १३२ फलेन गुणितांकाः ५२८ सप्तविंशति २७ भक्तेर्लब्धं १९ व्यर्थं शेषं १५ स्वातीशतभिषा आर्द्रानक्षत्रगते शनौ बंधुमित्रादिकष्टं अथवा योगपिंडः १३२ रंध्रमानेन ५ गुणितांका ६६० द्वादशभक्तेर्लब्धम् ५५ व्यर्थं शेषं० मीनकर्कवृश्चिकराशिगते शनौ बंधुमित्रादिकष्टम् । एवं पंचमस्थानाद्बुद्ध्यादि विचारणीयम् ॥ ३६ ॥

## अथ गुरुफलम् ।

जीवात्पंचमतो ज्ञानं पुत्रधर्मधनादिकम् ॥ गुरोरष्टकवर्गेषु संतानमपि कल्पयेत् ॥ ३७ ॥ गुरुस्थितसुतस्थाने यावच्च विद्यते फलम् ॥ शत्रुनीचग्रहं त्यक्त्वा तावंतश्च सुताः स्मृताः ॥ ३८ ॥ संख्या नवांशतुल्या वा तदीशस्थाऽथवा पुनः ॥ सुतभेशनवांशैश्च समानावाधिकल्पयेत् ॥ ३९ ॥ गुरोरष्टकवर्गेषु शोध्यशेषफलानि च ॥ क्रूराश्रितफलं त्यक्त्वा शेषास्तस्यात्मजाः स्मृताः ॥ व्ययार्थसुतसंस्थैश्च पापैः स्यात्क्षीणसंततिः ॥ ४० ॥ गुरोरष्टकवर्गेषु सुतराशिस्थितं समम् ॥ अल्पात्मजः स विज्ञेयो गुरौ पंचमगेपि वा ॥ तदीशयोगदृष्टे वा तदा पुत्रान्समादिशेत् ॥ ४१ ॥ एतैर्बहुप्रकारैश्च कल्पयेत्कालवित्तमः ॥ बहुलक्षणसंयोगे तदा तस्मिन्समादिशेत् ॥ ४२ ॥ वंशक्षयादियोगाश्च पुरस्ताद्वक्ष्यते मया ॥ पूर्वोक्तलक्षणेनात्र वंशभर्तुः समादिशेत् ॥ ४३ ॥

## अस्योदाहरणम् ।

गुरुः कुंभराशिस्थः, अस्मात्पंचमो राशिर्मीनोस्ति तस्य फलं ४ गुरोर्योगपिंडः ९१ फलेन गुणितांकाः ३६४ सप्तविंशति २७ भक्तेर्लब्धं १३ व्यर्थ शेषं ११ पूर्वाफाल्गुनीपूर्वाषाढाभरणीनक्षत्रगते शनौ संतानकष्टं अथवा योगपिंडः ९१ रंध्रमानेन ५ गुणितांकाः ४५५ द्वादश १२ भक्तेर्लब्धं ३७ व्यर्थ शेषं ११ कुंभमिथुनतुलाराशिगते शनौ संतानकष्टम् ॥ ४३ ॥

## अथ शुक्रफलम् ।

भृगोरष्टकवर्गं च निक्षिप्याकाशचारिषु ॥ येषु येषु फलानि स्युर्भूयांसि किल तत्र तु ॥४४॥ भूमिं कलत्रं वित्तं च तद्देशे निर्दिशेन्नृणाम् ॥ शुक्राज्जामित्रतो लब्धिर्दारेशान्वितदिग्भवा ॥ ४५ ॥ दाराधिपस्थितं क्षेत्रं दाराजन्मर्क्षकं विदुः ॥ तस्योच्चनीचराशौ वा केचिदिच्छंति तद्विदः ॥ ४६ ॥ तस्यांशकत्रिकोणे वा भार्याया जन्म संभवेत् ॥ लग्नेन्द्वोर्भाग्यभं जन्म लग्नभं परिकीर्तितम् ॥४७॥ तयोः समागमर्क्षे च कल्पयेत्तत्र बुद्धिमान् ॥ स्वक्षेत्रस्वोच्चगो वापि स्वमित्रर्क्षगतोऽपिवा ॥ ४८ ॥ स्वमित्रांशगतो वापि वक्तव्यं दारलक्षणम् ॥ शुक्रजामित्रतोलब्धिस्त्रिकोणाद्देशदिक् स्त्रियः ॥ ४९ ॥ प्रोक्तराशिर्यदा दारा जन्मर्क्षं संततिस्तदा ॥ अनुक्तराशिर्जन्मर्क्षमस्तिचेन्नास्ति संततिः ॥ ५० ॥ भृगुर्दारेशयुक्तर्क्षं फलं संख्याःस्त्रियोविदुः॥क्षेत्रस्त्रीग्रहणेसाम्यं नृपस्य द्विगुणं तथा॥५१॥ मंदांशे मंदसंयुक्ते मंदक्षेत्रेऽथवा भृगौ॥नीचांशे पापसंयुक्ते नीचस्त्रीभोगमिच्छति ॥ ५२ ॥ मेदिनी तनय भोगनिवासी मेदिनी भव सदालययुक्तः ॥ मंगलेक्षणयुतः सितस्तदाऽत्यंतसुंदरपराङ्गनारतः ॥५३॥ भौमांशकगते शुक्रे भौमक्षेत्रगतेऽपि वा ॥ भौमेनयुतदृष्टेश्च परस्त्रीभोगमिच्छति ॥ ५४ ॥ दारागारे मंदभांशे

कुजांशे मंदाराभ्यां वीक्षिते यस्य पुंसः ॥ स्यात्तद्दारा जारिणी चं-चला वा वेश्या दासी स्वामिसंतोषनिघ्नी ॥ ५५ ॥ जामित्रे मंद-भौमांशे तदीशे मंद भौमगे ॥ वेश्या वा जारिणी वापि तस्य भार्या न संशयः ॥ ५६ ॥ पापारूढांशगे चंद्रे जामित्रे व्ययगे पिवा ॥ पापग्रहान्विते शुक्रे स्त्रीहेतोः शुचमावहेत् ॥ ५७ ॥ शुक्रांशकसमाना स्त्री वर्णरूपगुणान्विता ॥ भवेच्छशांकतुल्या वा दारेशस्य गुणान्विता ॥५८॥ सपापभागगे विधौ व्ययेंगना लयेपि चेत् ॥ सपापभार्गवेंगनानिमित्ततः शुचां पदं ॥५९॥ सितांशकप्रमाणिकाः स्त्रियो भवंति सद्गुणाः ॥ भवेच्चरांशसंमिताः स्व-नाथतुल्यसद्गुणाः ॥६०॥ शुक्रान्मंदे त्रिकोणस्थे नेष्टं जीवे सुख-प्रदम् ॥ तेषां बलाबलत्वेन भार्याया लक्षणं वदेत् ॥६१॥ एवमादि फलं ज्ञात्वा निर्दिशेच्छुकवर्गतः ॥ ६२ ॥

## अस्योदाहणम् ।

भृगोर्योगपिंडः ४१ शुक्रात्सप्तमः कन्या तस्य फलेन ४ गुणितांकाः १६४ सप्तविंशति २७ भक्तेर्लब्धं ६ व्यर्थं शेषं २ भरणी पूर्वाफाल्गुनी पूर्वाषाढा न-क्षत्रगते शनौ जायाकष्टम् अथवा योगपिंडः ४३ रंध्रमानेन ४ गुणितांकाः १६४ द्वादश १२ भक्तेर्लब्धम् १३ व्यर्थं शेषम् ८ वृश्चिकमीनकर्कराशिगते शनौ जायाकष्टम् ॥ ६२ ॥

## अथ शनिफलम् ।

शनैश्वरस्थितस्थानादष्टमं मृतिरुच्यते ॥ शनेरष्टकवर्गे च स्वस्यायुष्यं विनिर्दिशेत् ॥ ६३ ॥ लग्नात्प्रभृति मंदांतं फला-न्येकत्र कारयेत् ॥ लग्नादिफलतुल्याब्दे व्याधिवैरं समादिशेत् ॥ ॥ ६४ ॥ मंदादिलग्नपर्यंतं फलान्येकत्रसंयुतम् ॥ मंदादिफलतु-ल्याब्दे व्याधिं तस्य समादिशेत् ॥ ६५ ॥ तयोर्योगसमाब्देतु

मृत्युयोगः प्रचक्षते ॥ शोध्यादिगुणनं कृत्वा पिंडं संस्थाप्ययत्नतः ॥ ६६ ॥ अष्टमस्थफलैर्हत्वा सप्तविंशतिभाजितम् ॥ शतादूर्ध्वंतु तत्पिंडं शतमेव त्यजेद्यतः ॥ ६७ ॥ आयुः पिंडंतु जानीयात्प्राग्वद्देलां तु कल्पयेत् ॥ त्रिकोणैकाधिपत्यर्क्षशोधनं विरचय्यच ॥ ६८ ॥ पिंडं संस्थाप्य गुणयेल्लग्नादष्टमगैः फलैः ॥ सप्तविंशतिहृच्छेषं मृत्युकालं वदेद्बुधः ॥ ६९ ॥ समूलाष्टकवर्गे च यत्र नास्ति फलं गृहे ॥ तत्र नास्ति फलं तस्य यदा याति शनैश्चरः ॥७०॥ तद्गृहे रविचंद्रौचेद्दशाछिद्रे मृतिं वदेत् ॥ दशाछिद्रसमायोगे मृत्युरेव न संशयः ॥ ७१ ॥ मंदाष्टवर्गराशीनां हीनराशौ क्षयो भवेत् ॥ तद्गृहे भास्करे मंदे तस्मिन्काले मृतिं वदेत् ॥ ७२ ॥ मंदाष्टवर्गापथरिष्टयोगे दुष्टानि वर्षाणि विचारयंति ॥ पूर्वोक्तसंशोधनतो हि शुद्धं पिण्डं सुधीमान्विलिखेत्पृथक्स्थं ॥ ७३ ॥ लग्नात्तु मंदान्तमथोफलानामैक्यं शनेर्लग्नमुपांत्यमेव ॥ तद्योगतुल्ये शरदीहकाले व्याधिं मृतिं वा परदेशयानम् ॥ ७४ ॥ धनक्षयं तत्प्रतितुल्यवर्षे तद्योगयोगाब्दसमेतु कष्टम् ॥ सामर्थ्यहीनग्रहपाककाले प्राप्ते तदा निश्चयतो मृतिः स्यात् ॥ ७५ ॥ विलग्नशनिमध्यगानि च फलानि संताडयेन्नगेर्भविहृतानि शेषमितभे खले याति चेत् ॥ तदा धनसुखक्षतिं तदनु चांगभादष्टमस्थितैर्विगुणयेद्गणंभैंपरिशेषभस्थे शनौ॥७६॥

## अत्रोदाहरणम् ।

लग्नप्रभृति मंदांतं फलानि१४४३४३२३४ एतेषामैक्यं २८ एततुल्ये वर्षे शरीरे व्याधिं वा मृतिं परदेशयानं धनक्षयं लभते तथा मंदप्रभृति लग्नांतं फलानि ४ ५ २ एतेषां योगः ११ एततुल्याब्दे पूर्ववत्कष्टं उभयोर्योगसमानाब्दे ३९ पूर्ववद्धनक्षयादि योगो भवति मृत्युयोगाभावः पुनः विलग्नाच्छनि मध्ये

यानि फलानि २८ नगै ७ स्ताडितानि १९६ भ २७ विहृतावशेषं० एत-न्मितभे रेवतीनक्षत्रगते खले सुखक्षतिः स्यात् अथवा शनेः योगपिंडः १६९ लग्नादष्टमस्थफलेन ३ गुणितः ५०७ भ २७ परिशेषः २१ उत्तराषाढा कृत्तिका उत्तराफाल्गुनी नक्षत्रगते शनौ सुखधनक्षतिः स्यात् ॥ ७६ ॥

प्रयातिवियब्दके सति दशाद्यरिष्टे सति भृशं मरणनिश्च-यं निगदितं तदा नो मृषा ॥ त्रिकोणभवने ततोपि सति दुष्ट-पाकोदये प्रयाति मरणं पुमानपि च रक्षकश्चेच्छिवः ॥ ७७ ॥

## अस्यार्थः।

मंदाष्टकवर्गे यस्मिन् राशौ वियच्छून्यं भवति तस्मिन्राशौ याते शनौ द-शारिष्टे सति वा दुष्टपाकोदये दुष्टदशायां तस्मिन्नब्दके मरणनिश्चयो वाच्यः ततोपि कोणे दुष्टदशायां वा मरणं भवति यदि शिवो रक्षिता तदापि मृत्युः स्यात् ॥ ७७ ॥

## पुनः भौमफलम्।

भौमांतं तनुपः कुजात्तनुलयं योगे फलानां तथा तत्तुल्यं श-रदीह कष्टमनिशं शस्त्रानलोत्थं भयम् ॥ मंदारांगभयोः फलैक्य-कमिते सौम्योज्झिते शस्त्रभीर्मन्दारैक्यमिते फलक्षतिभयं राहोः सुखानां क्षतिः ॥ ७८ ॥ ॥ ६९ ॥ ॥ ६९ ॥

## अस्योदाहरणम्।

भौमाष्टकवर्गे तनुतः लग्नात् भौमांतं फलैक्यं ३६ अथ वा भौमात् लग्नांतं फलं २ उभयोर्योगफलम् ३८ एतत्तु २। ३६। ३८ त्यवर्षे शरीरे व्याध्यादि कष्टम् ॥ ७८ ॥

## अथ शुभाशुभफलमाह।

शुभखचरफलैक्यं प्राप्तवर्षे नितांतं धनतनयसुखानां भा-जनं स्यान्मनुष्यः ॥ धरणितनयवर्गे बिंदुसंज्ञांतयोगे तनुल्य-मिह वर्षे पापगे मृत्युभीतिः ॥ ७९ ॥ मार्तण्डपुत्राष्टकवर्गमध्ये

यद्यद्गृहे शून्यफलं भवेच्च ॥ तत्तद्भमध्ये रविजेथ सूर्ये तदा शरीरामयपीडनं स्यात् ॥ ८० ॥ ॥ ॥ ७९ ॥

## अस्योदाहरणम् ।

चंद्राष्टकवर्गे चंद्राल्लग्नांतं फलैक्यं १५ लग्नाचंद्रांतं फलैक्यं ३४ एततुल्याब्दे १५ ३४ धनादिसौख्यं बुधाष्टकवर्गे बुधाल्लग्नांतं फलैक्यं१४लग्नाद्बुधांतं फलैक्यं४२एततुल्याब्दे१४४२धनतनयादिसौख्यं गुरोर्लग्नांतं फलैक्यं ८लग्नाद्गुर्वन्तं फलैक्यं ४८ एततुल्याब्दे धनादिसौख्यं शुक्राष्टकवर्गे शुक्राल्लग्नांतं फलैक्यं ४ एततुल्याब्दे धनतनयादिसौख्यं भविष्यति एवं लग्नाष्टकवर्गेऽपि बोद्धव्यम् ॥ ७९ ॥ शनेरष्टकवर्गे शून्यं नास्ति इति शनेरष्टकवर्गः ॥ ८० ॥

## अथ सर्वाष्टकवर्गफलमाह ।

सर्वाष्टकग्रहफलैर्वियोज्य चक्रं मृत्यादिगुण्यमशुभं शुभमेव तत्र ॥ जन्मादितः फलसमानदशाः समीक्ष्य यात्राविवाहसमये बहुमृत्युयुक्तः ॥ ८१ ॥ मेषादि भानां सकलाष्टवर्ग उत्पन्नरेखागणमेव कुर्यात् ॥ धृत्यादि १८ तत्त्वांतमितं कनिष्ठं त्रिंशावसानं किल मध्यवीर्याः ॥ ८२ ॥ त्रिंशाधिकं तूत्तमवीर्यदाः स्युः शरीरसौख्यार्थयशोविशेषाः ॥ स्वस्वाष्टवर्गे यदि वेदहीनाः क्लेशाय सौख्याय च वेदपुष्टाः ॥ ८३ ॥ दशमभवनरेखाभ्योधिकं लाभमानं भवति यदि विहीनं स्याद्व्ययाख्यं ततोपि ॥ अधिकतरविलग्नं भोगसंपत्तिभग्ना विनिमयवशतस्तद्वैपरीत्यं जनस्य ॥ ८४ ॥ मध्या १०त्फलाधिके लाभो मध्यात्क्षीणफले व्ययः ॥ यस्य रेखाधिकं लग्नं भोगवानर्थवान् भवेत् ॥ ८५ ॥ प्रादक्षिण्यादिभावनां सकलफलयुतिं दिक्चतुष्कक्रमेण कृत्वा तद्भागतो यः समधिकफलतः शोभनं हानिमल्पात् ॥ सौम्याः स्वोच्चस्वगेहोदितखचरयुते दिग्विभागे स्वकार्यं वित्तेशाशा सुवित्तं मृतिपतिगतदिग्भागगे देहनाशः ॥ ८६ ॥ ॥ ॥ ७९ ॥

## टीका।

भानां लग्नादिद्वादशराशीनां प्राग्दक्षिणेन सव्यमार्गेण दिक्चतुष्कमेण पूर्वादिदिक्षु राशित्रयं त्रयं ज्ञेयं तत्र लग्नद्वादशैकादशराशयः पूर्वादिक् तथा दशमनवमाष्टमराशयो दक्षिणा दिक् सप्तमषष्ठपंचमराशयः पश्चिमा दिक् चतुर्थतृतीयद्वितीयराशयः उत्तरा दिक् पूर्वादिदिक्चतुष्कस्य प्रत्येकं राशित्रयस्य सकलफलयुतिं योगं कृत्वा तद्भागेयंयत्र समधिकफलं तद्दिशि शोभनं वाच्यं यत्राल्पफलं तद्दिशि हानिर्वाच्या ॥ ८६ ॥

## अथ भावफलमाह।

भावं विलोक्य सदसत्फलदायकं यत्तद्राशिसंभवफलैश्च तदुक्तपिंडम् ॥ ८७ ॥ पिंडे रेखाताडिते भावशेषे १२ गशौतस्मिन्याति सौरिः समायाम् ॥ यस्यां तत्तद्भावहानिं च विद्यात्प्राहुर्वंशे वाऽथवा तत्रिकोणे ॥ कृत्वा विंदुभ्यस्तु कालं सुधीमांस्तस्माद्वाच्यः प्राप्तिकालः शुभत्वे ॥ ८८ ॥　　॥　　॥ ७ ॥

## टीका।

भावमिति लग्नपिंडं संगुण्यभैः सप्तविंशतिभिः[२७] विभज्य शेषभे यदा सौरिः प्रयाति तदा तस्य भावफलस्य नाशः स्यात् ॥८७॥ पिंडइति पिंडं लग्नपिंडे ताडिते भावफलेन गुणयेत् द्वादशभक्ते शेषे यस्मिन्समायां वर्षे सौरिर्याति तस्मिन्वर्षे तद्भावहानिं विद्यात् ज्ञातव्येत्यर्थः अथवा तत्रिकोणइति एवं सुधीमान् विंदुभ्यस्तत्कालं शुभत्वे तस्मात्प्राप्तिकालो वाच्यः ॥ ८८ ॥

मृत्युभावेशभात्कोणनिघ्नं फलं मृत्युजं सूर्य[१२] शेषर्क्षयुक्ते रवौ ॥ तत्रिकोणे थवारिष्टमासंवदेत्तातमातृग्रहाद्येथवा कल्पयेत् ॥ ८९ ॥ सूर्यजाल्लग्नमृत्य्वीश्वरांतं च तत्पिंडकं ताडितं मृत्युमानेन च ॥ सूर्यशेषर्क्षगे भास्करे नाशनं तत्रिकोणेऽथवा स्याद्विधिः सर्वतः ९०

## टीका।

मृत्युभावेश्वरो यस्मिन् राशावस्ति तत्रिकोणं त्रिकोणजशोधितफलेन मृ-

त्युजं मृत्युभावस्थितं फलं गुणयेत् सूर्यशेषे द्वादशभक्ते शेषर्क्षयुक्ते शेषराशियुक्ते रवौ तत्रिकोणेवारिष्टमासं वदेदित्यर्थः अथवा तातमातुर्ग्रहात्कल्पयेदिति ॥ ८९ ॥ ९० ॥

मीनाद्यं मिथुनांतकं प्रथमकं प्रोक्तं वयः प्राक्तनैः कर्काद्यं वणिजान्तकं तरुणता संज्ञं च मध्यंबुधैः ॥ कुंभांतं स्थविरांतकं च बहुभिर्यत्तत्फलैः संयुतं तत्सौख्यार्थविशेषकं बलयुते नार्यं विशेषाच्छुभम् ॥ ९१ ॥ ॥ छ ॥ ॥ छ ॥

## टीका ।

मीनाद्यमिति अत्रवयस्त्रिधा मीनाद्यंमिथुनांतकं मीनमेषवृषमिथुना एते राशयः प्रथमवयोज्ञेयाः कर्काद्यंवणिजांतकं कर्क सिंह कन्या तुला एतेराशयः तरुणवयोज्ञेयाः तथावृश्चिक धनुमकर कुंभा एतेराशयः स्थविरावृद्धवयाज्ञेयाः यद्यद्बहुभिः सफलैर्युतं तत्तद्वयसि सौख्यार्थविशेषकं ज्ञेयम् बलयुतेनार्यं बल्युतग्रहेणयुक्तं विशेषाच्छुभंज्ञेयम् ॥ ९१ ॥

## अथ राहुयुक्तगुरुफलम् ।

राहुयुक्तगुरुराशिगे ९ । १२ गुरौ तत्रिकोणमप्यरिष्टकारकम् अल्पमृत्युरिपुभावनायको योगकर्क्ष नो मरणसंभवः ॥ ९२ ॥

## टीका ।

इयं राहुयुक्तगुरुरिति यस्यजन्मलग्ने धनमीनराशौराहुरस्ति तत्रराशिगतेगुरौ रिष्टसंभवोवाच्यः तत्रिकोणेवा अथवा यत्रकुत्रराशौ राहुयुक्तगुरुरस्ति तत्रराशिगते शनावरिष्टसंभवोवाच्यः तत्रिकोणेवा ॥ ९२ ॥

लग्नेंदुतस्त्रिंशतिमेदृकाणे गुरौ त्रिकोणेपि तदीश्वरस्य॥ वर्षेविवादं परदेशयानं शरीरपीडा मृतिसन्निभास्यात् ॥ ९३ ॥

## टीका।

चेद्यदा चंद्रस्य लग्नस्यच त्रिंशतिमेद्रेष्काणेगुरुरस्तियस्यजन्मनि प्रतिराशौ द्रेष्काणत्रयमस्ति एवंगणनया चंद्रस्यत्रिंशतिमे द्रेष्काणेगुरौसति तदीश्वरस्य

तस्य द्रेष्काणस्य योऽधिपतिस्तस्य त्रिकोणे शनैश्चरे याते तस्मिन्वर्षे विवादं परदेशयानं शरीरपीडा मृतिसन्निभास्यात् मृत्युतुल्या स्यादित्यर्थः ॥ ९३ ॥

## अथ निधनार्कमाह ।

मृत्युपद्वादशांशत्रिकोणेऽसुरो मृत्युनाथस्त्रिकोणस्थसूर्येमृतिः॥ अर्कलिप्ताहतोराहु लिप्तागणश्चक्रलिप्ता २१६०० प्रयुक्तो रविर्मृत्युदः ॥ ९४ ॥ भौममार्तंडलिप्ताहतिः कार्यचक्रलिप्ताहताल्लब्धयुक्तो रविः ॥ याति यस्मिंस्तदा तत्रिकोणेपि वा क्लेशमाहुः क्षयं मासि धीमान्वदेत् ॥ ९५ ॥ ॥ छ ॥ ॥

## टीका ।

मृत्युपेति मृत्युभावस्वामी यस्मिद्वादशांशेऽस्ति ततस्तस्मात्रिकोणेऽसुरो राहुर्याति तदामृत्युनाथत्रिकोणस्थे सूर्येमृतिर्वाच्या पुनःराहोर्लिप्तागणः कार्यः अर्कलिप्तागणेन संगुण्य चक्रलिप्ताविहृत्ययल्लभ्यते तेनार्कलिप्तागणो युक्तः कार्यस्तंराश्यादिकं कृत्वा तत्समोऽर्को यदाभवति तदा मृत्युकालो वाच्यः॥९५

## अथ निधनार्कोदाहरणम् ।

यथा सूर्यः १० । ४ । १४ । २२ अस्य कलापिंडः १८२५ । ४ । २२ राहुः ७ । २८ । २१ । ३९ अस्य कलापिंडः १४३०१ । ३९ अनेन गुणितांकाः २६१०५०४५४ चक्रलिप्ताः २१६०० भक्तेर्लब्धांकाः कला १२०९५ शेषं षष्टि ६० गुणनचक्रलिप्ता २१६०० भागेलब्धाविकला ४० अत्रपूर्वे आनीतार्कलिप्ता १८२५४ । २२ मध्येयोजिता जाता जातांका ३०३४०।२ अयं ६० भक्तेर्लब्धं ५०५।४०२ अस्य ३० भागो १६।२५।४०।२ अस्यराशि १२ भागे शेषराश्यादिनिधनार्कः ४।२५।४०।२॥ अर्कलिप्ताः १८२५४ भौमलिप्ताः २१४२४ अनयोराहतिः ३८१२७३६९६ चक्रलिप्ता भक्ते २१६०० लब्धं १७६५१ शेषम् १२०९६ षष्टि ६० घ्नं ७२५७६० चक्रलिप्ताः २१६०० भक्तेर्लब्धम् ३३ अनेनार्कलिप्तांकयुक्ता ३५९०५।५५ अयं राश्यादि ५।१८ एतत्तुल्येर्के मासि क्लेशं क्षयं भवति तत्रिकोणे वा ॥ ९५ ॥

## अथ श्लोकद्वयं लग्नविषयिकमाह ।

निधने ज्ञद्वादशांशत्रिकोणे भास्करे मृतिः ॥ निधनेशत्रिकोणे वा सूर्यादिष्वागतेष्वपि ॥ ९६ ॥ षष्ठाष्टमव्ययेशानां स्फुटयोगगते,शनौ ॥ मृतिं तत्र विजानीयात्तत्रिकोणगतेपि वा ॥ ९७ ॥

## अथ निधनचंद्रमाह ।

अष्टमेशत्रिकोणे विधुःस्याद्यदा योगमिंदौ तथा तन्नवांशेऽपि वा॥ तत्रिकोणे प्रयाते मृतिंनिर्दिशेन्निश्चयात्स्वल्परेरवोद्भवे वासरे ॥९८

## टीका ।

यो अष्टमभावेशोग्रहोऽस्ति तस्य त्रिकोणे यदा विधुर्यागंयाति अथवा अष्टमेशोयस्मिन्नवांशेऽस्ति तस्य त्रिकोणे यदा विधुःप्रयाति तदा स्वल्पस्वरूपरेखोद्भवेवासरे निश्चयान्मृतिं निर्दिशेदित्यर्थः ॥ ९८ ॥

## अथ निधनलग्नमाह ।

जन्मलग्नेंदुगानन्द ९ भागाः क्रमाद्वेदषष्ट्यंश ६४ राशौ प्रयाते तनौ ॥ मृत्युजन्मांगनीचोदये शून्यगे दुष्टपाकोदये देहमुक्तिर्भवेत् ॥ ९९ ॥ ॥ ७॥ ॥ ७॥

## टीका ।

जन्मलग्नेंदुगाः जन्मलग्नस्यचंद्रस्यच नंदभागानवांशाः क्रमाद्वेदषष्ट्यंशराशौ चतुःषष्टिनवांशतुल्यराशौतनौलग्नेवाचंद्रेयातिसति देहमुक्तिर्भवेदित्यर्थः अथवा मृत्युजन्मांगनीचोदये उच्चानीचं सप्तममित्युक्तत्वात् मृत्युनीचोदयं सिंहः जन्मांगनीचोदयंसप्तमभंमकरस्तत्रप्रयातेतनौलग्नेशून्यग्नेशून्यगे लग्नाष्टकवर्गे तत्रशून्यंफलंचेत्तदा दुष्टपाकोदये दुष्टग्रहस्यदशायां देहमुक्तिर्भवेदित्यर्थः ॥ ९९ ॥

## अत्रोदाहरणम् ॥

लग्नात् ० । ६ । ३ । ४ । २ चन्द्रः८ । २५ । २९ । ३८नवांशमानं ३२० त्रिषष्ट्यागुणिते ६३ जातः २१० अंशास्त्रिंशद्भक्ते जाता राशयः ७ एभिर्यु-

मुदायाष्टकवर्गफलमाह।

नियोगचक्रं मूर्त्यादिगुण्यमशुभंशुभमेव
ळसमेतदशाः समीक्ष्य यात्राविवाहसमये
। ॥ सर्वकर्मफलोपेते ह्यवर्गक उच्यते ॥
ज्ञेयं गुणदोषजम् ॥ १०१ ॥ त्रिंशाधिक
शुभप्रदाः ॥ त्रिंशांतं पंचविंशादि राशयो
२ ॥ अतिक्षीणफला येच राशयः कष्टदुः-
र्वेषु शुभकार्याणि कारयेत् ॥ १०३ ॥ श्रे-
येन्मतिमान्नरः ॥ तत्तज्जन्मप्रभावास्तु पुंस-
०४ ॥ कष्टराशिमुहूर्तेषु वर्जयेन्मतिमान्न-
लाभो मध्यात्क्षीण फले चयः ॥१०५॥ लग्नं
ानर्थवान्हि सः॥विपरीतेन दारिद्र्यं भवि-
०६ ॥ लग्ने यावत्फलं चास्ति तद्दशायाःफ-
यपर्यन्तं दृष्टाभावफलानिवै ॥ १०७ ॥ अ-
गे हीने च मृत्यवे ॥ मध्यमे मध्यमंयाति
१०८॥ खंडत्रयं विनिक्षिप्य दशानयनवत्त-
खंडं क्लेशकरं स्मृतम् ॥१०९॥ सौम्यैर्जुष्टं
ं वदेत् ॥ खंडत्रयफलं ज्ञात्वा दशाफल-
ग्नात् प्रभृति मंदांतमेकीकृत्य फलानिवै ॥
ग्रविंशोद्धृतात्फलम् ॥ १११ ॥ तत्समान-
ामादिशेत् ॥ मन्दात्प्रभृति लग्नान्तमेवमेव

प्रकल्पयेत् ॥ ११२ ॥ भौमाच्च लग्नपर्यंतमेकीकृत्य तु बिन्दवः॥ पूर्ववद्गुणितं कृत्वा वर्षमेवं प्रकल्पयेत् ॥ ११३ ॥ तद्वर्षे पापसंयुक्ते व्याधिमृत्युभयंभवेत् ॥ वर्षेषु हीनभागेषु तद्भावं वर्जयेत्तदा ॥ ११४ ॥ गोष्ठं क्षेत्रं कृषिं वापि षष्ठराशौ स्थितं शुभम् ॥ क्षीणराशौ स्थितं द्रव्यं तद्द्रव्यं नाशतां व्रजेत् ॥ ११५ ॥ वित्तेश्वरस्य दिग्भागे वित्तमाप्नोति निश्चितम् ॥ रंध्रेश्वरस्य दिग्भागे देहस्तत्र विनश्यति ॥ ११६ ॥ मेषादि यद्गृहगता वसुसंख्यया तास्तद्भावपुष्टिबलवृद्धिकरा भवंति ॥ षट् पंच सप्त सहितानि शुभ प्रदानि त्रिष्वेककर्णयुतभानि न शोभनानि ॥ ११७॥ मिश्रं फलं भवति सागरकर्णयोगे रोगापवादभयदा यदि शून्यभावाः ॥ एकादि कर्णयुतभानुमुखग्रहाणां भिन्नाष्टवर्गजनि सर्वफलंप्रवच्मि॥११८

## अथ मासफलमाह ।

संक्रमदिने ग्रहाणामष्टकवर्गेषु चारवशात् ॥ रेखैक्या च्छुभमशुभं मासफलं तद्वशाद्दिनफलं च ॥ ११९ ॥

## टीका ।

जन्मकालीनमष्टकवर्गं संपाद्य यस्मिन्नेवराश्यंतरसंक्रमो भवति तस्मिन्दिने सर्वेषामष्टकवर्गरेखासु सकलफलं वाच्यम् ॥ ११९ ॥

## अथ रेखाशांतिफलमाह ।

रेखाभिः सप्तभिर्युक्ते मासे मृत्युर्नृणां भवेत् ॥ सुवर्णं विंशतिपलं दद्याद्वा तिलपर्वतौ ॥ १२० ॥ वसुभिर्जातिहीनः स शीघ्रं मृत्युवशो नरः ॥ असत्फलविनाशाय दद्यात्कर्पूरजां तुलाम् ॥१२१॥ रेखाभिर्नवभिः सर्पान्म्रियते मनुजो ध्रुवम् ॥ अश्वैश्चतुर्भिः संयुक्तं रथं दद्याच्छुभाप्तये ॥ १२२ ॥ रेखाभिर्दशभिः शस्त्रात्प्राणांस्त्य-

जति मानवः ॥ दद्याच्छुभफला वाप्त्यै कवचं वज्रसंयुतम् ॥१२३॥
रुद्रैः प्राप्याभिशापं च प्राणैर्मुक्तो भवेन्नरः ॥ दिक्पलैः स्वर्णव-
टितां प्रदद्यात्प्रतिमां विधोः ॥ १२४ ॥आदित्यैर्जलदोषेण मान-
वस्य मृतिं वदेत् ॥ भूमिं दद्याद्ब्राह्मणाय दद्याच्छुभफलं भवेत्
॥ १२५ ॥ त्रयोदशमिताभिर्व्याघ्रान्मानवो मृत्युमाप्नुयात् ॥ वि-
ष्णोर्हिरण्यगर्भस्य दानं कुर्याच्छुभाप्तये ॥ १२६ ॥ अचिराज्जी-
वितं जह्याच्छक्रैः कालेन भक्षितः ॥ वराहप्रतिमां दद्यात्कनकेन
विनिर्मिताम् ॥ १२७ ॥ राज्ञो भयं तिथिभिर्तस्तत्र हस्ती प्रदीय-
ते ॥ रिष्टभूपैः कल्पतरोःप्रतिमां च निवेदयेत् ॥ १२८ ॥ ऋषि-
चंद्रैर्व्याधिभयं गुडधेनुं निवेदयेत् ॥ कलहोऽष्टेंदुभिर्दद्याद्रत्नगोभू-
हिरण्यकम् ॥ १२९ ॥ देशत्यागोऽर्कचंद्रैः स्याच्छांतिं कुर्याद्विधा-
नतः ॥ विंशत्या बुद्धिनाशः स्यात्कुर्याल्लक्षमितं जपम् ॥ १३० ॥
भूमिपक्षैरोगपीडा दद्याद्धान्यस्य पर्वतम् ॥ यमाश्विभिर्बन्धुपीडा
दद्यादादर्शकंबुधः ॥ १३१ ॥ रामपक्षयुतो मासे नानाक्लेशान्प्रप-
द्यते ॥ सौवर्णीं प्रतिमां दद्याद्रवेः सप्तफलैः क्रमात् ॥ १३२ ॥
वेदाश्विभिर्बन्धुहीनो दद्याद्गोदानकं दश ॥ सत्वैरोगार्थनाशश्च
जपहोमादिकारयेत् ॥ १३३ ॥ ऋतुपक्षैर्बुद्धिहीनः पूज्या वागी-
श्वरी तथा ॥ धनक्षयः स्यान्नक्षत्रैः श्रीसूक्तं तत्र संजपेत् ॥१३४॥
वसुपक्षे युते मासे न लाभो हानिखेचरैः ॥ सूर्यहोमश्च विधिना
कर्तव्यः शुभकांक्षिभिः ॥ १३५ ॥ एकोनत्रिंशता चापि चिंता-
व्याकुलितो भवेत् ॥ घृतवस्त्रसुवर्णानि तत्र दद्याद्विचक्षणः ॥ त्रिं-
शता धनधान्याप्तिरिति जातकनिर्णयः ॥१३६॥ भूवन्हिभिर्महो-
द्योगः पुत्रसंपद्गुणाग्निभिः ॥ सहेमवस्त्रलाभश्च चतुस्त्रिंशत्समन्विते
॥ १३७ ॥ पंचरामैर्भवेद्धीमान्षट्त्रिंशत्सुतवित्तदा ॥ १३८ ॥

सप्तविंशद्धनस्याप्तिरष्टत्रिंशत्सुखार्थदा ॥ द्रव्यरत्नाप्तिरेकोनचत्वारिंशाद्धि विद्यते ॥१३९॥ धनवान्कीर्तिमांश्चैव चत्वारिंशतिवर्द्धते ॥ अत ऊर्ध्वं यशोर्थाप्तिः पुण्यश्रीरुपचीयते ॥ १४० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशेऽष्टकवर्गफलकथनं नाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥

---

## अथ नाभसयोगमाह।

अधुना वै विस्तरतः कथिता योगास्तु नाभसा नाम्ना ॥ अष्टादशशतगुणितारतेषां संक्षेपतोवक्ष्ये ॥ १ ॥ आश्रयाख्यास्त्रयो योगा दलयोगद्वयंततः ॥ आकृतिर्विंशतिः संख्या योगानां सप्तकं स्मृतम् ॥ २ ॥ रज्जुयोगो मूशलश्च नलो मालाभुजंगमौ ॥३॥ गदायोगश्च शकटः शृंगाटकविहंगमौ ॥ हलवज्रयवाश्चैव कमलो वापियूपकौ ॥ ४ ॥ शरशक्तिदंडनौकाकूटछत्रधनूंषिच ॥ अर्द्धेन्दुयोगश्चक्राख्यः समुद्रश्चेति विंशतिः ॥ ५ ॥ वीणादामनिकायोगः पाशकेदारशूलका ॥ युगगोलौ ततः प्रोक्तौ योगा द्वात्रिंशका इमे ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

## अथाश्रययोगत्रयमाह ।

सर्वे चरस्था अपि वा स्थिरस्था द्विदेहसंस्था यदि वा भवंति॥ क्रमेण रज्जुर्मुशलं नलश्च योगत्रयं स्यादिदमाश्रयाख्यम् ॥ ७ ॥

## अथ दलाख्ययोगद्वयमाह।

केंद्रत्रये सौम्यखगैस्तु माला खलग्रहैर्व्यालसमाह्वयः स्यात् ॥ इदं तु योगद्वितयं दलाख्यं मुनीश्वरेण प्रतिपादितं हि ॥ ८ ॥

## अथाकृतियोगविंशतिमाह।

आसन्नकेंद्रद्वयगैर्गदाख्यो लग्नास्तसंस्थैः शकटः समस्तैः ॥

खबंधुयातैर्विहगः प्रदिष्टः शृंगाटकं लग्नवात्मजस्थैः ॥ ९ ॥ धनारिखस्थैस्त्रिमदायगैर्वा चतुर्थरन्ध्रव्ययसंस्थितैर्वा ॥ नभस्त-लस्थैर्हलनामयोगः किलोदितोयं निखिलागमज्ञैः ॥१०॥लग्नस्म-रस्थानगतैः शुभाख्यैः पापैश्चमेषूरणबंधुयातैः॥ वज्राभिधस्तैर्वि-परीतसंस्थैर्यवश्च मिश्रैः कमलाभिधानः ॥११॥ त्यक्त्वा केंद्राणि चेत्खेटाः शेषस्थानेषु संस्थिताः ॥ वापीयोगो भवेदेवं गदितः पूर्वसूरिभिः ॥ १२ ॥ लग्नाच्चतुर्थात्स्मरतः खमध्याच्चतुर्गृहस्थैर्ग-गनेचरेंद्रैः ॥ क्रमेण यूपश्च शरश्च शक्तिर्दण्डः प्रदिष्टः खलु जा-तकज्ञैः ॥ १३ ॥ लग्नाच्चतुर्थात्स्मरतः खमाद्यात्सप्तर्क्षगैर्नौरथकूट-संज्ञः ॥ छत्रं धनुश्चान्यगृहप्रवृत्तैर्नौपूर्वकेयोग इहार्द्धचंद्रः ॥ १४॥ तनोर्धनाद्येकगृहांतरेण स्युः स्थानषट्के गगनेचरेंद्राः ॥ चक्रा-भिधानश्च समुद्रनामा योगा इतीहाकृतिजाश्च विंशत् ॥ १५ ॥

## अथ सप्तसंख्यायोगनामान्याह ।

ये योगाः कथिताः पुरा बहुतरास्तेषामभावेभवेद्गोलश्चैकगतै-र्युगं द्विगृहगैः शूलस्त्रिगेहोपगैः ॥ केदारश्च चतुर्थसर्वखचरैः पाशस्तु पंचस्थितैः षट्स्थैर्दामनिका च सप्तगृहगैर्वीणेति सं-ख्या इमे ॥ १६ ॥ ॥ ६९ ॥ ॥ ६९ ॥

## अथैतेषां फलानि क्रमेणाह ।

अटनप्रयासरूपाः परदेशस्वास्थ्यभागिनो मनुजाः ॥ क्रूराः खलस्वभावा रज्जुप्रभवाः सदा कथिताः ॥ १७ ॥ मानज्ञानयु-तांकस्थैर्युक्ता नृपप्रियाः ख्याताः ॥ बहुपुत्राः स्थिरचित्ता मुसल-समुत्था भवंति नराः ॥ १८ ॥ न्यूनातिरिक्तदेहा धनसंचयभा-गिनोऽतिनिपुणाश्च ॥ बंधुहिताश्च सरूपा नलयोगे संप्रसूयंते ॥ ॥ १९ ॥ नित्यं सुखप्रधाना वाहनवस्त्रान्नभोगसंपन्नाः ॥ कांताः

सुबहुस्त्रीका मालायां संप्रसूताः स्युः ॥२०॥ विषमाः क्रूरा निः-स्वा नित्यं दुःखार्दिताः सुदीनाश्च ॥ परभक्षपाननिरताः सर्प-प्रभवा भवंति नराः ॥ २१ ॥ सततोद्युक्तार्थवशा यज्वानः शा-स्त्रगेयकुशलाश्च ॥ धनकनकरत्नसंपत्संयुक्ता मानवा गदायां तु ॥ २२ ॥ रोगार्ताः कुनखा मूर्खाः शकटानुजीविनो निःस्वाः ॥ मित्रस्वजनविहीनाः शकटे जाता भवंति नराः ॥ २३ ॥ भ्रम-णरुचयो विकृष्टा दूताः सुरतानुजीविनो धृष्टाः ॥ कलहप्रियाश्च नित्यं विहगे योगे सदा जाताः ॥ २४ ॥ प्रियकलहाः समरसहाः सुखिनो नृपतेः प्रियाः शुभकलत्राः ॥ आढ्या युवतिद्वेष्याः शृंगाटकसंभवा मनुजाः ॥ २५ ॥ बह्वाशिनो दरिद्राः कृषीवला दुःखिताश्च सोद्वेगाः ॥ बंधुसुहृद्भिः सक्ताः प्रेष्या हलसंज्ञके सदा पुरुषाः ॥ २६ ॥ आद्यंतवयःसुखिनः शूराः सुभगा निरी-हाश्च ॥ भाग्यविहीना वज्रमध्ये जाताः खला विरुद्धाश्च ॥ २७ ॥ व्रतनियममंगलपरा वयसो मध्ये सुखार्थपुत्रयुताः॥दातारः स्थिर-चित्ता यवयोगभवाः सदा पुरुषाः ॥२८॥ विभवगुणाढ्याः पुरुषाः स्थिरायुषो विपुलकीर्तयः शुद्धाः ॥ शुभशतकाः पृथ्वीशा कमल-भवा मानवा नित्यम् ॥ २९ ॥ निधिकरणे निपुणधियः स्थिरार्थ-सुखसंयुताः सुतयुताश्च ॥ नयनसुखसंप्रहृष्टा वापीयोगेन राजा-नः ॥ ३० ॥ आत्मविदिज्यानिरतःस्त्रीयुतः सत्वसंपन्नः ॥ व्रतनि-यमनिरतो यूपे जातो विशिष्टश्च ॥३१॥ इष्टं करणे दस्युबंधनमृ-गया धनसेवितोपि मांसादः ॥ हिंस्राः कुशिल्पकराः शरयोगे मानवाः प्रसूयंते ॥ ३२ ॥ धनरहितविफलदुःखितनीचालसाश्चि-रायुषः पुरुषाः ॥ संग्रामबुद्धिनिपुणाः सत्यां जाताः स्थिराः सुभ-गाः ॥३३॥ हतपुत्रदारनिःस्वाः सर्वत्र च निर्घृणाः स्वजनबाह्याः॥

दुःखितनीचःप्रेष्या दंडप्रभवा भवंति नराः ॥ ३४ ॥ सलिलोप जीविविभवा बह्वाशाः ख्यातकीर्तयो॥दुष्टाः कृपणा मलिना लुब्धा नौसंजाताः खलाः पुरुषाः ॥३५॥ अनृतकथनबंधनपाशा निष्किंचनाः शठाः क्रूराः ॥ कूटसमुत्था नित्यं भवंति गिरिदुर्गवासिनो मनुजाः ॥ ३६ ॥ स्वजनाश्रयो दयावान्नानान्नृपवल्लभः प्रकृष्टमतिः ॥ प्रथमेंत्ये वयसि नरः सुखवान्दीर्घायुरातपत्रे स्यात् ॥ ॥ ३७ ॥ आनृतिकगुप्तपालाश्चौराः कितवाश्च कानने निरताः ॥ कार्मुकयोगे जाता भाग्यविहीना वयोमध्ये सुभगाः ॥ ३८ ॥ सेनापतयः सर्वे कांतशरीरा नृपप्रिया बलिनः ॥ मणिकनकभूषणयुता भवंति योगेवार्धचंद्राख्ये ॥ ३९ ॥ प्रणताशेषनराधिपकिरीटरत्नप्रभास्फुरितपादः॥भवति नरेंद्रो मनुजश्चक्रे यो जायते योगे ॥ ४० ॥ बहुरत्नधनसमृद्धा भोगयुता धनजनप्रियाः ससुताः॥ उदधिसमुत्थाः पुरुषाःस्थिरविभवाः साधुशीलाश्च ॥ ४१ ॥ प्रियगीतनृत्यवाद्यनिपुणाः सुखिनश्च धनवन्तः ॥ नेतारो बहुभृत्या वीणायां कीर्तिताः पुरुषाः ॥ ४२ ॥ दामिन्यामुपकारिनयसुधनयुक्तो महेश्वरः ख्यातः ॥ बहुसुतरत्नसमृद्धो धीरो जायेत विद्वांश्च ॥ ४३ ॥ पाशे बंधनभाजः कार्ये दक्षाः प्रपंचकाराश्च ॥ बहुभाषिणो विशीला बहुभृत्याः संप्रतानाश्च ॥ ४४ ॥ सुबहूनामुपयोज्याः कर्षीवलाः सत्यवादिनः सुखिनः ॥ केदारे संभूताश्चलस्वभावा धनैर्युक्ताः ॥ ४५ ॥ तीक्ष्णालसधनहीना हिंस्राः सुबहिष्कृता महाशूराः ॥ संग्रामे लब्धशब्दाः शूले योगे भवंति नराः ॥ ४६ ॥ पाखंडबाधिनो वा धनरहिता वा बहिष्कृता लोके ॥ सुतमातृधर्मरहिता युगयोगे ये नरा जाताः ॥ ४७ ॥ बलसंयुक्ता विधना विद्याविज्ञानवर्जिता मलि-

नाः ॥ नित्यं दुःखितदीना गोले योगे भवंति नराः ॥ ४८ ॥ सर्वास्वपि दशास्वेते भवेयुः फलदायिनः ॥ प्राणिनामिति विज्ञेयाः प्रवदंति तवाग्रजाः ॥ ४९ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे नाभसयोगादिफलकथनं नाम एकविंशोऽध्यायः २१

---

## अथ गजकेसरियोगमाह ।

केंद्रस्थिते देवगुरौ मृगांकाद्योगस्तदाहुर्गजकेसरीति ॥ दृष्टे सुते वेंदुसुतः शशांके नीचास्तहीनैर्गजकेसरी स्यात् ॥ १ ॥ गजकेसरिसंजातस्तेजस्वी धनवान् भवेत् ॥ मेधावी गुणसंपन्नो राजप्रियकरो भवेत् ॥ २ ॥ ॥ छ. ॥

## अथाऽमलायोगमाह ।

यस्य जन्मसमये शशिलग्नात्सद्गृहे यदि च जन्मनि संस्थः ॥ तस्य कीर्तिरमला भुवि तिष्ठेदायुषोन्तमविनाशनसंपत् ॥ ३ ॥ लग्नाद्वा चंद्रलग्नाद्वा दशमे शुभसंयुते ॥ योगोयममला नाम कीर्तिराचन्द्रतारकी ॥ ४ ॥ राजपूज्यो महा भोगी दाता बन्धुजनप्रियः ॥ परोपकारी गुणवानमलायोगसंभवः ॥ ५ ॥

## अथ शुभाशुभयोगमाह ।

शुभाशुभाख्ये यदि जन्मलग्ने शुभाशुभाख्यौ भवतस्तदानीम् ॥ व्ययस्वगैः पापशुभैर्विलग्नात्पापाख्यसौम्यग्रहकर्तरी च ॥ ॥ ६ ॥ शुभयोगभवो वाग्मी रूपशीलगुणान्वितः ॥ पापयोगोद्भवः कामी पापकर्मपरार्थयुक् ॥ ७ ॥ ॥ ॥ छ. ॥

## अथ पर्वतयोगमाह ।

सौम्येषु केंद्रगृहगेषु सपत्नरंध्रे शुद्धेऽथवा शुभयुते यदि पर्वतः स्यात् ॥ लग्नांत्यपौ यदि परस्परकेन्द्रयातौ मित्रेक्षितौ भवति

पर्वतनामयोगः ॥ ८ ॥ भाग्यान्वितः पर्वतयोगजातो विद्याविनोदाभिरतः प्रदाता ॥ कामी परस्त्रीजनकेलिलोलस्तेजोयशस्वी पुरनायकः स्यात् ॥ ९ ॥ ॥ ७ ॥

## अथ काहलयोगमाह।

**अन्योन्यकेंद्रगृहगौ गुरुबंधुनाथौ लग्नाधिपे बलयुते यदि काहलः स्यात् ॥ कर्मेश्वरेण सहिते तु विलोकिते वा स्वोच्चे स्वके सुखपतौ यदि तादृशः स्यात् ॥ १० ॥** ओजस्वी साहसी मूर्खश्चतुरंगबलैर्युतः ॥ यत्किंचिद्ग्रामनाथस्तु जातःस्यात्काहले नरः॥११॥

## अथ मालिकायोगमाह।

लग्नादिसप्तगृहगा यदि सप्तखेटा जातो महीपतिरनेकगजाश्वनाथः ॥ वित्तादिगे निधिपतिः पितृभक्तियुक्तो धीरोग्ररूपधनवान्नरचक्रवर्ती ॥ १२ ॥ जातो यदा विक्रममालिकायां भूपः स शूरो धनिकश्च रोगी ॥ सुखादिका चेद्बहुदेशभाग्यभोगी महादानपरो महीपः ॥ १३ ॥ पुत्राद्या यदि मालिका नरपतिर्यज्वाथवा कीर्तिमान् जातः षष्ठगृहाद्धनं च सुखभृत्प्राप्तो दरिद्रो भवेत्॥ कामादिं गृहमालिका यदि बहुस्त्रीवल्लभो भूपतिर्दीर्घायुर्धनवर्जितो नरवरः स्त्रीनिर्जितश्चाष्टमात् ॥ १४ ॥ धर्मादिग्रहमालिकागुणनिधिर्यज्वा तपस्वी विभुः कर्माद्यो यदि धर्मकर्मनिरतः संपूजितः सज्जनैः ॥ लाभाद्राजवरांगनामणिपतिः सर्वक्रियादक्षको जातो रिःफगृहाद्बहुव्ययकरः सर्वत्र पूज्यो भवेत् ॥ १५ ॥

## अथ चामरयोगमाह।

लग्नेश्वरे केंद्रगते स्वतुंगे जीवेक्षिते चामरनामयोगः ॥ सौम्यद्वये लग्नगृहे कलत्रे नवास्पदे वा यदि चामरःस्यात् ॥ १६ ॥

योगे जातश्चामरे राजपूज्यो विद्वान्वाग्मी पंडितो वा महीपः ॥ सर्वज्ञः स्याद्वेदशास्त्राधिकारी जीवेद्वर्षं सप्ततिर्वत्सराणाम् ॥ १७ ॥

## अथ शंखयोगमाह ।

अन्योन्यकेंद्रगृहगौ सुतशत्रुनाथौ लग्नाधिपे बलयुते यदि शंखयोगः ॥ लग्नाधिपे च गगनाधिपतौ चरस्थे भाग्याधिपे बलयुते तु तथा वदंति ॥ १८ ॥ शंखे जातो भोगशीलो दयालुः स्त्रीपुत्रार्थक्षेत्रवान्पुण्यकर्मा ॥ शास्त्रज्ञानाचारसाधुक्रियावान् जीवेद्वर्षं वत्सराणामशीतिम् ॥ १९ ॥ ॥ छ ॥

## अथ भेरीयोगमाह ।

स्वांत्योदयास्तभवनेषु वियच्चरेषु कर्माधिपे बलयुते यदि भेरियोगः ॥ केंद्रे गते सुरगुरौ सितलग्ननाथौ भाग्येश्वरे बलयुते तु तथैव वाच्यम् ॥ २० ॥ दीर्घायुषो विगतरोगभया नरेंद्रा बह्वर्थभूमिसुतदारयुताः प्रसिद्धाः ॥ आचारभूरिसुखशौर्य्यमहानुभावा भेरीप्रजातमनुजा निपुणाः कुलीनाः ॥ २१ ॥ ॥ छ ॥

## अथ मृदंगयोगमाह ।

उच्चग्रहांशकपतौ यदिकेंद्रकोणे तुंगस्वकीयभवनोपगते बलाढ्ये ॥ लग्नाधिपे बलयुते तु मृदंगयोगः कल्याणरूपनृपतुल्ययशःप्रदः स्यात् ॥ २२ ॥ ॥ छ ॥

## अथ श्रीनाथयोगमाह ।

कामेश्वरे कर्मगते स्वतुंगे कर्माधिपे भाग्यपसंयुते च ॥ श्रीनाथयोगः शुभदस्तदानीं जातो नरः शक्रसमो नृपालः ॥ २३ ॥

## अथ शारदायोगमाह ।

योगः शारदसंज्ञकः सुतगते कर्माधिपे चंद्रजे केन्द्रस्थे दिन-

नायके निजगृहप्राप्तेतिवीर्य्यान्विते ॥ चंद्रात्कोणगते पुरंदरगुरौ सौम्यत्रिकोणे कुजे लाभे वा यदि देवमंत्रिणि बुधास्तच्छारदासंज्ञकः ॥ २४ ॥ स्त्रीपुत्रबंधुसुखरूपगुणानुरक्ता भूपप्रिया गुरुमहीसुरदेवभक्ताः ॥ विद्याविनोदरतिशीलितपोबलाढ्या जाताः स्वधर्मनिरता भुविशारदाख्ये ॥ २५ ॥ ॥ छ ॥ ॥छ॥

## अथ मत्स्ययोगमाह ।

लग्नधर्मगते पापे पंचमे सदसद्यते ॥ चतुरस्रगते पापे योगोऽयं मत्स्यसंज्ञकः ॥ २६ ॥ कालज्ञः करुणासिंधुर्गुणधीबलरूपवान् ॥ यशोविद्यातपस्वी च मत्स्ययोगसमुद्भवः ॥ २७ ॥

## अथ कूर्मयोगमाह ।

कलत्रपुत्रारिगृहेषु सौम्याः स्वतुंगमित्रांशकराशियाताः ॥ तृतीयलाभोदयगास्त्वसौम्या मित्रोच्चसंस्थो यदि कूर्मयोगः॥२८॥ विख्यातकीर्तिर्भुवि राज्यभोगी धर्माधिकः सत्वगुणप्रधानः॥ धीरः सुखी वागुपकारकर्ता कूर्मोद्भवो मानवनायको वा ॥ २९ ॥

## अथ खड्गयोगमाह ।

भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ॥ लग्नेशे केंद्रकोणस्थे खड्गयोग इतीरितः ॥ ३० ॥ वेदार्थशास्त्रनिखिलागमतत्त्वयुक्तिबुद्धिप्रतापबलवीर्यसुखानुरक्ताः॥निर्मत्सराश्च निजवीर्यमहानुभावाः खड्गे भवंति पुरुषाः कुशलाः कृतज्ञाः ॥ ३१ ॥

## अथ लक्ष्मीयोगमाह ।

केंद्रमूलत्रिकोणस्थे भाग्येशे परमोच्चगे ॥ लग्नाधिपे बलाढ्ये च लक्ष्मीयोग इतीरितः ॥ ३२ ॥ गुणाभिरामो बहुदेशनाथो विद्यामहाकीर्तिरनंगरूपः ॥ दिगंतविश्रांतनृपालवंद्यो राजाधिराजो बहुदारपुत्रः ॥ ३३ ॥

## अथ कुसुमयोगमाह।

स्थिरलग्ने भृगौ केंद्रे त्रिकोणेंदौ शुभेतरे ॥ मानस्थानगते सौरे योगोयं कुसुमो भवेत् ॥ ३४ ॥ दाता महीमंडलनाथवंद्यो भोगी महावंशजराजमुख्यः ॥ लोके महाकीर्तियुतः प्रतापी नाथो नराणां कुसुमोद्भवः स्यात् ॥ ३५ ॥

## अथ पारिजातयोगमाह।

विलग्ननाथस्थितराशिनाथस्थानेशराशीशतदंशनाथः ॥ केंद्रत्रिकोणोपगतो यदि स्यात्स्वतुंगगे वा यदि पारिजातः ॥ ३६ ॥ मध्यांतसौख्यः क्षितिपालवंद्यो युद्धप्रियो वारणवाजियुक्तः ॥ स्वकर्मधर्माभिरतो दयालुर्योगो नृपः स्याद्यदि पारिजातः ॥ ३७॥

## अथ कलानिधियोगमाह।

द्वितीये पंचमे जीवे बुधशुक्रयुतेक्षिते ॥ क्षेत्रे तयोर्वा संप्राप्ते योगः स्यात्स कलानिधिः ॥ ३८ ॥ कामी कलानिधिभवः सुगुणाभिरामः संस्तूयमानचरणो नरपालमुख्यैः सेनातुरंगमदवारणशंखभेरीवाद्यान्वितो विगतरोगभयारिसंघः ॥ ३९ ॥

## अथ पारिजातादियोगानाह।

स पारिजातद्युचरः सुखानि नीरोगतामुत्तमवर्गयातः ॥ सगोपुरांशे यदि गोधनानि सिंहासनस्थः कुरुते विभूतिम् ॥ ४० ॥ करोति पारावतभागयुक्तो विद्यायशःश्रीविपुलं नराणाम् ॥ स देवलोके बहुयानसेनामैरावतस्थो यदि भूपतित्वम् ॥ ४१ ॥

## अथ लग्नाधियोगमाह।

लग्नाद्द्वारद्यूनगृहाष्टमस्थैः शुभैर्न पापग्रहयोगदृष्टैः ॥ लग्नाधियोगो भवति प्रसिद्धः पापैः सुखस्थानविवर्जितैश्च ॥ ४२ ॥ लग्ना-

धियोगे बहुशास्त्रकर्ता विद्याविनीतश्च बलाधिकारी ॥ मुख्यस्तु निष्कापटिको महात्मा लोके यशोवित्तगुणाधिकः स्यात् ॥ ४३ ॥

## अथ चंद्रयोगादीनाह ।

सहस्ररश्मितश्चंद्रे कंटकादिगते सति ॥ न्यूनमध्यवराण्यानि धनधीनैपुणानि च ॥ ४४ ॥ स्वांशेऽधिमित्रस्यांशे वा स्थिते वा दिवसे शशी ॥ गुरुणा दृश्यते तत्र जातो वित्तसुखान्वितः ॥ ४५ ॥ स्वाधिमित्रांशगश्चंद्रो दृष्टो दानवमंत्रिणा॥ निशासु कुरुते लक्ष्मीं छत्रध्वजसमाकुलाम् ॥ विपर्ययस्थे शीतांशौ जायंतेऽल्पधना नराः ॥ ४६ ॥

## अथाऽधियोगमाह।

शशिनः सौम्याः षष्ठे द्यूने वा निधनसंस्थिता वा स्युः॥ स्यादधियोगे जातः सौम्यैः सबलैर्धराधीशः ॥ मध्यबलैर्मंत्री स्यादधमबलैः सैन्यनायकः स्यात् ॥ ४७ ॥ चंद्राद्वृद्धिगतैः सौम्यो धर्मशीलो महाधनी ॥ द्वाभ्यां समोल्पवसुमानेकेन परिकीर्तितः ॥ चंद्राल्लग्नाद्ग्रहाभावे दरिद्रो दुःखितो भवेत् ॥ ४८ ॥

## अथ सुनफाऽनफादुरधराकेमद्रुमयोगानाह ।

शीतांशोर्द्रविणस्थितैश्च सुनफायोगोऽनफांत्यस्थितैः स्वांत्यस्थैः खचरैर्भवेद्दुरधरा पंकेरुहेशोऽज्झितैः॥ चेद्वित्तव्ययगा न चेद्दिविचराः केमद्रुमः स्यात्तदा प्राचीनैर्मुनिभिः स्मृताः श्रुतिमिता योगाः शशांकोद्भवाः ॥ ४९ ॥

## अथ सुनफायोगफलमाह।

भूमीपतेश्च सचिवः सुकृती कृती च नूनं भवेन्निजभुजार्जितवित्तयुक्तः ॥ ख्यातः सदाखिलजनेषु विशालकीर्त्या बुद्ध्याधिकश्च मनुजः सुनफाभिधाने ॥ ५० ॥

## अथाऽनफायोगफलमाह ।

प्रभुर्विनीतः शुभवाग्विलासः सच्छीलशालीगुणपूर्तियुक्तः ॥ उदारकीर्तिः स्मरतुष्टचित्तो नित्यं नरः स्यादनफाभिधाने ॥ ५१॥

## अथ दुरधरायोगफलमाह ।

सद्वित्तसद्वारणवाहधात्रीसौख्याभियुक्तः सततं हतारिः ॥ कांतासुनेत्रांचलललालसः स्याद्योगे सदा दौरधरे मनुष्यः ॥ ५२ ॥

## अथ केमद्रुमफलम् ।

सद्वित्तसूनुवनितात्मजनैर्विहीनः प्रेष्यो भवेत्तु मनुजो हि विदेशवासी ॥ नित्यं विरुद्धधिषणो मलिनः कुवेषः केमद्रुमे च मनुजाधिपतेः सुतोऽपि ॥ ५३ ॥

## अथ केमद्रुमभंगमाह।

चंद्रचतुर्थैः सुनफा दशमास्थितैः कीर्तितोनफा विहगैः ॥ उभयस्थितैर्दुरधराकेमद्रुमसंज्ञितोन्यथायोगः ॥ ५४ ॥ यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः ॥ तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः ॥ ५५ ॥ द्वादशैरनफा ज्ञेयो ग्रहैर्द्विर्द्वादशस्थितैः ॥ प्रोक्तो दुरधरायोगोऽन्यथा केमद्रुमो मतः ॥ ५६ ॥ प्रालेयांशुः सूतिकाले यदा वा सर्वैः खेटैर्वीक्ष्यमाणः करोति ॥ दीर्घायुष्यं राजयोगं मनुष्यं सत्कोशाढ्यं हंति केमद्रुमेच ॥५७॥ सर्वे खेटाः केन्द्रचतुर्थेषु संस्था दुष्टो योगश्चापि केमद्रुमोऽयम् ॥ दुष्टं सर्वं स्वं फलं संविहाय कुर्युः पुंसां सत्फलं वै विचित्रम् ॥ ५८ ॥ सर्वेषु चंद्रयोगेषु चेदं यत्नाद्विचिंतयेत् ॥ केमद्रुमादिका योगाः संभवेऽस्य लयं ययुः ॥ ५९ ॥

## अथ रवियोगानाह ।

वेसिश्चांत्यगतैर्ग्रहैर्द्रविणगैर्वेशिः शशांकोज्झितैर्भानोस्तूभय-

गेस्तदोभयचरीयोगः स्मृतः प्राक्तनैः ॥ किंचित्तद्वचनेषु नैव नियमो वश्यं नरश्चानृतोऽत्यंत कष्टकरो नरश्च मृदुदृक् स्याद्वेसियोगोद्भवः ॥ ६० ॥

## अथ वेसियोगफलम् ।

तिर्यग्दृष्टिः सत्वसत्यानुकंपी मर्त्योऽत्यर्थं दीर्घकायोऽलसश्च ॥ सूतौ यस्य स्याद्यदा वेसियोगस्त्वल्पद्रव्यो वाग्विलासाधिशाली ॥ ६१ ॥

## अथोभयचरीफलमाह ।

यस्यस्याज्जनने किलोभयचरी योगस्य चेत्संभवः सोत्यंतं समवायवानपि तदा मर्त्यो भवेत्सद्यशः ॥ नात्युच्चः प्रबलामलाऽब्धितनयायुक्तः समृद्धः सदा अत्यर्थं स्थिरमानसः सरलदृक् सर्वसहः सन्मतिः ॥ ६२ ॥

## अथ पुरुषस्त्रीनपुंसकजन्मज्ञानमाह ।

बलाबलंविलोक्यैषां ग्रहाणां योगकारिणाम् ॥ ६३ ॥ स्त्रीपुंसो र्निर्णयः क्लीबयोगास्तु तदसंभवाः ॥ ६४ ॥ ओजभे च विषमांशकोपगैर्लग्नचंद्रगुरुभास्करैर्नरः ॥ स्यात्तथापि समभे समांशगैः स्त्रीनिषेकसमये प्रसूतिषु ॥ ६५ ॥ लग्नं त्यक्त्वा च विषमे पुत्रदो भास्करात्मजः॥समे कन्याप्रदः प्रोक्तो नान्यग्रहनिरीक्षितः॥६६॥

## अथ षट्क्लीबयोगानाह ।

अन्योन्यं रविशशिनौ विषमाविषमर्क्षगौ निरीक्ष्येते ॥ इंदुजरविपुत्रौ वा तथैव नपुंसकः कुरुते ॥ ६७ ॥ वक्रो विषमे सूर्यः समगश्चैवं परस्परालोकात् ॥ विषमर्क्षे लग्नेंदुसमराशिगः कुजोऽ-

वलोकयति ॥ ६८ ॥ बुधचंद्रौ कुजदृष्टौ विषमर्क्षसमर्क्षगौ तथै-वोक्तौ ॥ ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ताः ॥ ६९ ॥

## अथ प्राणिनां वृत्तिनिर्णयमाह ।

अर्थाप्तिं कथयेद्विलग्नशशिनोः प्राबल्यतः खेचरैर्मानस्थैः पितृमातृशत्रुससुहृद्भ्रात्रादिभिः स्याद्धनम् ॥ भृत्याद्वा दिननाथलग्नशशिनां मध्ये बलीयस्ततः कर्मेशस्थनवांशराशिपवशाद्वृत्तिं जगुस्तद्विदः ॥ ७० ॥ भैषज्यचामीकरतोयपानपण्येन मुक्तामणिविप्रलंभात् ॥ अन्योऽन्यदूतागमवृत्तिमार्गाज्जीवत्यसौ वासरनायकांशे ॥ ७१ ॥ मंत्रोपदेशरसवादविनोदमार्गैर्वृत्तिंजगुः-सकलशास्त्रपुराणमार्गैः ॥ ज्ञानोपदेशपथिभिः क्षितिपालपूज्यो जीवत्यसौ खलु पुमान्दिननायकांशे ॥ ७२ ॥ जलोद्भवानां क्रयविक्रयेण कृषेश्च मृद्वादविनोदमार्गात् ॥ राजांगनासंश-यवृत्तिरूपान्निशाकरांशे वसनक्रयाद्वा ॥ ७३ ॥ धातोर्विवादेन रणप्रहारास्त्तब्धाग्निवादात्कलहप्रवृत्त्या ॥ जीवत्य सौ साहस-मार्गरूपया धरासुतांशे यदि चौरवृत्त्या ॥ ७४ ॥ शिल्पादिकाव्यागमशास्त्रमार्गाज्ज्योतिर्गणज्ञानवशाद्बुधांशे ॥ वेदार्थवेदाध्यनाज्जपाच्च पुरोहितव्याजवशात्प्रवृत्तिः ॥ ७५ ॥ जीवांशके भूसुरदेवतानामुपासकाध्यापकमार्गरूपात् ॥ पुराणशास्त्रागमनीतिमार्गाद्धर्मोपदेशेन कुसीदमाहुः ॥ ७६ ॥ सुवर्णमाणिक्यगजाश्वमूल्याद्गवां क्रयाज्जीवनमाहुरार्याः ॥ गुडौदनक्षीर-दधिक्रयेण स्त्रीणां प्रलोभेन भृगोः सुतांशे ॥ ७७ ॥ शन्यंशके कुत्सितमार्गवृत्त्या शिल्पादिभिर्दारुमयैर्वधाद्यैः ॥ विन्यस्तभाराञ्जनविप्रलंभादन्योन्यवैरोद्भवमूलमार्गात् ॥७८॥ स्वक्षेत्रे स्वनवांशके सुहृदि वा स्वात्युच्चभागे यदा स्वद्रेष्काणचतुष्टयेषु सहिता

मूलत्रिकोणेषु वा ॥ तत्तत्कालबलान्वितास्तु खचरा वर्गोत्तमांशे-पि वा ते सर्वे शुभदा भवंति हि तदा स्वांतर्दशादावपि ॥ ७० ॥
इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे बहुयोगफलकथनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ मारकभेदाध्यायः ।

त्रिविधाश्चायुषो योगाः स्वल्पायुर्मध्यमोत्तमाः॥ द्वात्रिंशात्पूर्व-मल्पायुर्मध्यमायुस्ततोभवेत् ॥ चतुःषष्ट्याः पुरस्तात्तु ततो दीर्घ-मुदाहृतम् ॥ १ ॥ उत्तमायुःशतादूर्ध्वं ज्ञातव्यं मुनिसत्तम ॥ चतु-र्विंशतिवर्षाणामायुर्ज्ञातुं न शक्यते ॥ २ ॥ जपहोमचिकित्साद्यैर्बा-लरक्षां तु कारयेत् ॥ पित्रोर्दोषैर्मृताः केचित्केचिन्मातृग्रहैरपि ॥ ३ ॥ अपरेऽरिष्टयोगाच्च त्रिविधा बालमृत्यवः ॥ अल्पायु-र्योगजातस्य विपद्वा ये मृतिं वदेत् ॥ ४ ॥ जातस्य मध्यमे योगे प्रत्यरिस्तु मृतिर्भवेत् ॥ दीर्घायुर्योगजातानां वधभे तु मृतिर्भवेत् ॥ ५ ॥ त्रिषु योगेषु सर्वेषु प्रत्येकं त्रिविधं भवेत् ॥ ६ ॥ अल्पायुरल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ॥ मध्यमादल्पमध्यं तु पूर्णायुस्त्रिविधंभवेत् ॥ ७ ॥ दीर्घायुषोल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ॥ एवं बहुविधंप्रोक्तमायुषस्तु विनिर्णयम् ॥ ८ ॥ अष्ट-मर्क्षं तृतीयं च लग्नादायुरुदाहृतम् ॥ द्वितीयं सप्तमस्थानं मार-कस्थानमुच्यते ॥ ९ ॥ लग्नेशरंध्रपत्योश्च लग्नेन्द्वोर्लग्नहोरयोः ॥ पूर्वाण्येवं प्रयुंजीयात्संवादादायुषां त्रये ॥ १० ॥ चरेचरस्थि-रद्वंद्वाः स्थिरे द्वंद्वचरस्थिराः ॥ द्वंद्वे स्थिरोभयचरा दीर्घमध्या-ल्पकायुषः ॥ ११ ॥

## टीका ।

चरेति चरराश्योर्यदि लग्नेशाष्टमेशौ भवतस्तदा दीर्घमायुः स्थिरद्विःस्वभा-

वयोर्वा लग्नेशाष्टमेशौ यदि तदापि दीर्घायुः चरस्थिरयोर्यदि लग्नेशाष्टमेशौ तदामध्यमायुः स्थिरद्विःस्वभावयोर्यौ लग्नेशाष्टमेशौ यदि तदापि मध्यमायुः स्थिरयोर्यदि लग्नेशाष्टमेशौ तदाऽल्पायुः चरद्विःस्वभावयोर्यदि लग्नेशाष्टमेशौ तदाल्पायुः एवं मंदचंद्राभ्यां लग्नहोराभ्यां निश्चितमिति ॥ ११ ॥

अल्पमध्यमपूर्णायुः प्रमाणमिहयोगजम् ॥ विज्ञाय प्रथमं पुंसां ततो मारकचिन्तनम् ॥ १२ ॥ वृश्चिके मकरे जन्म नृणां राहुर्मृतिप्रदः ॥ ग्रहस्थितावंशभेदे शनिः स्यान्मारको ध्रुवम् ॥ ॥ १३ ॥ महामारकसंज्ञौ तौ मांदिकेतू इति स्मृतौ ॥ जायाकुटुंबकाधीशौ मारकावष्टमेश्वरौ ॥ १४ ॥ प्रायेण मारको राशिदशास्वत्राविशेषतः॥ षष्ठभे पापभूयिष्ठेषष्ठेशो मुख्यमारकः ॥१५॥ षष्ठत्रिकोणगो वापि मुख्यमारक इष्यते॥ मध्यायुषि मृतिः षष्ठदशायामष्टमस्य वा ॥ १६ ॥ षष्ठात्रिकोणस्य पुनर्दीर्घाल्पविषयो भवेत् ॥ षष्ठे बलयुते तस्य त्रिकोणे मृतिमादिशेत् ॥ १७ ॥ षष्ठेशश्चेद्बलाढ्यः स्यात्तत्रिकोणे मृतिं वदेत् ॥ व्यवस्थेयं समस्तापि कारकादिदशास्वनु॥१८॥चरे चरस्थिरद्वंद्वा इति यो राशिरागतः॥ स एव मारको राशिर्भवतीति विनिर्णयः ॥ १९ ॥ मारकेशदशा काले मारकस्थस्य पापिनः ॥ पाके पाकयुजां पाके संभवे निधनं दिशेत्॥२०॥असंभवे व्ययाधीशदशायां मरणं नृणाम् ॥ अभावे व्ययभावेशसंबंधिग्रहभुक्तिषु ॥२१॥ तदभावेऽष्टमेशस्य दशायां निधनं पुनः ॥ मंदश्चेत्पापसंयुक्तो मारकग्रहयोगतः ॥ २२ ॥ तिरस्कृत्य ग्रहान्सर्वान्निहंता पापकृच्छृदः ॥ २३ ॥ मारकग्रहसंबंधी पापकर्ता शनिस्तदा ॥ तिरस्कृत्य ग्रहान्सर्वान्निहंता भवति ध्रुवम् ॥ २४ ॥ एतद्दशांतभुक्त्यादौ विचार्यैव मृतिं वदेत् ॥ षष्ठद्रेष्काणपश्चैव तथा वै नाशकाधिपः ॥ २५ ॥ विपत्ताराप्रत्यरीशौ

वधभेशस्तथैव च॥आद्यंतपौ च विज्ञेयौ चंद्राक्रांतग्रहाधिपः॥२६॥ दशाक्षिप्तेषु कालेषु मारको मरणप्रदः ॥ दुष्टतागपतेः पाके नि- र्याणं कथितं बुधैः ॥ २७ ॥ चेदंगपो यदि गृहेह्यग्रिव हीनं पूर्ण सुहृद्यतिसमः सममायुराहुः ॥ वा लग्नपो हितसमारिपदेऽपि पूर्ण मध्यं च हीनमिहजातकतत्त्वविज्ञाः ॥ २८ ॥ अधुना संप्रवक्ष्या- मि मारकाख्यं ग्रहं द्विज ॥ तस्मात्फलप्रभेदेन कथयामि तवा- ग्रतः ॥ २९ ॥ स्वात्मकारकलग्नाच्च चिंतयेद्द्विजसत्तम ॥ भ्रातृष- ष्ठाष्टमं रिष्फं धनं द्यूनांतरेष्वपि ॥ ३० ॥ सर्वेषां बलवान्खेटो मारको ग्रह उच्यते ॥ सर्वैर्बलसमानत्वे मारकः संज्ञको ग्रहः ॥ ३१ ॥ षष्ठाधिपस्तु प्रायेण बहुप्रकारेण मारकः ॥ तेषां मध्ये- धिकारी च षष्ठेशो मुख्यमारकः ॥ ३२ ॥ मारकग्रहाश्रितो राशि- र्मारकस्वामिनोऽथवा ॥ ताभ्यां महादशाकाले विंशोत्तर्याः स्थि- रादिका ॥ ३३ ॥ पापे मृत्युर्विजानीयान्निर्विशंकं द्विजोत्तम ॥ मा- रका बहवः खेटा यदि वीर्यसमन्विताः ॥ ३४ ॥ तत्तद्दशांतरे विप्र रोगकष्टादिसंभवः॥षष्ठाधिपदशायां च निधनं भवति ध्रुवम्॥३५॥ न्यूनातिरिक्तभेदेन बहुखेटा यत्र मारकाः ॥ दुर्बलाश्रयराशीशो दशास्वल्पार्तिदाभवेत् ॥ ३६ ॥ प्रबलस्य दशायां च महारो- गार्तिमृत्युवत् ॥ भयशोकमृताद्भीतिस्तस्कराग्निभयं भवेत् ॥ ३७॥ अथमारकदशायां च महत्या निधनाश्रयी ॥ भूतामंतर्दशामाह तवाग्रे कथयामि भोः ॥ ३८ ॥ मारकग्रहाश्रयीभूतमहापाके विचिंतयेत् ॥ कारकाच्चविलग्नाद्वा सप्तमाद्वा द्वितीयकम् ॥ ३९ ॥ षष्ठाष्टरिःफनाथानामपहाराष्टकेस्मृतिः ॥ तेषामंतर्दशाधीशास्ते- षां मध्ये बलाढ्यकः ॥ ४० ॥ तदीयांतर्दशाकाले निधनं भ- भवति ध्रुवम् ॥ अपरा पाककाले तु रोगदुःखार्तिवान्द्विज ॥ ४१ ॥

बलिशुक्रस्य च शनेर्ग्राह्यं षष्ठाष्टमादिकम् ॥ द्वितीयद्यूननाथेन ज्ञेयं चैवोत्तरोत्तरम् ॥ ४२ ॥ लग्नसप्तमयोर्मध्ये बलवांस्तद्विधीयते ॥ षष्ठाष्टमेशौ द्वौ मुख्यौ स्वं व्ययेशमुपलक्षणम्॥४३॥द्वाभ्यां मध्ये अभिप्राय अष्टमेशो हि मारकः॥षष्ठस्थे पापबाहुल्ये षष्ठेशो मुख्यमारकः ॥ ४४ ॥ मध्यायुषि समायोगे चिंतयेद्विजसत्तम् ॥ षष्ठेशाश्रयराशीशदशायां निधनं भवेत् ॥४५॥षष्ठात्षष्ठेतराद्वापि त्रिकोणगोपि मारकः ॥ दीर्घस्यायुषि योगेन चिंतनीयं द्विजोत्तम ॥४६॥ षष्ठस्य वा तदीशस्य त्रिकोणे संस्थितो ग्रहः ॥ तस्याश्रितस्वामिराशेर्दशायां निधनं ध्रुवम् ॥ ४७ ॥ षष्ठे बलवति विप्र तत्रिकोणे विचिंतयेत् ॥ तदीशे वा त्रिकोणेषु प्रायेणापि मृतिं वदेत् ॥ ४८ ॥ राहुराशिस्तमावेशबलवान्मारकः स्मृतः ॥ लग्नरंध्रद्वयं मध्ये नाश्रयीभूतमस्ति चेत् ॥ ४९ ॥ सराशिर्मारको ज्ञेयो ग्रहरीत्या विचिंतयेत् ॥ तत्तद्राशिदशायां तु तदीशाश्रयराशि च ॥ ५० ॥ दशायां निधनं वाच्यं पुरा शंभुप्रणोदितम् ॥ अपरे तु चरेत्यादि पूर्ववत्तत्समाप्ति च ॥५१॥ यो राशिः स तु विज्ञेयो मारकश्चेति संमतः ॥ तद्दशायां च निधनं निर्विशंकं द्विजोत्तम ॥ ५२ ॥ अत्राध्यायेच सर्वेषां ये योगा गदिता मया ॥ तेषां सर्वं समालोच्य जातकस्य मृतिं वदेत्॥५३॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे मारकभेदकथनं नाम त्रयोविंशोध्यायः २३॥

---

## अथायुर्दायाध्यायप्रारंभः ।

### मैत्रेय उवाच ॥

कर्मवत्ता महाभाग आयुर्दागहने गतिः ॥ निर्विशंकं ममाग्रे च कथयस्व कृपानिधे ॥ १ ॥

## पराशर उवाच ।

अधुना संप्रवक्ष्यामि आयुर्दायां गतिं तव ॥ यस्या विज्ञानमात्रेण कालज्ञो भवति ध्रुवम् ॥२॥ लग्नेशादष्टमेशाभ्यामायुर्दायं विचिंतयेत् ॥ दीर्घमध्याल्पयोगत्वं यथावद्वदतो मम ॥ ३ ॥ चरेऽचरे स्थिते द्वौ च लग्नरंध्राधिपौ यदि॥पूर्णायुर्योगो विज्ञेयो निर्विशंकं द्विजोत्तम ॥४॥ स्थिरर्क्षे लग्ननाथो हि लयेशे द्वंद्वभे स्थिते॥ तदायुः पूर्णयोगश्च संभवेद्गणिताग्रणीः ॥ ५ ॥ तन्वधीशे स्थिते द्वंद्वे स्थिरे स्थिते लयाधिपे ॥ पूर्णायुर्योगो विज्ञेयो निर्विशंकं द्विजोत्तम ॥ ६ ॥ अथातः संप्रवक्ष्यामि मध्यायुर्योगमुत्तमम् ॥ चरे लग्नाधिपे विप्र स्थिरे रंध्रपतिर्यदि ॥ ७ ॥ तदा मध्यायुषं ज्ञेयं द्वौ द्वंद्वे मध्यमायुषः॥अधुनाल्पायुर्योगं च तवाग्रे कथयाम्यहम् ॥८॥ अंगाधीशश्चरे यस्य द्वंद्वभे रंध्रनायके॥तस्याल्पायुर्महाप्राज्ञ निर्विशंकं द्विजोत्तम ॥ ९ ॥ स्थिरेऽस्थिरे स्थिते द्वौ च लग्नरंध्राधिपौ द्विज ॥ स्वल्पायुस्तत्र विज्ञेयं सृष्टिकर्त्रा प्रणोदितम् ॥ १० ॥ पूर्ववत्तनुचंद्राभ्यामायुर्योगं विचिंतयेत् ॥ जन्मेंदौ वा स्थिते द्यूने चान्यस्थे मंदचंद्रयोः ॥ ११ ॥ त्रिधा योगः समः प्रोक्तश्चिंतयेद्गणिताग्रणीः ॥ एकरूपास्त्रयो योगा आयुषि सुविचिंतयेत् ॥ १२ ॥ एकरूपत्वयोगौ द्वौ तृतीयो भिन्नरूपकः ॥ द्वयोर्योगेन संग्राह्यं न ग्राह्यं चैकरूपतः ॥ १३ ॥ योगत्रयं त्रयं रूपं भिन्नं भिन्नं भवेद्द्विज ॥ होरालग्नविलग्नाभ्यां प्राप्तायुर्योगनिश्चितम् ॥ १४ ॥ लग्नेशादष्टमेशाच्च योगैकः कथितो द्विज ॥ होरालग्नाभ्यां द्वितीयं योगयोगं विचिंतयेत् ॥ १५ ॥ तृतीयं शनिचंद्राभ्यां चिंतनीयं सदा द्विज ॥ लग्नेंदुमदने वापि चिंतयेल्लग्नचंद्रतः ॥ १६ ॥ यंत्रोद्धारमहं वक्ष्ये शृणु त्वं तद्द्विजोत्तम ॥

चतूरेखालिखेत्तिर्यक् चतुरूर्द्ध लिखेत्पुनः ॥ १७ ॥ नव कोष्टे त्रयो योगा दीर्घमल्पाल्पमायुषि ॥ आद्यत्रये चरं लेख्यं तदधस्थे क्रमेणच ॥ १८ ॥ चरं स्थिरं द्विःस्वभावं संलिखेद्विजसत्तम ॥ मध्ये स्थिरत्रयं कोष्ठे तदधो द्विःस्वभावतः ॥ १९ ॥ द्वंद्वं चरं स्थिरं लेख्यं निर्विशंकं द्विजोत्तम ॥ अंतत्रये द्विःस्वभावं तदधः स्थिरमादिशेत् ॥ २० ॥ स्थिरं द्वंद्वं चरं विप्र क्रमेण संलिखेत्सुधीः ॥ तिर्यक्कोष्ठानुसारेण दीर्घमध्याल्पमायुषि ॥ २१ ॥ एवं पंक्तित्रये विप्र आदौ पंक्तित्रयेण च ॥ चरोधः स्थिरपंक्तिश्च स्थिरपंक्तिरथोभयम् ॥ २२ ॥ चतुरस्त्रं लिखेद्यंत्रं नवकोष्ठांतरे द्विज ॥ प्रथमांकेन संलेख्यमूर्ध्वकोष्ठत्रयात्मके ॥२३॥ तिर्यक्पंक्तौ च द्वित्रीणि तिर्यक्पंक्तित्रयेष्वपि ॥ तदधोप्युर्ध्वपंक्तौ च लिखेदेकं त्रयं द्वयम् ॥ २४ ॥ मध्यपंक्त्यूर्ध्वे संलेख्यं द्वयं चैकं त्रयं पुनः ॥ अंतपंक्त्यूर्ध्वके लेख्यं त्रयं द्वेकं द्विजोत्तम ॥ २५॥ एवं क्रमेण वै विप्र प्रतिकोष्ठत्रिपंक्तिषु ॥ दीर्घमध्याल्पआयुष्याद्विज्ञेयानि भवंति हि ॥ २६ ॥ अधरोत्तरक्रमेणैव वामभागत्रिकोष्ठके ॥ दीर्घायुश्च विजानीयान्निर्विशंकं द्विजोत्तम ॥ २७ ॥ मध्यकोष्ठत्रयं मध्यं दक्षिणकोष्ठत्रयेल्पकम् ॥ सप्तविंशतिका भेदा भाषिता द्विजसत्तम ॥ ॥ २८ ॥ लग्नाष्टमेशयोर्विप्र दीर्घादौ च त्रयंत्रयम् ॥ नवकोष्ठं विजानीयादायुःसाधनहेतवे ॥ २९ ॥ तदेव संविजानीयात्कोष्ठांकलग्नचंद्रयोः ॥ नव कोष्ठा महाप्राज्ञ विज्ञेया लग्नहोरयोः ॥ ३० ॥ एवं चरादिराशीनां भेदेनापि पृथक्पृथक् ॥ नानाभेदादिसंयुक्ते तवाग्रे कथयाम्यहम् ॥ ३१ ॥

| अथ दीर्घाद्यनेकभेदानामायुश्चक्रम् । | | |
|---|---|---|
| दीर्घायुः<br>चरः १ लग्नेशः<br>चरः १ अष्टमेशः | मध्यायुः<br>चरः १ लग्नेशः<br>स्थिरः२ अष्टमेशः | अल्पायुः<br>चरः १ लग्नेशः<br>द्विःस्वभावः ३ अष्टमेशः |
| दीर्घायुः<br>स्थिरः २ लग्नेशः<br>द्विःस्वभावः ३ अष्टमेशः | मध्यायुः<br>स्थिरः २ लग्नेशः<br>चरः १ अष्टमेशः | अल्पायुः<br>स्थिरः २ लग्नेशः<br>स्थिरः २ अष्टमेशः |
| दीर्घायुः<br>द्विःस्वभावः ३ लग्नेशः<br>स्थिरः २ अष्टमेशः | मध्यायुः<br>द्विःस्वभावः ३ लग्नेशः<br>द्विःस्वभावः ३ अष्टमेशः | अल्पायुः<br>द्विःस्वभावः ३ लग्नेशः<br>चरः १ अष्टमेशः |

कदाचित्कश्चिद्भवति इत्युक्तं द्विजसत्तम ॥ लग्नाष्टमेशयोरेकं त्वपरं लग्नचंद्रयोः ॥ ३२ ॥ विलग्नहोरयोरन्यदतिपक्षत्रयं द्विज ॥ तदेभिः प्रेत्य संवादादित्यादियोगसंकथम् ॥ ३३ ॥ दीर्घमध्याल्प भेदेषु चरेत्यादि निरूप्यते ॥ द्वात्रिंशच्च चतुःषष्टिं षण्णवति स्वरूपके ॥ ३४ ॥ षट्त्रिंशद्वा द्विसप्ताब्दे अष्टोत्तरशताब्दके ॥ चत्वारिंशच्चाशीतिर्विंशोत्तरशतात्मके ॥ ३५ ॥ योगान्यग्रहमायुर्ष्यं वा शेषेषु समानतः ॥ समागतेषु आयुर्दास्पष्टीकरणसंकथाम् ॥ ३६ ॥ पूर्णमादौ हानिरंतेऽनुपाते मध्यमो भवेत् ॥ राशिद्वयस्य योगार्द्धं वर्षाणां स्पष्टमुच्यते ॥ ३७ ॥ एवं द्विकानां संचिंत्य त्रयाणां योगवान्मते ॥ यत्रास्यायुर्यन्निर्णीतं योगजालेन यत्कृतम् ॥ ॥ ३८ ॥ तत्रायुर्दीर्घसंलब्धा सिद्धिमध्यावधिर्भवेत् ॥ निर्विशंकं महाप्राज्ञ स्फुटीपातानुपाततः ॥ ३९ ॥ लब्धाब्दमनुपातेन मध्यमध्येपि योजयेत् ॥ दीर्घायुषा विजानीयात्संस्फुटी चपलात्मका ॥ ४० ॥ मध्यमायुर्लभेत्तत्र अल्पायुः सिद्धिसंभवम् ॥ पूर्ववदनुपातेन यत्र युङ्मध्यमायुषि ॥ ४१ ॥ कदाचित्सर्वयोगेन अ-

ल्पायुः सममागते ॥ यत्रभावानुपातस्य तत्रैकः खंडः सिद्ध्यति ॥ ४२ ॥खंडत्रयप्रयोगेन आयुर्दा कथिता मया ॥ द्वात्रिंशत्षष्ठत्रिंशाब्दा चत्वारिंशत्तमैर्द्विज ॥ ४३ ॥ किं ग्राह्यं कियतो ग्राह्यं कदाचिद्ग्राह्यमाणकः ॥ इति संशयनिवृत्त्यर्थं कथयामि पृथक्पृथक् ॥ ४४ ॥ लग्नेशश्चाष्टमेशाभ्यां तदायुर्योगसंभवः ॥ चत्वारिंशात्मकं खंडं संग्राह्यं द्विजसत्तम ॥ ४५ ॥ योगत्रयेषु चागत्य अल्पायुर्द्विजसत्तम ॥ द्वात्रिंशाब्दकखंडं च संज्ञेयं ब्रह्मणोदितम् ॥ ॥ ४६ ॥ कदाचिदनुपातेन युक्ते सिद्धिः प्रजायते ॥ दंताब्देन तु संदेहो रुद्रशूलं विचिंतयेत् ॥ ४७ ॥ अधुना संप्रवक्ष्यामि अनुपातविधिं द्विज ॥ पृथक्स्पष्टं च संस्थाप्य विलग्नेशाष्टमेशयोः ॥ ॥ ४८ ॥ गतराशींस्त्यजेद्विप्र विद्यमानेन संगुणेत् ॥ त्रैराशिकैकखंडस्य यदाप्तं वर्षमादिशेत् ॥ ४९ ॥ लग्नेशस्याष्टमेशस्य आयुरागतयोर्द्विज ॥ वर्षादिपिंडयोर्योगं तदर्धं स्पष्टकारितम् ॥ ५० ॥ दीर्घमायुर्लभेद्विप्र द्विसप्ताब्देषु योजयेत् ॥ तदा चाशीतमे योज्यं दीर्घसंज्ञा स्फुटा भवेत् ॥ ५१ ॥ मध्यमायुषि यत्रैवं षट्त्रिंशन्नभवेदयोः ॥ अनुपातेन चागत्य युक्तेऽब्दे मध्यमायुषि ॥ ५२ ॥ त्रैराशिकमहं वक्ष्ये तवाग्रे द्विजसत्तम ॥ प्रमाणमिच्छा तुल्यं च स्थाप्यमाद्यंतयोर्द्वयोः ॥ ५३ ॥ मध्ये फलेन्यजाती च संगुणेदिच्छया द्विज ॥ प्रमाणासंस्फुटफलं तस्याख्यमनुपातकम् ॥ ५४ ॥ दीर्घमध्यायुषोर्विप्र अनुपाताप्तियोजयेत् ॥अल्पायुषी यदा लब्धमभावमनुपातकम् ॥ ५५ ॥ प्रवर्तमानमायुःस्याज्जन्मप्रभृतिमेव च ॥ विलग्नहोरयोरेवं तदेवं लग्नचंद्रयोः ॥ ५६ ॥ समागतायुषिस्तस्याश्चांतखंडे स्फुटीकृतम् ॥ सर्वयोगेषु वै विप्र संस्कारमनुपाततः ॥ ५७ ॥ होरालग्नादिमांशे तु पूर्णमंते च किंचन ॥ स्पष्टी-

करणमेतत्स्याद्दीर्घमध्याल्पकायुषि ॥ ५८ ॥ होरालग्नं स्फुटीकृत्य विकल्यादि द्विजोत्तम ॥ तस्य त्रैराशिकं स्पष्टं पूर्ववद्योजयेत्पुनः ॥ ॥ ५९ ॥ अंतखंडेषु संयोज्यमायुष्यं निर्णयं भवेत् ॥ द्विसार्धघटिकामध्ये त्रिंशदंशस्फुटी द्विज ॥ ६० ॥ आनीय पूर्वरीत्याब्दात्सूर्यराशेश्च लग्नभात् ॥ पूर्वाध्यायेष्वहं वक्ष्ये तवाग्रे द्विजसत्तम ॥ ॥६१॥अधुना संप्रवक्ष्यामि आयुःसाधनहेतवे ॥ कक्ष्याह्रासं तथा वृद्धिं शनियोगेन वै द्विज॥६२॥लग्नाधीशः शनियुतो होरार्धांशो यथा द्विज ॥ ६३ ॥ कक्ष्याह्रासं भवेत्तत्र यत्र सौरिश्च निर्बलः ॥ ६४ ॥ आयुर्दायसमापन्ने कक्ष्या त्रीणि प्रजायते ॥ दीर्घमध्याल्परूपं चेत्तत्प्रमाणं वदाम्यहम् ॥ ६५ ॥ षट्त्रिंशेब्देन कक्ष्यैका तस्या हानिः प्रजायते ॥ मध्यमायुर्भवेत्तत्र निर्विशंकं द्विजोत्तम ॥ ६६ ॥ मध्यमायुः समागत्य स्वल्पायुर्जायतेध्रुवम् ॥ योगेल्पायुः समायातः शनिर्योगं करोत्यपि ॥ ६७ ॥ षट्त्रिंशाब्दश्च रूपेण कक्ष्याह्रासं भवेद्द्विज ॥ अत्यल्पायुर्विजानीयाद्बालेन निधनं भवेत् ॥ ६८ ॥ अथ योगत्रये विप्र शनिर्योगं करोतिच ॥ एक एकादशाह्रासः कक्ष्याह्रासं त्विदं क्रमात् ॥ ६९ ॥ ततः फलविशेषार्थं गुणदोषौ वदाम्यहम् ॥ गुणैः प्रपूरितः सौरिः कक्ष्यावृद्धिं करोति च ॥ ७० ॥ दोषयुक्तो भवेद्धानिस्ताभ्यां निर्णय उच्यते ॥ स्वर्गतुंगादिगुणिभिर्युक्तो मार्तंडवंशज ॥ ७१ ॥ कक्ष्यावृद्धिकरो विप्र विभागेनायुर्वृद्धिकृत् ॥ अत्यल्पायुर्भवेदल्पमल्पान्मध्यं प्रजायते ॥ ७२ ॥ मध्यमाज्जायते दीर्घं कक्ष्यावृद्धेश्च लक्षणम् ॥ एवं नीचारिगः सौरिः पापदृष्टिसमन्वितः ॥ ७३ ॥ कक्ष्याह्रासकृते विप्र त्रिभागेनायुर्हानिकृत् ॥ वृद्धाद्भवति मध्यायुर्मध्यादल्पायु जायते ॥ ७४ ॥ अल्पादत्यल्पका याता बाल्ये निधनसं-

भवः ॥ लग्नेशे वापि होरेशे केवले शनिसंयुते ॥ ७५ ॥ पापर्क्षे पापयुक्ते वा पापदृष्टिसमन्विते ॥ कक्ष्याऱ्हासं न कुर्वीत विना नीचारिगे द्विज ॥ ७६ ॥ एवं तुंगादिरहितं कक्ष्यावृद्धिं न कारयेत् ॥ शुभर्क्षे शुभसंयुक्ते शुभदृष्टौ च तुंगगे ॥ ७७ ॥ पापयोगेन रहिते कक्ष्यावृद्धिकरः शनिः॥एवं नीचादिदोषेण कक्ष्याऱ्हासः प्रजायते ॥ ७८ ॥ साधारण्ये स्थिते युक्ते कष्टं चातितरां कृते ॥ अधुना संप्रवक्ष्यामि कक्ष्यावृद्धिद्वितीयकम् ॥ ७९ ॥ गुरुणा स्थानसंबंधे भविष्यति द्विजोत्तम ॥ लग्ने वा सप्तमे वापि तुंगादिगुणसंयुते ॥ ८० ॥ शुभर्क्षे शुभदृग्युक्ते कक्षावृद्धिकरे गुरौ ॥ जीवने संशयं यस्य अल्पायुर्वृद्धिकारकम् ॥ ८१ ॥ अल्पायुषि च मध्यायुर्मध्याप्ते दीर्घमायुषि ॥ एवं भेदानुभेदेन कथयामि तवाग्रतः ॥ ८२ ॥ अथायुर्बाधकं विप्र दर्शयामि तवाग्रतः ॥ दीर्घायुर्योगं संप्राप्य प्रकारशकलेष्वपि ॥ ८३ ॥ किं दशायां च निधनमिति कर्तुमपेक्षया ॥ निर्णयं तस्य कुर्वीत तवाग्रे कथयाम्यहम् ॥ ८४ ॥ यस्य दीर्घायुषं लब्ध्वा पर्यंतं मध्यमायुषि ॥ निरपवादता ज्ञेया तदग्रे निधनमुच्यते ॥ ८५ ॥ मध्यायुषः समायोगे लब्ध्वा पूर्वप्रकारतः ॥ निर्विंशकालपर्यंतं तदग्रे मृतिचिंतनम् ॥ ८६ ॥ योगेत्यायुः समागत्य स्वयं खंडे विचिंतयेत् ॥ किंस्विद्दशायां निधनं भविष्यति द्विजोत्तम ॥ ८७ ॥ दीर्घे द्विसप्ततिवर्षे तदूर्ध्वं चिंतयेन्मृतिम् ॥ षट्त्रिंशदब्दादूर्ध्वं च चिंतयेन्मध्यमायुषि ॥ ८८ ॥ अथ स्पष्टं प्रवक्ष्यामि मलिने द्वारबाह्ययोः ॥ नवांशे निधनं तस्य त्रिशूलिभाषितं पुरा ॥ ८९ ॥ द्वारद्वारेशयोर्विप्र मालिन्यं तन्नवांशके ॥ जातस्य हि भवेन्मृत्युः सत्यमेव न संशयः ॥ ९० ॥ पाकभोगद्वये विप्र चिंतनीयं प्रयत्नतः ॥ स्वयं

पापः पापदृष्टे पापखेटसमन्विते ॥ ९१ ॥ तन्नवांशदशाकाले नि-
धनं च भवेद्ध्रुवम् ॥ निर्विशंकं महाप्राज्ञ तदंतरगते मृतिः ॥९२॥
द्वारेच बाह्यराशेर्वा नवांशे निधनं भवेत् ॥ पापयोगे नवांशेशात्त-
दनंतर्गते द्विज ॥ ९३ ॥ यदा दशाप्रदो राशिः पापसंज्ञां प्रजाय-
ते ॥ लग्नाद्यावति यो दूरं तावद्दूरं विभोगकाः ॥ ९४ ॥ अधुना
संप्रवक्ष्यामि नवांशकपदेन च ॥ प्रतिराशिनवांशेन नवाब्देन
दशास्थिरम् ॥ ९५ ॥ विशेषरूपं मे प्रोक्तं नवाब्दाद्वारबाह्ययोः ॥
राशिसंबंधिनो ग्राह्याश्चरदशायां विचिंतयेत् ॥ ९६ ॥ भावानां
स्पृष्टकृत्यैवं द्वारबाह्यं विचिंतयेत् ॥ यद्भावस्पष्टता स ग्रहनवां-
शेषु भो द्विज ॥ ९७ ॥ रीत्याब्दे च समानीते मरणं भवति ध्रुव-
म् ॥ एवं तन्वादिभावानां स्पष्टीकार्या यथार्थतः ॥ ९८ ॥ ग्रहन-
वांशवैपरीत्याद्वादशानां नवांशके ॥ नवांशायुसमानेन विशेषं
च समादिशेत् ॥ ९९ ॥ एवं विचिंतयेद्विप्र द्वारबाह्यद्वयोरपि ॥
मलिनत्वमथैवेदं निधनं न तु कथ्यते ॥ १०० ॥ अन्ये नरस्य
मलिने सर्वत्र इति चिंतयेत् ॥ पापराश्याक्रांतराशौ पाकांशे नि-
धनं द्विज ॥ १०१ ॥ एवं चरदशाकाले द्वारेशस्य मलिम्लुचे ॥
तदीशाश्रयराशेरप्यंशपाके भवेन्मृतिः ॥ १०२ ॥ एवं चरदशा-
मध्ये चिंत्यते द्वारबाह्ययोः ॥ त्रिकोणोत्तरदशाप्राप्ते निधनं जात-
कस्य च ॥ १०३ ॥ अथ वा योगायुर्दायसमाप्तिसमयेष्वपि ॥
प्रोक्ते मरणाश्रयीभूते चिंतनीयं द्विजोत्तम ॥ १०४ ॥ खंडे वा यदि
पाकस्य बाह्यस्य मलिने यदि ॥ दशा न हि समाप्ते या तत्त्रिको-
णाब्दके मृतिः ॥ १०५ ॥ अधुना संप्रवक्ष्यामि मृत्युयोगापवा-
दकम् ॥ शुभदृष्ट्या शुभेयोगे शुभखेचरसंयुते ॥ १०६ ॥ न च
द्वारे न बाह्ये च द्वारेशे चोपलक्षिते ॥ द्वारेशाश्रयनवांशे तु दशा-

यां निधनं भवेत् ॥ १०७ ॥ अथैव शुभदृग्योगाभावेष्वपि द्विजो-
त्तम ॥ नवांशकालेषु दशा अपवादं वदाम्यहम् ॥ १०८ ॥ लग्ने-
शे तुंगगे विप्र यस्य जन्मनि जायते ॥ द्वारे द्वारे शबाह्यानां मा-
लिन्येपि यदा भवेत् ॥ १०९ ॥ शुभदृग्योगभावे च नवांशे नि-
धनोच्यते ॥ न तु मृत्युर्भवेत्तस्य नवाब्दाद्वृद्धिमादिशेत॥११०॥
द्वारबाह्यनवांशे च दशान्तमपि च द्विज ॥ पुनर्नवाब्दपर्यन्तं द्वा-
रबाह्यं करोत्यपि ॥ १११ ॥ द्वितीयराशिसंबंधे नवाब्दे ग्रहरीति-
तः ॥ समागते तदाप्यायुर्वृद्धिर्भवति निश्चितम् ॥ ११२ ॥ वृद्धा-
नंतर्यदामृत्युस्तस्य विश्वात्मकोच्युतः ॥ सर्वात्मना मृत्युयोगः शु-
भदृग्योगसंभवः ॥ ११३ ॥ लयेशो तुंगराशिस्थे इत्याकांक्षा द्वि-
जोत्तम ॥ तस्या विनिर्णयं कर्तुं स्पष्टमुक्तेन भाषितम् ॥ ११४ ॥
यस्य वृद्धिकरे विप्र पदेशस्य दशांतरे ॥ निधनं च भवेत्तस्य नि-
र्विशंकं वदाम्यहम् ॥ ११५ ॥ पदेशस्य नवांशे वा लग्नाष्टमत्रि-
कोणगे ॥ दशायां निधनं तस्य यस्य वृद्धिपदं भवेत् ॥ ११६ ॥
यदि वृद्धाब्दमादाय निधनं न भवेत्कदा ॥ दशात्रयाणामंते तु
मृत्युर्भवति निश्चितम् ॥ ११७ ॥ पदेशस्य दशा तत्र लग्नारूढे
पदस्य च ॥ रंध्रारूढे तदा ग्राह्यं तदीशस्य यदा द्विज ॥ ११८ ॥
तदाश्रये राशिदशा ग्राह्यमाणा द्विजोत्तम ॥ अत्र केवलखेटानां
दशायां चिंतयेत्सुधीः ॥ ११९ ॥ यद्वा पदेशस्य दशा निसर्गब-
ललक्षणा ॥ दशा विंशोत्तरीरीत्या दशा चाष्टोत्तरी मता ॥१२०॥
तदा पददशायां च निधनं गणिताग्रणीः ॥ अक्षपदं तदीशस्य
पदशोर्चं तयोर्दशा ॥१२१ ॥ नाथांतेन समारीत्या राशिखेटाद्व-
योर्दशा ॥ निवर्तिता दशा विप्र तदैतेषु विचिंतयेत् ॥१२२॥ च-
रपर्या दशारीत्या पदेशस्य दशांतरे ॥ अवश्यं निधनं तस्य नि-

विंशकं द्विजोत्तम ॥१२३॥ तथापदेशस्य च तत्रिकोणं चाथ भो द्विज ॥ नवांशकदशारीत्या समानीय दशांतरे ॥१२४॥ पुनः पद-त्रिकोणाभ्यामनंतरगते द्विज ॥ दशायां निधनं वाच्यं जातकस्य न संशयः ॥१२५॥ नवांशकदशा प्रोक्ता द्विधा ग्राह्या द्विजोत्तम॥ ताभ्यां लग्नाष्टमाधीशा अथ वा राशिकोणपाः ॥ १२६ ॥ दशा-यां निधनं वाच्यं त्रिशूलिभाषितं पुरा ॥ इत्येषां निधनं योगाद्-वश्यं चिंतयेद्द्विज ॥१२७॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारां-शे आयुर्दायकथनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥छ॥

## पराशर उवाच ।

अथातः संप्रवक्ष्यामि प्रकारं वै द्वितीयकम्॥यस्यविज्ञानमात्रे-ण आयुर्दासूचको भवेत् ॥ १ ॥ विलग्नात्मदशा विप्र अष्टमेशा-त्तयोर्द्वयोः ॥ मध्यं चैको बलिं चिंत्यं सोपि ह्यायुःप्रदो ग्रहः ॥२॥ केंद्रादित्रिकयोगेन दीर्घमध्याल्पमायुषि ॥ सा विज्ञेया महाप्राज्ञ तवाग्रे प्रवदाम्यहम् ॥ ३ ॥ केंद्रे स्थितेपि दीर्घायुर्मध्यायुः पणफरे स्थिते ॥ आपोक्लिमे स्थिते त्वल्पमायुर्भवति निश्चितम् ॥ ४ ॥ कर्कलग्नेषु कुंडल्यां तदैवं चिंतयेद्द्विज ॥ लग्नाद्वा मदने वापि वा-ष्टमेशे तयोर्द्वयोः ॥ ५ ॥ ताभ्यां मध्ये बली चैकः स्थिते केंद्रादि-पूर्ववत् ॥ दीर्घमध्याल्पभेदेन आयुर्निश्चित्य पूर्ववत् ॥ ६ ॥ पूर्वव-द्दंडखंडस्य त्रैराशिकक्रमेण च ॥ आयुर्दायाः कृते स्पष्टं प्रवक्ष्यामि इदं वचः ॥७॥ स्वस्मिन्समबले खेटेऽनधिके च बले द्विज ॥ न वी-र्यतायां दीर्घादि विपरीतायुषी भवेत् ॥ ८ ॥ दीर्घमध्ये च वाल्पं च अल्पं वा किंचिदेव च ॥ विपरीतं योगभंगे सत्यमेव न संशयः ॥ ९ ॥ सप्तमात्सप्तमे विप्र नवमे कारके स्थिते ॥ विपरीतं च दी-र्घादि योगायुर्न तु संशयः ॥ १० ॥ अथाग्रेनेकभेदानामायुषो

निर्णयः कृतः ॥ दीर्घादित्रयरूपेण इत्युक्तं ब्रह्मणोदितम् ॥ ११ ॥ जन्मलग्नाष्टमेशौ द्वौ चिंतयेज्जन्मपत्रके ॥ पंचमैकादशे विप्र दीर्घायुश्च प्रजायते ॥ १२ ॥ लाभे तृतीयगे मध्य आयुर्दायं विचिन्तयेत् ॥ लाभे वित्ते त्रिकोणे वा आयुरल्पं भवेद्द्विज ॥ १३ ॥ गतायुर्लाभगे द्वौ च जातकोपि न जीवति ॥ एवं समस्तजन्तूनामीदृग्योगं विचिंतयेत् ॥ १४ ॥ क्षपाकरांशमारभ्य वारिभिश्च करादिभिः ॥ उदयादि विना गर्भैरायुर्लग्नं प्रकल्पयेत् ॥ १५ ॥ गणनायां च भावानामायात्यष्टविनाडिका ॥ त्रैराशिकक्रमेणैवं त्रिंशदंशं प्रकल्पयेत् ॥१६॥ राश्यंशककलादीनां शुद्धस्पष्टं द्विजोत्तम ॥ कृतायुः स्पष्टलग्नस्य अवश्यांकमिदं मतम् ॥ १७ ॥ अथैव भिन्नमार्गेण आयुर्दायं निरूपितम् ॥ तनुतन्वीशतद्राशिपत्युर्भानां त्रिकोणके ॥ १८ ॥ अल्पमध्यचिरायुष्ये रूपवर्षप्रमाणतः ॥ अष्टमेशादियोगेन निर्याणं कारको ग्रहः ॥१९॥ लग्नत्रिकोणगेल्पायुर्लग्नेशस्य त्रिकोणगे ॥ मध्यमायुर्विजानीयान्निर्विशंकं द्विजोत्तम ॥ २० ॥ लग्नेशात्स्वीयराशीशे त्रिकोणे रंध्रनायके ॥ दीर्घायुषि प्रदातव्यं पुरा शंभुप्रणोदितम् ॥ २१ ॥ तेषां मध्ये त्रिकोणानां विभागे च नवं कथम् ॥ स्वल्पमध्यचिरायुष्यं द्वादशाब्दाधिकेन च ॥ २२ ॥ अल्पायुषस्त्रयोभेदास्त्रयस्थाने पृथक् पृथक् ॥ विलग्नेशाष्टमेशादि लग्नस्थेपि द्विजोत्तम ॥ २३ ॥ द्वादशाष्टभवेदायुश्चतुर्विंशतिपंचमे ॥ नवमे च षट्त्रिंशाब्दमित्येवं न तु संशयः ॥ २४ ॥ लग्नेशराशिकोणेषु लग्नरंध्राधिपादिचेत् ॥ तत्र स्थितेष्टवेदाब्देषष्ट्यब्दं पंचमे स्थिते ॥ २५ ॥ नवमस्थे द्विसप्ताब्दं तन्नवकमिदं मतम् ॥ लग्नेशाश्रितराशीशे त्रिकोणेषु स्थिते द्विज ॥ २६ ॥ लग्नेशादष्टमेशादित्रिभागं दीर्घमायु-

षि ॥ लग्नस्थे चतुराशीतिः पंचमे षट्नवांशके ॥ २७ ॥ नवमेष्टोत्तरशतं वर्णेष्वायुर्विनिर्णयः ॥ द्वादशाब्दानुपाते च ह्येतच्छंभुप्रणोदितम् ॥ २८ ॥ तुलामेषविलग्नेषु प्रायः शुक्रो भवेद्बली ॥ सदशादौ स्वरूपं स्यादंते च स्यात्स्वभावतः ॥ २९ ॥ पूर्वार्द्धं च स्पष्टदशामेषस्यापि तुलस्य च ॥ चरपर्यासमानीते अब्दे चैकाब्दयोजिते ॥ ३० ॥ द्वादशाब्दाधिके कृत्वा पूर्वमायुः समागते ॥ नाथांताब्दसमूहे च मेलनीयं द्विजोत्तम ॥ ३१ ॥ तत्र चायं विभागश्च तवाग्रे कथितो द्विज ॥ लग्नेशादौ समारंभे प्रथमांशादिसंख्यया ॥ ३२ ॥ योजयेद्द्वादशाब्दं च आयुः साधनहेतवे ॥ अंते त्रिंशत्तमांशांते लग्ने स्पष्टे सति द्विज ॥ ३३ ॥ स्वभावतद्भवाच्छून्ये द्वादशाब्दं तु योजयेत् ॥ मध्ये तथानुपाते च विधायं च यदागतम् ॥ ३४ ॥ तद्योजनीयं कर्तव्यं निर्विशंकं स्वभावतः ॥ इत्येव नाथांताब्दा ये स्वभावजा भवंति च ॥ ३५ ॥ नाधिके चैव नाब्देन शुक्रो लयस्थितो यदि ॥ भानुतष्टे च शून्याप्ते न युक्तं द्वादशात्मकः ॥३६ ॥ एकोष्टमेशः स्वोच्चस्थे पर्यायार्धं प्रयच्छति ॥ नात्रस्थो नाशयेत्पर्यायार्धमायुषि निश्चितम् ॥ ॥ ३७ ॥ नीचरन्ध्रेशसंयुक्ताः पर्यायार्द्धं पृथक्पृथक् ॥ ग्रहा विनाशयंत्येव निर्णीते परमायुषि ॥ ३८ ॥ उच्चरंध्रेशसंयुक्ते ग्रहैः प्रत्येकमुन्नयेत् ॥ एकैव मध्यपर्यायं परमायुर्विनिश्चितम् ॥ ३९ ॥ रविकुजःशनिराहुमरणे बलिनः क्रमात् ॥ विशेषदुर्बलं हित्वा गृह्णीयाद्बलिनं सुधीः ॥ ४० ॥ केतुश्च शनिवद्रौचनाथनैमित्त्यमादिशेत् ॥ शनिना राहुणा वापि युक्ते सौम्ये रवीक्षिते ॥ ४१ ॥ पर्यायमेकं तन्मध्य एकराशौ मृतिं वदेत् ॥ तयोस्तु शुभयोगेन तद्दशामृतिमादिशेत् ॥४२ ॥ भोगराशौ दुर्बले वा प्रबले वा ग्रहे

स्थिते ॥ तथापि निर्दिशेत्काले मरणं तत्र संशयः ॥ ४३ ॥ केतोः श्रीमद्वसानस्थे नाथे वा शुभवीक्षिते ॥ केतोर्दशान्ते मृत्युः स्याच्छुभदृष्टेन किं च न ॥ ४४ ॥ तन्वाधीशाष्टमेशाभ्यां योगेनायुः कृते द्विज ॥ अष्टमेशात्तदुच्चस्थे चरपर्याब्दप्रमाणके ॥ ४५ ॥ अर्धाधिकाब्दं दत्वैव योजयेत्पूर्वमायुषि ॥ एवं नाथांतरीत्या च चरपर्यातिरिक्तकः ॥ ४६ ॥ मर्यादयापि यद्यायुरष्टमेशेन दीयते ॥ तत्सर्वमर्धाधिक्ये च विधेयं द्विजसत्तम ॥ ४७ ॥ एवं रंध्रपतिर्विप्र नीचराशिगतोपि च ॥ दीयमानायुरर्द्धं चेन्नाशयति न संशयः ॥ ४८ ॥ एवं रंध्रपतिर्विप्र नीचखेटेन संयुतः ॥ तद्ग्रहेण दीयमानमायुरर्द्धं विनश्यति ॥ ४९ ॥ एवं रंध्रपतिर्विप्र तुंगखेटेन संयुतः ॥ ग्रहाः स्वेन दीयमानमायुरर्द्धं च वर्द्धति ॥ ५० ॥ एवमुक्तं च विप्रेंद्र परमायुर्विनिश्चितम् ॥ लग्नेश्वराष्टमेशाभ्यां योगायुर्दायमागते ॥ ५१ ॥ तेषु संस्कारमाज्ञेयमिदं पूर्वोक्तसंकथाम् ॥ लग्नेशादायुरित्येवं तत्तद्योगकलात्मकम् ॥ ५२ ॥ संयुक्ताश्च ग्रहा उच्चनीचादिगुणदोषतः ॥ वृद्धिर्ह्रासावुक्तरित्या कार्या वै संप्रदायतः ॥ ५३ ॥ त्रित्र्यादिमृत्युयोगश्च प्रबलः पूर्वभाषितम् ॥ नैसर्गिकोपि वीर्याय तस्य पाके मृतिर्भवेत् ॥ ५४ ॥ रव्याराराहुपंगूनां चतुःखेटांतरे बली ॥ तस्य योगानुसारेण जातकस्य मृतिं वदेत् ॥ ५५ ॥ अष्टमेशेन संयुक्ते शनिराहुकुजोरविः ॥ न वीक्षिते ग्रहैर्वाथ तस्य मृत्युं विनिर्दिशेत् ॥ ५६ ॥ एषां मध्येषु प्रबला सा तत्स्वामिकराशिगे ॥ पाके मृत्युं विजानीयान्निर्विशंकं द्विजोत्तम ॥ ५७ ॥ एतेषां चतुःखेटानां मध्ये चैको बली क्वचित् ॥ तस्य राशिदशाकाले मृतिस्थानं विनिर्दिशेत् ॥ ५८ ॥ मृत्युस्थानभिभूतायां सिद्धायां च महादशा ॥ तत्तस्यापि क्रमेणैव तदनंतर्दशा-

प्रदा ॥ ५९ ॥ राशिषु मारकत्वेन जलवदागमेपि च ॥ शूलाव-
विष्टात्गृहदशांतरगते मृतिः ॥ ६० ॥ शुभग्रहेण संबंधे शनि-
राह्वोस्तयोरपि ॥ तत्तत्स्वामिदशाकाले मरणं च विनिर्दिशेत् ॥
॥ ६१ ॥ तदाश्रयेण राशिपाके मृत्युर्भवति निश्चितम् ॥ निर्वि-
शंकं महाप्राज्ञ पुरा शंभुप्रणोदितम् ॥ ६२ ॥ सुखदुःखादि संब्रू-
यात्पाकराशौ विचिंतयेत् ॥ भोगांतरगता तत्तु तत्तद्वीर्यानुसारतः
॥ ६३ ॥ सबलायां सुखं ब्रूयाद्दुर्बला दुःखदायका ॥ वैषम्येन
फलं वाच्यं तथामरणमेव च ॥ ६४ ॥ द्वादशे दशमे वापि सं-
स्थिते पुच्छनायके ॥ पापदृष्टे दशाप्राप्ते तदंतरगते मृतिः ॥
॥ ६५ ॥ द्वादशे दशमे केतुः शुभग्रहनिरीक्षिते ॥ नायं योगो म-
हाप्राज्ञ न कष्टं न तु मृत्युकृत् ॥ ६६ ॥ प्राणिनीत्युक्तं विप्रेन्द्र
प्राणानयनकथ्यते॥राश्यधीनं बलं ज्ञेयं तदुक्तं कथ्यतेऽधुना॥६७॥
अग्रहात्सग्रहो ज्यायान्सग्रहे त्वधिकग्रहः ॥ सोमे चरस्थिरद्वंद्वाः
क्रमात्स्युर्बलशालिनः ॥ ६८ ॥ अधुना संप्रवक्ष्यामि मध्यायुर्यो-
गनिश्चितम् ॥ मारकांतरेण विप्र तवाग्रे कथयाम्यहम् ॥ ६९ ॥
विलग्नात्मदशा वा चेदुभयोरष्टमेशयोः ॥ संस्थितेऽन्यतरौ विप्र
मध्यायुर्योगउच्यते ॥ ७० ॥ अयं योगे स्थिते सेवा दीर्घस्य म-
ध्यपादके ॥ बालस्य मध्यता पादे केचिदितिविवेचनम् ॥ ७१ ॥
अथ दीर्घादि योगेषु त्रिषु च द्विजसत्तम ॥ कक्षाह्रासकृते यो-
गान्दर्शयामि तवाग्रतः ॥७२॥ लग्नसप्तमयोर्विप्र द्विर्द्वादशकयो-
रपि ॥ षष्ठरंध्राधिपस्यापि जनुर्लग्ने विचिन्तयेत् ॥ ७३ ॥ पापा-
क्रांते पापयोगे पापमध्यत्वमागते ॥ कक्षाह्रासौ विजानीयान्नि-
र्विशंकं द्विजोत्तम ॥ ७४ ॥ दीर्घस्य मध्यमा याता भवेदायुषि
मध्यमे ॥ अल्पादल्पं च विज्ञेयं कक्षाह्रासस्य लक्षणम् ॥ ७५ ॥

कक्षान्ह्रासे यदाऽर्थोऽपि पूर्ववज्जायते ध्रुवम् ॥ अथैवं लग्नकुंडल्यां पापयोगत्रिकोणगे ॥ ७६ ॥ लग्नपंचमभाग्येषु पापयोगकृते द्विज ॥ कक्षान्ह्रासो भवेद्विप्र निर्विशंकं विधेः सुत ॥ ७७ ॥ अत्राऽस्मिन्कारके लग्ने चिंतयेज्जनुर्लग्नवत् ॥ कारकांशे द्यूनराशेः पापमध्यत्वमेव हि ॥ ७८ ॥ एको योगः स विज्ञेयः कक्षान्ह्रासं च पूर्ववत् ॥ अथैककक्षान्ह्रासस्य चापवादं वदाम्यहम् ॥ ७९ ॥ एकस्य कक्षान्ह्रासं च वित्तपे चान्यथा भवेत् ॥ पूर्ववच्छुभयोगेन कक्षावृद्धिर्भविष्यति ॥ ८० ॥ जनुर्लग्ने कारके च चिंतयेत्पूर्ववद्विज ॥ लग्ने द्यूने धने रिष्फे षष्ठे रंध्रे स्थलत्रये ॥ ८१ ॥ शुभखेटकृते योगे कक्षावृद्धिर्भवित्यपि ॥ चिंतयेत्पूर्ववद्विप्र त्रिकोणेषु स्थलद्वये ॥ ८२ ॥ जनुर्लग्ने कारके च शुभयोगं करोति च ॥ कक्षावृद्धिर्न संदेहो भविष्यति द्विजोत्तम ॥ ८३ ॥ कारके च त्रिकोणस्थे नीचस्थे पापखेचराः ॥ कक्षान्ह्रासो महाप्राज्ञ द्वितयेन भविष्यति ॥ ८४ ॥ कारकांशे त्रिकोणेषु शुभखेटे शुभ स्थले ॥ कक्षावृद्धिर्भवेत्तत्र न संदेहो द्विजोत्तम ॥ ८५ ॥ कारके पापखेटाच्च चांतगे पापसंयुते ॥ कक्षान्ह्रासं भवेत्तत्र प्रणीते द्विजसत्तम ॥८६॥ कारके शुभसंयुक्ते स्वतुंगे शुभखेचराः॥ कक्षावृद्धिर्भवेत्तत्र निर्विशंकं द्विजोत्तम ॥ ८७ ॥ पापकारकगतान्ह्रासवृद्धिर्वा कथिता द्विज ॥ अथैव गुरुणा कक्षान्ह्रासवृद्धी वदाम्यहम् ॥ ८८ ॥ वित्ते व्यये लग्नषष्ठे त्रिकोणे पापयोर्द्विज ॥ कक्षान्ह्रासं भवेत्तत्र पूर्ववद्विजसत्तम ॥ ८९ ॥ गुरौ नीचे ह्यतुंगे च संयुक्तेऽशुभखेचरैः ॥ कक्षान्ह्रासं करोत्येव निर्विशंकं द्विजोत्तम ॥ ९० ॥ वित्तगे च गुरौ ज्ञेयं पूर्ववद्योजयेद्विज ॥ प्रागुक्तार्थंकृते यं च कक्षा सर्वा प्रचक्षते ॥ ९१ ॥ तथैव शुभयोगेषु

चापवादं वदाम्यहम् ॥ उक्तस्थाने शुभैर्योगे पूर्णेन्दुशुक्रयोर्द्विज ॥९२॥ योगप्रकरणे कक्षाह्रासं च न तु वृद्धये ॥ तत्रैकराशिवृद्धिश्च भवत्येव न संशयः ॥ ९३ ॥ पूर्ववदुक्तपापेषु शनिना योगकारकम् ॥ कक्षाह्रासं च तत्रैव यत्रैकं राशिह्रासकृत् ॥ ९४ ॥ अधुना संप्रवक्ष्यामि विशेषेण द्विजोत्तम ॥ आलंब्य स्थिरदशायां च योगान्निधनमेव च ॥ ९५ ॥ शशिनंदपावकाश्वेदित्युक्ता च दशा स्थिरा ॥ चरे स्थिरं द्विःस्वभावेभानुना राशिषु द्विज ॥९६॥ त्रिभिस्त्रिभीराशिरेकं खंडाश्चत्वार एव च ॥ कस्मिन्खंडे च निधनं तस्य योगं विचिन्तयेत् ॥ ९७ ॥ यस्मिन्खण्डे मृत्युयोगस्तस्मिन्खंडे विचिंतितम् ॥ मरणं भवतीत्यर्थं निर्विशंकं वदाम्यहम् ॥ ॥९८॥ योगत्रयमहं वक्ष्ये दीर्घमध्याल्पभेदतः ॥ चतुःखंडेषु यत्रायुरागतं तत्र चिंतयेत् ॥ ९९ ॥ दीर्घायुर्योगवत्तत्तु यस्मिन्खंडे समागते ॥ तस्मिन्खंडे च निधनं भवत्यपि न संशयः ॥ १०० ॥ वक्ष्यमाणप्रकारेण मध्यमल्पायुषि द्विज ॥ निधनाश्रयखंडेषु लक्षणाक्रांतया दशा ॥ १०१ ॥ तद्दशायां च निधनं भवत्येव द्विजोत्तम ॥ कदाचिन्न मृतिस्तत्र क्लेशदुःखभयानिच ॥ १०२ ॥ भवंति तत्र संस्कार्यं पुनरित्थं वदाम्यहम् ॥ पापद्वयमध्यगते राशिपाके मृतिर्भवेत् ॥१०३॥ लग्नाद्वा कारकाद्विप्र पापाक्रांते त्रिकोणगे ॥ द्वादशाष्टमराश्येवं पापाक्रांतं भवेदपि ॥ १०४ ॥ तद्दशायां च निधनं जातकस्य न संशयः ॥ खंडे स्थिरदशायां च चिंतनीयं प्रयत्नतः ॥ १०५ ॥ पापराशेस्त्रिकोणेषु द्वादशाष्टमराशिषु ॥ पापाक्रांते तद्दशायां निधनं भवति ध्रुवम् ॥१०६॥ शुभमध्ये मृतिर्नैव पापमध्ये मृतिर्भवेत् ॥ पुनरपि निधनार्थाय राशिदोषं वदाम्यहम् ॥ १०७ ॥ द्वादशाष्टमयोः पत्योर्दृष्टौ क्षीणेंदुशुक्रयोः ॥

तद्दशायां च निधनं सत्यमेव न संशयः ॥ १०८ ॥ क्षीणेंदोः केवलं दृष्टिः शुक्रदृष्टिश्च केवलम् ॥ दृष्टिमात्रेण निधनं स्थिरदशायां विचिन्तयेत् ॥ १०९ ॥ मृत्युस्थानेन या दृष्टिः पापमध्यर्क्षं पश्यति ॥ तस्या दशां समालोक्य व्योमषष्ठाधिपाद्विज ॥ ११० ॥ निरीक्षिते नवांशेषु द्वयोः स्थाने द्विजोत्तम ॥ तत्रैव निधनं ज्ञेयं भाषितं च तवाग्रके ॥ १११ ॥ पूर्वोक्तनिधनस्थाने महापाकं नरेष्वपि ॥ व्योमषष्ठाधिपौ विप्र तयोरंशे निरीक्षिते ॥ ११२॥ राशेरंतर्दशाकाले निधनं भवति ध्रुवम् ॥ अंतर्दशायांरूपे द्वे निधनस्थानमेव च ॥ ११३ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे आयुर्दायकथनं नाम पंचविंशोऽध्यायः ॥ २५ ॥

## पराशर उवाच ।

अथातः संप्रवक्ष्यामि निधनार्थे विशेषतः ॥ प्रकारांतरदशायास्तच्चरुद्राद्विजसत्तम ॥ १ ॥ लग्नद्यूनाष्टमे शौचे तयोर्मध्ये च यो बली ॥ प्राणीरुद्रः स विज्ञेयः सूर्यादिखेचरो पिऽ च ॥ २ ॥ तयोर्मध्ये बली चिंत्यः शुभदृष्टेन संयुते ॥ दुर्बलः सोपि गौणाख्यो रुद्रग्रह इतीर्यते ॥ ३ ॥ तत्रैव प्राणिरुद्रस्य विशेषं गणयेत्फलम् ॥ प्रवक्ष्यामि तवाग्रे च शृणुष्व त्वं महामते ॥ ४ ॥ शुभैर्युक्ते शुभैर्दृष्टे शुभसंबंधकारकः ॥ प्राणी रुद्रः स विज्ञेयस्तस्याधीनायुरेव च ॥ ५ ॥ रुद्रशूलान्तमायुः स्यात्त्रिकोणांते तथा पुनः ॥ लग्नांते पंचमांते च नवमांते त्रयस्थले ॥ ६ ॥ चिंतनीयं महाप्राज्ञ तत्तद्राशिदशांतरे ॥ अल्पमध्यं च दीर्घायुर्योगभेदा न संशयः ॥ ७ ॥ यत्राल्पायुः समायोगे त्रिकोणमध्यमान्तरे ॥ आयुस्तत्रैव विज्ञेयं तदग्रे च क्रमेण च ॥ ८ ॥ योगे मध्यायुषं प्राप्ते त्रिकोणे मध्यमांतगे ॥ आयुर्दायसमाप्तिश्च निर्विशंकं द्वि-

जोत्तम ॥ ९ ॥ दीर्घायुर्योगसंलब्धे त्रिकोणे नवमांतगे ॥ दशां-
तरे महाप्राज्ञ आयुर्दायसमाप्तये ॥१०॥ अथैव लग्नद्यूनादि आ-
रभ्य च दशाक्रमः ॥ प्रवृत्तिर्जन्मतो ज्ञेया निर्विशंकं द्विजोत्तम
॥ ११ ॥ यत्र रुद्रग्रहस्यापि शुभदत्वं न भाव्यते ॥ तत्र जीवस्य
नष्टत्वान्नेदम्फलमिति स्थितिः ॥ १२ ॥ अथैव रुद्रशूलांतमायुर्दा
येतिकारणे ॥ योगेस्मिंश्च समुत्कर्षात्किंचिद्दर्शयाति द्विज ॥१३॥
प्राणी रुद्रशुभे दृष्टे फलं पूर्वोक्तदायकः ॥ शुभयोगे न संदेहो रुद्रे
शूलांतमायुषि ॥ १४ ॥ स्थित एव फलं जन्म कथितं कारणांत-
रे ॥ निरुक्ते शुभसंयोगे किं कीर्तयति भो द्विज ॥ १५ ॥ पूर्वमेव
फलं साधो समुत्कृष्टे तदेव चेत् ॥ सुतरां तदेव वक्तव्यं निर्विशंकं
द्विजोत्तम ॥ १६ ॥ अनेन पूर्वयोगेन फलं किंचिद्धि न्यूनता ॥
अद्योतितादुक्तकालात्पूर्वं पश्चान्मृतिर्यदि ॥ १७ ॥ निरुक्तयोगश्च
तदा अपवादं वदाम्यहम् ॥ रविं विहाय नितरां पापयोगो भवे-
द्विज ॥ १८ ॥ योगोऽयं निष्फलं वाच्यं पुरा ब्रह्मप्रणोदितम् ॥
इदं फलं न भवति योगेस्मिन्द्विजसत्तम ॥ १९ ॥ नाशयोग-
स्य वक्तव्यं फलं वापि भयंकरम् ॥ अधुना संप्रवक्ष्यामि गौणरु-
द्रस्य वै द्विज ॥ २० ॥ गुणप्रकर्षेण फलं विशेषेण तवाग्रतः ॥
गौणरुद्रे महाप्राज्ञ मंदारेन्दुनिरीक्षिते ॥ २१ ॥ अभावे शुभयो-
गस्य पापयोगांतरे तथा ॥ शूलांतात्फलं विप्रेंद्र आयुर्दायं भव-
त्यपि ॥ २२ ॥ शुभदृष्टे वा शूलांतात्परतायुर्भवेदपि ॥ योगद्वय-
परत्वेन योजनीयं न संशयः ॥ २३ ॥ एतद्योगद्वयं किंचिन्न्यून-
तायामपि द्विज ॥ नेदं फलं प्रवक्तव्यं मैत्रेयाभाषितं पुरा ॥ २४ ॥
शुभदृष्टिभवे चैव योगे च परपूर्ववत् ॥ शुभदृष्टवसंत्या च पापयो-
गाद्यभावतः ॥ २५ ॥ कृत एको हि योगश्च पूर्वयोजनमेव च ॥

अशुभयोगे शुभौ दृष्टौ योगोऽयमपरो द्विज ॥ २६ ॥ पापयोगैरभावे च शुभदृष्टौ च संयुते ॥ कैमुतिकाख्यन्यायेन सिद्धो योगस्तृतीयकः ॥ २७ ॥ पुरा प्रोवाच यच्छंभुस्तवाग्रे कथयाम्यहम् ॥ द्वितीययोजनायां तु शुभदृष्टिसमन्विते ॥ २८ ॥ पापयोगैरभावे च योगः प्रथम उच्यते ॥ पापयोगे महाप्राज्ञ शुभदृष्टेरभावके ॥ २९ ॥ द्वितीययोगपक्षेऽहं पूर्वस्मिन् द्विजसत्तम ॥ पापयोगैरभावेन शुभदृष्टिविवर्जितः ॥ ३० ॥ कैमुतिकाख्यन्यायेन तृतीयो योग उच्यते ॥ अथैव प्राणिरुद्रस्य ह्युक्ता पक्षांतरे कथा ॥ ३१ ॥ तत्रैव प्रथमे योगे शुभदृष्टिविवर्जिते ॥ शुभयोगादियोगश्च द्वितीयोक्तेन योगकृत् ॥ ३२ ॥ तृतीयेन द्वयस्यापि योगभंगं करोत्यपि ॥ अधुनोक्तत्रयाभावे मंदादिदृष्टिमात्रतः ॥ ३३ ॥ एवं स्थिते सुयोगश्च निःशंकं प्रतिपद्यते ॥ अशुभैः खेचरैर्दृष्टे पापयोग इतिस्थितिः ॥ ३४ ॥ शुभयोगविहीने च मन्दारेन्दुनिरीक्षिते ॥ तदायुः परतो विप्र समानादिति योजयेत् ॥ ३५ ॥ प्रथमद्वितीये संतः पातयोगैरभावतः ॥ योगो भंगमपेक्षा च तृतीयोक्तमिदं वदेत् ॥ ३६ ॥ पापदृष्टिमात्रमेवं योगनिर्वाहकारणे ॥ अपवादविहीनेन इत्येवोक्तं तृतीयके ॥ ३७ ॥ प्राणिवागौणरुद्राभ्यां ताभ्यामाश्रितमेव च ॥ गुणविशेष आयुरंतं वक्ष्यामीह महामते ॥ ३८ ॥ गौणरुद्रशुभैर्योगे शुभदृष्टिसमन्विते ॥ रुद्रशूलांतमायुश्च योजनीयं द्विजोत्तम ॥ ३९ ॥ पूर्वोक्तप्राणिरुद्रेण द्वियोगप्राणकेन च ॥ द्वाभ्यां शूलांतमायुश्च तवाग्रे कथितं मया ॥ ४० ॥ अधुना संप्रवक्ष्यामि द्वयोर्निर्वाहकारणे ॥ तयो रूपं भिन्नभिन्नं शृणुष्व मुनिपुंगव ॥ ४१ ॥ प्राणिरुद्रे शुभैर्दृष्टे योगोऽयं द्विजसत्तम ॥ शुभयोगेति का वार्ता शूलांतायुर्वि-

निश्चितम् ॥ ४२ ॥ गौणत्वे शुभैर्दृष्टे योगोऽयं क्लेशदायकः ॥ रोगशोकभयं कर्ता मृत्युं नैव करोति च ॥ ४३ ॥ शुभयोगे महाप्राज्ञ योगोऽयं बलवत्तरः ॥ तस्य शूलांतमायुश्च निर्विशंकं न संशयः ॥ ४४ ॥ उभौ रुद्रौ शुभग्रहे योगदृष्टौ द्वयोरपि ॥ शुभग्रहेण क्लेशश्च रुद्रशूलांतमायुषि ॥ ४५ ॥ प्राणी चाप्राणिरुद्राभ्यां कृतयोगद्वयेन च ॥ तयोर्वा संप्रवक्ष्यामि तवाग्रे द्विजसत्तम ॥४६॥ मार्तंडरहिते चान्यः पापयोगकृते द्विज ॥ योगद्वयं न भवति पातयुक्तं द्वयोरपि ॥४७॥ शुभयोगः शुभैर्दृष्टैरुभयोपि विना रविम् ॥ पापयोगकृते विप्र भययोगो विनश्यति ॥ ४८ ॥ शुभयोगः शुभैर्दृष्टिरभावेन भवत्यपि ॥ यत्रायुः कथयां चक्रुर्वक्तव्यं द्विजसत्तम ॥ ४९ ॥ उभयोः पापयोगे च कश्चिद्रोगार्तिको भवेत् ॥ क्लेशशोकनृपाद्भीतिदेशपर्यटनं द्विज ॥५०॥ शुभदृष्टिह्यभावे च शुभयोगविवर्जिते ॥ पापयोगमभावेन मरणं सारणं दशा ॥ ५१ ॥ शुभयोगदृष्ट्यभावे पापयोगे द्विजोत्तम ॥ पुष्टदशाचलन्नेव सप्रसादो न संशयः ॥ ५२ ॥ अस्मिन्प्रकरणे चैवमुपपत्तौ द्विजोत्तम ॥ शुभवर्गौ पापवर्गौ तवाग्रे कथयाम्यहम् ॥ ५३ ॥ अर्कारमंदफणिनः क्रमात्क्रूरा अथाश्रयम् ॥ चन्द्रोपि क्रूर एवात्र क्वचिदंगारकाश्रयात् ॥ ५४ ॥ गुरुशिखिकविज्ञाश्च यथापूर्वं शुभग्रहाः ॥ क्रूरखेटा महाप्राज्ञ चार्काद्या उत्तरोत्तरम् ॥ ५५ ॥ क्रूराः क्रूरखेटगाश्च क्रूराणि ह्यपवादकम् ॥ शुभक्षेत्रगतैः क्रूराः क्रूरतामुपशाम्यति ॥ ५६ ॥ गुर्वादयः शुभग्रहा यथापूर्वं बुधः कविः ॥ कवितः केतुर्विज्ञेयः केतुतो वाक्पतिर्द्विज॥५७॥क्रमेणैव विजानीयाच्छुभखेटोत्तरोत्तरम् ॥ यथापूर्वं क्रूरग्रहाः क्रूराश्रयसमागते॥५८॥एवं क्रौर्यं समापन्नं क्रौर्यं तु शोभनाश्रयः॥एवं गुर्वादि सौम्याश्च शुभाःश्रे-

यातिशोभनाः ॥ ५९ ॥ क्रूरमध्ये सौम्यखेटाः । सौम्यता लभ्यते क्वचित् ॥ एवमेवापरानुक्तं कथयामि द्विजोत्तम ॥ ६० ॥ प्रत्येकं शुभराशिः स उच्चस्थो वा बुधः शुभः ॥ गुरुशुक्रौ च सौम्यस्थौ ततोऽन्ये च शुभाः स्मृताः ॥ ६१ ॥ पूर्वस्मिन्पापयोगेन योगभंगद्वये द्विज ॥ निरूपितं तवाग्रे च निर्विशंकं न संशयः ॥ ६२ ॥ योगद्वयेपि भंगार्थे पापदृष्टौ विशेषकम् ॥ न दर्शयति कदापि स्यात्तवाग्रे कथयामि वै ॥ ६३ ॥ शुभग्रहैरभावे च मंदारेन्दुनिरीक्षिते ॥ पापयोगे शुभैर्दृष्टे परतश्चायुषि द्विज ॥ ६४ ॥ प्राणिरुद्रेप्यगौणेन शुभयोगविवर्जिते ॥ पापयोगेऽथवा दृष्टे तथा शुभनिरीक्षिते ॥ ६५ ॥ व्यापारतानुविज्ञेया पूर्ववद्द्विजसत्तम ॥ अत्रोपपद्पापाच्च राहोरप्युपलक्षणम् ॥ ६६ ॥ एवं सूर्यातिरिक्तोपि पापयोगमथापि च ॥ तस्यैवेहानुवादाच्च राहोश्चिदुपबृंहणात् ॥ ॥ ६७ ॥ परिग्रहदर्शनाच्च परतो रुद्रपाश्रयात् ॥ शुभस्थाने आयुरंतः शूलत्रयमलंघनात् ॥ ६८ ॥ न तु शूलदशायां च आयुरंतं द्विजोत्तम ॥ एवं शूले चेत्तदंतशूलरीत्येति वार्थके ॥ ६९ ॥ पूर्वोक्तपापयोगेन शुभयोगेन दृष्टितः ॥ कृतयोगद्वयस्यापि भंगार्थे च वदाम्यहम् ॥ ७० ॥ शुभयोगेन वै विप्र पापयोगोऽतिदुर्बलः ॥ शुभदृष्टिकृते योगः पापदृष्टेः कथं क्षमः ॥ ७१ ॥ न भंजनसमर्थस्य कोटियत्नकृते द्विज ॥ शुभकृद्योगभंगार्थे पापयोगमेपेक्षितम् ॥ ७२ ॥ शुभयोगे दृष्टिकृते पापयोगेपि भंजकः ॥ शुभदृष्टिकृते योगः पापयोगो विनश्यति ॥ ७३ ॥ यदायुर्दायमध्यस्थं वेदितव्यं द्विजोत्तम ॥ पापमात्रस्य शूलत्वे प्रथमर्क्षे मृतिर्वदेत् ॥ ७४ ॥ द्वौ रुद्रौ पूर्वं वक्ष्येऽहं यदि एकत्र संस्थिते ॥ मिश्रमध्यमशूलर्क्षे शुभमार्गेऽतिमे मृतिः ॥ ७५ ॥ द्वयोः पापी च

प्रथमे शूले मृत्युर्भवत्यपि ॥ यद्येकरुद्रः पापी च द्वितीयः शुभखेचरः ॥ ७६ ॥ मध्ये शूले मृतिर्विप्र निर्विशंकं भविष्यति ॥ शुभग्रहद्वयं विप्र एकत्र यदि तिष्ठति ॥ ७७ ॥ अंत्यशूले मृतिर्ज्ञेया त्रिशूलिभाषितं पुरा ॥ एवं भेदानुभेदेन ज्ञेयं सर्वत्र बुद्धिमान् ॥ ॥ ७८ ॥ शूलक्षेत्रे च रुद्रौ द्वौ यदि पापोथ वा शुभः ॥ मिश्रग्रहोथ वा विप्र चिंतयेद्बलवत्तरः ॥ ७९ ॥ दीर्घायुरायुर्योगेन भंगाभावे द्विजोत्तम ॥ मृत्युशूलदशायां च पापयोगं विना रविः ॥ ८० ॥ क्रूराश्च येषु क्षेत्रेषु शुभनामाश्रयेषु च ॥ निर्याणमितरेषां तु शुलर्क्षे निर्दिशेदयम् ॥ ८१ ॥ शुभानामत्र पक्षे तु तथा क्रूराश्रयेषु च ॥ तस्मि ञ्जातकशूलर्क्षं मृतिं ब्रूयान्न संशयः॥८२॥ यद्यप्राणीरुद्रयोगे यत्किंचिन्न्यूनता द्विज ॥ तर्हि रुद्राश्रयं तच्च त्रिधा न परतोऽपि च ॥ ८३ ॥ रुद्राश्रयेपि चायुर्दायसमाप्तिर्भवति ध्रुवम् ॥ प्रायेण चिन्तयेद्विप्र पूर्वापरप्रयत्नतः ॥ ८४ ॥ यद्वा अप्राणिरुद्रस्य योगे पूर्णे भवत्यपि ॥ रुद्रशूले परत्वेन आयुर्दायसमाप्तये ॥ ८५ ॥ रुद्राश्रयेण प्रायेण शूलमेकद्वयं त्रयम् ॥ उल्लंघनं कृते विप्र यदि योगविशेषतः ॥ ८६ ॥ तर्हि रुद्राश्रयेप्येवं प्रायेणायुर्भवेद्ध्रुवम् ॥ तावद्वर्षेण कथनं जीवनं जातकस्य च ॥ ॥ ८७ ॥ इत्युक्ते च प्रयाणे च पूर्वं रुद्राश्रयाद्द्विज ॥ आयुर्दायसमाप्तिश्च कष्टयोगादि कारके ॥ ८८ ॥ रुद्राश्रयात्तु ह्येवं हि निरुक्ते आयुषि द्विज ॥ किं भवेद्विशेषरूपं तवाग्रे दर्शयामि चा॥८९॥ मेषलग्ने विशेषेण आयुरुद्राश्रयांतके ॥ कुष्ठरोगादि कुर्वीत पूर्णायुर्न समाप्यते ॥ ९० ॥ द्वंद्वराशौ स्थितौ रुद्रौ प्राणिनौ द्वयेऽपि वा ॥ रुद्राश्रयं तदन्ते वा आयुर्दायं भवत्यपि ॥ ९१ ॥ आयुर्दायोगभेदेन प्रथमे मध्यमोत्तमे ॥ दर्शयामि तवाग्रे च कथां

शंभुप्रणोदिताम् ॥ ९२ ॥ स्वल्पमध्यमदीर्घायुर्योगादिकं वदेद्दि-
ज ॥ तदायुर्दायमल्पादि यथोक्तं कथितं मया ॥ ९३ ॥ स्वल्पायुः
प्रथमे शूले मध्यमायुर्द्वितीयके ॥ दीर्घायुश्च तृतीयांते शूलांते
निधनं भवेत् ॥ ९४ ॥ अधुना संप्रवक्ष्यामि तवाग्रे द्विजनंदन ॥
मृत्युर्मुख्याश्रयीभूतदशायां तद्दशास्वपि ॥ ९५ ॥ ततः फलवि-
शेषार्थं माहेश्वरग्रहं द्विज ॥ लक्षयंति तदाग्रे च तस्मादायुर्विनि-
श्चितम् ॥ ९६ ॥ चिंतयेत्कारके लग्ने अष्टमेशो महेश्वरः ॥ अथै-
वाऽन्यप्रकारेण माहेश्वरं वदाम्यहम् ॥ ९७ ॥ कारके तुंगराशि-
स्थे स ग्रहो बलवत्तरः ॥ रिःफरंध्राधिपो मध्ये सोपि माहेश्वरो
ग्रहः ॥ ९८ ॥ कारकाच्च ग्रहाभावे नाथो माहेश्वरो भवेत् ॥ रि-
ष्फरंध्राधिपो विप्र बले सामान्यतां यदि ॥ ९९ ॥ द्वयं माहेश्वरं
यातो यथा रुद्रग्रहौ द्वयम् ॥ ताभ्यां च निर्णयार्थाय प्रकारान्यद्व
दाम्यहम् ॥ १०० ॥ स्वकारकस्य योगश्चेद्राहुकेतुरविं विना ॥
माहेश्वरो भवत्येव विकल्पेन द्विजोत्तम ॥ १ ॥ कारकस्याष्टमे पा-
पग्रहो माहेश्वरो भवेत् ॥ रविचंद्रौ च चांद्रिश्च गुरुः शुक्रः शनि-
स्तमाः ॥ २ ॥ शिखिना गणनायां च यः षष्ठः कारकग्रहात् ॥
सोऽपि माहेश्वरो ज्ञेयो नवभागसमुच्चयात् ॥ ३ ॥ एवं चार्कवि-
भागश्च राशिव्यवहारोच्चता ॥ तदीयं तृतीयः खेटो रव्यादीनां
महेश्वर ॥ ४ ॥ यद्वा कारकस्थानाच्च षष्ठाधिपलये स्थिते ॥ सोऽ
पि माहेश्वरो ज्ञेयो निर्विशंकं द्विजोत्तम ॥ ५ ॥ माहेश्वरग्रहस्या-
पि ब्रह्मसाहित्यकेन च ॥ ततो ब्रह्मग्रहं वक्ष्ये विशेषेण फलाय वै
॥ ६ ॥ लग्नाद्वा सप्तमाद्वापि रिपुरंध्रव्ययाधिपाः ॥ एतेषु बलवा-
न्विप्र मेषादिविषमस्थिते ॥ ७ ॥ लग्नसप्तमयोर्मध्ये राश्योश्च
बलवान्भवेत् ॥ उच्चैरष्टभागाद्यसंयोगो विद्यमानतः ॥ ८ ॥

एतद्गुणत्रयं युक्तः सोपि ब्रह्मा ग्रहः स्मृतः ॥ [illegible] षष्ठभागं च षट्कं च घूनवादिकम् ॥ ९ ॥ सप्तमस्य षष्ठभागं षट्कन्यादिकं द्विज ॥ बलवान्विषमस्थोपि ब्रह्मा खेटः स उच्यते ॥ ११० ॥ ब्रह्मणा लक्षणाक्रांते बलवान्वापि पातयोः ॥ शनिराहुमयो केतुर्यदि षष्ठो ग्रहो द्विज ॥ ११ ॥ रव्यादिगणनायां च शन्यादौ तृतीयो ग्रहः ॥ स्थानात्षष्ठराशिगे च षष्ठराश्यधिपोऽथवा ॥ १२ ॥ सोपि ब्रह्मा ग्रहो ज्ञेयो निर्विशंकं द्विजोत्तम ॥ बहुना ब्रह्मणाक्रांते किं ग्रहं ग्राह्यमाणकः ॥ १३ ॥ इति संदेह निर्णीतं तवाग्रे कथयामि च ॥ द्वित्र्यादि ग्रहाणां च योगो ब्रह्मेति लक्षितः ॥ १४ ॥ योगः स्वजातिर्यो ग्राह्यः कारकं जातियो ग्रहः ॥ बहूनामधिको भागः सोऽपि ब्रह्मा ग्रहोच्यते ॥ १५ ॥ राहोर्ब्रह्मत्वयोगेन अधिकारी यदा भवेत् ॥ विपरीतं विजानीयात्सर्वेषु न्यूनभागके ॥ ॥ १६ ॥ इत्येकपापे पूर्वोक्तं ब्रह्मणा ग्रहकारकात् ॥ रन्ध्राधीशोष्टमस्थो वा जात्यप्राणैक्यवाक्यतः ॥ १७ ॥ द्वौ ब्रह्मा विपरीतार्थे ह्यथवा बहुब्रह्मणा ॥ सामान्यभागांतरे हि कतमो ग्राह्यमाणकः ॥ १८ ॥ सर्वे भागसमानास्तु अग्रहात्सग्रहो बली ॥ इति न्यायेन विज्ञेयं बलवान् ब्रह्मणोच्यते ॥ १९ ॥ ब्रह्मत्वेन प्रधानेन ब्रह्मकार्यं करोत्यपि ॥ स च ब्रह्मा ग्रहो ग्राह्यः पुरा शंभुप्रणोदितः ॥ १२० ॥ अधुना संप्रवक्ष्यामि ब्रह्ममाहेश्वरौ ग्रहौ ॥ विशेषेण फलं ब्रूयात्तवाग्रे द्विजनंदन ॥ २१ ॥ ब्रह्मा ग्रहाश्रितेशः स्याद्दशादिपरिचिंतयेत् ॥ माहेश्वरर्क्षपर्यन्तं जातकस्यायुषि द्विज ॥ २२ ॥ तत्तद्राशित्रिकोणेषु राशिरंतर्गते स्थितिः ॥ चरञ्च स्थिरपर्यन्तं दशायां चिंतयेद्द्विज ॥ २३ ॥ तथा [illegible]दशायां च आयुर्दायं विलोकयेत् ॥ [illegible]

योजयेत् ॥ २४ ॥ माहेश्वरस्य यो राशिरष्टमेशाश्रयी द्विज ॥ तद्राशित्रिकोणेषु राशिरंतर्गते मृतिः ॥ २५ ॥ अत्राब्द इति निर्देशात्तद्राशिदशाक्रमः ॥ अब्दा द्वादशधा भागे अंतरैकैकराशि च ॥ २६ ॥ एकैकोब्दांतरदशा विज्ञेया गणिताग्रणीः ॥ द्वादशाल्पे च आधिक्ये भानुना भागं दापयेत् ॥ २७ ॥ प्रासेंतरदशा ज्ञेया न्यूनाधिक्यं न जायते ॥ अब्दानां द्वादशाधिक्ये भानुराश्यंतरं दशा ॥ २८ ॥ दशाब्दे द्वादश न्यूनं यस्मिन् राशौ दशा द्विज ॥ भागद्वादशमध्ये च समासं तदनंतरम् ॥ २९ ॥ महादशाक्रमेणैव चालनीयेति ज्ञापितम् ॥ अर्कभागेंतरदशानयनं द्विजसत्तम ॥ १३० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे रुद्रमाहेश्वरब्रह्मग्रहलक्षणकथनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## अथ पित्रादिनिर्याणमाह ।

अधुना संप्रवक्ष्यामि पित्रादेश्च द्विजोत्तम ॥ योगं निर्याणकाख्यातं यथा शंभुपुरोदितम् ॥ १ ॥ लग्नसप्तमयोर्मध्ये यो राशिर्बलवान्द्विज ॥ तस्य राशेः समारभ्य क्रमेण पूर्ववद्द्विज ॥ २ ॥ प्रवर्तकदशारीत्या रुद्रशूलदशांतरे ॥ भविष्यति पितुर्मृत्युर्निर्विशंकं द्विजोत्तम ॥ ३ ॥

## अथ मातुर्निर्याणम् ।

लग्नाद्वा सप्तमाद्वाऽपि बलिराशिचतुर्थकः ॥ तस्याः शूलदशायां च मातुर्मृत्युर्न संशयः ॥ ४ ॥

## भ्रातृनिर्याणम् ।

लग्नाद्वा सप्तमाद्वाऽपि बली बलीशेतृतीयकम् ॥ तस्याः शूलदशायां च [illegible] ॥ ५ ॥ [illegible]

## भगिनीभगिनीपुत्रनिर्याणमाह ।

लग्नाद्वा सप्तमाद्वापि राशिपंचमके बली ॥ तस्याः शूलदशायां च निर्याणं भगिनिपुत्रयोः ॥ ६ ॥

## ज्येष्ठभ्रातुर्निर्याणम् ।

लग्नाद्वा सप्तमाद्वापि एकादशे बली द्विज ॥ तस्याः शूलदशायां च निर्याणं ज्येष्ठभ्रातृकम् ॥ ७ ॥ लग्नाद्वा सप्तमाद्वापि नवराशिबली द्विज ॥ निर्विशङ्कं भवेत्तस्य शंभुनाकथितं पुरा ॥ ८ ॥ मातापित्रोः कारकाभ्यां चिंतयेत्पूर्ववद्द्विज ॥ तदायुर्निधनं चापि दीर्घादीनां प्रभेदतः ॥ ९ ॥ भानुभार्गवयोर्मध्ये सद्वीर्यमधिको द्विज ॥ ग्रहादित्यादिरीत्या च स खेटः पितृकारकः ॥ १० ॥ चंद्रमंगलयोर्मध्ये तथैव रविशुक्रयोः ॥ बलेन रहितः सोपि पापग्रहनिरीक्षितः ॥ ११ ॥ पित्रादिकतां भजते यथाक्रमं द्विजोत्तम ॥ उभयोर्बलसाम्ये च ह्युभौ पुत्रादिकारकौ ॥ १२ ॥ द्विविधं चिंतयेत्तत्र प्राण्यप्राणिविभेदतः ॥ पित्रादिकारकस्यैवं प्राणीफलं वदाम्यहम् ॥ १३ ॥ पित्रादिकारके विप्र शुभग्रहनिरीक्षिते ॥ मातृकारकाश्रयीभूतराशिरेतत्त्रिकोणगे ॥ १४ ॥ दशायां निधनं वाच्यं मातापित्रोरथ त्रयम् ॥ अथ प्राणिकारकस्य तत्राग्रे कथितं फलम् ॥ १५ ॥ अप्राणिकारकस्यैवमष्टमेशो बलान्वितः ॥ तस्याश्रयीभूतराशित्रिकोणे निधनं भवेत् ॥ १६ ॥ यदा रंध्रे स वीर्याढ्यं तच्छूले निधनं द्विज ॥ पितृमातृकारके च शूले निधनमेव च ॥ १७ ॥ यद्वा प्राणिकारकस्य एवं ऋक्षांतरेपि च ॥ फलं वै निर्दिशेद्विप्र परं तद्भावनायके ॥ १८ ॥ अप्राणिकारकफलं निर्दिशेद्व्ययमे द्विज ॥ सर्वे प्रकारा इत्येवं चिंतये[illegible] ॥ १९ ॥ [illegible] द्विज ॥ [illegible] आयु-

दायं च पूर्ववत् ॥२०॥ राश्यादौ निर्णयं चादौ तद्विशेषफलाय वै ॥ तन्वादिव्ययभावेषु भावं तत्तत्समुचितम् ॥ २१ ॥ तत्तत्कारकमाश्रित्य राश्यारूढं विचिंतयेत् ॥ द्वारबाह्यादिकं सर्वं राश्याद्यं द्विजसत्तम ॥ २२ ॥ अधुना संप्रवक्ष्यामि पितुर्निधनहेतवे ॥ विशेषकं दर्शयंति पुनरुक्तं च वै द्विज ॥ २३ ॥ रविर्ज्ञेयः क्रियायोगे लग्नाद्रिष्फर्क्षगे स्थितौ ॥ बुधसूर्याश्रयीभूतलग्नमेषे दशान्तरे ॥ २४ ॥ लग्नभूतस्य मेषस्य सिंहस्यापि दशांतरे ॥ वक्तव्यं पितृनिधनं निर्विशंकं द्विजोत्तम ॥ २५ ॥ लग्ने यदि पापखेटा मेषराशौ रविस्तथा ॥ योगे मेषमहापाके वापिरंतर्गते मृतिः ॥२६॥ अधुना संप्रवक्ष्यामि तवाग्रे द्विजनंदन ॥ बाल्ये च पित्रोर्मरणं मयोक्तं च विशेषतः ॥ २७ ॥ पित्रोः कारकयोर्विप्र प्राण्यप्राणिहीनोपि वा ॥ व्यर्कांते पापयोगे च शुभयोगविवर्जिते ॥ २८ ॥ दशाब्दान्यूनमित्येवं पित्रोर्मृत्युर्यथाक्रमम् ॥ रविदृष्टाशुभं दृष्टौ नायं योगो द्विजोत्तम ॥ २९ ॥ रव्यारूढविलग्नेस्मिन्पित्रोर्भावं विचारयेत् ॥ तद्दशायां फलं वाच्यं पित्रोर्दुःखसुखादिकम् ॥ ३० ॥

## अथ कलत्रनिधनमाह ।

कलत्रकारकः खेटस्तदा स्त्रीराशिचिंतनम् ॥ तत्रिकोणदशायां च कलत्रनिधनं भवेत् ॥ ३१ ॥

## अथान्यनिधनमाह ।

तत्तत्कारकाश्रये च त्रिकोणर्क्षदशांतरे ॥ तेषां च मातुलादीनां निधनं भवति ध्रुवम् ॥ ३२ ॥ एवं भावकलत्रादितद्दशारूढयंत्रके ॥ चिंतयेदायुः सामर्थ्यं सर्वं फलसमानकम् ॥ ३३ ॥ लग्नाच्च कारकाद्वापि तृतीये पापखेचरे ॥ युते दृष्टेथ वा विप्र दुष्टं मरणमुच्यते ॥ ॥ ३४ ॥ तत्तत्कारकतद्दीशात्तृतीये पापयोगकृत् ॥ तेषां तेषां

प्रवक्तव्यं दुष्टं मरणमेव च ॥ ३५ ॥ तत्तद्भावात्कारकेशास्तृतीये शुभदृष्टियुक् ॥ तेषां तेषां शुभैर्योगैर्मरणंभवति द्विज ॥ ३६ ॥ शुभाशुभद्वये योगे दृष्टौ वापि तृतीयगे ॥ शुभाऽशुभात्मकं विप्र मरणं भवति ध्रुवम् ॥ ३७ ॥

## अथ मरणनिमित्तान्याह ।

तृतीये भानुना दृष्टे तथा युक्ते बलाढ्यके ॥ राजहेतोश्च मरणं निर्विशंकं द्विजोत्तम ॥ ३८ ॥ तृतीयचंद्रेण युते षष्ठे वा पश्यतो मृतिः ॥ तृतीयशनिराहुभ्यां दृष्टे वापि युतेथ वा ॥ ३९ ॥ विषार्तिमरणं वाच्यं जलाद्वा वह्निपीडनात् ॥ गर्तादुच्चात्प्रपतनं बंधने वा मृतिर्भवेत् ॥ ४० ॥ तृतीये चंद्रमांदी च षष्ठे वापि युते द्विज ॥ कृमिकुष्ठादिना सत्वं मरणं च विनिर्दिशेत् ॥ ४१ ॥ तृतीयं गुरुणा दृष्टे युक्ते शोकादिना मृतिः ॥ तृतीये भृगुयुग्दृष्टे मेहरोगेण वै मृतिः ॥ ४२ ॥ बहुयुक्ते तृतीये च बहुरोगयुतो मृतिः ॥ तृतीये तु तत्खेटाश्च योगे दृष्टियुतेथ वा ॥ ४३ ॥ तथैव चन्द्रयोगे च तत्तद्रोगेण वै मृतिः ॥ अनेन योगभावेन तस्य मृत्युं सुनिश्चितम् ॥ ४४ ॥

## अथ निधनदेशभेदमाह ।

तृतीये शुभयोगेन शुभदेशे मृतिर्भवेत् ॥ पापेन कीकटे देशे मिश्रे मिश्रस्थले मृतिः ॥ ४५ ॥ तृतीये गुरुशुक्राभ्यां योगे ज्ञानेन वै मृतिः ॥ गुरुशुक्रातिरिक्तान्ययोगे शिथिलता मृतिः॥४६॥ मिश्रे मिश्रा मृतिरिति एवं कर्माणि विप्र भोः ॥ कर्मभावे विशेषेण फलदाता द्विजोत्तम ॥ ४७ ॥ लग्नद्वादशमध्ये च शन्यादित्रितयग्रहाः ॥ स्थिते पित्रोर्न संस्कारं कुर्वीत निजहस्ततः ॥ ४८ ॥ लग्नादीनां च भावानां पूर्वार्द्धं द्वादशादिकम् ॥ परार्द्धं

स्थितमन्यादि वीक्षितेपि न संशयः ॥ ४९ ॥ लग्नादि यस्य मध्ये तु शुभग्रहनिरीक्षिते ॥ नामयोगं विजानीयात्पुरा शंभुप्रणोदितम् ॥ ५० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे निधनकथनं नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

## पराशरउवाच ।

अथातः संप्रवक्ष्यामि राजयोगादिकं परम् ॥ ग्रहाणां स्थानभेदेन राशिदृष्टिवशात्फलम् ॥ १ ॥ तपःस्थानाधिपो मंत्री मंत्राधीशो विशेषतः ॥ उभावन्योन्यसंदृष्टौ जातश्चेदिह राज्यभाक् ॥ ॥ २ ॥ यत्र कुत्रापि संयुक्तौ तौ वापि समसप्तमौ ॥ राजवंशोद्भवो बालो राजा भवति निश्चितम् ॥३॥ वाहनेशस्तथा माने मानेशो वाहने स्थितः ॥ बुद्धिधर्माधिपाभ्यां तु दृष्टौ चेदिह राज्यभाक् ॥ ४ ॥ सुतेशकर्मेशसुखेशलग्ननाथा यदा धर्मपसंयुताश्चेत् ॥ नृपोन्तरश्चेदिह वारणाढ्यः स्वतेजसा व्याप्तदिगंतरालः ॥ ५ ॥ सुखकर्माधिपौ चैव मंत्रिनाथेन संयुतौ ॥ धर्मेशेनाथ वा युक्तौ जातश्चेदिह राज्यभाक् ॥ ६ ॥ सुतेश्वरो धर्मपसंयुतश्चेल्लग्नेश्वरेणापि युतो विलग्ने ॥ सुखेथ वा मानगृहेथ वा स्याद्राज्याभिषिक्तो यदि राज्यवंशः ॥ ७ ॥ धर्मस्थाने गुरुक्षेत्रे स्वगृहे भृगुसंयुते ॥ पंचमाधिपसंयुक्ते जातश्चेदिह राज्यभाक् ॥ ८ ॥ निशार्द्धाच्च दिनार्द्धाच्च परं सार्द्धद्विनाडिका ॥ शुभो तदुद्भवो राजा धनी वा तत्समोपि वा ॥ ९ ॥ चंद्रः कविं कविश्चन्द्रं पश्यत्यपि तृतीयगः ॥ शुक्राच्चंद्रे ततः शुक्रे तृतीये वाहनार्थवान् ॥ १० ॥

## अथ द्वादशयोगमाह ।

लग्नवित्तौ स्वदुश्चिक्यौ त्रितुर्यौ तुर्यपंचमौ ॥ द्विषात्मजौ षष्ठमारौ स्मरन्ध्रौ मृतिभाग्यकौ ॥ ११ ॥ धर्मकर्मौ खलाभौ च

रिष्फलाभौ तनुव्ययौ ॥ पुष्कला लाभयोगाश्च राजमृत्यं चमूपकम् ॥ १२ ॥ अमात्यं दारुणं कर्म राजयोगं प्रियामृतिम् ॥ भाग्यव्ययं राजयोगं भूमिद्रव्यमृणव्ययम् ॥ १३ ॥ वित्तहानिर्द्वादशैते योगा वै सर्वदा स्मृताः ॥ १४ ॥

## अथ चतुर्विधसंबंधमाह।

प्रथमः स्थानसंबंधो दृष्टिजस्तु द्वितीयकः ॥ तृतीयस्त्वेकतो दृष्टिः स्थित्येकत्र चतुर्थकः ॥ १५ ॥ अन्योन्यगौ तथा स्वे स्वे संयुतावन्यभे स्थितौ ॥ पूर्णेक्षितौ मिथो वापि चैकवर्गगतौ यदा १६

## अथाग्रे राजाऽमात्ययोगादिबाधकमाह।

तदा योगो भवेत्तत्र विबलो नैव योऽसकृत् ॥ शत्रुयुक्तेक्षितो पापवीक्षितौ नैव योगकृत् ॥ व्ययमृत्युषडायस्थावथ वा समसंयुतौ ॥ १७ ॥ यदाऽधीशौ तदाप्यत्र भवतो नैव योगकृत् ॥ राजामात्यादियोगानां नश्यंति वक्रगावपि ॥ १८ ॥

## अथ पारिजातादिशुभाशुभविचारमाह।

त्रिषडायाष्टरिष्फेशाः पारिजाते व्यवस्थिताः ॥ दायकान्यभवे भावे यत्र ये ये विचारिताः ॥१९॥ द्वितीये चोत्तमास्ते ते तृतीये चान्यदा मताः ॥ चतुर्थे ते च राजानः पंचमे गुरवो मताः ॥ २० ॥ भूदेवाश्च तथा षष्ठे देवा ज्ञेयाश्च सप्तमे ॥ अष्टमे पशवो ज्ञेया दुःखदाश्चात्र जन्मनि ॥ २१ ॥ दुःस्था ६ । ८ । १२ श्चैव भवंत्येते तदा तेनैव बाधकाः ॥ केंद्रकोणस्थिताश्चैव बाधकात्र भवे भवेत् ॥ २२ ॥ विषमे च भवेत्स्त्रीणां समे वै पुरुषोमतः ॥ षष्ठे वै चोरितं द्रव्यं ह्यष्टमे हननं कृतम् ॥ २३ ॥ हननं हरणं रिष्फे तृतीये कैतवं कृतम् ॥ पौंश्चल्यं बंधने प्रोक्तं कृतघ्नत्वं भवेत्कृतम् ॥ २४ ॥

## अथ पारिजातादिफलमाह ।

तन्वीशः पारिजातस्थस्तदा दाता भवेन्न हि ॥ उत्तमे चोत्तमो दाता गोपुरे पुरुषत्वयुक् ॥ २५ ॥ सिंहासने भवेन्मान्यः शुरः पारावतांशके ॥ सभासदो देवलोके द्वितीये च मुनिर्मतः ॥ २६ ॥ ऐरावते गजे दृष्टो दिग्योगो न भवेद्धुवम् ॥ रथे ४ शो वापि जायेशो राज्येशोप्येवमेव हि ॥ २७ ॥ पारिजाते सुताधीशो विद्या चैव कुलोचिता ॥ उत्तमे चोत्तमा विद्या गोपुरे भवनांकिता॥२८॥ सिंहासने तथा वाच्यं साचिव्येन युता तथा ॥ पारावते तथा वाच्यं ब्रह्मविद्यासमन्वितम् ॥२९॥सुतेशे देवलोकस्थे कर्मयोगान्वितं भवेत् ॥ उपासना द्वितीये स्याद्भक्तिस्त्वैरावतो भवेत् ॥ ३० ॥ धर्मेशे पारिजातस्थे तीर्थकृत्त्वत्र जन्मनि ॥ पूर्वेपि मनुजो वाच्यो ह्युत्तमे चोत्तमो भवेत् ॥ ३१ ॥ गोपुरे मखकर्ता च परे चैवात्र जन्मनि ॥ सिंहासने भवेद्वीरः सत्यवादी जितेंद्रियः ॥ ३२ ॥ सर्वधर्मपरित्यागी धर्मैकपदमाश्रितः ॥ पारावते परे चैव हंसश्चैवात्र जन्मनि ॥ ३३ ॥ लगुडी पितृदंडी स्याद्देवलोके न संशयः ॥ द्वितीये चंद्रपदं गच्छे कृत्वा वै हयमेधकम् ॥ ३४ ॥ ऐरावते तु धर्मात्मा स्वयं धर्मो भविष्यति ॥ श्रीरामः कुंतिपुत्रो वा द्वितीयो न भविष्यति ॥ ३५ ॥ पारिजातादिनां वाच्यं फलमेवैकसंस्थितम् ॥

## अथ विशेषयोगफलमाह ।

अथ योगफलं ब्रूमो ज्ञातव्यं च विशेषतः ॥ ३६ ॥ लक्ष्मीस्थानं त्रिकोणं च विष्णुस्थानं च केन्द्रकम् ॥ तयोः संबंधमात्रेण राजयोगादिकं भवेत् ॥ ३७ ॥ केन्द्रपुत्रेशयोर्योगे योगोमात्याभिधो भवेत् ॥ पारिजातादिके तौ च तदा तत्प्रबलं भवेत् ॥ ३८ ॥ लग्नेशेन धनेशाद्यान्नेव योगः सुखाधिपात् ॥ मंत्रेशोऽमात्यतां

याति सप्तमाधीशयोगतः ॥३९॥ कर्मेशस्य तु योगेन राजा साचिव्यतामियात्॥ केंद्रधर्मेशयोर्योगे राजा वै राजवंदितः ॥४०॥ धर्मकर्माधिपौ चैव व्यत्यये तावुभौ स्थितौ ॥ युनक्ति चेत्तदा राज्यं सर्वसौख्यसमन्वितम्॥ ४१ ॥ पारिजाते स्थितौ तौ तु नृपो लोकानुशिक्षकः ॥ उत्तमे चोत्तमो भूपो गजवाजिरथादिमान् ॥ ॥ ४२ ॥ गोपुरे नृपशार्दूलो नृपैश्चांघ्रिप्रपूजितः ॥ सिंहासने चक्रवर्ती सर्वक्षोणीप्रपालकः ॥ ४३ ॥ अस्मिन्योगे हरिश्चंद्रो मानवश्चोत्तमस्तथा ॥ बलिर्वैश्वानरो राजा अन्ये चैव तु चक्रपाः ॥ ॥ ४४ ॥ कलियुगे च भविता तथा राजा युधिष्ठिरः ॥ भविता शालिवाहश्च तथा विजयाभिनंदनः ॥ ४५ ॥ नागार्जुनस्तथा भूपस्तदन्ये चैव गोपुरे ॥ पारावतांशकेन्ये च जाता मन्वादयस्तथा ॥ ४६ ॥ देवलोके तु प्रथमे हरेश्चैवावतारणम्॥ मत्स्यादिकल्किपर्यन्ताः सर्वे वर्गोद्भवा मताः ॥४७॥ द्वितीये देवलोके तु ज्ञेयाश्चेंद्रादयः परे ॥ ऐरावते च प्रथमे जातः स्वायंभुवो मनुः॥४८॥ एवं सर्वप्रकारेण ज्ञात्वा चैव विचक्षणः ॥ कोणकेन्द्रादिनाथानां योगः सर्वविधायकः ॥ ४९ ॥ चतुःकेन्द्राधिपौ द्वौ च कोणपौ च धनाधिपः ॥ ऐरावतादिसंस्थास्तेऽकुर्वँल्लोकोत्तरोत्तरम्॥ अनेनैव प्रकारेण वेत्ति सर्वत्र बुद्धिमान्॥ ५० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे राजयोगादिविचारकथनं नामाऽष्टाविंशोऽध्यायः ॥ २८ ॥

## पराशर उवाच ।

अथातः संप्रवक्ष्यामि राजयोगान्द्विजोत्तम।येषां विज्ञानमात्रेण नृपाणां पूज्यभाग्भवेत्॥१॥ये ये योगाः पुरा शंभुभाषिताः शैलजाग्रतः॥तेषां सर्वमहं वक्ष्ये तवाग्रे द्विजनन्दन ॥२॥ चिंतयेत्कारके

लग्ने जनुर्लग्नेथ वा द्विज ॥ राजयोगप्रदातारौ लग्नौ द्वौ प्रणतोदितम् ॥३॥ आत्मकारकपुत्राभ्यां राजयोगं प्रकल्पयेत् ॥ तनुपंचमनाथाभ्यां तथैव द्विजसत्तम ॥४॥ विलग्नात्पंचमाधीशः पुत्रात्मकारकद्वयोः ॥ विप्रसंबंधयोगेन ज्ञेया वीर्यबलान्विताः ॥ ५ ॥ लग्नेथ सप्तमे वापि लग्नेशे सप्तमाधिपे ॥ पुत्रात्मकारकौ विप्र लग्ने वा सप्तमेपि च ॥ ६ ॥ संबंधे वीक्षिते तत्र दृष्टेवं पंचमाधिपे ॥ उच्चता च नवांशस्थे शुभग्रहनिरीक्षिते ॥ ७ ॥ महाराजेति योगोयं सोत्रजातः सुखीनरः ॥ गजवाजिरथैर्युक्तः सेनासंगमनेकधा ॥ ८ ॥ भाग्येशात्कारके लग्ने पंचमे सप्तमेपि वा ॥ राजयोगप्रदातारौ गजवाजिधनैरपि ॥ ९ ॥ कारकाद्विचतुर्थे च पंचमे भावगे द्विज ॥ शुभखेटौ न संदेहो राजयोगं ददाति च ॥ १० ॥ कारकात्तृतये षष्ठे राश्योरुभयपापयुक् ॥ राजवंशोद्भवो विप्र राजयोगस्तथा भवेत् ॥ ११ ॥ लग्नाधीशाद्द्युननाथाद्धने तुर्ये च पंचमे ॥ शुभखेटयुते विप्र राजा च भवतिद्ध्रुवम् ॥ १२ ॥ तृतीये षष्ठभे पापे राजा च भवतिध्रुवम् ॥ योगद्वये शुभे पापे कथं स्यात्फलनिश्चयः ॥ १३ ॥ न दरिद्री भवेज्जीवो न राजा जायते द्विज ॥ समानकुलजं प्राज्ञ प्रतिष्ठा गौरवान्वितम् ॥ १४ ॥ कारके पंचमे शुक्रः सितेन्दुयुतवीक्षितः ॥ तन्वारूढपदे लग्ने राजवर्गो भवेन्नरः ॥१५॥ जन्मांगे वापि कालांगे लिप्तांगे खेचरेक्षिते ॥ रव्यादयस्त्रयस्थाने राजयोगप्रदायकाः ॥१६॥ जन्मांगे च हि होरांगे कुलांगे येन केन चित् ॥ रव्यादिदृष्टिमात्रेण स राजा भवति ध्रुवम् ॥ १७ ॥ स्वक्षेत्रे तु नवांशे वा द्रेष्काणे भानुजादयः ॥ लग्नं च सप्तमं विप्र पश्यंति राजयोगकृत् ॥ १८ ॥ पूर्णदृष्टे पूर्णयोगमर्द्धं चार्द्धं विधीयते ॥ पादेन पादयोगं च राजयोगमिदं क्रमात् ॥ १९ ॥ षट्कुंड-

स्यांतरे विप्र पश्यंति भास्करादयः ॥ राजयोगप्रदातारो निर्विशंकं द्विजोत्तम ॥ २० ॥ लग्नस्थाने पूर्णदृष्ट्या सप्तमे स्वल्पवीक्षिते ॥ स्वल्पराज्यप्रदो विप्र षड्लग्नेषु विचिंतयेत् ॥ २१ ॥ एवं नवांशकुंडल्यां द्रेष्काणेपि विचिन्तयेत् ॥लग्नसप्तमयोः खेटो राजयोगप्रदायकः ॥ २२ ॥ उच्चग्रहे राजयोगो लग्नद्वयमथापिचेत ॥ राशेर्द्रेष्काणतोंऽशाच्च राशेरंशादथापि वा ॥ २३ ॥ यद्वा राशिदृकाणाभ्यां लग्ने दृष्टे तु योगतः ॥ प्रायेणेदं जातकं तु प्रभूणामेव दृश्यते ॥ २४ ॥ जन्मकालघटीलग्नएकेनैव निरीक्षिते ॥ उच्चारूढे तु संप्राप्ते चंद्राक्रांते विशेषतः ॥ २५ ॥ क्रांते वा गुरुशुक्राभ्यां केनाप्युच्चग्रहेण वा ॥ दुष्टार्गलाग्रहाभावे राजयोगो न संशयः ॥ ॥ २६ ॥ शुभारूढे तत्र चंद्रे धने देवगुरुस्तथा ॥ उच्चदृष्टे ग्रहे वाथ ह्युच्चखेटे तथा ग्रहे ॥ २७ ॥ राजयोगप्रदाता च निर्विशंकं द्विजोत्तम ॥ यत्र येपि शुभारूढे चंद्रे सति समानकम् ॥ २८ ॥ उच्चग्रहे राजयोगो लग्नद्वयमथापि वा ॥ आरूढमवलंबाश्च योग वाहनदाः स्मृताः ॥ २९ ॥ शुक्राच्चंद्रे ततः शुक्रे तृतीये वाहनार्थवान् ॥ अन्योन्यं पश्यतो विप्र दैत्याचार्यनिशाधिपो ॥ ३० ॥ आरूढेपि तृतीयस्थे तथा संबंधकारकः ॥ जन्मलग्नेपि संयोगे जायते वाहनार्थवान् ॥ ३१ ॥ शुभे लग्ने शुभे त्वर्थे तृतीये पापखेचरैः ॥ चतुर्थे तु शुभे प्राप्ते राजा वा तत्समोपि वा ॥ ३२ ॥ उच्चो वा हरिणांको वा जीवो वा शुक्र एव वा ॥ एको बली धनगतः श्रियं दिशति देहिनः ॥ ३३ ॥ लग्नं पश्यंति ये खेटास्ते सर्वे शुभदायिनः ॥ नीचखेटोपि लग्ने चेत्पश्येद्राजाप्रकीर्तितः ॥ ॥ ३४ ॥ षष्ठाष्टमे तृतीये च लाभे संबंधनीचकृत ॥ यद्ग्रहः पश्यते लग्नं राजयोगप्रदायकः ॥ ३५ ॥ राजयोगो जन्मलग्नं पश्येदुच्चप्र-

ह्रो यदि ॥ षष्ठाष्टमगते नीचे लग्ने पश्यति योगकृत् ॥ ३६ ॥ षष्ठाष्टमाधिपे नीचे लग्नं पश्यति वाथ वा ॥ तृतीये लाभगे नीचे लग्नं पश्यति राज्यदः ॥ ३७ ॥ षष्ठाष्टमाधिपौ खेटौ शुभौ यौ कौ च नाश्रितौ ॥ पश्यतो जन्मलग्नं च राजयोगमुदाहृतम् ॥ ३८ ॥ चरे तु पंचमे षष्ठे स्थिरेषु नवमे द्विज ॥ उभये केंद्रसंदृष्टे राजयोगप्रदायकः ॥ ३९ ॥ चतुर्थे शुभखेटश्चेद्राजयोगः प्रकीर्तितः ॥ बलयुक्तचतुर्थोपि राजादिषु यथोत्तरम् ॥ ४० ॥ चरे तुर्ये स्वल्पफलं स्थिरे तुर्ये च मध्यमम् ॥ द्विःस्वभावे पूर्णफलं राजयोगप्रदायकः ॥ ४१ ॥ अग्रहात्सग्रहो ज्यायानितिरीत्या विचिंतयेत् ॥ उच्चयुक्तो ग्रहः कश्चिल्लाभगो वा चतुर्थगः ॥ ४२ ॥ धनस्थितो वा लग्नं चेत्पश्येद्वाहनकारकः ॥ राजयोगाद्यभावे तु धनधान्यविनिर्णयः ॥ ॥ ४३ ॥ शुभपापदृशा लग्ने ततः केन्द्रादियोगतः ॥ यस्य लग्नांशके सौम्याः प्राबल्यं तस्य निश्चितम् ॥ ४४ ॥ कुबेरश्च पतंगश्च ह्रालांशश्च किरीटकः ॥ विह्वलांशसमायांशमोहनः किन्नरांशकः ॥ ४५ ॥ भुजंगेन्द्रांशकौ लीलाकोकिलांशोत्तमः स्मृतः ॥ राशीनां द्वादशांशेषु ग्रहस्थित्या फलं वदेत् ॥ ४६ ॥ केन्द्रांशाश्चेषु शुभदा राजयोगफलप्रदाः ॥ द्विषडष्टैकादशांशा मध्यमाः परिकीर्तिताः ॥ ४७ ॥ अन्येशास्त्वधमा ज्ञेया एवमंशविनिर्णयः ॥ ग्रहाणां चैव लग्नानामंशगत्यां फलं वदेत् ॥ ४८ ॥ लग्नगेष्वंशगेष्वेषु जायते यदि मानवः ॥ यस्य जन्मनि चंद्रो वा युक्तः स्वांशेषु संस्थितः ॥ ४९ ॥ तस्यैते कथिता योगाः सफलाः परिकीर्तिताः ॥ पूर्ण न्यूनफलं विप्र ग्रहयुक्तानुसारतः ॥ ५० ॥

## अथ राजचिह्नयोगानाह ।

कारकात्तुर्यभावस्थौ सितेंदू द्विजसत्तम ॥ आदावंते विशेषश्च

राजचिह्नेन संयुतः ॥ ५१ ॥ ध्वजा वा दुंदुभेर्नादास्तिष्ठंति च दि-
वानिशम् ॥ सर्वेषां चैव योगानामविरुद्धा विचिंतयेत् ॥ ५२ ॥

## अथ धीयोगानाह।

कारके वा तथारूढे त्रिषष्ठे चागता ग्रहाः ॥ वीक्षंति कारका-
ल्लग्नं मातृनाथेन दृष्टियुक् ॥ ५३ ॥ बुद्धिमाञ्जायते बालस्तीव्रबु-
द्धिर्विचक्षणः ॥ तथा तृतीयखेटेशौ कारक लग्नौ वीक्षते ॥ ५४ ॥
तथापि पूर्ववद्योगात्सुधीमाञ्जायते नरः ॥ शास्त्रवेत्ता कविर्दक्षो
भवत्यत्र न संशयः ॥ ५५ ॥

## अथ सुखयोगमाह।

लग्नाच्च कारकाद्वापि चतुर्थे यस्य वै द्विज ॥ लग्नकारकयोर्दृ-
ष्ट्या भवंति सुखिनो नराः ॥ ५६ ॥

## अथ सेनाधीशयोगमाह।

कारके वा तथा रूढे लग्नाद्वा सप्तमाद्विज ॥ तृतीये षष्ठभे पापाः
सेनाधीशो भवेन्नरः ॥ ५७ ॥

## अथ प्रधानयोगानाह।

राज्येशोपि जनुर्लग्नादमात्येशयुतेक्षिते ॥ अमात्यकारकेणापि
प्रधानत्वं नृपालये ॥ ५८ ॥ लाभेशवीक्षिते लाभे पापदृष्टिविवर्जि-
ते ॥ तथा राज्यालये विप्र प्रधानत्वं कुलेपि च ॥ ५९ ॥ अमात्य-
कारकेणापि कारकेन्द्रेशसंयुते ॥ तीव्रबुद्धियुतो बालः सेनाधीशो-
ऽपि जायते ॥ ६० ॥ स्वक्षेत्रेऽथ च मध्ये वा वार्द्धके द्विजसत्तम ॥
॥ ६१ ॥ क्रमेण भाग्यवृद्धिः स्यान्नृपवेशोथ वा भवेत् ॥ ६२ ॥
पंचमात्कारके लग्ने सप्तमे नवमेपि वा ॥ राजयोगमितिप्रोक्तं वि-
ख्यातो विजयी भवेत् ॥ ६३ ॥ कारकात्केंद्रकोणेषु तुंगर्क्षे चापि
संस्थिते ॥ भाग्यपेन युतो दृष्टो राजमंत्री प्रजायते ॥ ६४ ॥ कार-

के यस्य राशीशे लग्नगे संयुतेक्षिते ॥ मंत्रित्वमुख्ययोगोऽयं वार्द्धके नात्र संशयः ॥ ६५ ॥ कारके शुभसंयुक्ते पंचमे सप्तमेपि वा ॥ यत्कारके यदा प्राप्ते तत्कारकधनं लभेत् ॥ ६६ ॥ नीचखेटबलैर्युक्ते उच्चस्थानगतैर्द्विज ॥ तदा शुभफलं वाच्यं कारकेशेन दृष्टियुक् ॥ ६७ ॥ भाग्यारूढपदे लग्ने कारकान्नवमेपि वा ॥ राजयोगप्रदातारौ निर्विशंकं द्विजोत्तम ॥ ६८ ॥ लाभेशो लाभभवने पापदृष्टिविवर्जितः ॥ कारके शुभसंयुक्ते लाभं तस्य नृपालये ॥६९॥ शुभर्क्षे शुभसंयुक्ते शुभदृष्टेथ राज्यभाक् ॥ धनुर्लग्ने तथा रूढे एतस्मिन्राज्यभाग्भवेत् ॥ ७० ॥

## अथ राजयोगरसायनमाह ।

स्वांशे वर्गोत्तमे केंद्रे पुण्येशः कारकोऽथ वा ॥ राज्यारूढपदे वापि तदा सिध्येद्रसायनम् ॥ ७१ ॥ कारके कारकारूढे धने स्वक्षोंच्चगे खगे ॥ ऋद्धिर्वा सिद्धिसंयुक्ते तथा तंत्ररसायनम् ॥ ७२ ॥ धर्मकर्माधिपौ स्वोच्चे तथा वर्गोत्तमे यदि ॥ नवमे पंचमे लाभे राज्याप्तिर्वा रसायनम् ॥ ७३ ॥ मूलत्रिकोणगे लग्ने कारकेशो द्विजोत्तम ॥ मंत्रनाथेन संयुक्तः कीर्तियुक्तरसायनम् ॥ ७४ ॥ धर्मेशो धर्मलाभस्थः पंचमेशोपि पंचमे ॥ कारकेंद्रयुते दृष्टे स्वेच्छापूर्णधनानि च ॥ ७५ ॥ सोच्चादिपदसंयुक्ते कारकेशः शुभालये ॥ सततं सुखमाप्नोति धातुर्भस्म रसायनात् ॥ ७६ ॥ सुखेशो मानभावस्थे मानेशे सुखसंयुते ॥ लग्नकारकयोर्दृष्टे भिषग्योगोतिसंमतः ॥ ७७ ॥ कर्मेशो नवमे यस्य सुखेशः पंचमेपि वा ॥ परस्परं तदीशो वा स्वर्णाप्तं तत्र कर्मतः ॥ ७८ ॥ वागीशः कारके लग्ने स्वोच्चादिपदसंयुते ॥ भौमांशो मृत्युरादित्यः सौख्येशः कालसंज्ञकः ॥ ७९ ॥ सौम्यांशोर्द्धप्रहरकः स्पष्टकर्म स्वदेशतः ॥

एवं प्राणपदस्पष्टे पूर्वाध्याये मयाकृतम् ॥ ८० ॥ गुलिके कारकांशे च पूर्णेन्दुवीक्षिते द्विज ॥ सत्यं चौर्याद्यनीतिश्च सचौरो जायतेऽथ वा ॥ ८१ ॥ सगुलिके कारकांशे अन्यग्रहयुतेक्षिते ॥ बुधदृष्टियुते वापि अंडवृद्धिः प्रजायते ॥ ८२ ॥ कारकांशे स्थिते केतौ रविसोमनिरीक्षिते ॥ बलवीर्येण रहितो जायते सोपि मानवः ॥ ॥ ८३ ॥ सकेतौ कारकांशेन बुधशुक्रनिरीक्षिते ॥ राजयोगो जन्म चेत्स्याद्दासीपुत्रोथ वा भवेत् ॥८४॥ सकेतौ कारकांशे वा भृगुभास्करवीक्षिते ॥ शास्त्रांतरे सिद्धिग्राह्यं विशेषं राजयोगकम् ॥८५॥ रुद्रेण यत्पुरा प्रोक्तं तन्मया गदितं द्विज ॥ देयं स्वशिष्यपुत्रेभ्यो न देयं यस्य कस्य चित् ॥ ८६ ॥ कुपुत्राय कुशिष्याय प्राणांते न प्रकाशयेत् ॥ गुह्याद्गुह्यमिदं शास्त्रं प्राप्तं शंभुप्रसादतः ॥ ८७ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे राजयोगादिकथनं नामैकोनत्रिंशतितमोऽध्यायः ॥ २९ ॥

## पराशर उवाच ।

अथातः संप्रवक्ष्यामि धनयोगं विशेषतः ॥ पंचमे तु भृगुक्षेत्रे तस्मिन् शुक्रेण संयुते ॥ १ ॥ लाभे शनैश्चरयुते बहुद्रव्यस्य नायकः ॥ पंचमे सौम्यनक्षत्रे तस्मिन्सौम्ययुते यदि ॥ २ ॥ लाभे च चंद्रभौमौ तु बहुद्रव्यस्य नायकः ॥ पंचमे तु शनिक्षेत्रे तस्मिन्सूर्यसुतो यदि ॥ ३ ॥ लाभे सोमात्मजस्थे वा बहुद्रव्यस्य नायकः ॥ पंचमे तु रविक्षेत्रे तस्मिन्नवियुते यदि ॥ ४ ॥ लाभे रवींदुपूज्यस्थे बहुद्रव्यस्य नायकः ॥ पंचमे तु शनिक्षेत्रे तस्मिन् शनियुते यदि ॥ लाभे भौमेन संयुक्ते बहुद्रव्यस्य नायकः ॥ ५ ॥ पंचमे तु गुरुक्षेत्रे तस्मिन् गुरुयुते यदि ॥ लाभे तु चंद्रभौमौ चेद्बहुद्रव्यस्य नायकः ॥ ६ ॥ भानुक्षेत्रगते तस्मिंल्लग्ने भानौ स्थि-

ते यदि ॥ भौमेन गुरुणा युक्तो दृष्टिर्वास्यायुतो धनी ॥ ७ ॥ चंद्रक्षेत्रगते चंद्रे तस्मिंश्चंद्रयुते यदि ॥ जीवभौमयुते यस्तु दृष्टे जातो धनी भवेत् ॥ ८ ॥ भौमक्षेत्रगते लग्ने तस्मिन्भौमयुते यदि ॥ सोमशुक्रार्कजैर्युक्ते दृष्टे श्रीमान्नरो भवेत् ॥ ९ ॥ गुरुक्षेत्रगते लग्ने तस्मिन्गुरुयुते तदि ॥ सौम्यभौमयुते दृष्टे जातो यस्तु धनीश्वरः ॥ १० ॥ बुधक्षेत्रयुते तस्मिन् दृष्टे सौम्ययुतो यदि ॥ शनिशुक्रयुते दृष्टे जातो यस्तु धनी नरः ॥ ११ ॥ भृगुक्षेत्रे गते लग्ने तस्मिन् भृगुयुते यदि ॥ शनिसौम्ययुते दृष्टे जातो यस्तु धनी नरः ॥ १२ ॥ ये ये ग्रहा धर्मप ९ बुद्धिपाभ्यां युक्ताश्च दृष्टाश्च सुखप्रदास्ते ॥ रंध्रेश्वरादिव्ययपैर्युताः स्युः शोकप्रदा मारकनायकैश्च ॥ १३ ॥ क्रूरसौम्यविभागेन स्वस्थानाद्दिवसास्तथा ॥ ग्रहाणां स्थानभेदेन राशिदृष्टिवशात्फलम् ॥ १४ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे धनयोगविचारकथनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

## अथ दरिद्रयोगाध्यायमाह ।

लग्नेशे वै रिष्फगते रिष्फेशे लग्नमागते ॥ मारकेशयुते दृष्टे जातः स्यान्निर्धनो नरः ॥ १ ॥ लग्नाधिपे शत्रुगृहं गते वा षष्ठेश्वरे लग्नगतेपि वा चेत् ॥ विलग्नपे मारकनाथदृष्टे जातो भवेन्निर्धनकोपि मुख्यः ॥ २ ॥ लग्नेंदू केतुयुक्तौ वा लग्नेशे निधनं गते ॥ मारकेशयुते दृष्टे जातो वै निर्धनो भवेत् ॥ ३ ॥ षष्ठाष्टमव्ययगते लग्नेशे पापसंयुते ॥ मारकेशयुते दृष्टे राजवंश्योपि निर्धनः ॥ ४ ॥ विलग्ननाथेरिविनाशरिष्फनाथेन युक्ते यदि पापदृष्टे ॥ मंत्रात्मजे नाथयुतेपि दृष्टे शुभैर्न दृष्टे स भवेद्दरिद्रः ॥ ५ ॥ मित्रेशो धर्मनाथश्च षष्ठकर्मस्थितौ क्रमात् ॥ दृष्टौ चेन्मारकेशेन जातः स्या-

निर्धनो नरः ॥ ६ ॥ पापग्रहे लग्नगते राज्यधर्माधिपौ विना ॥ मारकेशयुते दृष्टे जातः स्यान्निर्धनो नरः ॥ ७ ॥ यद्भावेशो रंध्ररिष्फारिसंस्थो यद्भावस्था रंध्ररिष्फारिभेशाः ॥ पापैर्दृष्टो मंददृष्टेऽथ वा चेद्दुःखाक्रांतश्चंचलो निर्धनः स्यात् ॥ ८ ॥ चंद्राक्रांतनवांशेशो मारकेशयुतो यदि ॥ मारकस्थानगो वापि जातोऽसौ निर्धनो नरः ॥ ९ ॥ विलग्नेशनवांशेशौ रिष्फषष्ठाष्टगौ यदि ॥ मारकेशयुतौ दृष्टौ जातोसौ निर्धनो नरः ॥ १० ॥ धनसंस्थौ च भौमेंदू कथितौ धननाशकौ ॥ बुधेक्षितौ महावित्तं कुरुतस्तत्रगः शनिः ॥ ११ ॥ निःस्वतां कुरुते तत्र रविर्नित्यं यमेक्षितः ॥ महाधनयुतस्त्वातं शन्यदृष्टः करोत्यसौ ॥ १२ ॥ धनभावगताः सौम्याः कुर्वत्येव धनं बहु ॥ बुधदृष्टो गुरुस्तत्र निर्धनं कुरुते नरम् ॥ १३ ॥ बुधश्चंद्रेक्षितस्तत्र सर्वस्वं हंति निश्चितम् ॥ क्रूरखेटादियोगेश्च दारिद्र्यं संभवेन्नृणाम्॥१४॥ये ये ग्रहा धर्मपबुद्धिपाभ्यां युक्ता न दृष्टा बहुदुःखदास्ते॥रंध्रे चरादिव्ययपैर्युतास्ते व्ययप्रदा मारकनायकेन॥१५॥प्रोक्तयोगे यदा भावे दरिद्रो जायते ध्रुवम् ॥ शुभस्थानगताः पापाः पापस्थाने गताः शुभाः ॥१६॥ धनार्तिर्जायते बालो भोजनेन प्रपीडितः ॥ कदापि लभतेन्नं च वस्त्रार्थे चिंतयान्वितः ॥ १७ ॥ कारकाद्वा विलग्नाद्वा रंध्रे रिष्फे द्विजोत्तम ॥ लग्नकारकयोर्दृष्ट्या दरिद्रार्तियुतो नरः ॥ १८ ॥ लग्नाद्वा कारकाद्वापि द्वादशे यस्य वै द्विज ॥ लग्नकारकयोर्दृष्ट्या व्ययशीलो भवेन्नरः ॥ १९ ॥ लग्नेशो वीक्षते लग्नं कारकेशोपि कारकम् ॥ प्राबल्यव्ययशीलोऽपि जायते द्विजसत्तम ॥ २० ॥

## अथ बंधनयोगमाह ।

पश्चाल्लग्नारकारकाद्वा यदा वा वित्तद्वादशे ॥ पंचमे नवमे वा-

पि तथा षष्ठेपि द्वादशे ॥ २१ ॥ तृतीयैकादशे विप्र चतुर्थे दशमे पिवा ॥ ग्रहसाम्ये तथा विप्र एकमेकं द्वयं द्वयम् ॥ २२ ॥ तथा त्रयं त्रयं तिष्ठेदितिरीत्या नभश्चराः ॥ वित्ते द्वौ द्वादशे द्वौ च तथा स्याच्च त्रये त्रयम् ॥ २३ ॥ इति क्रमेण साम्येन बंधकारक उच्यते ॥ शृंखलाबंधयोगोऽपि जायते द्विजसत्तम ॥ २४ ॥ राशीनां राशिनाथानां शुभसंबंधके द्विज ॥ तदा निरोधः संजातस्तनुपीडा विधीयते ॥ २५ ॥ द्वादशे द्वितये वापि त्रिकोणे रिष्फषष्ठगे ॥ लाभे त्रये व्योमतुर्ये पापा वै बंधकारकाः ॥ २६ ॥ तथा तत्तद्दशानां च संबंधं खलखेटतः ॥ प्रहारशृंखलाद्विप्र बंधयोगो न संशयः ॥ २७ ॥ भार्गवात्कारकाद्वापि लग्नारूढपदाद्द्विज ॥ त्रिकोणस्थे यदा राहुः सूर्यदृष्टेऽपि नेत्ररुक् ॥ २८ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे दरिद्रयोगकथनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

## अथ पूर्वजन्मवर्णनाध्यायः ।

अथ वक्ष्ये विशेषेण पूर्वपापस्य निश्चयम् ॥ नवांशा मेषमारभ्य मेषाद्यौ हि क्रमाद्वदेत् ॥ १ ॥ निशाकरनवांशाधिपापं निश्चित्य सर्वशः ॥ २ ॥ मेषे मेषनवांशकेषु च क्रमान्मेषस्य भूयाद्वध उक्षायामपराधकं च सुधियो निश्चित्य गोसंज्ञकम् ॥ द्वंद्वे चांशवधस्तथा सुनियतं गर्भेण युक्तो वदेत्कर्के सर्पवधस्तथा सुनियतं सिंहे चतुष्पाद्वधः ॥ ३ ॥ वन्यानां मृगजातीनां वधो दावानलेन हि ॥ सिंहे निश्चित्य मतिमान्वदेच्चांशोपरि द्विज ॥ ४ ॥ कन्यायां च वदेद्विद्वान्पापं स्त्रीत्यागजं मुने ॥ धनस्याहरणं व्याजात्तुलायां च वदेद्बुधः ॥ ५ ॥ वृश्चिके ग्रामचटके वधं चैवांडजस्य हि ॥ मित्रद्रोहकृते ब्रूयाद्धन्विन्यथ विशंकितः ॥ ६ ॥ फला-

नां वृक्षजातीनां मकरे चौर्यछेदनम् ॥ कुंभे चैवानुसूयंतं वाच्यं विप्र विपश्चितः ॥ ७ ॥ ब्रूयाद्विप्रवधं मीने पूर्वार्द्धे तु विपश्चितः ॥ उत्तरार्द्धे धनादानं तद्वधं परिकल्पितम् ॥ ८ ॥ एकांशे चैकजन्म स्याद्द्यंशे चैव द्विजन्मनोः ॥ त्र्यंशे चैव त्रिजन्म स्याच्छेषे जन्म चतुष्टयम् ॥ ९ ॥ एवं सर्वत्र निश्चित्य लग्ने चैवेह जन्मनि ॥ कर्काद्या विप्र जन्माद्यं वदेत्सर्वत्र निश्चयम् ॥ १० ॥ अन्यथा जारजो भूयाल्लग्नेन्दुं नेक्षते गुरुः ॥ एवं चाष्टोत्तरशतं नवांशाः परिकीर्तिताः ॥ ११ ॥ क्षत्रिये क्षत्रियादीनां वैश्ये चैव विशादिकान् ॥ शूद्रे शूद्रादिकान्वाच्यं विप्रे वै ब्राह्मणादिकान् ॥ १२ ॥ परे जन्मनि जन्म स्याद्बुद्धया चैवेहकं वदेत् ॥ तदीशे स्वोच्चतां प्राप्ते मृते स्वर्गे गतो भवेत् ॥ १३ ॥ तदीशे नीचतां प्राप्ते नरकादागत्य जज्ञिवान् ॥ यमले च समाल्लोकान्मित्रे तीर्थे तनुं त्यजेत् ॥ ॥ १४ ॥ तदीशे वारिवेश्मस्थे मृतः प्रेतत्वमाप्नुयात् ॥ तस्मादागत्य यज्ञोसौ पापं पुण्यं भुनक्ति हि ॥ १५ ॥ तदीशे पापसंयुक्ते नीचे वापि स्थिते सति ॥ वृजिनं तामसं पूर्वं कृतं तामसनिश्चितम् ॥ १६ ॥ कुजकेतुसमायुक्ते समस्थे राजसं वदेत् ॥ शुभेष्पुच्चस्थिते वाच्यं सात्विकं वृजिनं बुधैः ॥ १७ ॥ अनेनैव प्रकारेण लग्ने निश्चित्य बुद्धिमान् ॥ इह जन्मनि संयोज्यं क्रूरसाम्यं समत्वकम् ॥ १८ ॥ सर्वस्य मानवस्यापि नक्षत्रत्रयमीरितम् ॥ जन्मनक्षत्रमेकं तु द्वितीयमनु जन्म च ॥ १९ ॥ त्रिजन्म च तृतीयं स्याद्भ्रातृव्यं मुनिसत्तम ॥ २० ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे पूर्वजन्मवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

सुजन्मोवाच ।

आजन्ममृत्युपर्यन्तं जगतः सुखदुःखकम् ॥ ब्रूहि मे कृपया सौम्य विवाहादि सुतादिकम् ॥ १ ॥

## लोमश उवाच ।

सूर्यांगारागुमंदानामंशान्संयोज्य संस्कृतः ॥ तदायुः शरदाद्यस्य भागं कृत्वा वदेत्फलम् ॥ २ ॥ तद्भागे दुर्वृत्तं वाच्यं द्यूनाप्ते पीडनं क्वचित् ॥ वेदोनाप्ते सुखं किंचित्षडूनाप्ते स्त्रिया भयम् ॥ ॥ ३ ॥ दशोनाप्ते हृदि पीडा भूपोनाप्ते हि भेषजम् ॥ विंशोनाप्ते स्फुटतनुं तत्वोनाप्ते श्रुतौ व्यथा ॥ ४ ॥ त्रिंशोनाप्ते शीतलादीन् द्विवेदोनाप्ते भयं मृतेः ॥ पंचाशन्न्यूनकेनाप्ते वारिभीतिर्निगद्यते ॥ ॥ ५ ॥ षष्ट्यूनाप्ते हृतं चौरैर्वह्निं सप्ततिन्यूनहृत् ॥ खाष्टोनाप्तेऽल्पघातादि नवतिन्यूनाप्तकेषु च ॥ ६ ॥ शतोनाप्ते सुतोत्पत्तिं व्याधिमष्टोत्तरोनके ॥ षोडशोत्तरशतेनाप्तं विवाहं परिकल्पितम् ॥ ७ ॥ विंशाधिकशतेनाप्ते पक्षद्वयंते मृतिर्भवेत् ॥ एवं भागप्रभेदेन जीवानां सुखदुःखकम् ॥ ८ ॥ न्यूनांको भाग्यन्यूनेन शुभाशुभफलं दिशेत् ॥ तेषां योगो द्विभक्ते वा द्वौ बाणप्रयुतौ दलौ ॥ ९ ॥ पूर्वोत्तरौ हि भवतः समाऽसमसुखासुखौ ॥ त्रिभागे तत्रिभागे वा घातादल्पान्व्रणान्वदेत् ॥ १० ॥ विस्फोटकं तत्रिभागे कल्प्यास्तुल्याः समीक्षते ॥ तुर्यांशे तच्चतुर्थांशे मरणं मातृकादयः ॥ ११ ॥ धनांशे वित्तहरणं सहजांशे तनोर्मृतिः ॥ मातृमृत्युः सुखांशे तु सुतांशे सुतमृत्युदः ॥ १२ ॥ रिपुभागे रिपोर्मृत्युर्जायांशे स्वस्त्रियो मृतिः ॥ रंध्रांशे ऋणदो मृत्युर्भाग्यांशे च प्रभोर्मृतिः ॥ १३ ॥ कर्मांशे पितरं हन्ति लाभांशे नष्टजीविकाम् ॥ व्ययांशे पशुवाहादि मृत्युः स्यान्नियतं द्विज ॥ १४ ॥ लग्नांशे मृत्युर्मित्रस्य गुरूणां सहचारिणाम् ॥ पंचमांशे प्रातिकरस्तत्पंचांशे धनं लभेत् ॥ १५ ॥ षष्ठांशो दुःखदस्तस्य तत्षष्ठांशश्च वा दिशेत् ॥ सप्तांशे तद्दशांशे वा घाता वाच्याः शिलादयः ॥ १६ ॥ लग्ने वित्ते



शिलाघातो जलघातस्त्रितुर्ययोः ॥ पुत्रे षष्ठे वृक्षघातो मन्दे मृत्यौ चतुष्पदात् ॥ १७ ॥ धर्मे कर्मे कर्कघातोव्यये लाभे सरीसृपात् ॥ एवं स्थितिः स्याद्ग्रहाणां सप्तांशकफलं वदेत् ॥ १८ ॥ आशांशे पुण्यदानादिं रुद्रांशे समदुःखकम् ॥ अष्टमांशे मित्रयोगो नवमांशे गुरुं वदेत् ॥ १९ ॥ अर्कांशेतिव्ययं वाच्यं विश्वांशे१३ मानहानिदः ॥ शक्रांशे १४ कलहं वाच्यं तिथ्यंशे १५ चौरकान्वदेत् ॥ २० ॥ भूपांशे१६परजायादिसंगावाप्तिर्निगद्यते ॥ अत्यष्ट्यंशे १७ हि नोद्वेगो धृत्यंशे १८ शुचमादिशेत् ॥ २१ ॥ अतिधृत्यं १९ शके यात्रा विंशांशे बंधनादिकान् ॥ अर्को व्यवहितो यत्र तत्रैव पितृजं सुखम् ॥ २२ ॥ यत्र चंद्रः स्थितस्तत्र विवाहं परिकल्पितम् ॥ भ्रातृयोगो भवेत्तत्र यत्रांगारकसंस्थितिः ॥ २३ ॥ स्वसायोगो हि यत्र ज्ञो यत्र वाचस्पतिः स्थितः ॥ तत्र पुत्रो यत्र शुक्रस्तत्र कन्या प्रकीर्तिता ॥ २४ ॥ यत्र मंदः स्थितस्तत्र मातृजं सुखमादिशेत् ॥ एवं ग्रहानुसारेण सुखादि परिचिंतयेत् ॥ ॥ २५ ॥ लग्नाधीशमदाधीशौ भागादिवेद ४ संगुणौ ॥ कृत्वा तदंतरमिते वर्षे वाच्यं विवाहकम् ॥ २६ ॥ तत्पौ यत्र स्थितौ भावयोगे चांतरके तथा ॥ राशिं विवाहद्विगुणौ तद्वर्षे वा विवाहकम् ॥ २७ ॥ तत्पत्योरंतरं कार्यं राशिभागादिकान्हरेत् ॥ लब्धांकतुल्यमुद्वाहमेषांके वा विनिर्दिशेत् ॥ २८ ॥ एवं सुतर्क्षलाभाभ्यां पुत्रकन्ये विचिंतयेत् ॥ तथैव भ्रातृभागाभ्यां भ्रातृभगिनीं विचिंतयेत् ॥ २९ ॥ व्ययलाभांतरं कार्यं तत्पत्योरपि चांतरम् ॥ भावांतरं व्ययं ज्ञेयं लाभं स्वाम्यंतरक्रमात् ॥ ३० ॥ सूर्येन्द्वारज्ञेज्यशुक्रमंदानां भृगुवादयः ॥ तत्तत्संस्थितभावानां राशिभागादिका युतिः ॥ ३१ ॥ तद्योगे द्वादशे तष्टे जन्ममासे

मृतिं वदेत् ॥ त्रिंशद्गुण्यं दिनं ज्ञेयमेवं नाडीपलादिकम् ॥ ३२ ॥ लग्नचंद्रांतरं कार्यं तत्कला तत्पलादिकम् ॥ जन्मकाले विहीने तु जलप्रसव उच्यते ॥ ३३ ॥ सूर्यचंद्रांतरं कार्यं तनुयुक्तं तथोत्तरम् ॥ तत्तत्प्रमितिके वर्षे लाभं वै पुष्कलं वदेत् ॥ ३४ ॥ राशिलग्नपयोर्योगे मृत्युयुक्ते विनिंदिते ॥ ऋणं वा ऋणमुक्तं वा भवेद्वै चंद्रयोगके ॥ ३५ ॥ सूर्येन्दुलग्नसंयोगे राशीशस्पष्टसंयुते ॥ तद्वर्षे महती पीडा हीने सौख्यं न संशयः ॥ ३६ ॥ सुतभाग्यांतरं कार्यं तद्वर्षे शीतलादिकम् ॥ लग्नस्वांतरसंयोगे पितुर्मृत्युर्न संशयः ॥ ३७ ॥ राशीशकर्मसंयोगे तदा कर्मोदयं वदेत् ॥ धन-व्ययसमायोगे तद्वर्षे व्ययनिश्चयः ॥ ३८ ॥ मदनांतरभावेषु सर्वत्रैवं विलक्षयेत् ॥ भाग्यादिमृत्युपर्यंतं ग्रहाणां फलमुच्यते ॥३९॥ यत्त्वया खलु मे पृष्टं तदिदं कथितं मया ॥ यस्मै कस्मै न दातव्यं स्ववाक्यपरिसिद्धये ॥४०॥ इति श्रीबृहत्पाराशरहोरापूर्व-खण्डसारांशे जीवानां सुखदुःखवर्णनं नाम त्रयस्त्रिंशोऽध्यायः३३

## मैत्रेय उवाच।

आदित्यादिग्रहाणां च ह्यवस्था च पृथक्पृथक् ॥ भेदाः कति-विधाः संति कथय त्वं कृपानिधे ॥ १ ॥

## पराशर उवाच।

भास्करादिग्रहाणां च ह्यवस्था विविधापिच ॥ षण्नवत्यामि-तावस्थासारभूतं वदाम्यहम् ॥ २ ॥

## अथ जाग्रताद्यवस्थामाह।

त्र्यंशादंशं त्रिभागं च कल्पयित्वा पृथक् पृथक् ॥ विषमा-दिक्रमेणैव समे वै विपरीतकम् ॥ ३ ॥ विज्ञाय प्रथमं पुंसां जा-ग्रत्स्वप्नसुषुप्तिकाः ॥ विशेषतः परीक्षा स्याज्जागरः कार्यसाधक-

॥ ४ ॥ स्वप्नाऽवस्थामध्यफल उपदेष्टा गुरुर्यदि ॥ निष्कला पर-
भावस्था ज्ञातव्या मुनिसत्तम ॥ ५ ॥

अथ दीप्ताद्यवस्थामाह ।

दीप्तः स्वस्थः प्रमुदितः शांतो दीनोतिदुःखितः ॥ विक-
लश्च खलः कोपी नवधा खेचरो भवेत् ॥ ६ ॥ उच्चस्थः खेचरो
दीप्तः स्वस्थः स्वोच्चातिमित्रभे ॥ मुदितो मित्रभे शांतः समभे
दीन उच्यते ॥ ७ ॥ शत्रुभे दुःखितोतीव विकलः पापसंयुते ॥
खलः खलग्रहे ज्ञेयः कोपी स्यादर्कसंयुतः ॥ ८ ॥ पाके प्रदी-
प्तस्य धराधिपत्यमुत्साहशौर्यं धनवाहने च ॥ स्त्रीपुत्रलाभं शुभ-
बंधुपूज्यं क्षितीश्वरान्मानमुपैति विद्याम् ॥ ९ ॥ स्वस्थस्य खेटस्य
दशाविपाके स्वस्थो नृपाल्लब्धधनादिसौख्यम् ॥ विद्यां यशः प्री-
तिमहत्वमाराद्दारार्थभूम्यादिजधर्ममेति ॥ १० ॥ मुदान्वितस्यापि
दशाविपाके वस्त्रादिकं गंधसुतीर्थधैर्यम् ॥ पुराणधर्मश्रवणादि-
लाभं वस्त्रादियानांबरभूषणाप्तिम् ॥ ११ ॥ दशाविपाके सुखधर्म-
मेति शांतस्य भूपुत्रकलत्रयानम् ॥ विद्याविनोदान्वितधर्मशास्त्रं
बह्वर्थदेशाधिपपूज्यतां च ॥ १२ ॥ स्थानच्युतिर्बंधुविरोधता च
दीनस्य खेटस्य दशाविपाके ॥ जीवत्यसौ कुत्सितहीनवृत्त्या
त्यक्तो जनैरोगनिपीडितः स्यात् ॥ १३ ॥ दुःखार्दितस्यापि दशा-
विपाके नानाविधं दुःखमुपैति नित्यम् ॥ विदेशगो बंधुजनैर्विही-
नश्चोराग्निभूपैर्भयमातनोति ॥ १४ ॥ वैकल्यखेटस्य दशाविपाके
वैकल्यमायाति मनोविकारम् ॥ मित्रादिकानां मरणं विशेषा-
त्स्त्रीपुत्रयानांबरचोरपीडाम् ॥ १५ ॥ दशाविपाके कलहं वियोगं
खलस्य खेटस्य पितुर्वियोगम् ॥ शत्रोर्जनानां धनभूमिनाशमु-
पैति नित्यं स्वजनैश्च निंदाम् ॥ १६ ॥ कोपान्वितस्यापि दशा-

विपाके पापाः समायांति बहुप्रकारैः ॥ विद्याधनस्त्रीसुतबंधुनाशं पुत्रादिकृच्छ्रं त्वथ नेत्ररोगम् ॥ १७॥

## अथ बालाद्यवस्थाफलमाह ।

बालो रसांशैरसमे प्रदिष्टस्ततः कुमारो हि युवाथ वृद्धः ॥ मृतः क्रमादुत्क्रमतः समर्क्षे बालाद्यवस्था कथिता ग्रहाणाम् ॥१८॥ फलं तु किंचिद्वितनोति बालश्चार्द्धं कुमारो यतते न पुंसाम् ॥ युवा समग्रं खचरोऽथ वृद्धः फलं च दुष्टं मरणं मृताख्यम् ॥ १९ ॥

## अथ प्रवासाद्यवस्थाफलमाह ।

प्रवासनष्टा च मृता जया हास्या रतिर्मुदा॥ सुप्ता भुक्ता ज्वरा कंपा सुस्थितिर्नामसन्निभा ॥ २० ॥ षष्टिघ्नं गतभं भुक्तघटीयुक्तं युगाहतम् ॥ शराब्धिहृल्लब्धतोऽर्कोच्छेषावस्थाद्विजोत्तम ॥ २१ ॥

## अस्यार्थः ।

षष्टिघ्नमिति तत्राश्विनीमारभ्य गतमानि षष्ट्या गुण्यानि वर्तमाननक्षत्रभुक्तघटीयुक्तानि कार्याणि तानि पुनर्युगैश्चतुर्भिराहतानि शराब्धिहृत पंचचत्वारिंशता भाज्यानि यल्लब्धभागमागतावस्थास्ताः शेषं वर्तमानावस्थायाः त्रत लब्धांकस्यापि द्वादशाधिक्ये द्वादशभिर्भागैः प्रवासाद्यवस्था ज्ञेयाः॥

प्रवासः प्रवासोपगे जन्मकालेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः ॥ मृतावस्थिते स्याज्जयायां जयस्तु विलासस्तु हास्योपगे कामिनीभिः ॥ २२ ॥ रतौ स्याद्रतिः क्रीडिता सौख्यदात्री प्रसुप्तापि निद्रां कलिं देहपीडाम् ॥ भयं तापहानिः सुखं स्यात्तु भुक्ता ज्वरा कंपिता सुस्थिता सुक्रमेण ॥ २३ ॥

## अथ लज्जिताद्यवस्थामाह ।

लज्जितो गर्वितश्चैव क्षुधितस्तृषितस्तथा ॥ मुदितः क्षोभितश्चैव ग्रहभावाः प्रकीर्तिताः ॥ २४ ॥ पुत्रगेहगतः खेटो राहुकेतुयु-

तो भवेत् ॥ रविमंदकुजैर्युक्तो लज्जितो ग्रह एव च ॥ २५ ॥ तुंगस्थानगतो वापि त्रिकोणेपि भवेत्पुनः ॥ गर्वितः सोपि गदितो निर्विशंकं द्विजोत्तम ॥ २६ ॥ शत्रुगेही शत्रुयुक्तो रिपुदृष्टो भवेद्यदि ॥ क्षुधितः स च विज्ञेयः शनियुक्तो यथा तथा ॥ २७ ॥ जलराशौ स्थितः खेटः शत्रुणा चावलोकितः॥ शुभग्रहा न पश्यंति तृषितः स उदाहृतः ॥२८॥ मित्रगेही मित्रयुक्तो मित्रेण चावलोकितः ॥ गुरुणा सहितो यश्च मुदितः स प्रकीर्तितः ॥ २९ ॥ रविणा सहितो यश्च पापाः पश्यंति सर्वथा ॥ क्षोभितं तं विजानीयाच्छत्रुणा यदि वीक्षितः ॥ ३० ॥ येषु येषु च भावेषु ग्रहास्तिष्ठंति सर्वथा ॥ क्षुधितः क्षोभितो वापि स नरो दुःखभाजनः ॥ ३१ ॥ एवं क्रमेण बोद्धव्यं सर्वभावेषु पंडितैः ॥ बलाबलविचारेण वक्तव्यः फलनिर्णयः ॥ ३२ ॥ अन्योन्यं च मुदा युक्तं फलं मिश्रं वदेत्पुनः ॥ बलहीने तदा हानिः सबले च महाफलम् ॥ ३३ ॥ कर्मस्थाने स्थितो यस्य लज्जितस्तृषितस्तथा ॥ क्षुधितः क्षोभितो वापि स नरो दुःखभाजनः ॥ ३४ ॥ सुतस्थाने भवेद्यस्य लज्जितो ग्रह एव च ॥ सुतनाशो भवेत्तस्य एकस्तिष्ठति सर्वदा ॥३५॥ क्षोभितस्तृषितश्चैव सप्तमे यस्य वा भवेत् ॥ म्रियते तस्य नारी च सत्यमाहुर्द्विजोत्तम ॥ ३६ ॥ नवालयारामसुखं नृपत्वं कलापटुत्वं विदधाति पुंसाम् ॥ सदार्थलाभं व्यवहारवृद्धिं फलं विशेषादिह गर्वितस्य ॥ ३७ ॥ भवति मुदितयोगे वासशालाविशाला विमलवसनभूषाभूमियोषासु सौख्यम् ॥ स्वजनजनविलासो भूमिपागारवासो रिपुनिवहविनाशो बुद्धिविद्याविकाशः ॥ ३८ ॥ दिशति लज्जितभाववशाद्रतिर्विगतरामममतिर्विमतिक्षयम् ॥ सुतगदागमनं गमनं वृथा कलिकथाभिरुचिं न रुचिं शुभे ॥ ३९ ॥

संक्षोभितस्यापि फलं विशेषाद्दरिद्रजातं कुमतिं च कष्टम् ॥ करोति वित्तक्षयमंघ्रिबाधां धनातिबाधामवनीशकोपात् ॥ ४० ॥ क्षुधितग्रहवशाद्वै शोकमोहादितापः परिजनपरितापादाधिभीत्या कृशत्वम् ॥ कलिरपिरिपुलोकैरर्थबाधानराणामखिलबलनिरोधो बुद्धिरोधो विषादात् ॥ ४१ ॥ तृषितखगभवे स्यादंगनासंगमध्ये भवति गदविकारो दुष्टकार्याधिकारः ॥ निजजनपरिवादादर्थहानिः कृशत्वं खलकृतपरितापो मानहानिः सदैव ॥ ४२ ॥

## अथ शयनाद्यवस्थामाह ।

शयनं चोपवेशं च नेत्रपाणिप्रकाशनम् ॥ गमनागमनं चाथ सभायां वसतिस्तथा ॥ ४३ ॥ आगमो भोजनं चैव नृत्यं लिप्सा च कौतुकम् ॥ निद्रा ग्रहाणां चेष्टा च कथयामि तवाग्रतः ॥४४॥ यस्मिन्नृक्षे भवेत्खेटस्तेनतं परिपूरयेत् ॥ पुनरंशेन संपूर्य स्वनक्षत्रं नियोजयेत् ॥ ४५ ॥ यातदंडं तथालग्नमेकीकृत्य सदा बुधः ॥ रविणा हरते भागं शेषं कार्ये नियोजयेत् ॥ ४६ ॥ नाक्षत्रिकदशाक्रमेण पुनः पूरणमाचरेत् ॥ नामाक्षरेण संयुक्ते हर्तव्यं रविणा ततः ॥ ४७ ॥ रवौ पंच तथा देयं चंद्रे दद्याद्द्वयं तथा ॥ कुजे द्वयं च संयुक्तं बुधे त्रीणि नियोजयेत् ॥ ४८ ॥ गुरौ बाणाः प्रदेयाश्च त्रयं दद्याच्च भार्गवे ॥ शनौ त्रयमथो देयं राहौ दद्याच्चतुष्टयम् ॥ ॥ ४९ ॥ शेषं हृतं च रामेण ग्रहाणां त्रिविधं भवेत् ॥ दृष्टिश्चेष्टा विचेष्टा च कथयामि तवाग्रतः ॥ ५० ॥

## अस्यार्थः ।

यस्मिन्नृक्षेति । जन्मनि सूर्यादयो ग्रहा यस्मिन्नक्षत्रे तिष्ठंति तन्नक्षत्रसंख्यया ग्रहसंख्यां गुणयेत् । पुनस्तद्राशिभुक्तांशसंख्यया गुणयेत् । पुनर्यातस्य नक्षत्रस्य जन्मेष्टजन्मलग्नसंख्यां च योजयेत् । ततो द्वादशभिः शेषमिता ग्र-

इचेष्टा ज्ञातव्या। पुनर्लब्धसंख्यया लब्धसंख्यां गुणयेत्। नामत्रयेवदशाक-मपूरणं नाम तन्मध्ये येन नाम्ना सुप्तो बुध्यति तस्याद्यक्षरवर्णस्वरसंख्यां सं-योज्य द्वादशहृते यल्लब्धं तत्पुनः पूर्वोक्तावस्था। तत्र यस्य ग्रहस्य पूर्वोक्तरी-त्या क्रियते तस्य क्षेपकं योज्यं। त्रिभिर्हृत्वा तच्छेषस्तेन दृष्ट्यवस्थ ज्ञातव्या॥

## अत्रोदाहरणम्।

अत्र मृगशीर्षे नक्षत्रे रविस्थसंख्या ५ रविसंख्यया १ गुणिताः ५ मिथुन-द्वितीयांशके रविस्तेन द्विगुणिता जाता १० इष्टं ६ कृत्तिका जन्मभं ३ कर्क-लग्नं ४ एषां योगेन युताः२३रवि१२तष्टाः शेषं११तेन शयनादिगणनया कौ-तुकावस्थायां रविर्ज्ञेयः अत्र शेषं ११ स्वरांकस्थानं यथात्र प्रसिद्धं नामाद्यक्ष-रस्य शकारस्य इकाराधःपंक्तौ स्थित्या तत्स्वरसंख्यां द्वितीयं २ शेषं ११ शेषेण ११ गुणितं १२१ स्वरांक २ युतं १२३ रवि १२ तष्टं शेषं ३ सूर्यक्षेपकेन ५ युतं ८ त्रिभिस्तष्टं शेषं २ रवेश्चेष्टावस्था एवं चंद्रादीनामपि ज्ञेयम्॥ ५० ॥

स्वरांश चक्रमिदम्

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| अ | इ | उ | ए | ओ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| म | भ | य | र | ल |
| व | श | ष | स | ह |

सूर्यादिक्षेपांकचक्रम्.

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| ५ | २ | २ | ३ | ५ | ३ | ३ | ४ | ४ |

## दृष्टिभेदमाह।

दृष्टौ स्वल्पफलं ज्ञेयं चेष्टायां विपुलं फलम्॥ विचेष्टायां फलं नस्यादेवं दृष्टिफलं विदुः॥ ५१ ॥ शुभाशुभं ग्रहाणां च समीक्ष्याथ बलाबलम्॥ तुं-गस्थाने विशेषेण बलं ज्ञेयं यथा बुधैः॥ ५२ ॥

## अथ प्रत्येकद्वादशावस्थाफलमाह।

मंदाग्निरोगी बहुधा नराणां स्थूलत्वमंघ्रेरपि पित्तकोपः॥ व्रणं गुदे शूलमुरःप्रदेशे यदोष्णभानौ शयनं प्रयाते ॥ ५३ ॥ दरिद्र-ताभारविहारशाली विवादविद्याभिरतो नरः स्यात्॥ कठोरचित्तः

खलु नष्टवित्तः सूर्यो यदा चेदुपवेशनस्थः ॥ ५४ ॥ नरः सदानंदधरो विवेकी परोपकारी बलवित्तयुक्तः ॥ महासुखी राजकृपाभिमानी दिवाधिनाथो यदि नेत्रपाणौ ॥ ५५ ॥ उदारचित्तः परिपूर्णवित्तः सभासु वक्ता बहुपुण्यकर्ता ॥ महाबली सुंदररूपशाली प्रकाशने जन्मनि पद्मिनीशे ॥ ५६ ॥ प्रवासशाली किल दुःखमाली सदालसी धीधनवर्जितश्च ॥ भयातुरः कोपपरो विशेषाद्दिवाधिनाथे गमने मनुष्यः ॥ ५७ ॥ परदाररतो जनतारहितो बहुधागमने गमनाभिरुचिः ॥ कृपणः खलताकुशलो मलिनो दिवसाधिपतौ मनुजः कुमतिः ॥ ५८ ॥ सभागते हिते नरः परोपकारतत्परः सदार्थरत्नपूरितो दिवाकरे गुणाकरः ॥ वसुंधरानवांबरालयान्वितो महाबली विचित्रमित्रवत्सलः कृपाकलाधरःपरः ॥ ॥ ५९ ॥ क्षोभितो रिपुगणैः सदा नरश्चंचलः खलमतिः कृशस्तथा ॥ धर्मकर्मरहितो मदोद्धतश्चागमे दिनपतौ यदा तदा ॥ ॥ ६० ॥ सदांगसंधिवेदनापरांगनाधनक्षयो बलक्षयः पदे पदे यदा तदाहि भोजने ॥ असत्यता शिरोव्यथा तथा वृथान्नभोजनं रवावसत्कथारतिः कुमार्गगामिनी मतिः ॥ ६१ ॥ विज्ञलोकैः सदा मंडितः पंडितः काव्यविद्यानवद्यप्रलापान्वितः॥ राज्यपूज्यो धरामंडले सर्वदा नृत्यलिप्सागते पद्मिनीनायके ॥ ॥ ६२ ॥ सर्वदानंदधर्ता जनो ज्ञानवान्यज्ञकर्ता धराधीशसद्मस्थितः ॥ पद्मबंधावरातेर्भयं चाननः काव्यविद्याप्रलापी मुदा कौतुके ॥ ६३ ॥ निद्राभरारक्तनिभे भवेतां निद्रागते लोचनपद्मयुग्मेऽरवौ विदेशे वसतिर्जनस्य कलत्रहानिः कतिधार्थनाशः॥६४॥

## अथ चंद्रफलम् ।

जनुःकाले क्षपानाथे शयनं चेदुपागते ॥ मानी शीतप्रधानी

च कामी वित्तविनाशकः ॥ ६५ ॥ रोगार्दितो मंदमतिर्विशेषाद्वि-
त्तेन हीनो मनुजः कठोरः ॥ अकार्यकारी परवित्तहारी क्षपाकरे
चेदुपवेशनस्थे ॥६६॥ नेत्रपाणौ क्षपानाथे महारोगी नरो भवेत् ॥
अनल्पजल्पको धूर्तः कुकर्मनिरतः सदा ॥ ६७ ॥ यदा राकानाथे
गतवति विकाशं च जनने विकाशः संसारे विमलगुणगौरव-
निपात् ॥ नवाशामाला स्यात्करितुरगलक्ष्म्यापरिवृता विभूषा या-
षाभिः सुखमनुदिनं तीर्थगमनम् ॥ ६८ ॥ सितेतरे पापरतो नि-
शाकरे विशेषतः क्रूरतरो नरो भवेत् ॥ सदाक्षिरोगैः परिपीड्य-
मानो वलक्षपक्षे गमने भयातुरः ॥ ६९ ॥ विधवागमनो मानी
पादरोगी नरो भवेत् ॥ गुप्तपापरतो दीनो मतितोषविवर्जितः ॥
॥ ७० ॥ सकलजनवदान्यो राजराजेन्द्रमान्यो रतिपतिसमकांतिः
शांतिकृत्कामिनीनाम् ॥ सपदि सदसि याते चारुबिंबे शशांके भ-
वति परमरीतिप्रीतिविज्ञो गुणज्ञः ॥ ७१ ॥ विधवागमनो मर्त्यो
वाचालो धर्मपूरितः ॥ कृष्णपक्षे द्विभार्यः स्याद्रोगी दुष्टतरो हठी
॥ ७२ ॥ भाजने जनुषि पूर्णचंद्रमा मानयानजनतासुखं नृणाम् ॥
आतनोति वनितासुतासुखं सर्वमेव न सितेतरे शुभम् ॥ ७३ ॥
नृत्यलिप्सागते चंद्रे सबले बलवान्नरः ॥ गीतज्ञो हि रसज्ञश्च
कृष्णे पापकरो भवेत् ॥ ७४ ॥ कौतुकभवनं गतवति चंद्रे भवति
नृपत्वं वा धनपत्वम् ॥ कामकलासु सदा कुशलत्वं वारवधूरतिर-
मणपटुत्वम् ॥ ७५ ॥ निद्रागते जन्मनि मानवानां कलाधरे जी-
वयुते महत्त्वम् ॥ यदांगनासंचितवित्तनाशः शिवालयं रौति वि-
चित्रमुच्चैः ॥ ७६ ॥

## अथ कुजफलम् ।

शयने वसुधापुत्रे जंतुरंगेजनो भवेत् ॥ बहुना कंडुना युक्तो

दद्रुणा च विशेषतः ॥ ७७ ॥ बली सदापापरतो नरः स्यादसत्यवादी नितरां प्रगल्भः ॥ धनेन पूर्णो निजधर्महीनो धरासुतश्चेदुपवेशनस्थः ॥ ७८ ॥ यदा भूमिसुते लग्ने नेत्रपाणिमुपागते ॥ दरिद्रता सदा पुंसामन्यभे नगरेशता ॥ ७९ ॥ प्रकाशो गुणस्यापि वासः प्रकाशे धराधीशभर्तुः सदा मानवृद्धिः ॥ सुते भूसुते पुत्रकांतावियोगो भवेद्दाहुणा दारुणो वा निपातः ॥ ८० ॥ गमनागमने कुरुतेऽनुदिनं व्रणजालभयं वनिताकलहः ॥ बहुदद्रुक कण्डुभयं बहुधा वसुधातनयो वसुहानिकरः ॥ ८१ ॥ आगमने गुणशाली मणिमाली करालकरवाली ॥ गजगंता रिपुहन्ता परिजनसंतापहारको भौमे ॥ ८२ ॥ तुंगे युद्धकलाकलापकुशलो धर्मध्वजो वित्तपः कोणे भूमिसुते सभामुपगते विद्याविहीनः पुमान्॥ अंतेऽपत्यकलत्रमित्ररहितः प्रोक्तेंतरस्थानगे वश्यं राजसभाबुधो बहुधनी मानी च दानी जनः ॥ ८३ ॥ आगमे भवति भूमिजे जनो धर्मकर्मरहितो गदातुरः ॥ कर्णमूलगुरुशूलरोगवानेव कातरमतिः कुसंगमी ॥ ८४ ॥ भोजने मिष्टभोजी च जनने सबले कुजे ॥ नीचकर्मकरो नित्यं मनुजो मानवर्जितः ॥ ८५ ॥ नृत्यलिप्सागते भूसुते जन्मनामिंदिराराशिरायाति भूमीपतेः ॥ स्वर्णरत्नप्रवालैः सदामंडितो वासशाला नराणां भवेत्सदा ॥ ८६ ॥ कौतुकी भवति कौतुके कुजे मित्रपुत्रपरिपूरितो जनः ॥ उच्चगे नृपतिगेहमंडितः पूजितो गुणवरैर्गुणाकरैः ॥ ८७ ॥ निद्रावस्थां गते भौमे क्रोधी धीधनवर्जितः ॥ धूर्तो धर्मपरिभ्रष्टो मनुष्यो गदपीडितः ॥ ८८ ॥

## अथ बुधफलम् ।

क्षुधातुरो भवेदंग खंजो गुंजानिभेक्षणः ॥ अन्यभे लंपटो

धूर्तो मनुजः शयने बुधे ॥ ८९ ॥ शशांकपुत्रे जनुरंगगेहे यदोपवेशे गुणराशिपूर्णः ॥ पापेक्षिते पापयुते दरिद्रो हिते शुभे वित्तसुखी मनुष्यः ॥ ९० ॥ विद्याविवेकरहितो हिततोषहीनो मानी जनो भवति चंद्रसुतेऽक्षिपाणौ ॥ पुत्रालये सुतकलत्रसुखेनहीनः कन्याप्रजो नृपतिगेहबुधो वरार्थः ॥ ९१ ॥ दाता दयालुः खलु पुण्यकर्ता विकाशने चंद्रसुते मनुष्यः ॥ अनेकविद्यार्णवपारगंता विवेकपूर्णः खलवर्गहन्ता ॥ ९२ ॥ गमनागमने भवतो गमने बहुधा वसुधाधिपतेर्भवने ॥ भवनं च विचित्रमलं रमया विदि नुश्च जनुः समये नितराम् ॥९३॥ सपदि विदजनानामुच्चगे जन्मकाले सदसि धनसमृद्धिः सर्वदा पुण्यवृद्धिः ॥ धनपतिसमता वा भूपता मंत्रिता वा हरिहरपदभक्तिः सात्विकी मुक्तिलब्धिः ॥ ९४ ॥ आगमे जनुषि जन्मिनां यदा चंद्रजे भवति हीनसेवया ॥ अर्थसिद्धिरपि पुत्रयुग्मता बालिका भवति मानदायिका ॥ ९५ ॥ भोजने चंद्रजे जन्मकाले यदा जन्मिनामर्थहानिः सदा वादतः ॥ राजभीत्या कृशत्वं चलत्वं मतेरंगसंगो न जाया न मायासुखम् ॥ ॥ ९६ ॥ नृत्यलिप्सागते चंद्रजे मानवो मानयानप्रवालव्रजैः संयुतः ॥ मित्रपुत्रप्रतापैः सभापंडितः पापभे वारवामारते लम्पटः ॥ ९७ ॥ कौतुके चंद्रजे जन्मकाले नृणामंगभे गीतविद्याऽनवद्या भवेत् ॥ सप्तमे नैधने वारवध्वा रतिः पुण्यभे पुण्ययुक्ता मतिः सद्गतिः ॥ ९८ ॥ निद्राश्रिते चंद्रसुते न निद्रासुखं सदा व्याधिसमाधियोगः ॥ सहोत्थवैकल्यमनल्पतापो निजेन वादो धनमाननाशः ॥ ९९ ॥

अथ गुरुफलमाह ।

वचसामधिपे तु जनुःसमये शयने बलवानपि हीनरवः ॥

अतिगौरतनुः खलु दीर्घहनुः सुतरामरिभीतियुतो मनुजः ॥१००॥ उपवेशं गतवति यदि जीवे वाचालो बहुगर्वपरीतः ॥ क्षोणीपतिरिपुजनपरितप्तः पदजंघास्यकरव्रणयुक्तः ॥ १०१ ॥ नेत्रपाणिं गते देवराजार्चिते रोगयुक्तो वियुक्तो वरार्थश्रिया ॥ गीतनृत्यप्रियः कामुकः सर्वदा गौरवर्णो विवर्णोद्भवः प्रीतियुक् ॥१०२॥ गुणानामानंदं विमलसुखकंदं वितनुते सदा तेजःपुंजं व्रजपतिनिकुंजं प्रतिगमम् ॥ प्रकाशं चेदुच्चे द्रुतमुपगतौ वासवगुरुर्गुरुत्वं लोकानां धनपतिसमत्वं तनुभृताम् ॥१०३॥ साहसी भवति मानवः सदा मित्रवर्गसुखपूरितो मुदा ॥ पंडितो विविधवित्तमंडितो वेदविद्यदि गुरौ गमं गते ॥ १०४ ॥ आयमनेजनता वरजाया यस्य जनुःसमये हरिमाया ॥ मुंचति नालमिहालयमद्धा देवगुरौ परितः परिबद्धा ॥ १०५ ॥ सुरगुरुसमवक्ता शुभ्रमुक्ताफलाढ्यः सदसि सपदि पूर्णो वित्तमाणिक्ययानैः ॥ गजतुरगरथाढ्यो देवतार्धीशपूज्यो जनुषि विविधविद्यागर्वितो मानवः स्यात् ॥ ॥ १०६ ॥ नानावाहनमानयानपटलीसौख्यं गुरावागमे भृत्यापत्यकलत्रमित्रजसुखं विद्याऽनवद्या भवेत् ॥ क्षोणीपालसमानतानवरतं चातीवहृद्या मतिः काव्यानंदरतिः सदा हितगतिः सर्वत्र मानोन्नतिः ॥ १०७ ॥ भोजने भवति देवगुरौ यस्य तस्य सततं सुभोजनम्॥नैव मुंचति रमालयं तदा वाजिवारणरथैश्च मंडितम् ॥ १०८ ॥ नृत्यलिप्सागते राजमानी धनी देवताधीशवंद्यः सदा धर्मवित् ॥ तंत्रविज्ञो बुधैर्मंडितः पंडितः शब्दविद्यानवद्यो हि सद्योजनः ॥ १०९ ॥ कुतूहली सकौतुके महाधनी जनः सदा निजान्वये च भास्करः कृपाकलाधरः सुखी ॥ निलिंपराजपूजिते सुतेन मूनयेन वा युतो महाबली धराधिपे च सद्मपंडितः ॥११०॥

गुरौ निद्रागते यस्य मूर्खता सर्वकर्मणि ॥ दरिद्रतापरिक्रान्तं भवनं पुण्यवर्जितम् ॥ १११ ॥

## अथ भृगुफलमाह ।

जनो बलीयानपि दंतरोगी भृगौ महारोषसमन्वितः स्यात् ॥ धनेन हीनः शयनं प्रयाते वरांगनासंगमलंपटश्च ॥ ११२ ॥ यदि भवेदुशना उपवेशने नवमणिव्रजकांचनभूषणैः ॥ सुखमजस्रमरिक्षय आदरादवनिपादपि मानसमुन्नतिः ॥ ११३ ॥ नेत्रपाणिं गते लग्नगेहे कवौ सप्तमे मानभे यस्य तस्य ध्रुवम् ॥ नेत्रपाते निपातो धनानामलं चान्यभे वासशाला विशाला भवेत् ॥ ॥ ११४ ॥ स्वालये तुंगभे मित्रभे भार्गवे तुंगमातंगलीलाकलापी जनः ॥ भूपतेस्तुल्य एव प्रकाशं गते काव्यविद्याकलाकौतुकी गीतवित्॥११५॥गमने जनने शुक्रे तस्य माता न जीवति॥ आधियोगो वियोगश्च जनानामरिभीतितः॥११६॥आगमनं भृगुपुत्रे गतवति वित्तेश्वरो मनुजः ॥ सत्तीर्थभ्रमशाली नित्योत्साही करांघ्रिरोगी च ॥ ११७ ॥ अनायासेनालं सपदि महसा याति सहसा प्रगल्भत्वं राज्ञः सदसि गुणविज्ञः किल कवौ ॥ सभायामायाते रिपुनिवहहन्ता धनपतेः समत्वं वा दाता बलतुरगगंता नरवरः ॥ ११८ ॥ आगमे भार्गवेनागमो जन्मिनामर्थराशेररातेरतीव क्षतिः ॥ पुत्रपातो निपातो जनानामपि व्याधिभीतिः प्रियाभोगहानिर्भवेत् ॥ ११९ ॥ क्षुधातुरो व्याधिनिपीडितः स्यादनेकधारातिभयार्दितश्च ॥ कवौ यदा भोजनगे युवत्या महाधनी पंडितमंडितश्च ॥ १२० ॥ काव्यविद्यानवद्या च हृद्या मतिः सर्वदा नृत्यलिप्सा गते भार्गवे ॥ शंखवीणामृदंगादिगानध्वनिव्रातनैपुण्यमेतस्य वित्तोन्नतिः ॥ १२१ ॥ कौतुकभवनं गतवति शुक्रे

शक्रेशत्वं सदसि महत्त्वम् ॥ हृद्या विद्या भवति च पुंसः पद्मा निवसति सद्मादरतः ॥ १२२ ॥ परसेवारतो नित्यं निद्रामुपगते कवौ ॥ परनिंदापरो वीरो वाचालो भ्रमते महीम् ॥ १२३ ॥

## अथ शनिफलम् ।

क्षुत्पिपासापरिक्रांतो विश्रांतः शयने शनौ ॥ वयसः प्रथमे रोगी ततो भाग्यवतां वरः ॥ १२४ ॥ भानोः सुते चेदुपवेशनस्थे करालकारातिजनानुतप्तः ॥ अपायशाली खलु दद्रुमाली नरोऽभिमानी नृपदंडयुक्तः ॥ १२५ ॥ नयनपाणिगते रविनंदने परमया रमयारमया युतः॥नृपतितो हिततो मतितोषकृद्बहुकलाकलितो विमलोक्तिकृत्॥१२६॥नानागुणग्रामधनाधिशाली सदा नरो बुद्धिविनोदमाली ॥ प्रकाशने भानुसुते सुभानुः कृपानुरक्तो हरपादभक्तः ॥ १२७ ॥ महाधनी नन्दननंदितः स्यादपायकारी रिपुभूमिहारी ॥ गमे शनौ पंडितराजभावं धरापतेरायतने प्रयाति ॥ १२८ ॥ आगमने पदगदभययुक्तः पुत्रकलत्रसुखेन विमुक्तः ॥ भानुसुते भ्रमते भुवि नित्यं दीनमना विजनाश्रयभावम् ॥ १२९ ॥ रत्नावलीकांचनमौक्तिकानां व्रातेन नित्यं व्रजति प्रमोदम् ॥ सभागते भानुसुते नितांतं नयेन पूर्णो मनुजो महौजाः ॥१३०॥ आगमे गदसमागमो नृणामब्जबन्धुतनये यदा तदा॥ मंदमेव गमनं धरापतेर्याचनाविरहिता मतिः सदा ॥ १३१ ॥ संगते जनुषि भानुनंदने भोजनं भवति भोजनं रसैः॥ संयुतं नयनमंदताततामोहतापपरितापिता मतिः ॥ १३२ ॥ नृत्यलिप्सागते मन्दे धर्मात्मा वित्तपूरितः ॥ राजपूज्यो नरो धीरो महावीरो रणांगणे ॥ १३३ ॥ भवति कौतुकभावमुपागते रविसुते वसुधावसुपूरितः॥अतिसुखी सुमुखी सुखपूरितः कवितयामलया

कलया नरः॥१३४॥निद्रागते वासरनाथपुत्रे धनी सदा चारुगुणै-रुपेतः॥पराक्रमी चंडविपक्षहंता सुवारकांतारतिरीतिविज्ञः॥१३५

## अथ राहुफलम् ।

यदागमो जन्मनि यस्य राहौ क्लेशाधिकत्वं शयनं प्रयाते॥ वृषेऽथ युग्मेपि च कन्यकायामजे समाजो धनधान्यराशेः॥१३६॥ उपवेशनमिह गतवति राहौ दद्रुगणेन जनः परितप्तः ॥ राजस-माजयुतो बहुमानी वित्तसुखेन सदा रहितः स्यात् ॥ १३७ ॥ ने-त्रपाणावगौ नेत्रे भवतो रोगपीडिते ॥ दुष्टव्यालारिचौराणां भयं तस्य धनक्षयः ॥ १३८ ॥ प्रकाशने शुभासने स्थितिः कृतिः शुभा नृणां धनोन्नतिर्गुणोन्नतिः सदा विदामगाविह ॥ धराधि-पाधिकारता यशोलताततता भवेन्नवीननर्नीरदाकृतिर्विदेशतो महो-न्नतिः ॥ १३९ ॥ गमने च यदा राहौ बहुसंतानवान्नरः ॥ पंडितो धनवान्दाता राजपूज्यो नरो भवेत् ॥ १४० ॥ राहावागमने क्रोधी सदा धीधनवर्जितः ॥ कुटिलः कृपणः कामी नरो भवति सर्वथा ॥ १४१ ॥ सभागते यदा राहुः पंडितः कृपणो नरः ॥ नानागुण-परिक्रांतो वित्तसौख्यसमन्वितः ॥१४२॥चेदगावागमं यस्य याते तदा व्याकुलत्वं सदारातिभीत्याभयम्॥महद्बन्धुवादो जनानां नि-पातो भवेद्वित्तहानिः शठत्वं कृशत्वम्॥१४३॥भोजने भोजनेनालं विकलो मनुजो भवेत् ॥ मन्दबुद्धिः क्रियाभीरुः स्त्रीपुत्रसुखवर्जि-तः ॥ १४४ ॥ नृत्यलिप्सागते राहौ महाव्याधिविवर्द्धनम् ॥ ने-त्ररोगो रिपोर्भीतिर्द्धनधर्मक्षयो नृणाम् ॥ १४५ ॥ कौतुके च यदा राहौ स्थानहीनो नरो भवेत् ॥ परदाररतो नित्यं परवित्तापहार-कः ॥ १४६ ॥ निद्रावस्थां गते राहौ गुणग्रामयुतो नरः ॥ कांता-संतानवान्धीरो गर्वितो बहुवित्तवान् ॥ १४७ ॥

## अथ केतुफलम्।

मेषे वृषेऽथ वा युग्मे कन्यायां शयनं गते ॥ केतौ धनसमृद्धिः स्यादन्यभे रोगवर्धनम् ॥ १४८ ॥ उपवेशं गते केतौ दद्रुरोगविवर्द्धनम् ॥ अरिवातनृपव्यालचौरसंकाशमंततः ॥ १४९ ॥ नेत्रपाणिं गते केतौ नेत्ररोगः प्रजायते ॥ दुष्टसर्पादिभीतिश्च रिपुराजकुलादपि ॥ १५० ॥ केतौ प्रकाशने संज्ञे धनवान्धार्मिकः सदा ॥ नित्यं प्रवासी चोत्साही सात्विको राजसेवकः ॥ १५१ ॥ गमनेच्छायां भवेत्केतुर्बहुपुत्रो महाधनः ॥ पंडितो गुणवान्दाता जायते च नरोत्तमः ॥ १५२ ॥ आगमने च यदा केतुर्नानारोगधनक्षयम् ॥ दंतघाती महारोगी पिशुनः परनिंदकः ॥ १५३ ॥ सभावस्थां गते केतौ वाचालो बहुगर्वितः ॥ कृपणो लम्पटश्चैव धूर्तविद्याविशारदः ॥ १५४ ॥ यदागमे भवेत्केतुः केतुः स्यात्पापकर्मणाम् ॥ बन्धुवादरतो दुष्टो रिपुरोगनिपीडितः ॥ १५५ ॥ भोजने तु जनो नित्यं क्षुधया परिपीडितः ॥ दरिद्री रोगसंतप्तः केतौ भ्रमति मेदिनीम् ॥ १५६ ॥ नृत्यलिप्सागते केतौ व्याधिना विकलो भवेत् ॥ बुद्बुदाक्षो दुराधर्षो धूर्तोऽनर्थकरो नरः ॥ ॥ १५७ ॥ कौतुकी कौतुके केतौ नटवामारतिप्रियः ॥ स्थानभ्रष्टो दुराचारी दरिद्रो भ्रमते महीम् ॥ १५८ ॥ निद्रावस्थां गते केतौ धनधान्यसुखं महत् ॥ नानागुणविनोदेन कालो गच्छति जन्मिनाम् ॥ १५९ ॥

## अथ सर्वभावफलम्।

शयनाद्येषु भावेषु यस्य तिष्ठंति सद्ग्रहाः ॥ नित्यं तस्य शुभज्ञानं निर्विशंकं द्विजोत्तम ॥१६०॥ भोजनाद्येकभावेषु पापास्तिष्ठंति सर्वथा ॥ तदा सर्वविनाशोऽपि नात्र कार्या विचारणा ॥ १६१ ॥

निद्रायां च यदा पापो जायास्थाने शुभं वदेत् ॥ यदि पापग्रहै-र्दृष्टो न शुभं च कदाचन ॥ १६२ ॥ सुतस्थाने स्थितः पापो निद्रायां शयनेऽपि वा ॥ तदा शुभं भवेत्तस्य नात्र कार्या वि-चारणा ॥ १६३ ॥ मृत्युस्थानस्थितः पापो निद्रायां शयनेपि वा ॥ तदा तस्यापमृत्युः स्याद्राजतः परतस्तथा ॥१६४॥ शुभग्रहैर्यदा युक्तः शुभैर्वा यदि वीक्षितः ॥ तदा च मरणं तस्य गंगायां च विशेषतः ॥ १६५ ॥ कर्मस्थाने यदा पापः शयने भोजनेऽपि वा ॥ तदा कर्मविकः स्यान्नानादुःखप्रदायकः ॥ १६६ ॥ दशमस्थो निशानाथो कौतुकी च प्रकाशने ॥ तदैव राजयोगः स्यान्निर्विशंकं द्विजोत्तम ॥ १६७ ॥ बलाबलविचारेण ज्ञायते च शुभाशुभम् ॥ एवं क्रमेण बोद्धव्यं सर्वभावेषु बुद्धिमन् ॥ १६८ ॥ इति श्रीबृह-त्पाराशरहोरापूर्वखंडसारांशे ग्रहाद्यवस्थाफलकथनं नाम चतु-स्त्रिंशोऽध्यायः समाप्तः ॥ ३४ ॥ ॥ छ ॥ ॥ छ ॥

## मैत्रेय उवाच ।

दशाः कति विधाः संति ह्येतन्मे ब्रूहि तत्वतः ॥ महर्षे त्वं स-मर्थोसि कृपया करुणानिधे ॥ १ ॥

## पराशर उवाच ।

अथातः संप्रवक्ष्यामि दशाभेदाननेकशः ॥ विंशोत्तरी दशा चोक्ता दशा तु षोडशोत्तरी ॥ २ ॥ द्वादशोत्तरिका ज्ञेया तथैवा-ष्टोत्तरी दशा ॥ पंचोत्तरी दशा तद्वद्दशा शतसमा स्मृता ॥ ३ ॥ दशा हि चतुरशीतिः प्राह चाथ द्विसप्ततिः ॥ तथा षष्टिसमा चोक्ता दशा षड्विंशतिः समा ॥ ४ ॥ नवमांशनवदशा राश्यंश-कदशाः स्मृताः ॥ दशा कालाभिधा चक्रदशाचक्रमुनीश्वरैः ॥ ॥ ५ ॥ चरपर्या दशा विप्र दशा स्थिरा द्विजोत्तम ॥ अथोत्तरद-

शा विप्र ब्रह्मता चापरा दशा ॥ ६ ॥ केंद्रादि कादिग्रहा दशा ॥ मंडूकं च दशा प्रोक्ता ते केतौ धनसम्वृद्धिः ॥ ७ ॥ योगार्द्ध च दशा विप्र दृग्दशा कथगते केतौ दद्रुरोग- कोणनाम्ना वै राशीनां च दशा तथा ॥ ८ ॥ ततः ॥ १४९ ॥ दशा ज्ञेया च वर्णदा ॥ पंचस्वरदशा विप्र भीतिश्च रिपु- स्मृता ॥ ९ ॥ ततः पैंज्यदशा ज्ञेया तथांशश्च दशा धार्मिकः गिंकदशा विप्र अष्टवर्गदशा स्मृता ॥ १० ॥ संध्या दशा च ज्ञा- तव्या पाचका च दशा द्विज ॥ द्विचत्वारिंशद्भेदाः स्युः कथयामि तवाग्रतः ॥ ११ ॥

## अथ विंशोत्तरीदशामाह ।

आनयनं प्रकारं च शृणुष्व द्विजपुंगव ॥ नामनक्षत्रपर्यंतमा- धारः कृत्तिकादितः ॥ १२ ॥ कृष्णे तु रविहोरायां चंद्रहोरागते सिते ॥ दहनात्स्वर्क्षपर्यन्तं गणयेन्नवभिर्हरेत् ॥ १३ ॥ सूर्येन्दुक्ष्मा- जतमसो वाक्पतिर्मंदचंद्रजौ ॥ केतुशुक्रौ क्रमादेते विज्ञेयात्र द- शाधिपाः ॥ १४ ॥ रसाशा मुनिधृत्यब्दा भूपतिर्धृतिवत्सराः ॥ सप्तेंदवो नगा व्योमबाहवो भास्करादितः ॥ १५ ॥ अस्या उदा- हरणमग्रे वक्ष्यामि ॥

## अथ षोडशोत्तरीदशामाह ।

एकः पंचयुतो रुद्रा धृत्यंतं वत्सराः क्रमात् ॥ रविभौमौ गुरु- र्मन्दः केतुश्चन्द्रो बुधः भृगुः ॥ १६ ॥ अष्टौ दशाधिपाः प्रोक्ता राहुहीना नवग्रहाः ॥ पुष्यभाज्जन्मभं यावद्गणयेद्वसुभिर्हरेत् ॥ १७ ॥ सूर्यहोरागते शुक्रे चन्द्रस्य कृष्णपक्षके ॥ तदा नृणां फलार्थाय विचिंत्या षोडशोत्तरी ॥ १८ ॥

अष्टोत्तरीदशाचक्रम्

| ग्रह | संख्या | नक्षत्र | | | | ग्रह | संख्या | नक्षत्र | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बुध २५४ | १७ | अ. ६८ | ज्ये. ६८ | मू. ६८ | ० ० | शु. २५२ | २१ | कृ. ८४ | रो. ८४ | मृ. ८४ | ० ० |
| मं. ९६ | ८ | ह. २४ | चि. २४ | स्वा. २४ | वि. २४ | रा. १४४ | १२ | उ. भा. ३६ | रे. ३६ | अ. ३६ | भ. ३६ |
| चं. भा. मं. १८० | १५ | म. ६० | पू. ६० | उ. ६० | ० ० | बृ. २२८ | १९ | ध. ७६ | श. ७६ | पू. भा. ७६ | ० ० |
| सू. मं. ७२ | ६ | आ. १८ | पु. १८ | पु. १८ | आ. १८ | श. १२० | १० | पू. ३० | उ. ३० | अभि. ३० | श्र. ३० |

## अथ पंचोत्तरीदशामाह ।

पतौ विनानुराधादि विज्ञेयं जन्मभावधि ॥ गणयेत्ससभिर्भक्ते शेषे कल्पा दशाः शुभाः ॥ २५ ॥ रविज्ञार्कमितो भौमो भार्गवो रजनीकरः ॥ वाचस्पतिश्च कर्कांगे तस्यैव द्वादशांगके ॥ २६ ॥ पंचोत्तरी दशा चिंत्या [illegible] द्विजोत्तम ॥ बलाबलविवेकेन यथान्यायेन योज अथ चतुरशी॥

## पंचोत्तरीदशोदाहरणम् ।

जन्मचंद्रः ८ । २५ । २९ । ३८ अस्य कलापिंडः १५९२९ । ३८ इदमष्टशतेन ८०० भक्तं लब्धं १९ गतमूलशेषांकवर्षमानपूर्वाषाढा नक्षत्रे केतुदशायां जन्म वर्षं १५ शेषांकाः ७२९ । ३८ अमी पंचदशभिर्गुणितांकाः १०९४४ । ३० अष्टशते ८०० भक्ते लब्धं पूर्वजन्मनि वर्षादि १३ । ८ । ५ । १ । ३० अस्य पंचदश १५ मध्ये ऊनितमिहजन्मनि भोग्यवर्षादि १ । ३ । २४ । ५८ । ३० एवं सर्वत्र ज्ञेयम् ॥

| अथ पंचोत्तरीदशायंत्रम्. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू. | बु. | श. | के. | मं. | गु. | चं. | बु. | ग्रहाः |
| १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | वर्षाणि |
| अनु | ज्ये. | मू. | पू. षा. | उ. षा. | श्र. | ध. | श. | न– |
| पू. भा. | उ. भा | रेवती | अ. | भ. | कृ. | रो. | मृ. | क्ष– |
| आ. | पु. | पुष्य | ऽऽश्ले. | म. | पू. फा. | उ. फा. | ह. | त्रा– |
| चि. | स्वा. | विशा. | ० | ० | ० | ० | ० | णि. |

## अथ शताब्दिकां दशामाह।

रविश्चंद्रो भृगुश्चांद्रिर्जीवो विश्वंभरात्मजः॥ दिवाकरिः क्रमादेते बाणा बाणा दिशो दश॥ २८॥ नखा नखाः खरामाश्च वर्षाणि दिनपादितः॥ वर्गोत्तमगते लग्ने दशा चिंत्या शताब्दिका॥ २९॥ पौष्णाज्जन्मर्क्षपर्यन्तं गणयेत्सप्तभिर्हरेत्॥ शेषांके रवितो ज्ञेया दशा शतसमास्त्विय॥ ३०॥

गणनीयं अत्र

अस्योदाहरणं० १५ मं० ८

वर्षे

जन्मचंद्रः ८। २५। २९। ३८ अस्य कलापिंडः १५९२९। ३८ अष्टशते ८०० भक्तं लब्धं १९ गतमूलवर्तमानपूर्वाषाढा शेषांकाः ७२९। ३८ रेवती एताः पूषतो गणनीयं तस्य शनिदशायां जन्म वर्षे ३० शेषांकाः ७२९। ३८ गुणितांकाः २१८८६ अस्याऽष्टशते ८०० भक्तं जातं पूर्वं भुक्तवर्षादि २७। ४। १०। ३। ० त्रिंशत् ३० मध्ये ऊनं जातम् इह जन्मनि भोग्यवर्षादि २। ७। १९। ५०। ० एवं सर्वत्र ज्ञेयम्॥

| अथ शताब्दिकयंत्रमाह. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | शु. | बु. | बृ. | मं. | श. | ग्रहाः |
| ५ | ५ | १० | १० | २० | २० | ३० | वर्षाणि |
| रेवती | अश्वि. | भ. | कृ. | रो. | मृ | आ. | न- |
| पुनर्व. | पुष्य | आ. | म. | पू. | उत्त. | ह. | क्ष- |
| चित्रा | स्वाती | विशा. | अनुरा. | ज्ये. | मूळ | पू. षा | त्रा- |
| उ. षा. | श्रवण | धनिष्ठा | श. | पू. | उत्तरा. | ० | णि. |

## अथ चतुरशीत्यब्दिकां दशामाह ।

रविश्चंद्रः कुजः सौम्यो जीवः शुक्रः शनैश्चरः ॥ तमध्वजौ विना सर्वे ग्रहा द्वादश हायनाः ॥ ३१ ॥ पवनाज्जन्मभं यावत्स-प्तष्टे दशा भवेत् ॥ चतुराशीतिका ज्ञेया कर्मेशे कर्मसंस्थिते ३२

## अस्योदाहरणमाह ।

जन्मचंद्रः ८। २५। २९। ३८ अस्य कलापिंडः १५९२९। ३८ अष्टशते ८०० भक्तं शेषं ७२९ लब्धं १९ गतमूलवर्तमानपूर्वाषाढा भृगुदशावर्ष १२ शेषांकाः ७२९। ३८ गुणितांकाः ८७५५। ३६ अस्याष्टशते ८०० भक्तं पूर्वजन्मनि वर्षादि १०।११।१०।१।१२ द्वादशमध्ये ऊनं इह जन्मनि भोग्यवर्षादि १।०।२९।५८। ४८ एवं सर्वत्र ज्ञेयम् ॥

| अथ चतुरशीत्यब्दिकाचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| रविः | चंद्रः | मंगलः | बुधः | बृह. | शुक्रः | शनिः | ग्रहाः |
| १२ | १२ | १२ | १२ | १२ | १२ | १२ | वर्षाणि |
| स्वाती | विशा. | अनुरा. | ज्येष्ठा | मूळ | पूर्वाषा. | उ.षा. | न- |
| श्रवण | धनिष्ठा | शतता. | पू. भा. | उ. भा. | रेवती | अश्वि. | क्ष- |
| भरणी | कृत्ति. | रोहिणी | मृग | आर्द्रा | पुनर्वसु | पुष्य | त्रा- |
| आश्ले. | मघा | पूर्वा | उत्तरा | हस्त | चित्रा | ० | णि. |

## अथ द्विसप्ततिकां दशामाह ।

लग्नेशे सप्तमे यत्र लग्ने वै मदनाधिपे ॥ चिंतनीया दशा तत्र द्वि-

धिका सप्ततिः समा ॥ ३३ ॥ नव वर्षाणि सर्वेषां ग्रहाणां वै वि-केतुनाम् ॥ मूलाज्जन्मर्क्षपर्यन्तं गणयेदष्टभिर्हरेत् ॥ शेषा दशा विचिंत्या च वदेच्चैव महामुने ॥ ३४ ॥

## अस्योदाहरणम् ।

जन्मचंद्रः ८। २५। २९। ३८ कलापिंडः १५९२९। ३८ इदमष्टशतेन ८०० भक्तं लब्धं १९ शेषांकाः ७२९। ३८ पूर्वाषाढानक्षत्रे चंद्रदशायां जन्म वर्षे ९ अस्य शेषांकाः ७२९। ३८ गुणितांकाः ६५। ६६। ४२ अस्याष्टशतेन भक्तेर्लब्धम् भुक्तवर्षादि ८। २। १५। ०। ५४ अस्य ९ मध्ये ऊनं तदा इह जन्मनि भोग्यवर्षादि० । ९। १४। ५९। ६ एवं सर्वत्र ज्ञेयम् ॥

| अथ द्विसप्ततिकादशायन्त्रम् । | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | ग्रहाः |
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | वर्षाणि |
| मूळ | पूर्वाषा. | उत्तरा. | श्रवण | धनिष्ठा | शतता. | पूर्वाभा | उ.भा. | न- |
| रेवती | आश्वि. | भरणी | कृत्ति. | रोहिणी | मृग | आर्द्रा | पुनर्वसु | क्ष- |
| पुष्य | आश्ले. | मघा | पूर्वा | उत्तरा | हस्त | चित्रा | स्वाती | त्रा- |
| विशा. | अनुरा. | ज्येष्ठा | ० | ० | ० | ० | ० | णि. |

## अथ षष्टिहायनी दशामाह ।

गुर्वर्कभूसुतानां च वर्षाणि दशकानिच ॥ ततः शशिज्ञशुक्रार्कपुत्रागूनां समाश्च षट् ॥ ३५ ॥ दस्रात्रयं चतुष्कं च त्रयं वेदं पुनः पुन ॥ यदैको लग्नराशीशश्चिंत्या षष्टिसमा तदा ॥ ३६ ॥

## अस्योदाहरणम् ।

जन्मचंद्रः ८। २५। २९। ३८। अस्य कलापिंडः १५९२९। ३८ इष्टमष्टशते ८०० भक्तं लब्धं १९ शेषांकाः ७२९। ३८ अग्रेऽष्टोत्तरीवदुक्तभोग्यादिकम् एवं सर्वत्र ज्ञेयम् ॥

| अथ षष्टिहायनीदशायन्त्रम् । | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| बृ. | र. | मं. | चं. | बु. | शु. | श. | रा. | ग्रहाः |
| १० | १० | १० | ६ | ६ | ६ | ६ | ६ | वर्षाणि |
| अश्वि. भरणी कृत्ति. | रोहिणी मृग आर्द्रा पुनर्वसु | पुष्य आश्ले. मघा | पूर्वा उ. फा हस्त चित्रा | स्वाती विशा. अनुरा. | ज्येष्ठा मूळ पूर्वाषा उत्तरा. | अभिजि श्रवण धनिष्ठा | शतता. पूर्वाभा उत्तरा. रेवती | न-क्ष-त्राणि. |

## अथ षट्त्रिंशतिकां दशामाह ।

श्रवणाज्जन्मभं यावद्गणयेदष्टभिर्भजेत् ॥ शशांकार्ऽर्कसुरेज्यार-ज्ञार्ऽर्कजौ शुक्रराहवः ॥ ३७ ॥ एकोयं च यतश्चैकाद्वर्षाण्येषां क्र-मात्स्मृताः ॥ दिवसे सूर्यहोरायां चिंत्या वै षड्गुणाब्दिकाः ॥३८॥ रात्रौ चांद्रामष्टतष्टादेकात्स नृपजन्मभात्॥सूर्येन्दुभूमिजानिशार्वी-शपुत्रसुरेज्यकाः ॥ ३९ ॥ भृगुमंदानुशिखिनो लग्नस्थाश्चिंतिता दशा ॥ दशां तेषां समा दद्यात्स्पष्टराश्यादयश्च ये ॥ ४० ॥ खेट-क्रमाद्दशा चिंत्या यदा लग्ने शनिः स्थितः ॥ कचिद्गृहस्तदानीं च न चिंत्या बद्दुषु बलात् ॥ ४१ ॥ अस्याः दशाया उदाहरणं विं-शोत्तरीवज्ज्ञेयम् ॥

| अथ षट्त्रिंशत्यब्दिकादशायंत्रम् । | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| चं. | सू. | बृ. | मं. | बु. | श. | शु. | रा. | ग्रहाः |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | वर्षाणि |
| श्र. | ध. | श. | पू. भा. | उ. भा. | रे. | अश्वि. | भर. | न- |
| कृ. | रो. | मृ. | आ. | पुन. | पुष्य | आश्ले. | मघा | क्ष- |
| पू. | उ. | ह. | चि. | स्वा. | वि. | अनु. | ज्येष्ठा. | त्रा- |
| मू. | पू. षा. | उ. षा. | ० | ० | ० | ० | ० | णि. |

## अथ नवमांशनवदशामाह ।

अथ राशिकर्म वक्ष्ये शृणुष्व द्विजपुंगव ॥ मध्ये लग्नादिकं

[illegible]ल्पे दशा तस्यादिमा भवेत् ॥ ४२ ॥ ततस्तदधिकस्यैवं तुल्ये नैसर्गिकाद्वलात् ॥ राशीशात्सप्तमांगेशाच्चिंत्या राशिक्रमाद्दशा ॥ ॥ ४३ ॥ यस्मिन्नवांशकस्थेंके दशा तस्यादिमा मता ॥ अग्राद-ब्जाच्च ये खेटाः केन्द्रांताः संस्थिताः क्रमात् ॥ ४४ ॥ दशामानं प्रवक्ष्यामि यथोक्तं ब्रह्मणा पुरा ॥ लिप्तीकृत्वा ग्रहं सोमखाश्विभि-र्भाजिते फलम् ॥४५॥ पुनः सूर्ये हृते लब्धं समाद्यांशकला दशा ॥ सर्वेषां मानवानां च दशा त्वेषा विचिंतयेत् ॥ ४६ ॥

## टीका ।

अथ श्रीमदाचार्यैः द्विचत्वारिंशद्दशानां मध्ये काश्चिदुक्तास्तदंतर्गता एव नवविधा आह । अथेति अथ उक्तदशानंतरं हे द्विजपुंगव राशिक्रमं वक्ष्ये तं शृणुष्व आकर्णयेति शिष्यं प्रति श्रवणाभिमुखीकरणं बोध्यम् । ग्रहे जा-त्यैकवचनम् । ग्रहेषु मध्ये यस्य ग्रहस्य राश्यादिकं राश्यंशकलाविकलाः एतत्सर्वं सर्वापेक्षया अल्पं न्यूनं तस्य ग्रहस्य आदिमा प्रथमा दशा भवेत् । आदिमेत्युक्त्याऽग्रस्था एवं क्रमेण बोध्याः । तदुक्तं भवति । उक्तापेक्षया-ऽधिका अवशिष्टापेक्षया च हीना द्वितीया एवं क्रमशस्तृतीयादिभेदः नवप-र्यन्तं बोध्यः इत्येकः प्रकारः । ततः तदनंतरं तदधिकस्य तेषु ग्रहेषु अधिकः सर्वापेक्षया अधिकः राश्यंशादिना अधिकः विशिष्टः तस्य प्रथमेति पूर्वोक्त-क्रमापेक्षया व्युत्क्रमशः द्वितीयादिप्रकारो बोध्यः इति द्वितीयो भेदः । तुल्ये नैसर्गिकाद्बलादिति उक्तभेदद्वये कदाचित् ग्रहद्वयस्य समत्वं प्राप्तं चेत्प्रथमभेदे यो नैसर्गिकबलहीनस्तस्यादौ ग्राह्या ततः नैसर्गिकबलाधिकस्येति । द्विती-यभेदे तु नैसर्गिकबलाधिकस्य आदौ नैसर्गिकबलहीनस्य पश्चात् ग्राह्येति समत्वेऽपि विरोधाभावोभेदद्वयेपि ज्ञेयः । अथ तृतीयभेदः नैसर्गिकाद्बलादि-ति नैसर्गिकबलेन न्यूनस्य प्रथमा तदपेक्षया अधिकस्य द्वितीयेत्यादि तृ-तीयः प्रकारः इति तृतीयभेदः । अस्मिन्भेदत्रयेऽपि राहुकेत्वंतर्गतत्वं बोध्यम् । अन्यथा नवानुपलब्धेः राश्यंशादिमत्त्वात्तयोः नैसर्गिकबलवत्वाच्चेति । ननु नैसर्गिकाद्बलादित्यस्यैव प्रकारद्वयं कथमुक्तमिति चेन्नवभेदप्रपूर्तये नैस-

त्रिकादित्यस्य पुनरावृत्तिरिति। राशीशात्सप्तमांगेशादिति। राशीनाम् राशे रीशः राशीशः तस्मात् एतदुक्तं भवति । जन्मराशिर्मिथुनः तदीशो बुध-स्तस्य प्रथमा ततःकर्केशश्चंद्रस्तस्य द्वितीयेत्यादि । ननु अत्र राशिक्रमो ग्राह्यो, वा ग्रहक्रमो ग्राह्य इत्याशंकायां राशिक्रम एव "राशिक्रमाद्दश" इत्युक्तेः । ननु तर्हि मिथुनादिक्रमे प्रथमा बुधस्य चतुर्थ्यपि बुधस्य पुनः प्राप्ता कन्याधिपत्वादिति चेन्नात्र ग्रहक्रमः तस्माद्द्वादशराशीशानामेव दशा-ग्राह्यत्वादेकस्यैव पुनः प्राप्तौ न दोषः । अत्र वर्षप्रमाणं तु प्रतिराशौ नव-संख्ययैव ग्राह्यं अष्टोत्तरसंख्योपलब्धेरिति चतुर्थो भेदः । सप्तमांगेशा-दिति–सप्तमं च अंगं च तयोरीशःतस्मादेतदुक्तं भवति लग्नात्सप्तमाधिपतेः सकाशाद्राशिक्रमाद्दशेति पंचमो भेदः । एवमेव अंगेशान्नाम लग्नाधिपतेः प्रथमा धनाधिपतेर्द्वितियेत्यादिराशिक्रमात्प्राग्वदेव दशा ज्ञेया इति षष्ठो भेदः । अत्र चतुर्थभेदमारभ्य षष्ठभेदपर्यन्तं शन्यंताः सप्तैव ग्रहाः राहुके-त्वोर्ग्रहाभावादिति । यस्मिन्निति यस्मिन्नवांशे अंगं लग्नं विद्यते तस्य नवांशस्य य ईशः तस्मादारभ्य नवानां ग्रहाणां दशाः क्रमाज्ज्ञेयाः इति सप्तमो भेदः । अग्रादिति–नवांशानां यदग्रं अंतिमं नाम नवमो ग्रहः त-दारभ्य प्रथमपर्यन्तं ग्रहाणां क्रमशो दशा ज्ञेया इति अष्टमो भेदः । अब्जा-दिति–चंद्रात्सकाशाद्रविपर्यन्तं नवानां क्रमाद्दशा ग्राह्याः । अस्मिन् त्रिप्र-कारके दशाभेदे राहुकेत्वंतर्गतत्वसूचनाय "खेटाः केत्वंताः संस्थिताः क-मात्" इति स्फुटं लिखितं तेन सप्तमभेदमारभ्य नवपर्यंतं राहुकेत्वंतर्गतत्वं बोध्यं न तु राशीशांगेशसप्तमेशादिभेदत्रयवत् । राहुकेतुराहित्यमिति दिक् अग्रे श्लोकद्वयेन दशानयनप्रकारः स्फुटः ॥

## अथ नवांशनवदशोदाहरणमाह ।

यथा जन्मचंद्रः ८।२५।२९।३८।अस्य कलापिंडः १५९२९।३८ अस्य त्रिंशता २० भक्तेर्लब्धांकाः ७६४ इदं द्वादशभिर्भक्तेर्लब्धं भुक्तवर्षादि ६५०।१९।०।० अस्यामष्टोत्तर १०८ मूनं कार्यम् तदा भोग्यवर्षादि ४३।११ ११।०।० एवं सर्वत्र ज्ञेयम् परं च यत्र यत्र ग्रहाणां दशा तत्र तत्र श्लोक [illegible]

णां द्वादश १२ वर्षाणि ग्राह्याणि यत्र राशिदशा तत्र प्रतिराशिनववर्षाणि ग्राह्याणि सर्वत्राष्टोत्तरशतमानं ज्ञातव्यम् ॥

## अथ राश्यंशकदशामाह ।

तन्वादिभावाः संस्पष्टाः प्रोक्तमार्गेण चानयेत् ॥ लग्नेशांशस्थितो यत्र दशास्तस्य इमाः स्मृताः ॥ ४७ ॥ द्वितीयेशादितश्चाग्रे ज्ञेया राश्यंशका दशा ॥ चिंत्या लग्ने बलवती लग्नेशे वा बलान्विते ॥ ४८ ॥

अस्य दशाया उदाहरणं नवमांशवज्ज्ञेयम् ॥

## अथ कालदशामाह ।

संध्या पंचघटी प्रोक्ता दिनषष्ट्यंशनाडिका ॥ सूर्यबिंबार्द्धतः पूर्वे परस्तादुदयादपि ॥ ४९ ॥ एवं संध्याद्वयं विंशद्घटिकाभिः प्रकीर्तितम् ॥ दिनस्य विंशद्घटिकाः पूर्णसंज्ञा उदाहृताः ॥ ५० ॥ निशायामुग्धसंज्ञा च घटिका विंशतिश्च याः ॥ सूर्योदयस्य याः संध्याः खण्डाख्या दश नाडिकाः ॥ ५१ ॥ अस्तकालस्य या संध्या सुधाख्या दश नाडिकाः ॥ पूर्णमुग्धे गतघटी षड्गुणे नववा लिखेत् ॥ ५२ ॥ तथा खंडसुधासूर्ये हते तु नवधा लिखेत् ॥ विभक्तानींद्रिययुगैर्मानाख्या न फलानि च ॥ ५३ ॥ क्रमात्सूर्यादिकानां वै मानमुक्तं मुनीश्वरैः ॥ स्वस्वमानं स्वसंख्याभिर्गुणिते स्युः समादयः ॥ ५४ ॥

## टीका ।

दिनस्येति । अत्र दिनशब्दोऽहोरात्रपरः अहोरात्रं षष्टिघट्यात्मकं तन्मध्ये पंचघटिका संध्या प्रोक्ता कथिता सा च द्विविधा । अवांतरिता चतुर्विधा भवति । तद्यथा सूर्यबिंबार्द्धादस्तादुदयादपि पंच पंच घटिकाः पूर्वापरा ज्ञेयाः । एवं द्विविधा संध्या दश दश घटिकाभिः विंशद्घटिकाः कथिताः । दिनस्य शेषविंशद्घटिका पूर्णसंज्ञा रात्रौ शेषविंशद्घटिका मुग्धसंज्ञा । सूर्यो-

दयस्य पूर्वापरे पंच पंच घटिका दश नाडिका सा संधाख्या संज्ञा एवं पूर्णमुग्धखंडसुधाश्चतुर्विधभेदाः संति एषां मध्ये पूर्णमुग्धे यदा जन्मसमये तदा गतघटीभिः षड्गुणा कार्यो । तेन नवधा लिखेत् । अथवा खंडसुधायां जन्म तदा गतघटीभिः द्वादशगुणितेन नवधा लिखेत्। परं इंद्रिययुगैः४५ भैक्तेलब्धम् तत्सूर्यादिग्रहाणां श्रीमदाचार्येण मानमुक्तं नाम कथितं सूर्यादिग्रहाणां स्वस्वसंख्याभिः स्वस्वमाने गुणिते सति समादयो वर्षादयः स्युः ॥

## अस्योदाहरणम् ।

अथ कालचक्रं द्विभेदभिन्नं तन्मध्ये प्रथमभेदोदाहरणमाह । यथा दिनस्य विंशद्घटिकायां जन्मेष्टं ८।१६ तन्मध्ये सूर्योदय ५ घटिका ऊनं कार्यं शेषघटिका ३।१६ इदं पूर्णसंज्ञायां जन्म । एत एव षड्गुणाः कार्योः जातांकाः १९।३६ इदं पंचचत्वारिंशत् ४५ भक्तेर्लब्धं ०।२६।८।०।० एतत्सूर्यादिग्रहाणां मानं परं च सर्वेषां ग्रहाणां स्वस्य संख्याभिर्गुणितं यथा सूर्यसंख्या १ गुणिता जातांकाः ०।२६।८।०।०मासस्थाने द्वादश १२ भक्तेर्लब्धं वर्षादि २।२।८।०।० एवं सर्वत्र ज्ञेयम् ॥

अथ कालचक्रमहादशायंत्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| २ | ४ | ६ | ८ | १० | १३ | १५ | १७ | १९ |
| २ | ४ | ६ | ९ | ११ | १ | ३ | ६ | ८ |
| ८ | १६ | २४ | २ | १० | १८ | २४ | ४ | १२ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० |
| १० | ० | ० | ० | ० | ० | ० | ० | ० |
| १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ |
| ०० | ०३ | ०७ | १३ | २२ | ३२ | ४५ | ६१ | ७८ |
| १७ | १७ | १७ | १७ | १७ | १७ | १८ | १८ | १८ |
| ६५ | ६८ | ७२ | ७८ | ८७ | ९८ | ११ | २७ | ४४ |
| १० | ० | ४ | ११ | ८ | ८ | ९ | १ | ७ |
| ४ | १२ | २८ | २२ | २४ | ४ | २२ | १८ | २२ |
| १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| २२ | २२ | २२ | २२ | २२ | [illegible] | २२ | २२ | २२ |

## अथ पुनः कालचक्रदशामाह ।

कालचक्रं प्रवक्ष्यामि नराणां हितकाम्यया ॥ यावद्देहादिजीवांतमिति चक्रस्य निर्णयम् ॥ ५५ ॥ सप्तविंशतिऋक्षाणि अनुलोमविलोमतः ॥ वक्ष्येऽहं वै तवाग्रे च अश्विन्यादि यथाक्रमम् ॥ ५६ ॥ द्वे द्वे रेखात्मके चक्रे चतुःकोणं लिखेत् क्रमात् ॥ द्वादशग्रहनिर्माणं मेषादिद्वादशं न्यसेत् ॥ ५७ ॥ ईशान्यादिक्रमेणैव मीनांतं द्वादश न्यसेत् ॥ एवं क्रमेण चक्रं तद्विलिखेद्विजनंदन ॥ ५८ ॥ द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वं समानकम् ॥ गृहाणि द्वादशैवं स्युस्सव्येषु च यथाक्रमम् ॥ ५९ ॥ द्वितीयादिषु कोष्ठेषु राशीन्मेषादिकान्न्यसेत् ॥ एवं द्वादशराश्याख्यं कालचक्रमुदीरितम् ॥ ६० ॥ अश्विन्यादित्रयस्तारा: सव्यमार्गं प्रतिष्ठितम् ॥ अपसव्यत्रयस्तारा रोहिण्यादि यथाक्रमम् ॥ ६१ ॥ अग्रे पुनः कालचक्रदशासव्यापसव्यमार्गमग्रे स्फुटं वक्ष्यति ॥

## अथ चक्रदशामाह ।

राशीश्वराद्दशा ज्ञेया सूर्यादीनां क्रमात्पुनः ॥ दिवारात्रिस्तथा संध्या त्रिकाले त्रिविधा दशा ॥ ६२ ॥ चक्राख्या च दशा प्रोक्ता तवाग्रे द्विजनंदन ॥ लग्नस्थस्य दशा चादौ ततो वित्तस्थितादयः ॥ ६३ ॥ त्रिधादयो यदैकस्थस्तदा भागादयोधिकात् ॥ तत्रापि तुल्यो नैसर्गाद्बलात्सूर्योधिकस्य च ॥ ६४ ॥ राशिप्रमितवर्षाणि भागाद्यान्यपपाततः ॥ भावानामपि लग्नाच्च वर्षाणि दिङ्मितानिच ॥ ६५ ॥

## चक्रदशोदाहरणमाह ।

दिवा जन्म तदा राशीश्वराद्दशा ज्ञेया । अत्र तु राशीश्वरो गुरुः कुंभस्तेनायं कुंभआदिदशा ग्राह्या । रात्रौ जन्म तदा लग्नस्य दशा ग्राह्या । संध्यायां जन्म तदा धनभावाद्दशा ग्राह्या एवं सर्वत्र ज्ञेयम् ॥

| अथ चक्रदशामाह । | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | मासाः |
| १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | १०<br>०<br>०<br>०<br>० | वर्षाणि मासा-दयः |
| १९०० | १०<br>१९ | २०<br>१९ | ३०<br>१९ | ४०<br>१९ | ५०<br>१९ | ६०<br>१९ | ७०<br>१९ | ८०<br>१९ | ९०<br>१९ | २००० | २०१० | संवत. |
| १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | १०<br>४<br>१४<br>२२ | रविः |

## अथ चरपर्यादशामाह ।

मैत्रेय सुमहाप्राज्ञ परोपहितकारक ॥ आयुर्दायविचारो हि गहनः सर्वदा द्विज ॥ ६६ ॥ आयुर्बहुप्रकारेण भाषितं ब्रह्मणा पुरा॥ लग्नर्क्षग्रहयोगेन आयुर्दायं वदामि ते ॥६७॥ नक्षत्रायुः पुरा विप्र तवाग्रे कीर्थितं मया ॥ अधुना संप्रवक्ष्यामि राश्यायुर्द्विजसत्तम ॥६८॥ लग्नादिव्ययपर्यंतो राशियों द्वादशो द्विज ॥ आयुर्वर्षप्रदातव्या एभिश्चरपर्या दशा ॥६९॥ ओजर्क्षाणां क्रमाद्विप्र समानां व्युत्क्रमात्पुनः ॥ नाथांतेन समा ज्ञेया निर्विशंकं द्विजोत्तम ॥ ॥ ७० ॥ मेषो वृषोऽथ मिथुनो तुलालिश्च धनुर्धरः ॥ एतेषामोजसंज्ञा स्यादब्दानां गणना क्रमात् ॥ ७१ ॥ कर्कः सिंहश्च कन्या च नक्रकुंभझषा द्विज ॥ एतेषां समसंज्ञा स्याद्वर्षाणां व्युत्क्रमाद्विज ॥ ७२ ॥ स्वर्क्षसंस्थितखेटस्य वर्षाणि द्वादशैव हि ॥ धनस्थे चैकवर्षं तु तृतीये हायनद्वयम ॥ ७३ ॥ तुर्ये वर्षत्रयं विप्र पंचमे तुर्यहायनम् ॥ रिपुस्थे पंच वर्षाणि षड्वर्षाणि च सप्तमे ॥ ७४ ॥

रंध्रस्थे नगवर्षाणि चाष्टवर्षाणि पुण्यगे ॥ नभःस्थे चांकवर्षाणि दिग्वर्षाणि तु लाभगे ॥ ७५ ॥ व्ययस्थे रुद्रवर्षाणि राश्यब्दाश्च मयानघ ॥ पूर्वोक्तेन प्रकारेण कथिता वै द्विजोत्तम ॥ ७६ ॥ वृश्चिकाधिपती द्वौ च कुजकेतू द्विजोत्तम ॥ स्वर्भानुपंगू कुंभस्य पती द्वौ चिंतयेद्द्विज ॥ ७७ ॥ स्वर्क्षे यदि स्थितौ द्वौ च भानुवर्षप्रदायकौ ॥ परर्क्षे संमतौ द्वौ च नाथांते न विचिंतयेत् ॥ ७८ ॥ परर्क्षे भिन्नभिन्नस्थौ द्वयोर्मध्ये तु यो बली ॥ तस्य नाथांतरीत्या च वर्षाणि संलिखेद्द्विज ॥ ७९ ॥ अग्रहात्सग्रहः प्राणी सग्रहादधिकग्रहः ॥ साम्ये चरस्थिरद्वंद्वाः क्रमात्स्युर्बलिनो द्विज॥८०॥ राशिसाम्ये यदा विप्र बहुवर्षप्रदो बली ॥ तद्भावादुच्चगः खेटो बलवान्सौबलो द्विज ॥ ८१ ॥ यद्यल्पवर्षदो विप्र तदापि तुंगगो बली ॥ नाथांतेन समा ज्ञेया पूर्वोक्तेन क्रमेण हि ॥ ८२ ॥ उच्चखेटस्य यद्भावे वर्षमेकं तु निक्षिपेत् ॥ तथैव नीचखेटस्य वर्षमेकं त्यजेद्द्विज ॥ ८३ ॥ एकः स्वक्षेत्रगोन्यस्तु परत्र यदि संस्थितः ॥ तदान्यत्र स्थितं नाथं परिगृह्य दशां नयेत् ॥ ८४ ॥ एकः स्वोच्चगतस्त्वन्यः परत्र यदि संस्थितः ॥ ग्राहयेदुच्चखेटस्थं राशिमन्यं विहाय वै ॥ ८५ ॥ एवं सर्वं समालोच्य दशायां निधनं वदेत् ॥ पापयोगे पापदृष्ट्या यस्य पापात्रिकोणगाः ॥ ८६ ॥ निधनं तद्दशायां वै भाषितं ब्रह्मणा यथा ॥ चरपर्यादशायास्ते कथयिष्याम्यहं फलम् ॥ ८७ ॥

## अथ चरदशोदाहरणमाह ।

ओजराशीनां क्रमगणना समराशीनां विपरीतगणना नाथांतं राशिस्वामिपर्यन्तं यावत्संख्या तानि वर्षाणि स्युः । मेषवृषमिथुनतुलावृश्चिकधनूंषि एतत् ओजराशिसंज्ञा । कर्कसिंहकन्यामकरकुंभमीनानां समराशिसंज्ञा । स्वराशि[illegible]तखेटे [illegible] तदा द्वादश[illegible]र्षाणि ग्राह्याणि । स्वो[illegible] तदा

णि विहीनत्वं पापकर्म तथैव च ॥ सर्वत्रजनविद्वेषी आत्मबंधुवियोगकृत् ॥ ५५ ॥ अकस्मात्कलहं चैव जीवस्यांतर्गते रवौ ॥ द्वितीयद्यूननाथे तु देहपीडा भविष्यति ॥ ५६ ॥ तद्दोषपरिहारार्थमादित्यहृदयं जपेत् ॥ सर्वपीडोपशमनं सूर्यप्रीतिं च कारयेत् ॥ ५७ ॥

## अथ चंद्रभुक्तिमास १६ दिन ० तस्य फलम् ।

जिवस्यांतर्गते चंद्रे केंद्रे लाभत्रिकोणगे ॥ स्वोच्चे वा स्वक्षेत्रराशिस्थे पूर्णचंद्रबलैर्युते ॥ ५८ ॥ दायेशाच्छुभराशिस्थे राजसन्मानवैभवम् ॥ दारपुत्रादिसौख्यं च क्षीराणां भोजनं तथा ॥ ५९ ॥ सत्कर्म च तथा कीर्तिः पुत्रपौत्रादिवृद्धिदम् ॥ महाराजप्रसादेन सर्वसौख्यं धनागमम् ॥ ६० ॥ अनेकजनसौख्यत्वं दानधर्मादिसंग्रहः ॥ षष्ठाष्टमव्यये चंद्रे त्रिकोणे पापसंयुते ॥ ६१ ॥ दायेशात्षष्ठरंध्रे वा व्यये वा बलवर्जिते ॥ मानार्थबंधुहानिश्च विदेशपरिविच्युतिः ॥ ६२ ॥ नृपचौरादिपीडा च दायादिजनविद्रवम् ॥ मातुलादिवियोगश्च मातृपीडा तथैव च ॥ ६३ ॥ द्वितीयषष्ठमाधीशौ देहपीडा भविष्यति ॥ तद्दोषपरिहारार्थं दुर्गापाठं च कारयेत् ॥ ६४ ॥

## अथ कुजभुक्तिमास ११ दिन ६ तस्य फलम् ।

जीवस्यांतर्गते भौमे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे वा स्वक्षेत्रगे वापि तुंगांशे स्वांशगे पिवा ॥ ६५ ॥ विद्याविवाहकार्याणि ग्रामभूम्यादिलाभकृत् ॥ जनसामर्थ्यमाप्नोति सर्वकार्यार्थसिद्धिदम् ॥ ६६ ॥ दायेशात्केंद्रलाभस्थे लाभे वा धनगेपि वा ॥ शुभयुक्ते शुभैर्दृष्टे धनधान्यादिसंपदम् ॥ ६७ ॥ मिष्टान्नदानविभवं राजप्रीतिकरं शुभम् ॥ स्त्रीसौख्यं च सुताबाप्तिः पुण्यतीर्थफलप्रदम् ॥ ६८ ॥ दायेशात्षष्ठरंध्रे वा व्यये वा नीचगेपि वा ॥ पापयुक्ते-

क्षिते वापि धान्यार्थगृहनाशनम् ॥ ६९ ॥ नानारोगभयं दुःखं नेत्ररोगादिसंभवम् ॥ पूर्वार्द्धे क्लेशमाधिक्यमपरार्द्धे महत्सुखम् ॥ ॥ ७० ॥ द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजम् ॥ अनड्वाहं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ ७१ ॥

## अथ राहुभुक्तिमास २८ दिन २४ तस्य फलम् ।

जीवस्यांतर्गते राहौ स्वोच्चे वा केंद्रगेपि वा ॥ मूलत्रिकोणभाग्ये च केंद्राधिपसमन्विते ॥ ७२ ॥ शुभयुक्तेक्षिते वापि योगप्रीतिं समादिशेत् ॥ भुक्त्यादौ शरमासांश्च धनधान्यपरिश्रमम् ॥७३॥ देशग्रामाधिकारं च यवनप्रभुदर्शनम् ॥ गृहे कल्याणसंपत्तिर्बहुसेनाधिपत्यताम् ॥ ७४ ॥ दूरयात्राधिगमनं पुण्यधर्मादिसंग्रहः ॥ सेतुस्नानफलावाप्तिरिष्टसिद्धिसुखावहम् ॥ ७५ ॥ दायेशात्षष्ठरंध्रे वा व्यये वा पापसंयुते ॥ चौराहिव्रणभीतिश्च राजवैषम्यमेव च ॥ ७६ ॥ गृहे कर्मकलापेन व्याकुलं भवति ध्रुवम् ॥ सोदरेण विरोधः स्याद्दायादिजनविद्वरम् ॥ ७७ ॥ गृहे त्वशुभकार्याणि दुःस्वप्नादिभयं ध्रुवम् ॥ अकस्मात्कलहश्चैव क्षुद्रशून्यादिरोगकृत् ॥ ॥ ७८ ॥ द्विसप्तमस्थिते राहौ देहबाधां विनिर्दिशेत् ॥ तद्दोषपरिहारार्थं मृत्युंजयजपं चरेत् ॥ ७९ ॥ छागदानं प्रकुर्वीत सर्वसौख्यादिमादिशेत् ॥ ८० ॥ इति बृहत्पाराशरहोरापूर्वखंडसारांशे गुरोरंतर्दशाफलकथनं नामैकचत्वारिंशोध्यायः ॥ ४१ ॥

## अथ शनिभुक्तिमासाः ३६ दिन ० तस्य फलम् ।

मूलत्रिकोणस्वर्क्षे वा तुलायामुच्चगेपि वा ॥ केंद्रत्रिकोणलाभे वा राजयोगादिसंयुते ॥ १ ॥ राजलाभं महत्सौख्यं दारपुत्रादिवर्द्धनम् ॥ वाहनत्रयसंयुक्तं गजाश्वांबरसंकुलम् ॥ २ ॥ महाराजप्रसादेन अश्वदोत्यादिलाभकृत् ॥ चतुष्पाज्जीवलाभः स्याद्ग्राम-

भूम्यादिलाभकृत् ॥ ३ ॥ षष्ठाष्टमव्यये मंदे नीचे वा पापसंयुते ॥ तद्भुक्त्यादौ राजप्रीतिर्विषशस्त्रादिपीडनम् ॥ ४ ॥ रक्तस्रावं गुल्मरोगमतिसारादिपीडनम् ॥ मध्ये चौरादिभीतिश्च देशत्यागं मनोरुजम् ॥ ५ ॥ अंते शुभकरं चैव ग्रामभूम्यादिलाभकृत् ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युर्भविष्यति ॥ ६ ॥ तद्दोषपरिहारार्थं मृत्युंजयजपं चरेत् ॥ ७ ॥

अथ बुधभुक्तिमासाः ३२ दिनानि ९ तस्य फलम् ।

मंदस्यांतर्गते सौम्ये त्रिकोणे केंद्रगेपि वा ॥ सन्मानं च यशः कीर्तिर्विद्यालाभं धनागमम् ॥ ८ ॥ स्वदेशे सुखमाप्नोति वाहनादिफलैर्युते ॥ यज्ञादि कर्मसिद्धिश्च राजयोगादिसंभवम् ॥ ९ ॥ देहसौख्यं मनोत्साहं गृहे कल्याणसंभवम् ॥ सेतुस्नानफलावाप्तिस्तीर्थयात्रादिकर्मणा ॥ १० ॥ वाणिज्याद्धनलाभश्च पुराणश्रवणादिकम् ॥ अन्नदानफलं चैव नित्यं मिष्टान्नभोजनम् ॥ ११ ॥ षष्ठाष्टमव्यये सौम्ये नीचे वास्तंगते सति ॥ रव्यारफणिसंयुक्ते दायेशाद्वा तथैव च ॥ १२ ॥ नृपाभिषेकमर्थाप्तिर्देशग्रामाधिपत्यता ॥ फलमीदृशमादौ तु मध्यांते रोगपीडनम् ॥ १३ ॥ नष्टानि सर्वकार्याणि व्याकुलं च महद्भयम् ॥ द्वितीयसप्तमाधीशे देहबाधा भविष्यति ॥ १४ ॥ तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥ अन्नदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १५ ॥

अथ केतुभुक्तिमासाः १३ दिन ९ तस्य फलम् ।

मंदस्यांतर्गते केतौ शुभदृष्टियुतेक्षिते ॥ स्वोच्चे वा शुभराशिस्थे योगकारकसंयुते ॥ १६ ॥ मंदस्यांतर्गते केतौ स्थानभ्रंशं महद्भयम् ॥ दरिद्रबंधनं भीतिः पुत्रदारादिनाशनम् ॥ १७ ॥ स्वप्नभोश्च महाक्लेशं विदेशगमनं तथा ॥ रन्ध्राधिपेन संयुक्ते आर्द्रे

सौख्यं धनागमम् ॥ १८ ॥ गंगादिसर्वतीर्थेषु स्थानदैवतदर्शनम् ॥ दायेशात्केंद्रकोणे वा षष्ठाष्टव्ययराशिगे ॥ १९ ॥ समर्थो धर्मबुद्धिश्च सौख्यं च नृपमागमम् ॥ षष्ठाष्टमव्यये केतौ दायेशाद्वा तथैव च ॥ २० ॥ अपमृत्युभयं चैव कुत्सितान्नं च भोजनम् ॥ शीतज्वरातिसारश्च व्रणचौरादिपीडनम् ॥ २१ ॥ दारपुत्रवियोगश्च संसारो भवति ध्रुवम् ॥ द्वितीयद्यूनराशिस्थे देहपीडा भविष्यति ॥ २२ ॥ छागदानं प्रकुर्वीत ह्यपमृत्युभयं हरेत् ॥ २३ ॥

अथ शुक्रभुक्तिमासाः २८ दिन ० तस्य फलम् ।

मन्दस्यांतर्गते शुक्रे स्वोच्चे स्वक्षेत्रगेपि वा ॥ केंद्रे वा शुभसंयुक्ते त्रिकोणे लाभगेपि वा ॥ २४ ॥ दारपुत्रधनप्राप्तिर्देहारोग्यं महोत्सवः ॥ गृहे कल्याणसंपत्ती राज्यलाभं महत्सुखम् ॥ २५ ॥ महाराजप्रसादेन इष्टसिद्धिः सुखावहा ॥ सन्मानः प्रभुसन्मानः प्रियवस्त्रादिलाभकृत् ॥ २६ ॥ द्वीपांतराद्वस्त्रलाभः श्वेताश्वोमहिषी तथा ॥ गुरुचारवशाद्भाग्यं सौख्यं च धनसंपदः ॥२७॥ शनिचारान्मनुष्योसौ योगमाप्नोत्यसंशयः॥शत्रुनीचास्तगे शुक्रे षष्ठाष्टव्ययराशिगे ॥ २८ ॥ दारनाशं मनःक्लेशं स्थाननाशं मनोरुजम् ॥ दारा वा स्वजनक्लेशः संतापो जनविड्वरम्॥२९॥दायेशाद्भाग्यगेनैव केंद्रे वा लाभसंयुते ॥ राजप्रीतिकरं चैव मनोभीष्टप्रदायकम्॥३०॥ दानधर्मदयायुक्तस्तीर्थयात्रादिकं फलम् ॥ शास्त्रार्थकाव्यरचनां वेदांतश्रवणादिकम् ॥३१॥ दारपुत्रादिसौख्यं च वाहनछत्रलाभकम् ॥ दायेशाद्व्ययगे शुक्रे षष्ठे वा ह्यष्टमेपि वा ॥३२॥ नेत्रपीडा ज्वरभयं स्वकुलाचारवर्जितम् ॥ कपोले दंतशूलादि हृदे गुह्यनिपीडनम् ॥ ३३ ॥ जलभीतिर्मनस्तापं वृक्षात्पतनसंभवम् ॥ राजद्वारे जनद्वेषः सोदरेण विरोधनम् ॥ ३४ ॥ द्वितीयसप्तमाधीशे

आत्मक्लेशो भविष्यति ॥ तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ ३५ ॥ श्वेतां गां महिषीं दद्यादायुरारोग्यवृद्धिदाम् ॥ ३६ ॥

## अथ रविभुक्तिमास ११ दिन १२ तस्य फलम् ॥

मंदस्यांतर्गते सूर्ये स्वोच्चे स्वक्षेत्रगेपि वा ॥ भाग्याधिपेन संयुक्ते केंद्रलाभत्रिकोणगे ॥ ३७ ॥ शुभदृष्टियुते वापि स्वप्रभोश्च महत्सुखम् ॥ गृहे कल्याणसंपत्तिः पुत्रादिसुखवर्द्धनम् ॥ ३८ ॥ वाहनांबरपश्वादिगृहे गोक्षीरसंकुलम् ॥ षष्ठाष्टमव्यये मंदे दायेशाद्वा तथैव च ॥ ३९ ॥ हृद्रोगो मानहानिश्च स्थानभ्रंशं मनोरुजम् ॥ इष्टबंधुवियोगश्च उद्योगं च विनाशनम् ॥ ४० ॥ तापज्वरादिपीडा च व्याकुलं भयमेव च ॥ आत्मसंबंधमरणमिष्टबंधुवियोगकृत् ॥ ४१ ॥ द्वितीयद्यूननाथे तु देहबाधा भविष्यति ॥ तद्दोषपरिहारार्थं सूर्यपूजां च कारयेत् ॥ ४२ ॥

## अथ चंद्रभुक्तिमासाः १९ दिन ० तस्य फलम् ।

मंदस्यांतर्गते चंद्रे जीवदृष्टिसमन्विते ॥ स्वोच्चे स्वक्षेत्रकेंद्रस्थे त्रिकोणे लाभगेपि वा ॥ ४३ ॥ पूर्णचंद्रे सौम्ययुक्ते राजप्रीतिसमागमम् ॥ महाराजप्रसादेन वाहनांबरभूषणम् ॥ ४४ ॥ सौभाग्यं सुखवृद्धिं च भृत्योश्च परिपालनम् ॥ पितृमातृकुले सौख्यं पशुवृद्धिः सुखावहा ॥ ४५ ॥ क्षीणे वा पापसंयुक्ते पापदृष्टो विनीचगे ॥ क्रूरांशकगते वापि क्रूरक्षेत्रगतेपि वा ॥४६॥ जातकस्य महत्कष्टं राजकोपं धनक्षयम् ॥ पितृमातृवियोगश्च पुत्रापुत्रादिरोगकृत् ॥ ४७॥ व्यवसायात्फलं नेष्टं नानामार्गे धनव्ययम् ॥ अकाले भोजनं चैव मौषधस्य च भक्षणम् ॥ ४८ ॥ फलमिदृष्टयमादौ तु आदौ सौख्यं धनागमम् ॥ दायेशात्केंद्रराशिस्थे त्रिकोणे लाभगेपि वा ॥ ४९ ॥ वाहनांबरपश्वादिभ्रातृ-

द्धिः सुखावहा ॥ पितृमातृसुखावाप्तिः स्त्रीसौख्यं च धनागमम् ॥ ५० ॥ मित्रप्रभुवशादिष्टं सर्वसौख्यं शुभावहम् ॥ दायेशात्षष्ठरिष्फे वा रंध्रे वा बलवर्जिते ॥ ५१ ॥ शयनं रोगमालस्यं स्थानभ्रष्टं सुखावहम् ॥ शत्रुवृद्धिविरोधं च इष्टबंधुवियोगकृत् ॥५२॥ द्वितीयद्यूननाथे तु देहालस्यो भविष्यति ॥ तद्दोषशमनार्थं च तिलहोमादिकं चरेत् ॥ ५३ ॥ गुडं घृतं च दध्यक्तं तंदुलं च यथाविधि ॥ श्वेतां गां महिषीं दद्यादायुरारोग्यवृद्धिकृत् ॥ ५४ ॥

## अथ कुजभुक्तिमास १३ दिन ९ तस्य फलम्।

मंदस्यांतर्गते भौमे केंद्रलाभत्रिकोणगे ॥ तुंगे स्वक्षेत्रगे वापि दशाधिपसमन्विते ॥ ५५ ॥ लग्नाधिपेन संयुक्ते आदौ सौख्यं धनागमम् ॥ राजप्रीतिकरं सौख्यं वाहनांबरभूषणम् ॥ ५६ ॥ सेनाधिक्यं नृपप्रीतिः कृषिगोधान्यसंपदः ॥ नूतनगृहनिर्माणं भ्रातृवर्गेष्टसौख्यकृत् ॥ ५७ ॥ नीचे चास्तंगते भौमे षष्ठाष्टव्ययराशिगे ॥ पापदृष्टियुते वापि धनहानिर्भविष्यति ॥ ५८ ॥ चौराहिव्रणशास्त्रादिग्रंथिरोगादिपीडनम् ॥ भ्रातृपित्रादिपीडा च दायादिजनविड्वरम् ॥ ५९ ॥ चतुष्पाज्जीवहानिश्च कुत्सितान्नं च भोजनम् ॥ विदेशगमनं चैव नानामार्गे धनव्ययः ॥ ६० ॥ अष्टमद्यूननाथे तु द्वितीयस्थेऽथ वा यदि ॥ अपमृत्युभयं चैव नानाकष्टपराभवम् ॥ ६१ ॥ तद्दोषपरिहारार्थं शांतिहोमं च कारयेत् ॥ अनड्वाहं प्रकुर्वीत सर्वारिष्टनिवारणम् ॥ ६२ ॥

## अथ राहुभुक्तिमास ३४ दिन ६ तस्य फलम्।

मंदस्यांतर्गते राहौ कलहश्च मनोव्यथा ॥ देहपीडा मनस्तापः पुत्रद्वेषो मनोरुजः ॥ ६३ ॥ अर्थव्ययं राजभयं स्वजनादिह्युपद्रवम् ॥ विदेशगमनं चैव गृहक्षेत्रादि नाशनम् ॥ ६४ ॥ लग्ना-

विपेन संयुक्ते योगकारकसंयुते ॥ स्वोच्चे स्वक्षेत्रगे केंद्रे दायेशाल्लाभराशिगे ॥ ६५ ॥ आदौ सौख्यं धनावाप्तिं गृहक्षेत्रादिसंपदम् ॥ देवब्राह्मणभक्तिश्च तीर्थयात्रादिकं लभेत् ॥ ६६ ॥ चतुष्पाजीवलाभः स्याद्गृहे कल्याणवर्द्धनम् ॥ मध्ये तु राजभीतिश्च पुत्रमित्रविरोधनम् ॥ ६७ ॥ मेषादिकन्यकां चैव कुलीरे वृषभे तथा॥ मीनकोदंडसिंहेषु गजांतैश्वर्यमादिशेत् ॥ ६८ ॥ राजसन्मानभूषाप्तिं मृदुलांबरसौख्यकृत् ॥ द्विसप्तमाधिपैर्युक्ते देहबाधा भविष्यति ॥ ६९ ॥ मृत्युंजयं प्रकुर्वीत छागदानं च कारयेत् ॥ अनड्वाहं प्रकुर्वीत सर्वसंपत्सुखावहम् ॥ ७० ॥

अथ गुरुभुक्तिमास ३० दिन १४ तस्य फलम् ।

मंदस्यांतर्गते जीवे केंद्रे लाभत्रिकोणगे ॥ ७१ ॥ लग्नाधिपेन संयुक्ते स्वोच्चे स्वक्षेत्रगेपि वा ॥ सर्वकार्यार्थसिद्धिः स्याच्छोभनं भवति ध्रुवम् ॥ ७२ ॥ महाराजप्रसादेन धनवाहनभूषणम् ॥ सन्मानं प्रभुसन्मानं प्रियवस्त्रार्थलाभकृत् ॥७३॥ देवतागुरुभक्तिश्च विद्वज्जनसमागमः ॥ दारपुत्रादिलाभश्च पुत्रकल्याणवैभवम् ॥ ॥ ७४ ॥ षष्ठाष्टमव्यये जीवे नीचे वा पापसंयुते ॥ देहसंबंधमरणं धनधान्यविनाशनम् ॥ ७५ ॥ राजस्थानं धनद्वेषं कार्यहानिर्भविष्यति ॥ विदेशगमनं चैव कुष्ठरोगादिसंभवः ॥ ७६ ॥ दायेशात्केंद्रकोणे वा धने वा लाभगेपि वा ॥ विभवं दारसौभाग्यं राजश्रीधनसंपदः ॥ ७७ ॥ भोजनांबरसौख्यं च दानधर्मादिकं भवेत् ॥ ब्रह्मप्रतिष्ठासिद्धिश्च क्रतुकर्मफलप्रदम् ॥ ७८ ॥ अन्नदानं महत्कीर्तिर्वेदांतश्रवणादिकम् ॥ दायेशात्षष्ठरंध्रे वा व्यये वा बलवर्जिते ॥ ७९ ॥ बंधुद्वेषं मनोदुःखं ब्राह्मणं पदविच्युतम् ॥ कुभोजनं कर्महानी राजदंडाद्धनव्ययम् ॥ ८० ॥ कारागृहप्रवेशं च

पुत्रदारादिपीडनम् ॥ द्वितीयद्यूननाथे तु देहबाधा मनोरुजम् ॥
॥ ८१ ॥ आत्मसंबंधमरणं भविष्यति न संशयः ॥ तद्दोषपरिहा-
रार्थं शिवसाहस्रकं जपेत् ॥ ८२ ॥ स्वर्णदानं प्रकुर्वीत आरोग्यं
भवति ध्रुवम् ॥ ८३ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसारांशे
शन्यंतर्दशाफलकथनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## अथ बुधभुक्तिमासाः २८ दिन २७ तस्य फलम् ।

मुक्ताविद्रुमलाभश्च ज्ञानकर्मसुखादिकम् ॥ विद्यामहत्वं की-
र्तिश्च नूतनप्रभुदर्शनम् ॥ १ ॥ विभवं दारपुत्रादिपितृमातृसुखा-
वहम् ॥ नीचोग्रखेटसंयुक्ते षष्ठाष्टव्ययराशिगे ॥ २ ॥ पापयुक्तेथ
वा दृष्टे धनधान्यपशुक्षयम् ॥ आत्मबंधुविरोधश्च शूलरोगादिसं-
भवम् ॥ ३ ॥ राजकार्यकलापेन व्याकुलं भवति ध्रुवम् ॥ द्वितीय-
द्यूननाथे तु दारक्लेशो भविष्यति ॥ ४ ॥ आत्मसंबंधमरणं वात-
शूलादि संभवम् ॥ तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥ ५ ॥

## अथ केतुभुक्तिमास ११ दिन २७ तस्य फलम् ।

बुधस्यांतर्गते केतौ लग्नात्केंद्रत्रिकोणगे ॥ शुभयुक्ते शुभैर्दृष्टे
लग्नाधिपसमन्विते ॥ ६ ॥ योगकारकसंबंधे दायेशात्केंद्रलाभगे ॥
देहसौख्यं धनाल्पं च बंधुस्नेहसहायकृत् ॥ ७ ॥ चतुष्पाज्जीवला-
भः स्यात्संसारो देहतापनम् ॥ विद्याकीर्तिप्रसंगश्च समानप्रभुद-
र्शनम् ॥ ८ ॥ भोजनांबरसौख्यं च आदौ मध्ये सुखावहम् ॥
दायेशाद्रिपुरंध्रस्थे अष्टमे पापसंयुते ॥ ९ ॥ वाहनात्पतनं चैव
पुत्रक्लेशसमाकुलम् ॥ चोरादिराजभीतिश्च पापकर्मरतः सदा ॥
॥ १० ॥ वृश्चिकादिविषाद्भीतिर्नीचैः कलहसंयुतः ॥ शोकरोगा-
दिदुःखं च संसारादिचलं भवेत् ॥ ११ ॥ द्वितीयद्यूननाथे तु दे-
हजाड्यं भविष्यति ॥ तद्दोषपरिहाराय छगदानं तु कारयेत् ॥१२॥

अथ शुक्रभुक्तिमास ३४ दिन० तस्य फलम्।

सौम्यस्यांतर्गते शुक्रे केंद्रे लाभत्रिकोणगे ॥ सत्कथापुण्यधर्मादिसंग्रहः पुण्यकर्मकृत् ॥ १३ ॥ मित्रप्रभुवशादिष्टं क्षेत्रलाभः सुखं भवेत् ॥ दशाधिपात्केंद्रगतस्त्रिकोणे लाभगेपि वा ॥ १४ ॥ तत्काले श्रियमाप्नोति राजश्रीधनसंपदः ॥ वापीकूपतडागादि दानधर्मादिसंग्रहः ॥ १५ ॥ व्यवसायात्फलाधिक्यं धनधान्यसमृद्धिदम् ॥ दायेशात्षष्ठरंध्रस्थे व्यये वा बलवर्जिते ॥ १६ ॥ हृद्रोगो मानहानिश्च ज्वरातीसारपीडनम् ॥ आत्मबंधुवियोगश्च संसारो देहनिःशमम् ॥ १७ ॥ आत्मसौख्यं मनस्तापमायदायादिकं तथा ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युर्भविष्यति ॥ १८ ॥ तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ १९ ॥

अथ रविभुक्तिमास १० दिन ६ तस्य फलम्।

सौम्यस्यांतर्गते सूर्ये स्वोच्चे स्वक्षेत्रकेंद्रगे ॥ त्रिकोणे धनलाभे तु तुंगांशे स्वांशगेपि वा ॥ २० ॥ राजप्रसादसौभाग्यं मित्रप्रभुवशात्सुखम् ॥ भूम्यात्मजेन संदृष्टे आदौ भूलाभमेव च ॥ २१ ॥ लग्नाधिपेन संदृष्टे बहुसौख्यं धनागमम् ॥ ग्रामभूम्यादिलाभश्च भोजनांबरसौख्यकृत् ॥ २२ ॥ षष्ठाष्टमव्यये वापि शन्यारफणिसंयुते ॥ दायेशाद्रिपुरंध्रस्थे षष्ठे वा बलवर्जिते ॥ २३ ॥ चौराग्निशस्त्रपीडा च पित्ताधिक्यं भविष्यति ॥ शिरोरुजं मनस्तापमिष्टबंधुवियोगकृत् ॥ २४ ॥ द्वितीयसप्तमाधीशे ह्यपमृत्युर्भविष्यति ॥ तद्दोषपरिहारार्थं शांतिं कुर्याद्यथाविधि ॥ सूर्यप्रीतिकरं चैव दद्याद्धेनुं हिरण्यकम् ॥ २५ ॥

अथ चन्द्रभुक्तिमास १७ दिन ० तस्य फलम्।

सौम्यस्यांतर्गते चंद्रे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे वा स्वक्षेत्रे

वापि गुरुदृष्टिसमन्विते ॥ २६ ॥ योगस्थानाधिपत्येन योगप्राबल्यमादिशेत् ॥ स्त्रीलाभं पुत्रलाभं च वस्त्रवाहनभूषणम् ॥ २७ ॥ नूतनगृहलाभं च नित्यं मिष्टान्नभोजनम् ॥ गीतवाद्यप्रसंगश्च शास्त्रविद्यापरिश्रमम् ॥ २८ ॥ दक्षिणां दिशमाश्रित्य प्रयाणं च भविष्यति ॥ द्वीपांतरादिवस्त्राणां लाभश्चैव भविष्यति ॥ २९ ॥ मुक्ताविद्रुमरत्नानि धूतवस्त्रादिलाभगम् ॥ नीचारिक्षेत्रसंयुक्ते देहबाधा भविष्यति॥३०॥दायेशात्केंद्रकोणस्थे दुश्चिक्ये लाभगेपि वा ॥ तद्भुक्त्यादौ पुण्यतीर्थस्थानदैवतदर्शनम् ॥ ३१ ॥ मनोधैर्यं मनोत्साहं विदेशधनलाभकृत् ॥ दायेशात्षष्ठरंध्रे वा व्यये वा पापसंयुते ॥ ३२ ॥ चौराग्निनृपभीतिश्च स्त्रीसंगे गमनं भवेत् ॥ दुष्कृतिर्धनहानिश्च कृषिगोश्वादिनाशकृत् ॥ ३३ ॥ द्वितीयद्यूननाथे तु देहबाधा भविष्यति ॥ तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ ३४ ॥ वस्त्रदानं प्रकुर्वीत आयुर्वृद्धिसुखावहम् ॥ ३५ ॥

## अथ कुजभुक्तिमास ११ दिन २७ तस्य फलम् ।

सौम्यस्यांतर्गते भौमे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे वा स्वर्क्षगे भौमे लग्नाधिपसमन्विते ॥ ३६ ॥ राजानुग्रहशांतिश्च गृहे कल्याणसंभवम् ॥ लक्ष्मीकटाक्षचिह्नानि नष्टराज्यार्थलाभकृत् ॥ ३७ ॥ पुत्रोत्सवादिसंतोषं गृहे गोधनसंकुलम् ॥गृहक्षेत्रादिलाभं च गजवाजिसमन्वितम् ॥३८॥राजप्रीतिकरं चैव स्त्रीसौख्यं चातिशोभनम् ॥ नीचक्षेत्रसमायुक्ते अष्टमे वा व्ययेपि वा ॥३९॥ पापदृष्टियुते वापि देहपीडा मनोव्यथा ॥ उद्योगं भंगदेहादिस्वग्रामे धान्यनाशनम् ॥ ४० ॥ ग्रंथिशस्त्रव्रणादीनां तापज्वरभयादिकम् ॥ दायेशात्केंद्रगे भौमे त्रिकोणे लाभगेपि वा ॥ ४१ ॥ शुभदृष्टेश्च संप्राप्तिर्देहसौख्यं धनागमम् ॥ पुत्रलाभं यशोवृद्धिं भ्रातृवर्गो

महत्प्रियः ॥ ४२ ॥ दायेशाद्रिपुरंध्रस्थे व्यये वा पापसंयुते ॥ तद्भु-क्त्यादौ महाक्लेशं भ्रातृवर्गे महद्भयम् ॥ ४३ ॥ नृपाग्निचोरभी-तिश्च पुत्रमित्रविरोधनम् ॥ स्थानभ्रंशे महद्वैर्यं मध्ये सौख्यं ध-नागमम् ॥ ४४ ॥ अंते तु राजभीतिः स्यात्स्थानभ्रंगमथापि वा ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युभयं भवेत् ॥ ४५ ॥ अनड्वाहं प्रकु-र्वीत मृत्युंजयजपं चरेत् ॥ ४६ ॥

## अथ राहुभुक्तिमास ३० दिन १८ तस्य फलम् ।

बुधस्यांतर्गते राहौ केंद्रलाभत्रिकोणगे ॥ कुलीरकर्मगे वापि कन्यायां वृषभेपि वा ॥ ४७ ॥ राजसन्मानकीर्तिश्च समये राज-यिष्यति ॥ पुण्यतीर्थस्थानलाभं देवतादर्शनं तथा ॥४८॥ इष्टापू-र्तौ च महतो मानश्चांबरलाभकृत् ॥ भुक्त्यादौ देहपीडा च अंते सौख्यं विनिर्दिशेत् ॥ ४९ ॥ षष्ठाष्टव्ययराशिस्थे तद्भुक्तौ धनना-शनम् ॥ भुक्त्यादौ देहनाशं च वातज्वरमजीर्णकृत् ॥ ५० ॥ लग्नाद्युपचये राहौ शुभग्रहसमन्विते ॥ राजसंलापसंतोषं नूतन-प्रभुदर्शनम् ॥ ५१ ॥ दायेशात्षष्ठरिःफे वा अष्टमे पापसंयुते ॥ निष्ठुरं राजकार्याणि स्थानभ्रंशं महद्भयम् ॥ ५२ ॥ बंधनं रोगपी-डा च आत्मबंधुमनोव्यथाम् ॥ हृद्रोगं मानहानिश्च धनहानिर्भ-विष्यति ॥५३ ॥ द्वितीयसप्तमस्थे वा ह्यपमृत्युर्भविष्यति ॥ तद्दो-षपरिहारार्थं दुर्गालक्ष्मीजपं चरेत् ॥ ५४ ॥ श्वेतां गां महिषीं दद्यादायुरारोग्यसंभवाम् ॥ ५५ ॥

## अथ गुरुभुक्तिमासाः २७ दिन ० तस्य फलम् ।

बुधस्यांतर्गते जीवे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे वा स्वर्क्षगे ऽपि लाभे वा धनराशिगे ॥ ५६ ॥ देहसौख्यं धनावाप्तिं राजप्रा-प्तिं तथैव च॥विवाहोत्सवकार्याणि नित्यमिष्टान्नभोजनम् ॥ ५७ ॥

गोमहिष्यादिलाभं च पुराणश्रवणादिकम् ॥ देवतागुरुभक्तिश्च दानधर्ममखादिकम् ॥ ५८ ॥ यज्ञकर्मप्रवृत्तिश्च शिवपूजाफलं तथा ॥ नीचे वास्तंगते वापि रिःफाष्टव्ययगेपि वा ॥ ५९ ॥ श-भ्यारपातिसंयुक्ते कलहं राजविड्वरम् ॥ चोरादिदेहपीडा च पितृ-मातृविनाशनम् ॥ ६० ॥ मानहानी राजदंडो धनक्षयो भविष्य-ति ॥ विषाहिज्वरपीडा च कृषिगोभूमिनाशनम् ॥ ६१ ॥ दायेशा-त्केंद्रकोणे वा लाभे वा बलसंयुते ॥ बंधुपुत्रमनोत्साहं शुभं शोभ-नसंयुतम् ॥६२॥ पशुवृद्धियशोलाभमन्नदानादिकं फलम् ॥ दाये-शात्षष्ठरंध्रे वा व्यये वा बलवर्जिते ॥ ६३ ॥ अंगतापं च वैकल्यं देहबाधा भविष्यति ॥ कलत्रबंधुवैषम्यं राजकोपं धनक्षयम्॥६४॥ अकस्मात्कलहाद्भीतिः प्रमोदं राजविड्वरम् ॥ द्वितीयसप्तमस्थे वा देहबाधा भविष्यति ॥६५॥ तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ॥ गोभूहिरण्यदानेन सर्वारिष्टं व्यपोहति ॥ ६६ ॥

## अथ शनिभुक्तिमासाः ३२ दिन ० तस्य फलम् ।

सौम्यस्यांतर्गते मन्दे स्वोच्चे स्वक्षेत्रकेंद्रगे ॥ त्रिकोणलाभगे वापि गृहे कल्याणवर्द्धनम्॥६७॥राज्यलाभं महोत्साहं गृहे गोधन-संकुलम् ॥ ६८ ॥ शत्रुस्थानफलावाप्तिं मुक्त्या तीर्थविनाशनम् ॥ षष्ठाष्टमव्यये मंदे दायेशाद्वा तथैव च ॥६९॥ अरातिदुःखबाहुल्यं दारपुत्रादिपीडनम् ॥ बुद्धिभ्रंशं बंधुनाशं कर्मनाशं मनोरुजम् ॥ ७० ॥ विदेशगमनं चैव स्वप्नं दूराभिसंपदम् ॥ द्वितीयद्यूननाथे तु अपमृत्युर्भविष्यति ॥ ७१ ॥ तद्दोषपरिहारार्थं मृत्युंजयजपं चरेत् ॥ कृष्णां गां महिषीं दद्यादायुरारोग्यवृद्धिदाम् ॥ ७२ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे बुधांतर्दशाफलकथनं नामत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

अथ केतुभुक्तिदशायामंतर्दशामास ४ दिन ६ फलम् ।

केंद्रे त्रिकोणलाभे वा लग्नाधिपसमन्विते ॥ भाग्यकर्मेशसंबंधे वाहनेशसमन्विते ॥ १ ॥ तद्भुक्तौ धनधान्यादि चतुष्पाज्जीवलाभकृत् ॥ पुत्रदारादिसौख्यं च राजप्रीतिमनोरुजम् ॥ २ ॥ ग्रामभूम्यादिलाभश्च गृहे गोधनसंकुलम् ॥ नीचास्तखेटसंयुक्ते अष्टमे व्ययगेपि वा ॥ ३ ॥ हृद्रोगं मानहानिश्च धनधान्यपशुक्षयम् ॥ दारपुत्रादिपीडा च मनश्चंचलमेव च ॥ ४ ॥ द्वितीयद्यूननाथेन संबंधे तत्र संस्थिते ॥ अनारोग्यं महत्कष्टमात्मबंधुवियोगकृत् ॥ ॥ ५ ॥ दुर्गादेवीजपं कुर्यान्मृत्युंजयजपं चरेत् ॥ ६ ॥

अथ शुक्रभुक्तिमास २४ दिन ० तस्य फलम् ।

केतोरंतर्गते शुक्रे स्वोच्चे स्वक्षेत्रसंयुते ॥ केंद्रत्रिकोणलाभे वा राजनाथेन संयुते ॥ ७ ॥ राजप्रीतिं च सौभाग्यं राजस्त्रांबरसंकुलम् ॥ तत्काले श्रियमाप्नोति भाग्यकर्मेशसंयुते ॥ ८ ॥ नष्टराज्यधनप्राप्तिं सुखवाहनमुत्तमम् ॥ सेतुस्नानादिकं चैव देवतादर्शनं महत् ॥ ९ ॥ महाराजप्रसादेन ग्रामभूम्यादिलाभकृत् ॥ दायेशात्केंद्रकोणे वा दुश्चिक्ये लाभगेपि वा ॥ १० ॥ देहारोग्यं शुभं चैव गृहे कल्याणशोभनम् ॥ भोजनांबरभूषाप्तिमश्वदोलादिलाभकृत् ॥ ११ ॥ दायेशाद्रिपुरंध्रस्थे व्यये वा पापसंयुते ॥ अकस्मात्कलहं चैव पशुधान्यादिपीडनम् ॥ १२ ॥ नीचस्थे खेटसंयुक्ते लग्नात्षष्ठाष्टराशिगे ॥ स्वबंधुजनवैषम्यं शिराक्षिव्रणपीडनम् ॥ १३ ॥ हृद्रोगं मानहानिश्च धनधान्यपशुक्षयम् ॥ कलत्रपुत्रपीडा च संचारो देहविड्वरम् ॥ १४ ॥ द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजम् ॥ तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ श्वेतां गां महिषीं दद्यादायुरारोग्यसंभवाम् ॥ १५ ॥

अथ रविभुक्तिमासाः ४ दिन ६ तस्य फलम्।

केतोरंतर्गते सूर्ये स्वोच्चे स्वक्षेत्रगेपि वा ॥ केंद्रत्रिकोणलाभे वा शुभयोगनिरीक्षिते ॥ १६ ॥ धनधान्यादिलाभश्च राजानुग्रहवैभवम् ॥ अनेकशुभकार्याणि इष्टसिद्धिः सुखावहा ॥ १७ ॥ षष्ठाष्टव्ययराशिस्थे पापग्रहसमन्विते ॥ तद्भुक्तौ राजभीतिश्च पितृमातृवियोगकृत् ॥ १८ ॥ विदेशगमनं चैव चौराद्दिविषपीडनम् ॥ राजमित्रविरोधश्च राजदंडाद्धनक्षयः ॥ १९ ॥ शोकरोगभयं चैव उष्णाधिक्यं ज्वरं भवेत् ॥ दायेशात्केंद्रकोणे वा लाभे वा धनसंस्थिते ॥ २० ॥ देहसौख्यं चार्थलाभं पुत्रलाभं मनोदृढम् ॥ यातुः कार्यार्थसिद्धिः स्यात्स्वल्पग्रामाधिपं युतम् ॥ २१ ॥ दायेशात्केंद्ररिःफे वा षष्ठे वा पापसंयुते ॥ अन्नविघ्नो मनोभीतिर्धनधान्यपशुक्षयम् ॥ २२ ॥ आदिमध्ये महान्क्लेशा अंते सौख्यं विनिर्दिशेत् ॥ द्वितीयसप्तमाधीशे अपमृत्युर्भविष्यति ॥ २३ ॥ दर्शशांतिं प्रकुर्वीत स्वर्णधेनुं प्रदापयेत् ॥ २४ ॥

अथ चंद्रभुक्तिमासाः ७ दिन ० तस्य फलम्।

केतोरंतर्गते चंद्रे स्वोच्चे स्वक्षेत्रराशिगे ॥ केंद्रत्रिकोणलाभे वा धने सुखसमन्विते ॥ २५ ॥ राजप्रीतिर्मनोत्साहं कल्याणं च महत्सुखम् ॥ महाराजप्रसादेन गृहभूम्यादिलाभकृत् ॥ २६ ॥ भोजनांबरपश्वादिव्यवसायात्फलाधिकम् ॥ अश्ववाहनलाभश्च वस्त्राभरणभूषणम् ॥ २७ ॥ देवालयतडागादिपुण्यधर्मादिसंग्रहम् ॥ पुत्रदारादिसौख्यं च पूर्णचंद्रस्तथैव च ॥ २८ ॥ नीचे वा क्षीणगे चंद्रे षष्ठाष्टव्ययराशिगे ॥ आत्मसौख्यं मनस्तापं कार्यविघ्नं महद्भयम् ॥ २९ ॥ पितृमातृवियोगं च देहजाड्यं मनोव्यथा ॥ व्यवसायात्फलं नष्टं गोमहिष्यादिनाशकृत् ॥ ३० ॥ दायेशा-

स्वेंद्रकोणे वा लाभे वा बलसंयुते ॥ कृषिगोभूमिलाभश्च इष्टबंधुसमागमम् ॥ ३१ ॥ तामसात्कार्यसिद्धिश्च गृहे गोक्षीरमेव च । भूछत्रं शुभमारोग्यं मध्ये राजप्रियं शुभम् ॥ ३२ ॥ अंते तु राजभीतिश्च विदेशगमनं तथा ॥ दूरयात्रादिसंचारं संबंधजनपूजनम् ॥ ३३ ॥ दायेशात्षष्ठरिःफे वा रंध्रे वा बलवर्जिते ॥ धनधान्यादिहानिश्च मनोव्याकुलमेव च ॥ ३४ ॥ स्वबंधुजनदातृत्वं भ्रातृपीडा तथैव च ॥ निधनाधिपदोषेण द्विसप्तमाधिपे युते ॥ ॥ ३५ ॥ अपमृत्युभयं तस्य शांतिं कुर्याद्यथाविधि ॥ चंद्रप्रीतिकरं चैव आयुरारोग्यसंभवम् ॥ ३६ ॥

## अथ कुजभुक्तिमासाः ४ दिन २७ तस्य फलम् ।

केतोरंतर्गते भौमे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे स्वक्षेत्रगे भौमे शुभदृष्टियुतेक्षिते ॥ ३७ ॥ आदौ शुभफलं चैव ग्रामभूम्यादिलाभकृत् ॥ धनधान्यादिलाभश्च चतुष्पाज्जीवलाभकृत् ॥ ३८ ॥ गृहारामक्षेत्रलाभं राजानुग्रहवैभवम् । भाग्ये कर्मेशसंबंधे भूलाभं सौख्यमेव च ॥ ३९ ॥ दायेशात्केंद्रकोणे वा दुश्चिक्ये लाभगेपि वा ॥ राजप्रीतियशोलाभं पुत्रमित्रादिसौख्यकृत् ॥ ४० ॥ षष्ठाष्टमव्यये भौमे दायेशाद्धनगेपि वा ॥ द्रुतं करोति मरणं विदेशं चापदं भ्रमम् ॥ ४१ ॥ प्रमेहमूत्रकृच्छ्रादिचौरादिनृपपीडनम् ॥ कलहादौ व्यथायुक्तं किंचित्सुखविवर्द्धनम् ॥ ४२ ॥ द्वितीयद्यूननाथे तु तापज्वरविषाद्भयम् ॥ दारपीडा मनःक्लेशमपमृत्युभयं भवेत् ॥४३॥ अनड्वाहं प्रदद्यात्तु सर्वसंपत्सुखावहम् ॥ ४४ ॥

## अथ राहुभुक्तिमासाः १२ दिन ० तस्य फलम् ।

केतोरंतर्गते राहौ स्वोच्चे मित्रस्वराशिगे ॥ केंद्रत्रिकोणलाभे वा दुश्चिक्ये धनसंज्ञके ॥ ४५ ॥ तत्काले धनलाभः स्यात्संसारो

भवति ध्रुवम् ॥ म्लेच्छप्रभुवशात्सौख्यं धनधान्यफलादिकम् ॥ ॥ ४६ ॥ चतुष्पाज्जीवलाभः स्याद्ग्रामभूम्यादिलाभकृत् ॥ भुक्त्यादौ क्लेशमाप्नोति मध्यांते सौख्यमाप्नुयात् ॥ ४७ ॥ रंध्रे वा व्ययगे राहौ पापसंदृष्टिसंयुते ॥ बहुपुत्रः कृशं देहं शीतज्वरविषाद्भयम् ॥ ॥ ४८ ॥ चातुर्थिकज्वरं चैव क्षुद्रोपद्रवपीडनम् ॥ अकस्मात्कलहं चैव प्रमेहं शूलमेव च ॥ ४९ ॥ द्वितीयसप्तमस्थे वा तदा क्लेशं महद्भयम् ॥ तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ अयुतहोमः कर्तव्यः सर्वसौख्यप्रदायकः ॥ ५० ॥

## अथ गुरुभुक्तिमास ११ दिन ० तस्य फलम् ।

केतोरंतर्गते जीवे केंद्रलाभत्रिकोणगे ॥ स्वोच्चे स्वक्षेत्रगे वापि लग्नाधिपसमन्विते ॥ ५१ ॥ कर्मभाग्याधिपैर्युक्ते धनधान्यार्थसंपदम् ॥ राजप्रीतिं मनोत्साहमश्वांदोल्यादिलाभकृत् ॥ ५२ ॥ गृहे कल्याणसंपत्तिः पुत्रलाभं महोत्सवम् ॥ पुण्यतीर्थं मनोत्साहं सत्कर्म च सुखावहम् ॥ ५३ ॥ इष्टदेवप्रसादेन विजयं कार्यलाभकृत् ॥ राजसँज्ञापकार्याणि नूतनप्रभुदर्शनम् ॥५४॥ षष्ठाष्टमव्यये जीवे दायेशान्नीचगेपि वा ॥ चौराहिव्रणभीतिश्च धनधान्यादिनाशनम् ॥५५॥ पुत्रदारवियोगश्च अतीवक्लेशसंभवम् ॥ आदौ शुभफलं चैव अंते क्लेशकरं भवेत् ॥ ५६ ॥ दायेशात्केंद्रकोणे वा दुश्चिक्ये लाभगेपि वा ॥ शुभयुक्ते नृपाद्भीतिर्विचित्रांबरभूषणम्॥५७ दूरदेशप्रयाणं च स्वबंधुजनपोषणम् ॥ भोजनांबरपश्वादिभुक्त्यादौ देहपीडनम् ॥ ५८ ॥ अंते तु स्थानचलनमकस्मात्कलहो भवेत् ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युर्भविष्यति ॥ ५९ ॥ तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ॥ महामृत्युंजयं जाप्यं सर्वोपद्रवनाशनम् ॥ ६० ॥

## अथ शनिभुक्तिमास १६ दिन ९ तस्य फलम् ।

केतोरंतर्गते मंदे स्वदेशायाद्द पीडनम् ॥ बंधोः क्लेशो मनस्तापश्चतुष्पाज्जीवलाभकृत् ॥ ६१ ॥ राजकार्यकलापेन धननाशं महद्भयम् ॥ स्थानाच्च्युतिः प्रवासश्च मार्गे चौरभयं भवेत् ॥ ६२ ॥ आलस्यं मनसो हानिश्चाष्टमे व्ययराशिगे ॥ मीनत्रिकोणगे मंदे तुलायां स्वर्क्षगेपि वा ॥ ६३ ॥ केंद्रत्रिकोणलाभे वा दुश्चिक्ये वा शुभांशके ॥ शुभदृष्टिसमाप्तौ च सर्वकार्यार्थसाधनम् ॥ ६४ ॥ स्वप्रभोश्च महत्सौख्यं वस्त्राभरणलाभगम् ॥ स्वग्रामे सुखसंपत्तिः स्ववर्गे राजदर्शनम् ॥ ६५ ॥ दायेशात्षष्ठारिःफे वा अष्टमे पापसंयुते ॥ देहतापो मनस्तापः कार्ये विघ्नो महद्भयम् ॥ ६६ ॥ आलस्यं मानहानिश्च पितृमात्रोर्विनाशनम् ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युभयं भवेत् ॥ ६७ ॥ तद्दोषपरिहारार्थं तिलहोमं च कारयेत् ॥ कृष्णां गां महिषीं दद्यादायुरारोग्यवृद्धिकृत् ॥ ६८ ॥

## अथ बुधभुक्तिमासाः ११ दिन २७ तस्य फलम् ।

केतोरंतर्गते सौम्ये केंद्रलाभत्रिकोणगे ॥ स्वोच्चे स्वक्षेत्रसंयुक्ते राज्यलाभो महत्सुखम् ॥ ६९ ॥ सत्कथाश्रवणं दानं धर्मसिद्धिः सुखावहा ॥ भूलाभः पुत्रलाभश्च शुभगोष्ठिर्धनागमः ॥ ७० ॥ अयत्नाद्धर्मलब्धिश्च विवाहश्च भविष्यति ॥ गृहे शुभकरं चैव वस्त्राभरणभूषणम् ॥ ७१ ॥ भाग्यकर्माधिपैर्युक्ते भाग्यवृद्धिः सुखावहा ॥ विद्वद्गोष्ठिकलापेन संतापो भूषणादिकम् ॥ ७२ ॥ षष्ठाष्टमव्यये सौम्ये मंदाराहियुतेक्षिते ॥ विरोधराजकार्याणि परगेहनिवासनम् ॥ ७३ ॥ वाहनांबरपश्वादि धनधान्यादिनाशकृत् ॥ भुक्त्यादौ शोभनं प्रोक्तं मध्ये सौख्यं धनागमम् ॥ ७४ ॥ अंते क्लेशकरं चैव दारपुत्रादिपीडनम् ॥ दायेशात्केंद्रगे सौम्ये

त्रिकोणे लाभगेपि वा ॥ ७५ ॥ देहारोग्यं महल्लाभः पुत्रकल्याणवैभवम् ॥ भोजनांबरपश्वादि व्यवसायात्फलाधिकम् ॥ ७६ ॥ दायेशात्षष्ठरंध्रे वा व्यये वा बलवर्जिते ॥ तद्भुक्त्यादौ महक्लेशो दारपुत्रादिपीडनम् ॥ ७७ ॥ राजभीतिकरं चैव मध्ये तीर्थकरं भवेत् ॥ द्वितीयद्यूननाथे तु ह्यपमृत्युर्भविष्यति ॥ तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥ ७८ ॥ इति श्रीबृहत्पाराशरहोरा पूर्वखंडसारांशे केतोरंतर्दशाफलकथनं नाम चतुश्चत्वारिंशोध्यायः ॥४४॥

## अथ शुक्रभुक्तिमास ४० दिन० तस्य फलम् ।

भृगोरंतर्गते शुक्रे लग्नात्केंद्रत्रिकोणगे ॥ लाभे वा बलसंयुक्ते योगप्राबल्यमादिशेत् ॥ १ ॥ विप्रमूलाद्धनप्राप्तिर्गोमहिष्यादि लाभकृत् ॥ पुत्रोत्सवादिसंतोषं गृहे कल्याणसंभवम् ॥ २ ॥ सन्मानं राजसन्मानं राज्यलाभो महत्सुखम् ॥ स्वोच्चे वा स्वर्क्षगे वापि तुंगांशे स्वांशगेपि वा ॥ ३ ॥ नूतनगृहनिर्माणं नित्यं मिष्टान्नभोजनम् ॥ कलत्रपुत्रविभवं मित्रसंयुक्तभोजनम् ॥ ४ ॥ अन्नदानप्रियं नित्यं दानधर्मादिसंग्रहः ॥ महाराजप्रसादेन वाहनांबरभूषणम् ॥ ५ ॥ व्यवसायात्फलाधिक्यं चतुष्पाज्जीवलाभकृत् ॥ प्रयाणं पश्चिमे भागे वाहनांबरलाभकृत् ॥६॥ लग्नाद्युपचये शुक्रे शुभदृष्टियुतेक्षिते ॥ मित्रांशे तुंगलाभेशे योगकारकसंयुते ॥ ७ ॥ राज्यलाभो महोत्साहो राजप्रीतिं शुभावहाम् ॥ गृहे कल्याणसंपत्तिर्दारपुत्रादिवर्द्धनम् ॥ ८ ॥ षष्ठाष्टमव्यये शुक्रे पापयुक्तेऽथ वीक्षिते ॥ चौरादिव्रणभीतिश्च सर्वत्र जनपीडनम् ॥ ९ ॥ राजद्वारे जनद्वेष इष्टबंधुविनाशनम् ॥ दारपुत्रादिपीडा च सर्वत्र जनपीडनम् ॥ १० ॥ द्वितीयद्यूननाथे तु स्थितं चेन्मरणं भवेत् ॥ शुक्रे दुर्गाजपं कुर्याद्धेनुदानं च कारयेत् ॥ ११ ॥

## अथ रविभुक्तिमास १२ दिन २ तस्य फलम्।

शुक्रस्यांतर्गते सूर्ये संतापं राजविड्जम् ॥ दायादिकलहं चैव व्यवहारमथापि वा ॥ १२ ॥ स्वोच्चे स्वक्षेत्रगे सूर्ये मित्रर्क्षे केंद्रकोणगे ॥ दायेशात्केंद्रकोणे वा लाभे वा धनगेऽपिवा ॥१३॥ तद्भुक्तौ धनलाभः स्याद्राज्यस्त्रीधनसंपदः ॥ स्वप्रभोश्च महत्सौख्यमिष्टबंधोः समागमः ॥ १४ ॥ पितृमात्रोः सुखप्राप्तिर्भ्रातृलाभः सुखावहः ॥ सत्कीर्तिः सुखसौभाग्यं पुत्रलाभं च विंदति ॥ १५ ॥ षष्ठाष्टमव्यये सूर्ये दाये दाहात्तथैव च। नीचे वा पापवर्गस्थे देहतापं मनोरुजम् ॥ १६ ॥ स्वजनात्परिसंक्लेशो नित्यं निष्ठुरभाषणम् ॥ पितृपीडा बंधुहानी राजद्वारे विरोधकृत् ॥ १७ ॥ व्रणपीडाहिबाधा च स्वक्षेगे च भयं तथा ॥ नानारोगभयं चैव गृहक्षेत्रादिनाशनम् ॥ १८ ॥ सप्तमाधिपदोषेण ॥ ग्रहबाधा भविष्यति ॥ तद्दोषपरिहारार्थं सूर्यप्रीतिं च कारयेत् ॥ १९ ॥

## अथ चन्द्रभुक्तिमास २० दिन ० तस्य फलम्।

शुक्रस्यांतर्गते चंद्रे केंद्रलाभत्रिकोणगे ॥ स्वोच्चे स्वक्षेत्रगे चैव भाग्यकर्मेशसंयुते ॥२०॥ शुभयुक्ते पूर्णचंद्रे राजनाथेन संयुते ॥ तद्भुक्तौ वाहनाधिक्ये नापत्येन महत्सुखम् ॥ २१ ॥ महाराजप्रसादेन गजांतैश्वर्यमादिशेत् ॥ महानदीस्नानपुण्ये देवब्राह्मणपूजनम् ॥ २२ ॥ गीतवाद्यप्रसंगादिविद्वज्जनविभूषणम् ॥ गोमहिष्यादिवृद्धिश्च व्यवसायात्फलाधिकम् ॥ २३ ॥ भोजनांबरसौख्यं च बंधुसंयुक्तभोजनम् ॥ नीचे वास्तंगते वापि षष्ठाष्टव्ययराशिगे ॥ २४ ॥ दायेशात्षष्ठगे वापि रंध्रे वा व्ययराशिगे ॥ तत्काले धननाशः स्यात्संचरं च महद्भयम् ॥ २५ ॥ देहायासो मनस्तापं राजद्वारे विरोधकृत् ॥ विदेशगमनं चैव तीर्थयात्रादिकं फलम् ॥ २६ ॥ दारपुत्रादिपीडा च आत्मबंधुवियोगकृत् ॥ दायेशात्केंद्रलाभस्थे त्रिकोणे व्ययगेपि वा ॥ २७ ॥ राजप्रीतिकरं चैव

देशग्रामाधिपत्यता ॥ धैर्यं यशः सुखंकीर्तिं वाहनांबरभूषणम् ॥ २८ ॥ कूपारामतडागादिनिर्माणं धनसंग्रहः ॥ भुक्त्यादौ देहसौख्यं स्यादंते क्लेशकरं भवेत् ॥ २९ ॥

## अथ कुजभुक्तिमास १४ दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते भौमे लग्नात्केंद्रत्रिकोणगे ॥ स्वोच्चे वा स्वर्क्षगे भौमे लाभे वा बलसंयुते ॥ ३० ॥ लग्नाधिपेन संयुक्ते कर्मभाग्येन संयुते ॥ तद्भुक्तौ राजयोगादिसंपदं शुभशोभनम् ॥ ३१ ॥ वस्त्राभरणभूम्यादि इष्टसिद्धिः सुखावहा ॥ षष्ठाष्टमव्यये वापि दायेशाद्वा तथैव च ॥ ३२ ॥ शीतज्वरादिपीडा च पितृमातृभयावहा ॥ ज्वराद्याधिक्यरोगाश्च स्थानभ्रंशं मनोरुजम् ॥ ३३ ॥ स्वबंधुजनहानिश्च कलहं राजविड्वरम् ॥ राजद्वारजनद्वेषं धनधान्यव्ययाधिकम् ॥ ३४ ॥ व्यवसायात्फलं नेष्टं ग्रामभूम्यादिलाभकृत् ॥ द्वितीयद्यूननाथे तु देहबाधा भविष्यति ॥ ३५ ॥

## अथ राहुभुक्तिमास ३० दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते राहौ केंद्रलाभत्रिकोणगे । स्वोच्चे वा शुभसंदृष्टे योगकारकसंयुते ॥ ३६ ॥ तद्भुक्तौ बहु सौख्यं च धनधान्यादिलाभकृत् ॥ इष्टबंधुसमाकीर्णं भोजनांबरलाभगम् ॥३७॥ यातुः कार्यार्थसिद्धिः स्यात्पशुक्षेत्रादिसंभवम् ॥ लग्नाद्युपचये राहौ तद्भुक्तौ सुखदा भवेत् ॥३८॥ शत्रुनाशं महोत्साहं राजप्रीतिकरं शुभम्॥भुक्त्यादौ शरमासं च अंते ज्वरमजीर्णकृत् ॥३९॥ कार्ये विघ्नमवाप्नोति संचरं च मनोव्यथा ॥ परं सुखं च सौभाग्यं महतीव समश्नुते ॥४०॥ नैर्ऋतीं दिशमाश्रित्य प्रयाणं प्रभुदर्शनम् ॥ यातुः कार्यार्थसिद्धिः स्यात्स्वदेशे पुनरेष्यति॥४१॥उपकार्यं ब्राह्मणानां तीर्थयात्राफलं भवेत् ॥ दायेशाद्रिपुरंध्रस्थे व्यये वा पापसंयुते॥४२॥अशुभं लभते कर्म पितृमातृजनावधि ॥सर्वत्र जनविद्वेषं नानारूपादिसंभवम्

॥ ४३ ॥ द्वितीये सप्तमे वापि देहालस्यं विनिर्दिशेत् ॥ तद्दोषपरिहारार्थं मृत्युंजयजपं चरेत् ॥ ४४ ॥

## अथ गुरुभुक्तिमास ३२ दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते जीवे स्वोच्चे स्वक्षेत्रकेंद्रगे ॥ दायेशाच्छुभराशिस्थे भाग्ये वा कर्मराशिगे ॥ ४५ ॥ नष्टराज्याद्धनप्राप्तिमिष्टार्थांबरसंपदम् ॥ मित्रप्रभोश्च सन्मानं धनधान्यपरांगतिम् ॥४६॥ राजसन्मानकीर्तिश्च अश्वांदोलादिलाभकृत् ॥ विद्वत्प्रभुसमाकीर्णं शास्त्रापारपरिश्रमम् ॥४७॥ पुत्रोत्सवादिसंतोषमिष्टबंधुसमागमम्॥पितृमातृसुखप्राप्तिं भ्रातृपुत्रादिसौख्यकृत् ॥४८॥दायेशात्षष्ठराशिस्थे व्यये वा पापसंयुते ॥ राजचौरादिपीडा च देहपीडा भविष्यति॥४९॥आत्मभुग्बंधुकष्टः स्यात्कलहेन मनोव्यथा॥स्थानच्युतिं प्रवासं च नानारोगं समाप्नुयात् ॥ ५० ॥ द्वितीयसप्तमाधीशे देहबाधा भविष्यति ॥ तद्दोषपरिहारार्थं महामृत्युंजयं चरेत् ॥५१॥

## अथ शनिभुक्तिमास ३८ दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते मंदे स्वोच्चे तु परमोच्चगे ॥ स्वर्क्षकेंद्रत्रिकोणस्थे तुंगांशे स्वांशगेपि वा ॥५२॥ तद्भुक्तौ बहुसौख्यं स्यादिष्टबंधुसमन्विते ॥ सन्मानं बहुसन्मानं पुत्रिकागमनं शुभम्॥५३॥पुण्यतीर्थफलावाप्तिर्दानधर्मादिपुण्यकृत् ॥ स्वप्रभोश्च विशेषः स्याददति वा क्लेशः संभवेत् ॥५४॥ देहालस्यमवाप्नोति आदायादधिकव्ययम् ॥ षष्ठाष्टमव्यये मंदे दायेशाद्वा तथैव च॥५५॥भुक्त्यादौ देहमारोग्यं पितृमातृजनावधि ॥दारपुत्रादिपीडा च संहारं देहविभ्रमम्॥५६॥ व्यवसायात्फलं नष्टं गोमहिष्यादिहानिकृत् ॥ द्वितीयसप्तमाधीशे देहबाधा भविष्यति ॥५७॥ तद्दोषपरिहारार्थं तिलहोमं च कारयेत ॥५८॥ योगं ददाति भृगुजस्य दशाविपाके सौख्यं सदा नृपतितुल्यमुपैति लक्ष्मीम्॥ श्रेयो यशः सुविजयं बहुराज्यलाभः श्रीसूर्यभांशकजनिर्बहुभाग्यभाक् स्यात् ॥ ५९ ॥

## अथ बुधभुक्तिमास २४ दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते सौम्ये केंद्रे लाभत्रिकोणगे ॥ स्वोच्चे वा स्वर्क्षगे वापि राजप्रीतिकरं शुभम् ॥ ६० ॥ सौभाग्यं पुत्रलाभं च सन्मार्गे धनलाभकृत् ॥ पुराणधर्मश्रवणं शृंगारजनसंगमम् ॥ ६१ ॥ इष्टबंधुजनाकीर्णं विप्रप्रभुसमागमम् ॥ स्वप्रभोश्च महत्सौख्यं नित्यं मिष्टान्नभोजनम् ॥ ६२ ॥ दायेशात्षष्ठरंध्रे वा व्यये वा बलवर्जिते ॥ पापदृष्टौ तया युक्ते चतुष्पाज्जीवहानिकृत् ॥ ६३ ॥ अन्यगृहनिवासश्च मनोव्याकुलसंभवम् ॥ कालातिक्रमभुक्त्या च ऋग्द्रव्यात्पित्र्यमेव च ॥ ६४ ॥ भुक्त्यादौ शोभनं प्रोक्तं मध्ये सौख्यं विनिर्दिशेत् ॥ अंते क्लेशकरं चैव शीतवातज्वरादिकम् ॥ ॥ ६५ ॥ सप्तमाधीशदोषेण देहपीडा भविष्यति ॥ तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥ ६६ ॥

## अथ केतुभुक्तिमास १४ दिन ० तस्य फलम् ।

शुक्रस्यांतर्गते केतौ स्वोच्चे वा स्वर्क्षगेपि वा ॥ योगकारकसंबंधे स्थानवीर्यसमन्विते ॥ ६७ ॥ भुक्त्यादौ शुभमाधिक्यं नित्यं मिष्टान्नभोजनम् ॥ व्यवसायात्फलाधिक्यं गोमहिष्यादिवृद्धिकृत् ॥ ६८ ॥ धनधान्यसमृद्धिश्च स्वग्रामे विजयो भवेत् ॥ भुक्त्यंते हि सुखं चैव अंते सुखकरं भवेत् ॥ ६९ ॥ मध्ये मध्ये महत्कष्टं पश्चादारोग्यमादिशेत् ॥ दायेशाद्रिपुरंध्रस्थे व्यये वा पापसंयुते ॥ ७० ॥ चौराहिव्रणपीडा च वृद्धिनाशं महद्भयम् ॥ शिरोरुजं मनस्तापमकर्मकलहं तथा ॥ ७१ ॥ प्रमेहकर्म आरोग्यं नानामार्गे धनव्ययम् ॥ भार्यापुत्रविरोधश्च गमनं कार्यनाशनम् ॥ ७२ ॥ द्वितीयद्यूननाथे तु देहबाधा भविष्यति ॥ तद्दोषपरिहारार्थं मृत्युंजयजपं चरेत् ॥ ७३ ॥ छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ ७४ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखण्डसा० भृगोरंतर्दशाफलक० नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

राहुमध्ये सूर्यव्यंतरम्.

| र | चं | मं | रा | गु | श | बु | के | शु | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० १६ १२ ० ० | ० २७ ० ० ० | ० १८ ५४ ० ० | १ १८ ३६ ० ० | १ १३ १२ ० ० | १ २१ १८ ० ० | १ १५ ५४ ० ० | ० १८ ५४ ० ० | १ २४ ० ० ० | [illegible] |

राहुमध्ये चंद्रव्यंतरम्.

| चं | मं | रा | गु | श | बु | के | शु | र | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| १ १५ ० ० ० | १ १ ३० ० ० | २ २१ [illegible] ० ० | २ [illegible] | [illegible] | २ १६ ३० ० ० | १ १ ३० ० ० | ३ ० ० ० ० | ० २७ ० ० ० | [illegible] |

[illegible] भौमव्यंतरम्.

| मं | रा | गु | [illegible] | [illegible] | के | शु | र | चं | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० २२ ३ ० ० | १ २६ ४२ ० ० | १ २० २४ ० ० | [illegible] ० ० | [illegible] ० ० | [illegible] [illegible] ३ ० ० | २ ३ ० ० ० | ० १८ ५४ ० ० | १ १ ३० ० ० | [illegible] |

राहुमध्ये गुरुव्यंतरम्.

| गु | श | बु | के | शु | र | चं | मं | रा | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ३ १२ ५४ ० ० | ४ १ ३६ ० ० | ३ १८ ४८ ० ० | १ १४ ४८ ० ० | ४ ८ ० ० ० | १ ८ २४ ० ० | २ ४ ० ० ० | १ १४ ४८ ० ० | ३ २५ १२ ० ० | [illegible] |

राहुमध्ये शनिव्यंतरम्.

| श | बु | के | शु | र | चं | मं | रा | गु | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ४ २४ २४ ० ० | ४ ९ १२ ० ० | १ २३ १२ ० ० | ५ २ ० ० ० | १ १५ ३६ ० ० | २ १६ ० ० ० | १ २३ १२ ० ० | ४ १६ ४८ ० ० | ४ १ ३६ ० ० | [illegible] |

गुरुमध्ये बुधव्यंतरम्.

| बु | के | शु | सू | चं | मं | रा | गु | श | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ३ २५ ३६ ० ० | १ १७ ३६ ० ० | ४ १६ ० ० ० | १ १० ४८ ० ० | २ ८ ० ० ० | १ १७ ३६ ० ० | ४ २ २४ ० ० | ३ १८ ४८ ० ० | ४ ९ १२ ० ० | [illegible] |

| गुरुमध्येकेतुव्यंतरम् | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| के | शु | र | चं | मं | रा | गु | श | बु | ग्र. |
| ० | १ | ० | ० | ० | १ | १ | १ | १ | मा |
| १९ | २६ | १६ | २८ | १९ | २० | १४ | २३ | १७ | दि |
| ३६ | ० | ४८ | ० | ३६ | २४ | ४८ | १२ | ३६ | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

| गुरुमध्येभृगुव्यंतरम् | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| शु | सू | चं | मं | रा | गु | श | बु | के | ग्र. |
| ५ | १ | २ | १ | ४ | [illegible] | ५ | ४ | १ | मा |
| १० | १८ | २० | २६ | २४ | [illegible] | [illegible] | १६ | २६ | दि |
| ० | ० | ० | ० | ० | [illegible] | [illegible] | ० | ० | घ |
| ० | ० | ० | ० | ० | [illegible] | [illegible] | [illegible] | ० | प |
| ० | ० | ० | ० | ० | [illegible] | [illegible] | [illegible] | ० | वि |

| गुरुमध्ये[illegible] | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| सू | चं | मं | रा | गु | [illegible] | [illegible] | के | शु | ग्र. |
| ० | ० | ० | १ | [illegible] | [illegible] | [illegible] | ० | १ | मा |
| १४ | २४ | १६ | १३ | [illegible] | [illegible] | [illegible] | १६ | १८ | दि |
| २४ | ० | ४८ | १२ | २४ | [illegible] | [illegible] | ४८ | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

| गुरुमध्येचंद्रव्यंतरम् | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| चं | मं | रा | गु | श | बु | के | शु | र | ग्र. |
| १ | ० | २ | २ | २ | २ | ० | ० | ० | मा |
| १० | २८ | १२ | ४ | १६ | ८ | २८ | २० | २४ | दि |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

| गुरुमध्येभौमव्यंतरम् | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| मं | रा | गु | श | बु | के | शु | र | चं | ग्र. |
| ० | १ | १ | १ | १ | ० | १ | ० | ० | मा |
| १९ | २० | १४ | २३ | १७ | १९ | २६ | १६ | २८ | दि |
| ३६ | २४ | ४८ | १२ | ३६ | ३६ | ० | ४८ | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

| गुरुमध्येराहुव्यंतरम् | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| रा | गु | श | बु | के | शु | र | चं | मं | ग्र. |
| ४ | ३ | ४ | ४ | १ | ४ | १ | २ | १ | मा |
| ९ | २५ | १६ | २ | २० | २४ | १३ | १२ | २० | दि |
| ३६ | १२ | ४८ | ३६ | २४ | ० | १२ | ० | २४ | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

### शनिमध्येभौमव्यंतरम्.

| मं | रा | गु | श | बु | के | शु | र | चं | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | १ | २ | १ | ० | २ | ० | १ | मा. |
| २२ | २९ | २३ | ३ | २६ | २२ | ६ | १९ | ३ | दि. |
| १६ | ५१ | १२ | १० | ३१ | १६ | ३० | ५७ | १५ | घ. |
| ३० | ० | ० | ३० | ३० | ३० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### शनिमध्येराहुव्यंतरम्.

| रा | गु | श | बु | के | शु | र | चं | मं | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ५ | ४ | ५ | ४ | १ | ५ | १ | २ | १ | मा. |
| ३ | १६ | १२ | २५ | २९ | २१ | २१ | २५ | २९ | दि. |
| ५४ | ४८ | २७ | २१ | ५१ | ० | १८ | ३० | ५१ | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### शनिमध्येगुरुव्यंतरम्.

| गु | श | बु | के | शु | र | चं | मं. | रा. | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ४ | ४ | ४ | १ | ५ | १ | २ | १ | ४ | मा. |
| १ | २४ | ९ | २३ | २ | १५ | १६ | २३ | १६ | दि. |
| ३६ | २४ | १२ | १२ | ० | ३६ | ० | १२ | ४८ | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### बुधमध्येबुधव्यंतरम्.

| बु | के | शु | सू | चं | मं | रा | गु | श. | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ४ | १ | ४ | १ | २ | १ | ५ | ३ | ४ | मा. |
| २ | २० | २४ | २३ | १२ | २० | १० | २५ | १७ | दि. |
| ४९ | ३४ | ३० | २१ | १५ | ३४ | ३ | ३६ | १६ | घ. |
| ३० | ० | ० | ० | ० | ३० | ० | ० | ३० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### बुधमध्येकेतुव्यंतरम्.

| के | शु | र | चं | मं | रा | गु | श | बु. | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | ० | ० | १ | १ | १ | १ | मा. |
| २० | २९ | १७ | २९ | २० | २३ | १७ | २६ | २० | दि. |
| ४९ | ३० | ५१ | ४५ | ४९ | ३३ | ३६ | ३१ | ३४ | घ. |
| ३० | ० | ० | ० | ३० | ० | ० | ३० | ३० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### बुधनध्येशुक्रव्यंतरम्.

| शु | र | चं | मं | रा | गु | श | बु | के | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ५ | १ | २ | १ | ५ | ४ | ५ | ४ | १ | मा. |
| २० | २१ | २५ | २९ | ३ | १६ | ११ | २४ | २९ | दि. |
| ० | ० | ० | ३० | ० | ० | ३० | ३० | ३० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्ये सूर्यव्यंतरम्.

| र | चं | मं | रा | गु | श | बु | के | शु | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | १ | १ | १ | १ | १ | १ | मा. |
| १५ | २५ | १७ | १५ | १० | १८ | १३ | १७ | २१ | दि. |
| १८ | ३० | ५१ | ५४ | ४८ | २७ | २१ | ५१ | ० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्येचंद्रव्यंतरम्.

| चं | मं | रा | गु | श | बु | के | शु | र | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| १ | ० | २ | २ | २ | २ | ० | २ | ० | मा. |
| १२ | २९ | १६ | ८ | २० | १२ | २९ | २५ | २५ | दि. |
| ३० | ४५ | ३० | ० | ४५ | १५ | ४५ | ० | ३० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्ये भौमव्यंतरम्.

| मं | रा | गु | श | बु | के | शु | सू | चं. | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | १ | १ | १ | ० | १ | ० | ० | मा. |
| २० | २३ | १७ | २६ | २० | २० | २९ | १७ | २९ | दि. |
| ४९ | ३३ | ३६ | ३१ | ३४ | ४९ | ३० | ५१ | ४५ | घ. |
| ३० | ० | ० | ३० | ३० | ३० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्येराहुव्यंतरम्.

| रा | गु | श | बु | के | शु | र | चं | मं. | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ४ | ४ | ४ | ४ | १ | ५ | १ | २ | १ | मा. |
| १७ | २ | २५ | १० | २३ | ३ | १५ | १६ | २३ | दि. |
| ४२ | २४ | २१ | ३ | ३३ | ० | ५४ | ३० | ३३ | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्येगुरुव्यंतरम्.

| गु | श | बु | के | शु | र | चं | मं | रा | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ३ | ४ | ३ | १ | ४ | १ | २ | १ | ४ | मा. |
| १८ | ९ | २५ | १७ | १६ | १० | ८ | १७ | २ | दि. |
| ४८ | १२ | ३६ | ३६ | ० | ४८ | ० | ३६ | २४ | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

बुधमध्येशनिव्यंतरम्.

| श | बु | के | शु | र | चं | मं | रा | गु | ग्र. |
|---|---|---|---|---|---|---|---|---|---|
| ५ | ४ | १ | ५ | १ | २ | १ | ४ | ४ | मा. |
| ३ | १७ | २६ | ११ | १८ | २० | २६ | २५ | ९ | दि. |
| २५ | १६ | ३१ | ३० | २७ | ४५ | ३१ | २१ | १२ | घ. |
| ३० | ३० | ३० | ० | ० | ० | ३० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### केतुमध्येकेतुर्व्यंतरम्.

| के. | शु. | सू. | चं. | मं. | रा. | गु. | श. | बु. | व. |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | मा. |
| ८ | २४ | ७ | १२ | ८ | २२ | १९ | २३ | २० | दि. |
| ३४ | ३० | २१ | १५ | ३४ | ३ | ३६ | १६ | ४९ | घ. |
| ३० | ० | ० | ० | ३० | ० | ० | ३० | ३० | प. |
| ० | ० | ० | ० | ० | ० | ० | [illegible] | [illegible] | वि. |

### केतुमध्येभृगुर्व्यंतरम्.

| शु. | सू. | चं. | मं. | रा. | गु. | श. | बु. | के. | व. |
|---|---|---|---|---|---|---|---|---|---|
| २ | ० | १ | ० | २ | १ | २ | १ | १ | मा. |
| १० | २१ | ५ | २४ | ३ | २६ | ७ | २९ | २४ | दि. |
| ० | ० | ० | ३० | ० | ० | ३० | ३० | ३० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | | वि. |

### केतुमध्येसूर्यव्यंतरम्.

| सू. | चं. | मं. | रा. | गु. | श. | बु. | के. | शु. | व. |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | मा. |
| ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २१ | दि. |
| १८ | ३० | २१ | ५४ | ४८ | ५७ | ५१ | २१ | ० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि. |

### केतुमध्येचंद्रव्यंतरम्.

| चं. | मं. | रा. | गु. | श. | बु. | के. | शु. | सू. | व. |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | १ | १ | १ | ० | १ | ० | मा. |
| १७ | १२ | १ | २८ | ३ | २९ | १२ | ५ | १२ | दि. |
| ३० | १५ | ३० | ० | १५ | ४५ | १५ | ० | १५ | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| | ० | | | | | | ० | | वि. |

### केतुमध्येभौमव्यंतरम्.

| मं. | रा. | गु. | श. | बु. | के. | शु. | सू. | चं. | व. |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | ० | ० | ० | ० | ० | ० | मा. |
| ८ | २२ | १९ | २३ | २० | ८ | २४ | ७ | १२ | दि. |
| ३४ | ३ | ३६ | १६ | ४९ | ३४ | ३० | २१ | १५ | घ. |
| ३० | ० | ० | ० | ३० | ३० | ० | ० | ० | प. |
| ० | | | | ० | ० | ० | | ० | वि. |

### केतुमध्येराहुर्व्यंतरम्.

| रा. | गु. | श. | बु. | के. | शु. | सू. | चं. | मं. | व. |
|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | ० | २ | ० | १ | ० | मा. |
| २६ | २० | २९ | २३ | २२ | ३ | १८ | १ | २२ | दि. |
| ४२ | २४ | ५१ | ३३ | ३ | ० | ५४ | ३० | ० | घ. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प. |
| ० | ० | ० | ० | ० | | ० | ० | ० | वि. |

भृगुमध्ये भौमव्यंतरम्

| मं | रा | गु | श | बु | के | शु | र | चं | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| [illegible] | २ | १ | २ | १ | ० | २ | ० | १ | मा |
| [illegible] | ३ | २८ | ६ | २२ | २४ | १० | २१ | ५ | दि |
| ३० | ० | ० | ३० | ३० | ३० | ० | ० | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

भृगुमध्ये राहुव्यंतरम्

| रा | गु | श | बु | के | शु | र | चं | मं | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| २ | ४ | ५ | ५ | २ | ६ | १ | ३ | २ | मा |
| [illegible] | २४ | २१ | ३ | ३ | ० | २४ | ० | ३ | दि |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

भृगुमध्ये गुरुव्यंतरम्

| गु | श | बु | के | शु | र | चं | मं | रा | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| ४ | ५ | ४ | १ | ५ | १ | २ | १ | ४ | मा |
| ८ | २ | १६ | २६ | १० | १८ | २० | २६ | २४ | दि |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

भृगुमध्ये शनिव्यंतरम्

| श | बु | के | शु | र | चं | मं | रा | गु | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| ६ | ५ | २ | ६ | १ | ३ | २ | ५ | ५ | मा |
| ० | ११ | ६ | १० | २७ | ५ | ६ | २७ | ५ | दि |
| ३० | ३० | ३० | ० | ० | ० | ३० | ० | ० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

भृगुमध्ये बुधव्यंतरम्

| बु | के | शु | र | चं | मं | रा | गु | श | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| ४ | १ | ५ | १ | २ | १ | ५ | ४ | ५ | मा |
| २४ | २९ | २० | ११ | २५ | २९ | ३ | १५ | १५ | दि |
| ३० | ३० | ० | ० | ० | ३० | ० | ० | ३० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

भृगुमध्ये केतुव्यंतरम्

| के | शु | र | चं | मं | रा | गु | श | बु | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| ० | २ | ० | १ | ० | २ | १ | २ | १ | मा |
| २४ | १० | २१ | ५ | २४ | ३ | २६ | ६ | २१ | दि |
| ३० | ० | ० | ० | ३० | ० | ० | ३० | ३० | घ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | प |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | वि |

## अथ भौमविदशाफलमाह ।

(मं०मं०)–शत्रुभीतिं कलिं घोरमकस्माज्जायते भयम् ॥ रक्तस्रावोपमृत्युश्च विदशासु स्वयं कुजः ॥ ३० ॥ ( मं० रा० ) बंधनं राजभंगं च धनहानिः कुभोजनम् ॥ कलहः शत्रुभीर्नित्यं भौमभौमांतरे तमः ॥ ३१ ॥ ( मं०गु० ) मतिनाशं तथा दुःखं संतापः कलहो भवेत् ॥ विफलं चिंतितं सर्वं भौमभौमान्तरे गुरुः ॥३२॥ (मं०श०) स्वामिनाशस्तथा पीडा धनहानिर्महाभयम् ॥ वैकल्यं कलहस्त्रासो भौमभौमांतरे शनिः ॥ ३३ ॥ ( मं०बु० ) सर्वथा बुद्धिनाशश्च धनहानिर्ज्वरं तनौ ॥ वस्त्रान्नसुहृदां नाशो भौमभौमांतरे बुधः ॥ ३४ ॥ ( मं०के० ) आलस्यं च शिरःपीडा पापरोगापमृत्युकृत् ॥ राजभीतिः शस्त्रघातो भौमभौमांतरे शिखी ॥ ३५ ॥ ( मं०शु० ) चांडालात्संकटं त्रासं राजशस्त्रभयं भवेत् ॥ अतीसारोथ वमनं भौमभौमांतरे भृगुः ॥ ३६ ॥ ( मं०सू० ) भूमिलाभोर्थसंपत्तिः संतोषो मित्रसंगतिः ॥ सर्वत्र सुखमाप्नोति भौमभौमांतरे रविः ॥ ३७ ॥ ( मं०चं० ) याम्यां दिशि भवेल्लाभः सितवस्त्रविभूषणम् ॥ संसिद्धिः सर्वकार्याणां भौमभौमांतरे शशी ॥ ३८ ॥

## अथ राहुविदशाफलमाह ।

( रा० रा० ) बंधनं बहुधा रोगो बाहुघातं सुहृद्भयम् ॥ अकस्मादापदो यान्ति राहोर्जलाग्नितो भयम् ॥ ३९ ॥ ( रा० गु० ) सर्वत्र लभते लाभो गजाश्वं च धनागमम् ॥ राजसन्मानदं राज्यं भवेद्राहन्तरेगुरुः ॥ ४० ॥ ( रा०श ) बंधनं जायते घोरं सुखहानिर्महद्भयम् ॥ प्रत्यहं वातपीडा च राहोराहंतरा शनिः ॥ ४१ ॥ ( रा०बु० ) सर्वत्र बहुधा लाभः स्त्रीसमश्च विशेषतः ॥ परदे-

शगलः सिद्धी राहोराहंतरे बुधः ॥ ४२ ॥ ( रा०के० ) बुद्धिनाशो भयं विघ्नं धनहानिर्महद्भयम् ॥ सर्वत्र कलहोद्वेगो राहोराहंतरा शिखी ॥ ४३ ॥ ( रा०शु० ) योगिनीभ्यो भयं भूपादश्वहानिः कुभोजनम् ॥ स्त्रीनाशः कुलजं शोकं राहो राहंतरा सितः ॥ ४४ ॥ ( रा०सू० ) ज्वररोगो महाभीतिः पुत्रपौत्रादिपीडनम् ॥ अल्पमृत्युः प्रसादश्च राहोराहंतरा रविः ॥ ४५ ॥ ( रा०चं० ) उद्वेगकलहो चिंता मानहानिर्महद्भयम् ॥ पितुर्विकलता देहे राहोराहंतरा शशी ॥ ४६ ॥ ( रा०मं० ) भगंदरकृता पीडा रक्तपित्तप्रपीडनम् ॥ अर्थहानिर्महोद्वेगो राहोराहंतरे कुजः ॥ ४७ ॥

## अथ गुरोर्विदशाफलमाह ।

( बृ०बृ० ) हेमलाभो धान्यवृद्धिः कल्याणं च फलोदयः ॥ बहुभावं गृहे बुद्धिं जीवजीवंतरे गुरुः ॥ ४८ ॥ ( गु०श० ) गोभूमिहयलाभः स्यात्सर्वत्र सुखसाधनम् ॥ संग्रहो ह्यन्नपानादिगुरोर्गुर्वंतरा शनिः ॥ ४९ ॥ ( गु०बु० ) विद्यालाभो वस्त्रलाभो ज्ञानलाभः समौक्तिकः ॥ सुहृदां संगमः स्नेहो जीवजीवांतरा बुधः ॥ ५० ॥ ( बृ०के० ) जलभीतिस्तथा चौर्यं बंधनं कलहो भवेत् ॥ अल्पमृत्युर्भयं घोरं जीवजीवांतरे ध्वजः ॥ ५१ ॥ ( बृ०शु० ) नानाविद्यार्थसंप्राप्तिर्हेमवस्त्रविभूषणम् ॥ लभते क्षेमसंतोषं जीवजीवांतरे कविः ॥ ५२ ॥ ( बृ०सू० ) नृपाल्लाभस्तथा मित्रात्पितृतो मातृतोपि वा ॥ सर्वत्र लभते पूजां जीवजीवांतरा रविः ॥ ५३ ॥ ( बृ०चं० ) सर्वदुःखविमोक्षश्च मुक्तालाभो हयस्य च ॥ सिध्यंति सर्वकार्याणि जीवजीवांतरे शशी ॥ ५४ ॥ ( बृ०मं० ) शस्त्रभीतिर्गुदे पीडा वह्निमांद्यमजीर्णता ॥ पीडा शत्रुकृता भूरि जीवजीवांतरे कुजः ॥ ५५ ॥ ( बृ०रा० ) चांडालेन

विरोधः स्याद्द्वयं तेभ्यो रतिग्रहः ॥ कष्टं स्याद्व्याविशत्रुभ्यो जीवजीवांतरे तमः ॥ ५६ ॥

## अथ शनिविदशाफलमाह ।

(श०श०) देहपीडा कलेर्भीतिर्भयमंत्यजलोकतः ॥ विदेशगमनं दुःखं शनेः शन्यंतरे शनिः ॥ ५७ ॥ (श०बु०) बुद्धिनाशः कलेर्भीतिमन्नपानादिहानिकृत् ॥ धनहानिर्भयं शत्रोः शनेः शन्यंतरे बुधः ॥ ५८ ॥ (श०के०) बंधुशत्रुगृहे जातो वर्णहानिर्बहुक्षुधा ॥ चित्ते चिंता भयं त्रासः शनेः सौरांतरेशिखी ॥ ५९ ॥ (श०शु०) चिंतिते फलितं वस्तु कल्याणं स्वजनं जने ॥ मनुष्यकृतितो लाभः शनेः शन्यंतरे भृगुः ॥ ६० ॥ (श०सू०) राजतेजोधिकारित्वं स्वगृहे जायते कलिः ॥ ज्वरादिव्याधिपीडा च कोणे कोणांतरे रविः ॥६१॥ (श०चं०) स्फीतबुद्धिर्महारंभो मंदतेजा बहुव्ययः ॥ बहुस्त्रीभिः समं भोगं कोणे कोणांतरे शशी ॥ ६२ ॥ (श०मं०) तेजोहानिः पुत्रघातो वह्निभीती रिपोर्भयम् ॥ वातपित्तकृता पीडा कोणे कोणांतरे कुजः॥६३॥(श०रा०) धननाशो वस्त्रहानिर्भूमिनाशो भयं भवेत् ॥ विदेशगमनं मृत्युः कोणे कोणांतरे कुजः॥६४॥(श०बृ०)गृहेषु स्त्रीकृतं छिद्रं ह्यसमर्थो निरीक्षणे ॥ अथ वा कलिमुद्वेगं शनेःसौरांतरे गुरुः ॥ ६५ ॥

## अथ बुधविदशाफलम् ।

(बु०बु०) बुद्धिर्विद्यार्थलाभो वा वस्त्रलाभो महत्सुखम् ॥ स्वर्णादिधनलाभः स्यात्सौम्यसौम्यांतरे बुधः ॥६६॥ (श०के०) कठिनान्नस्य संप्राप्तिरुदरे रोगसंभवः ॥ कामलं रक्तपित्तं च सौम्यसौम्यांतरे शिखी ॥ ६७ ॥ (बु०शु०) उत्तरस्यां भवेल्लाभो हानिः स्यात्तु चतुष्पदात् ॥ अधिकारान्महाप्रीतिः सौम्ये सौम्यां-

तरे भृगुः ॥ ६८ ॥ ( बु०सू० ) तेजोहानिर्भवेद्रोगस्तनुपीडा तु-मांद्यवी ॥ जायते चित्तवैकल्यं सौम्यसौम्यांतरे रविः ॥ ६९ ॥ ( बु०चं० ) स्त्रीलाभश्चार्थसंपत्तिः कन्यालाभो महद्धनम् ॥ लभते सर्वतः सौख्यं सौम्यसौम्यांतरे शशी ॥ ७० ॥ ( बु०मं० ) धर्मधीर्धनसंप्राप्तिश्चौराग्न्यादिप्रपीडनम् ॥ रक्तवस्त्रं शस्त्रघातः सौम्यसौम्यांतरे कुजः ॥ ७१ ॥ ( बु०रा० ) कलहो जायते स्त्रीभिरकस्माद्भयसंभवः ॥ राजशस्त्रकृता भीतिः सौम्यसौम्यांतरे तमः ॥ ७२ ॥ ( बु०बृ० ) राज्यं राज्याधिकारी वा पूजा राजसमुद्भवा ॥ विद्याधरान्नगुल्मश्च सौम्यसौम्यांतरे गुरुः ॥ ७३ ॥ ( बु०श० ) वातपित्तमहापीडा देहघातसमुद्भवा ॥ धननाशमवाप्नोति सौम्यसौम्यांतरे शनिः ॥ ७४ ॥

## अथ केतोर्विदशाफलम् ।

( के०के० ) आपः समुद्भवोकस्माद्देशांतरसमागमः ॥ धननाशोल्पमृत्युश्च केतोः केत्वंतरे शिखी ॥७५॥ ( के०शु० ) म्लेच्छभीत्यर्थनाशो वा नेत्ररोगः शिरोव्यथा ॥ हानिश्चतुष्पदानां च केतोः केत्वंतरे भृगुः ॥ ७६ ॥ ( के०सू० ) मित्रैः सह विरोधश्च स्वल्पमृत्युः पराजयः ॥ मतिभ्रंशो विवादश्च केतोः केत्वंतरे रविः ॥ ७७ ॥ ( के०चं० ) अन्ननाशो यशोहानिर्देहपीडा मतिभ्रमः ॥ आमवातादिवृद्धिश्च केतोः केत्वंतरे शशी ॥ ७८ ॥ ( के०मं० ) शस्त्रघातेन पातेन पीडितो वह्निपीडया॥नीचाद्भीती रिपोः शंका केतोः केत्वंतरे कुजः ॥ ७९ ॥ ( के०रा० ) कामिनीभ्यो भयं भूयात्तथा वैरिसमुद्भवः ॥ क्षुद्रादपि भवेद्भीतिः केतोः केत्वंतरे तमः ॥ ॥८० ॥ ( के०गु० ) धनहानिर्महोत्पातो वस्त्रमित्रविनाशनम् ॥ सर्वत्र लभते क्लेशं केतोः केत्वंतरे गुरुः ॥८१॥ ( के०श० ) गोम-

ह्रिण्यादिमरणं देहपीडा सुहृद्भयः ॥ स्वल्पाल्पलाभकरणं केतोः केत्वंतरे शनिः ॥ ८२ ॥ (के०बु०) बुद्धिनाशो महोद्वेगो विद्याहानिर्महाभयम् ॥ कार्यसिद्धिर्न जायेत केतोः केत्वंतरे बुधः ॥ ८३ ॥

## अथ शुक्रविदशाफलमाह ।

(शु०शु०) श्वेताश्ववस्त्रमुक्ताद्यैः स्वर्णमाणिक्यसंभवः ॥ लभते सुंदरीं नारीं शुक्रे शुक्रांतरे सितः ॥८४॥ (शु०सू०) वातज्वरः शिरःपीडा राज्ञः पीडा रिपोरपि ॥ जायते स्वल्पलाभोऽपि शुक्रे शुक्रांतरे रविः ॥ ८५ ॥ (शु०चं०) कन्याजन्म नृपाल्लाभो वस्त्राभरणसंयुतः ॥ राज्याधिकारसंप्राप्तिः शुक्रे शुक्रांतरे शशी ॥८६॥ (शु०मं०) रक्तपित्तादिरोगं च कलहस्ताडनं भवेत् ॥ महान्क्लेशो भवेदत्र शुक्रे शुक्रांतरे कुजः ॥ ८७ ॥ (शु०वृ०) महद्द्रव्यं महद्राज्यं वस्त्रमुक्तादिभूषणम् ॥ गजाश्वादिपदप्राप्तिः शुक्रे शुक्रांतरे गुरुः ॥८८॥ (शु०रा०) कलहो जायते स्त्रीभिरकस्माद्भयसंभवः॥ राजतः शत्रुतः पीडा शुक्रे शुक्रांतरे तमः ॥ ८९ ॥ (शु०श०) खरोष्ट्रछागसंप्राप्तिर्लोहमाषतिलादिकम् ॥ लभते स्वल्पपीडादि शुक्रे शुक्रांतरे शनिः ॥ ९० ॥ (शु०बु०) धनज्ञानमहाँल्लाभो राजराज्याधिकारता ॥ निक्षेपाद्धनलाभोपि शुक्रे शुक्रांतरे बुधः ॥ ॥ ९१ ॥ (शु०के०) अल्पमृत्युर्महाघोरे देशाद्देशांतरागमः ॥ लाभोऽपि जायते मध्ये शुक्रे शुक्रांतरे शिखी ॥९२॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे सूर्याद्युपदशाफलकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## अथ सूक्ष्मदशाकरणमाह ।

स्वोपदशाघटीवृंदं हतं स्वाब्दग्रहेण च ॥ विंशोत्तरशतेनाप्तं १२० लिप्ता शेषं कलादिकम् ॥ १ ॥

## अथ सूक्ष्मदशानयनोदाहरणमाह ।

यस्य ग्रहस्योपदशामध्ये यस्य ग्रहस्य सूक्ष्मदशा क्रियते तदा उपदशामध्ये यावत्परिमिताः मासदिनघट्यः तासां सर्वासां घटीवृंदं कृत्वा स्वाब्दैर्गुणिते यथा सूर्यमध्ये चंद्रसूक्ष्मांतरमानीतं तदा सूर्यपिंडं चंद्राब्दे १० र्गुणितमित्यर्थः । स्वाब्दैर्गुणिते विंशोत्तरशतेनाप्ते लब्धं घटिकाः शेषं षष्टिघ्नं विंशोत्तरशतेनाप्तं लब्धं पलानि शेषं षष्टिघ्नं पूर्ववद्भक्तेर्लब्धं अक्षराणीति यथा सूर्यस्योपदशा ५ । २४ घटीपिंडः ३२४ स्वदशावर्षेण ६ गुणितो जातः १९४४ अस्य विंशोत्तरशतेनाप्ते लब्धं १६ घटिका शेषं २४ घटिघ्नं जातं १४४० विंशोत्तरशतेनाप्ते लब्धं पलानि १२ एवं सर्वेषामूह्यम् । दिने त्रिंशद्भिरधिके त्रिंशद्भिस्तष्टे उपरि मासस्थले स्थाप्यः ॥

## अथाग्रे उपदशाचक्राणि.

| अथ सूर्योपदशा तन्मध्ये सूर्यसूक्ष्मचक्रं लिख्यते. | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. | यो. |
| दिन. | ० | ० | ० | ० | ० | ० | ० | ० | ० | ३ |
| घटी. | १६ | २७ | ५८ | ४८ | ४३ | ५१ | ४५ | १८ | ५४ | १८ |
| पल. | १२ | ० | ५४ | ३६ | १२ | १८ | ५४ | ५४ | ० | ० |

## अथ सूक्ष्मदशाफलम् ।

लग्नेश्वरो रंध्रपतिश्च युक्तौ वृषे वृषांशे वृषभद्रकाणे ॥ स्थितौ भवेतां यदि तौ वृषेण यातान्निमित्तौ मरणस्य वेद्यौ ॥ २ ॥ वृषे युग्मांशगौ तौ चेद्भल्लूकेन मृतिर्नृणाम् ॥ वृषे कर्कांशगौ तौ चेन्नक्रादथ जले मृतिः ॥ ३ ॥ वृषे सिंहांशगौ तौ चेद्व्याघ्राद्याघाततो मृतिः ॥ वृषे कन्यांशगौ तौ चेत्कपिना नाऽत्र संशयः ॥४॥ वृषे तुलांशगौ तौ चेद्व्याघ्राद्भीतिं वदेत्तदा ॥ वृषे कौर्मांशगौ तौ चेद्वृक्षै चिंता व्ययो भवेत् ॥५॥ वृषे चापांशगौ तौ चेदश्वेन च मृतिं वदेत् ॥ वृषे कुंभांशगौ तौ चेद्दंतव्यापारतो भयम् ॥ ६ ॥ वृषे

मृगांशगौ तौ चेन्माहिषेण मृतिं वदेत् ॥ वृषे कुंभांशगौ तौ चेद्गो-लांगूलान्मृतिं वदेत् ॥७॥ वृषे झषांशगौ तौ चेदजवस्ताद्भयं भवेत् ॥ एवं संचिंत्य मतिमान्भ्रात्रादीनां मृतिं वदेत् ॥ ८ ॥

अथ सूर्यादिग्रहाणां सूक्ष्मदशाफलमाह ।

(सू०सू०)नृणांभूमिपरित्यागो विगमं प्राणनाशनम् ॥ स्थान-नाशो महाहानिः सूर्यसूक्ष्मदशाफलम् ॥ ९ ॥ (सू०चं०) देवब्रा-ह्मणभक्तिश्च नित्यकर्मरतस्तथा ॥ सुप्रीतिः सर्वमित्रैश्च रवेः सू-क्ष्मगते विधौ ॥ १० ॥ ( सू०मं० ) क्रूरकर्मरतिस्तिग्मशत्रुभिः प-रिपीडनम् ॥ रक्तस्रावादिरोगश्च रवेः सूक्ष्मगते कुजे ॥ ११ ॥ ( सू०रा० ) चौराग्निविषभीतिश्च रणे भंगः पराजयः ॥ दानधर्मा-दिहीनश्च रवेः सूक्ष्मगतो ह्यगौ ॥ १२ ॥ ( सू०बृ० ) नृपसत्का-रराजार्हः सेवकैः परिपूजितः॥राजचक्षुर्गतः शांतः सूर्यसूक्ष्मगते गुरौ ॥ १३ ॥ ( सू०श० )चौर्यसाहसकर्मार्थं देवब्राह्मणपीडनम् ॥ स्थानच्युतिं मनोदुःखं रवेः सूक्ष्मगते शनौ ॥ १४ ॥ (सू०बु०) दिव्यांबरादिलब्धिश्च दिव्यस्त्रीपरिभोगता ॥ अचिंतितार्थसिद्धि-श्च रवेः सूक्ष्मगते बुधे ॥ १५ ॥ ( सू०के० ) गुरुतार्तिविनाशश्च भृत्यदारभवस्तथा॥क्वचित्सेवकसंबंधो रवेः सूक्ष्मगते ध्वजे ॥१६॥ ( सू०शु० )पुत्रमित्रकलत्रादिसौख्यसंपन्न एव च ॥ नानाविधा च संपत्ती रवेः सूक्ष्मगते भृगौ ॥ १७ ॥

अथ चंद्रसूक्ष्मदशाफलम् ।

( चं०चं० ) भूषणं भूमिलाभश्च सन्मानं नृपपूजनम् ॥ ता-मसत्वं गुरुत्वं च चंद्रसूक्ष्मदशाफलम् ॥ १८ ॥ (चं०मं०) दुःखं शत्रुविरोधश्च कुक्षिरोगः पितुर्मृतिः ॥ वातपित्तकफोद्रेकः शशि-सूक्ष्मगते कुजे ॥ १९ ॥ ( चं०रा० ) क्रोधनंमित्रबंधूनां

देशत्यागो धनक्षयः ॥ विदेशान्निगडप्राप्तिरिंदो सूक्ष्मगतेप्यहौ ॥ २० ॥ ( चं०बृ० ) छत्रचामरसंयुक्तं वैभवं पुत्रसंपदः ॥ सर्वत्र सुखमाप्नोति चंद्रे सूक्ष्मगते गुरौ ॥२१॥ (चं०श०) राजोपद्रवनाशः स्याद्व्यवहारे धनक्षयः॥चौरत्वं विप्रभीतिश्च चंद्रे सूक्ष्मगते शनौ ॥ २२ ॥ ( चं०बु० ) राजमानं वस्तुलाभं विदेशाद्वाहनादिकम् ॥ पुत्रपौत्रसमृद्धिश्च चंद्रे सूक्ष्मगते बुधे ॥ २३॥ ( चं०के० ) आत्मनो वृत्तिहननं सस्यशृंगवृषादिभिः ॥ अग्निसूर्यादिभीतिः स्याच्चंद्रे सूक्ष्मगते ध्वजे ॥ ३४ ॥ ( चं० शु० ) विवाहो भूमिलाभश्च वस्त्राभरणवैभवम् ॥ राज्यलाभश्च कीर्तिश्च चंद्रे सूक्ष्मगते भृगौ ॥२५॥ ( चं० सू० )क्लेशात्क्लेशः कार्य नाशः पशुधान्यधनक्षयः॥गात्रवैषम्यभूमिश्च चंद्रे सूक्ष्मगते रवौ ॥२६॥

## अथ भौमसूक्ष्मदशाफलम् ।

( मं०मं० ) भूमिहानिर्मनःखेदमपस्मारी च बंधुयुक् ॥ पुरक्षोभमनस्तापो भौमसूक्ष्मदशाफलम् ॥ २७ ॥ ( मं०रा० ) अंगदोषो जनाद्भीतिः प्रमदावंशनाशनम् ॥ वह्निसर्पभयं घोरं भौमसूक्ष्मगतेप्यहौ ॥ २८ ॥ ( मं०बृ० ) देवपूजारतिश्चात्र मंत्राभ्युत्थानतत्परः ॥ लोकपूज्यं प्रमोदं च भौमसूक्ष्मगते गुरौ ॥ २९ ॥ ( मं०श० ) बंधनान्मुच्यते बद्धो धनधान्यपरिच्छदः ॥ भृत्यार्थवहुलः श्रीमान्भौमे सूक्ष्मगते शनौ ॥ ३० ॥ ( मं०बु० ) वाहनं छत्रसंयुक्तं राज्यभोगपरं सुखम् ॥ कासश्वासादिका पीडा भौमे सूक्ष्मगते बुधे ॥ ३१ ॥ ( मं०के० ) परप्रेरितबुद्धिश्च सर्वत्रापि च गर्हिता ॥ अशुचिः सर्वकालेषु भौमसूक्ष्मगते ध्वजे ॥ ३२ ॥ ( मं०शु० ) इष्टस्त्रीभोगसंपत्तिरिष्टभोजनसंग्रहः ॥ इष्टार्थश्चैव लाभश्च भौमसूक्ष्मगते भृगौ ॥ ३३ ॥ ( मं०सू० )

राजद्वेषो द्विजात्क्लेशः कार्याभिप्रायवंचकः ॥ लोकेऽपि निंद्यतामेति भौमसूक्ष्मगते रवौ ॥ ३४ ॥ ( मं०चं० ) शुद्धत्वं धनसंप्राप्तिर्देवब्राह्मणवत्सलः ॥ व्याधिना परिभूयेत भौमसूक्ष्मगतौ विधौ ॥ ३५ ॥

## अथ राहोःसूक्ष्मदशाफलम् ।

( रा०रा० ) लोकोपद्रवबुद्धिश्च स्वकार्ये मतिविभ्रमः ॥ शून्यता चित्तदोषःस्याद्राहोः सूक्ष्मदशाफलम् ॥ ३६ ॥ ( रा०वृ० ) दीर्घरोगी दरिद्रश्च सर्वेषां प्रियदर्शनः ॥ दानधर्मरतः शस्तो राहोः सूक्ष्मगते गुरौ ॥ ३७ ॥ ( रा० श० ) कुमार्गात्कुत्सितोग्रश्च दुष्टश्च परसेवकः ॥ असत्संगमतिर्मूढो राहोः सूक्ष्मगते शनौ ॥ ३८ ॥ ( रा०बु० ) स्त्रीसंभोगमतिर्वाग्मी लोकसंभावनावृतः ॥ अन्नमिच्छंस्तनुग्लानी राहोः सूक्ष्मगते बुधे ॥३९॥ (रा०-के० ) माधुर्यं मानहानिश्च बंधनं चाप्रमारकम् ॥ पारुष्यं जीवहानिश्च राहोः सूक्ष्मगते ध्वजे ॥ ४० ॥ ( रा०शु० ) बंधनान्मुच्यते बद्धः स्थानमानार्थसंचयः ॥ कारणाद्द्रव्यलाभश्च राहोः सूक्ष्मगते भृगौ ॥ ४१ ॥ ( रा० सू० ) व्यक्ताशो गुल्मरोगं च क्रोधहानिस्तथैव च ॥ वाहनादिसुखं सर्वं राहोः सूक्ष्मगते रवौ ॥ ४२ ॥ ( रा०चं० ) मणिरत्नधनावाप्तिर्विद्योपासनशीलवान् ॥ देवार्चनपरो भक्त्या राहोः सूक्ष्मगते विधौ ॥४३॥ ( रा०-मं०)निर्जितं जनविद्रावो जने क्रोधश्च बंधनात् ॥ चौर्यशीलरतिर्नित्यं राहोःसूक्ष्मगते कुजे ॥ ४४ ॥

## अथ गुरोः सूक्ष्मदशाफलम् ।

( वृ०वृ० ) शोकनाशो धनाधिक्यमग्निहोत्रं शिवार्चनम् ॥ वाहनं छत्रसंयुक्तं जीवसूक्ष्मदशाफलम् ॥४५॥ ( वृ०श० ) अल-

हा सूर्यवर्ती च विदेशे वसुनाशनम् ॥ नरोघो धननाशश्च गुरोः सूक्ष्मदशा शनौ ॥ ४६ ॥ ( बृ०के० ) ज्ञानं विभवं पांडित्यं शास्त्रश्रोता शिवार्चनम् ॥ अग्निहोत्रं गुरोर्भक्तिर्गुरोः सूक्ष्मगते ध्वजे ॥४७॥ (बृ०शु०) रोगान्मुक्तिः सुखं भोगं धनधान्यसमागमम् ॥ पुत्रदारादिकं सौख्यं गुरोः सूक्ष्मगते भृगौ ॥ ४८ ॥ ( बृ०सू० ) वातपित्तप्रकोपं च श्लेष्मोद्रेकस्तु दारुणः ॥ रसव्याधिकृतं शूलं गुरोः सूक्ष्मगते रवौ ॥ ४९ ॥ (बृ०चं०) छत्रचामरसंयुक्तं वैभवं पुत्रसंपदः ॥ नेत्रकुक्षिगता पीडा गुरोः सूक्ष्मगते विधौ ॥ ५० ॥ ( बृ०मं० ) स्त्रीजनाच्च विषोत्पत्तिर्बंधनं चातिनिग्रहम् ॥ देशांतरगमं भ्रांतिर्गुरोः सूक्ष्मगते कुजे ॥ ५१ ॥ ( बृ०रा )व्याधिभिःपरिभूतः स्याच्चोरैरपहृतं महत् ॥ सर्पवृश्चिकदष्टत्वं गुरोः सूक्ष्मगते प्यहौ ॥ ५२ ॥

## अथ शनेः सूक्ष्मदशाफलम् ।

( श०श० ) धनहानिर्महाव्याधिः शनेः पीडा कुलक्षयः ॥ भिन्नाहारी महादुःखी मंदसूक्ष्मदशाफलम् ॥ ५३ ॥ ( श०बु० ) वाणिज्यवृत्तेर्लाभश्च विद्याविभवमेव च ॥ स्त्रीलाभश्च महीप्राप्तिः शनेः सूक्ष्मगते बुधे ॥ ५४ ॥ ( श० के० ) चौरोपद्रवकुष्ठादिवृत्तिक्षयविगुंफनम् ॥ सर्वांगपीडनं व्याधिः शनिसूक्ष्मगते ध्वजे ॥ ५५ ॥ ( श०शु० ) ऐश्वर्यमायुधाभ्यासं पुत्रलाभोभिषेचनम् ॥ आरोग्यं धनकामौ च शनिसूक्ष्मगते भृगौ ॥ ५६ ॥ ( श०सू० ) राजतेजोविकारत्वं स्वगृहे ज्ञायते कलिः ॥ किंचित्पीडा स्वदेहोत्था शनिसूक्ष्मगते रवौ ॥ ५७ ॥ ( श० चं० ) स्फीतबुद्धिर्महारंभो मंदतेजा बहुव्ययः ॥ स्त्रीपुत्रैश्च समं सौख्यं शनिसूक्ष्मगते विधौ ॥ ५८ ॥ ( श०मं० ) तेजोहानिर्महोद्वेगो वह्निक्षयभ्रमः

कलिः ॥ वातपित्तकृता पीडा शनेः सूक्ष्मगते कुजे ॥ ५९ ॥ ( श०रा० ) पितृमातृविनाशश्च मनोदुःखं गुरुव्ययम् ॥ सर्वत्र विफलं स्याच्च शनिसूक्ष्मगतेप्यहौ ॥ ६० ॥ ( श०बृ० ) सन्मुद्राभोगसन्मानं धनधान्यविवर्द्धनम् ॥ छत्रचामरसंप्राप्तिः शनेः सूक्ष्मगते गुरौ ॥ ६१ ॥

## अथ बुधसूक्ष्मदशाफलम् ।

( बु० बु० ) सौभाग्यं राजसन्मानं धनधान्यादिसंपदः ॥ सर्वेषां प्रियदर्शी च बुधसूक्ष्मदशाफलम् ॥ ६२ ॥ ( बु० के० )–बालग्रहाग्निभिस्तापः स्त्रीगदोद्भवदोषभाक् ॥ कुमार्गकुत्सिताशी च बुधसूक्ष्मगते ध्वजे ॥ ६३ ॥ ( बु०शु० ) वाहनं धनसंपत्तिर्जलजान्नार्थसंभवः ॥ शुभकीर्तिर्महाभोगो बुधसूक्ष्मगते भृगौ॥६४॥ (बु०र०)ताडनं नृपवैषम्यं बुद्धिस्खलनरोगभाक्॥हानिर्जनापवादं च बुधसूक्ष्मगते रवौ ॥६५॥ ( बु०चं०) सुभगः स्थिरबुद्धिश्च राजसन्मानसंपदः॥ सुहृदां गुरुसंस्कारो बुधसूक्ष्मगते विधौ ॥६६॥ ( बु०मं० ) अग्निदाहो विषोत्पत्तिर्जडत्वं च दरिद्रता॥ विभ्रमश्च महोद्वेगो बुधसूक्ष्मगते कुजे ॥ ६७ ॥ ( बु०रा० ) अग्निसर्पनृपाद्भीतिः कृच्छ्रादरिपराभवः॥भूतावेशभ्रमाद्भ्रांतिर्बुधसूक्ष्मगतेप्यहौ ॥ ६८ ॥ ( बु०बृ० ) गृहोपकरणं भव्यं त्यागं भोगादिवैभवम् ॥ राजप्रसादसंपत्तिर्बुधसूक्ष्मगते गुरौ ॥ ६९ ॥ ( बु०श० ) वाणिज्यवृत्तिलाभश्च विद्याविभवमेव च ॥ स्त्रीलाभश्च महाव्याप्तिर्बुधसूक्ष्मगते शनौ ॥ ७० ॥

## अथ केतोः सूक्ष्मदशाफलम् ।

( के०के० ) पुत्रदारादिजं दुःखं गात्रवैषम्यमेव च ॥ दरिद्राद्भिक्षुवृत्तिश्च केतोः सूक्ष्मदशाफलम् ॥ ७१ ॥ ( के०शु० )रोग-

नाशोऽर्थलाभश्च गुरुविप्रानुवत्सलः॥ संगमः स्वजनैः सार्द्धं केतोः सूक्ष्मगते भृगौ ॥ ७२ ॥ ( के०सू० ) युद्धभूमिविनाशश्च विप्रवासः स्वदेशतः ॥ सुहृद्विपत्तिरार्तिश्च केतोः सूक्ष्मगते रवौ॥७३॥ ( के०चं० ) दासीदाससमृद्धिश्च युद्धे लब्धिर्जयस्तथा ॥ ललिता कीर्तिरुत्पन्ना केतोः सूक्ष्मगते विधौ ॥ ७४ ॥ ( के०मं० ) आसने भयमश्वादेश्चौरदुष्टादिपीडनम् ॥ गुल्मपीडा शिरोरोगः केतोः सूक्ष्मगते कुजे ॥ ७५ ॥ ( के०रा० ) विनाशः स्त्रीगुरूणां च दुष्टस्त्रीसंगमाल्लघुः॥वमनं रुधिरं पित्तं केतोः सूक्ष्मगतेप्यगौ ॥ ७६ ॥ ( के०बृ० ) वैरं विरोधसंपत्तिः सहसा राजवैभवम् ॥ पशुक्षेत्रविनाशार्त्तिः केतोः सूक्ष्मगते गुरौ ॥ ७७ ॥ ( के०श० ) मृषा पीडा भवेत्क्षुद्रसुतोत्पत्तिश्च लंघनम् ॥ स्त्रीविरोधः सत्यहानिः केतोः सूक्ष्मगते शनौ ॥ ७८ ॥ ( के०बु० ) नानाविधजनाप्तिश्च विप्रयोगोरिपीडनम् ॥ अर्थसंपत्समृद्धिश्च केतोः सूक्ष्मगते बुधे ॥७९॥

## अथ शुक्रसूक्ष्मदशाफलम् ।

( शु० श० ) शत्रुहानिर्महत्सौख्यं शंकरालयसंभवम् ॥ तडागकूपनिर्माणं शुक्रसूक्ष्मदशाफलम् ॥ ८० ॥ ( शु०सू० ) उरस्तापो भ्रमश्चैव गतागतविचेष्टितम् ॥ क्वचिल्लाभः क्वचिद्धानिर्भृगोः सूक्ष्मगते रवौ ॥ ८१ ॥ ( शु० चं ) आरोग्यं धनसंपत्तिः कार्यलाभं गतागतैः ॥ वैरिकावारवुद्धिः स्याद्भृगोः सूक्ष्मगते विधौ ॥ ८२ ॥ ( शु० मं० ) जडत्वं रिपुवैषम्यं देशभ्रंशो महद्भयम् ॥ व्याधिदुःखसमुत्पत्तिर्भृगोः सूक्ष्मगते कुजे ॥ ८३ ॥ ( शु० रा० ) राज्याग्निसर्पजा भीतिर्बंधुनाशो गुरुव्यथा ॥ स्थानच्युतिर्महाभीतिर्भृगोः सूक्ष्मगतेप्यहौ ॥ ८४ ॥ ( शु० बृ० ) सर्वत्रका-

येलाभश्च क्षेत्रार्थविभवोन्नतिः॥वणिग्वृत्तेर्महाल्लब्धिर्भृगोः सूक्ष्मगते गुरौ ॥ ८५ ॥ ( शु०श० ) शत्रुपीडा महद्दुःखंचतुष्पदविनाशनम् ॥ स्वगोत्रगुरुहानिः स्याद्भृगोः सूक्ष्मगते शनौ ॥ ८६ ॥ ( शु०बु० ) बांधवादिषु संपत्तिर्व्यवहारो धनोन्नतिः ॥ पुत्रदारादितः सौख्यं भृगोः सूक्ष्मगते बुधे ॥ ८७ ॥ ( शु०के० ) अग्निरोगो महत्पीडा मुखनेत्रशिरोव्यथा ॥ संचितार्थात्मनःपीडा भृगोः सूक्ष्मगते ध्वजे ॥ ८८ ॥ इति श्रीबृहत्पाराशरहोरापूर्वखंडसारांशे सूर्यादिसूक्ष्मदशाफलकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अथ प्राणदशानयनमाह ।

स्वसूक्ष्माख्यदशापाश्च पिंडे विघटिकात्मके ॥ स्वाब्दैस्तते पुनस्तष्टे विंशोत्तरशतेन च ॥ लब्धं विघटिका ज्ञेया विपलानि ततः परम् ॥ १ ॥

## अस्योदाहरणमाह ।

यस्य ग्रहस्य सूक्ष्मदशामध्ये यस्य ग्रहस्य प्राणदशा क्रियते तदा तत्सूक्ष्मदशायाः यावत्परिमितानि दिनानि घट्यश्च तेषां पलानि कृत्वा स्वाब्दैर्गुणयेत् । शेषा क्रिया सूक्ष्मदशावत् । यथा सूक्ष्मदशा घटी १६ पलानि १२ तन्मध्ये सर्वेषां प्राणदशा । तद्यथा सूर्यसूक्ष्मदशाया विघटिकापिंडः ९७२ स्वाब्दे ६ गुणिते जातं ५८३२ विंशोत्तरशतेनाप्ते लब्धं ४८ पलानि शेषं ७२ षष्टिगुणितं जातं ४३२० पुनस्तेनैव भक्ते लब्धं ३६ विपलानि एवं सूर्यसूक्ष्मदशामध्ये सूर्यस्य प्राणदशा विघटिका ४८ विपलानि ३६ एवं सर्वेषामूह्यमिति ॥

| अथ सूर्यसूक्ष्मदशा तन्मध्ये प्राणदशाचक्रम्. | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. | यो. |
| घटी. | ० | १ | ० | २ | २ | २ | २ | ० | २ | १६ |
| पल. | ४८ | २१ | ५६ | २५ | ९ | ३३ | १७ | ५६ | ४२ | १२ |
| विपल. | १६ | ० | ४२ | ४८ | १६ | ५४ | ४२ | ४२ | ० | ० |

## अथ प्राणदशामाह ।

शरीरनाथो मरणाधिपेन युक्तो मृगेंद्रेण मृगाधिपांशे ॥ तयोर्विपाके भयमाखुतो मृतिं सर्पात्तदा प्राहुरुदारचित्ताः ॥ २ ॥ सिंहे कन्यांशगौ तौ चेत्कफकंपादितो मृतिः ॥ मृगराजे तुलासंस्थे तयोर्भुक्तौ मृतिं वदेत् ॥ ३ ॥ अल्पांशगो मृगेंद्रे वा तयोर्दाये सरीसृपात् ॥ चापांशगो मृगेंद्रे तु तद्दर्गाच्च मृतिं वदेत् ॥ ४ ॥ मृगांशगौ तौ सिंहे च तयोर्दाये खरान्मृतिः ॥ कुंभांशगौ यदा तौ च मृगराजनृपाद्भयम् ॥ ५ ॥ मीनांशकगतौ सिंहे सारंगाद्भयमादिशेत् ॥ सिंहे मेषांशगौ तौ चेद्रोमायोर्भयमादिशेत् ॥ ॥ ६ ॥ वृषांशगौ तौ सूर्यर्क्षे तयोर्दाये शुनो मृतिः ॥ युग्मांशगौ तौ सूर्यर्क्ष गोलांगूलाद्भयं भवेत् ॥ ७ ॥ कर्कांशगौ तु सिंहे तु ह्यग्निदग्धाद्गृहान्मृतिः ॥ एवं भ्रात्रादिभावानां तत्तद्भुक्तौ फलं वदेत् ॥ ८ ॥ देहाधिपौ मृत्युपतिश्च युक्तश्चापांशगौ कार्मुकराशिगौ चेत् ॥ दाये तयोर्वाजिकृतं च मृत्युं वदंति तत्कालविदो महांतः ॥ ९ ॥ चापेमृगांशगौ तौ चेत्सारंगाद्भयमादिशेत् ॥ हये कुंभांशगौ तौ चेद्वराहाद्भयमादिशेत् ॥ १० ॥ हये मीनांशगौ तौ चेत्पाके नक्राद्भयं तयोः ॥ मेषांशगौ तौ चापे तु तयोर्दाये चतुष्पदात् ॥ ११ ॥ हये वृषांशगौ तौ चेद्रासभाद्भयमादिशेत् ॥ १२ ॥ युग्मांशगौ हयांगेषु वानराद्भयमादिशेत् ॥ कर्कांशगौ

हयांगे तु चाखुना भयमेतयोः ॥ १३ ॥ सिंहांशगौ हयांगेषु जंबुकाद्भयमेतयोः॥ कन्यांशगौ हयांगे तु लांगूलान्मृतिरुच्यते॥१४॥ तुलांशगौ हयांगे तु लोष्टान्मरणमेतयोः ॥ अल्पांशगौ हयांगेषु तयोः पाके सरीसृपात् ॥ एवं भ्रात्रादिभावानां फलमाहुर्मनीषिणः ॥ १५ ॥ विलग्नयोनेर्धननायकश्च मृगे मृगांशे च गतेऽथ युक्ते ॥ भुक्तोथ प्रीतिश्च भवेन्नराणां विवाहहेतुः प्रवदंति संतः ॥ १६ ॥ कुंभांशगौ मृगांगे च भल्लूकाद्भयमेतयोः ॥ झषांशगौ मृगांशे च सारंगाद्भयमेतयोः ॥ १७ ॥ युग्मांशगौ मृगांशे तौ हरिणान्मृतिरेतयोः ॥ कर्कांशगौ मृगास्ये तौ तयोर्दाये मृतिर्गजात् ॥ १८ ॥ कौर्पांशगौ मृगांशे तौ नकुलान्मृतिरेतयोः ॥ चापांशगौ मृगांशे तौ मार्जारान्मृतिरेतयोः ॥ १९ ॥ एवं निश्चित्य मतिमान्भ्रात्रादीनां फलं वदेत् ॥ २० ॥

## अथ सूर्यप्राणदशाफलम् ।

( सू०सू० ) पौंश्चल्यविषजा बाधा मोषणं विषमेक्षणम् ॥ सूर्यप्राणदशायां तु मरणं कृच्छ्रमादिशेत् ॥२१॥ ( सू०चं० ) सुखं भोजनसंपत्तिः संस्कारो नृपवैभवम् ॥ उदराविकृताभिश्च रवेः प्राणगते विधौ ॥२२॥ (सू०मं०) भूपोपद्रवमन्यार्थे द्रव्यनाशो महद्भयम् ॥ महत्यपचयप्राप्ती रवेः प्राणगते कुजे॥२३॥( सू०रा०) अन्नोद्भवा महापीडा विषोत्पत्तिर्विषेणकः ॥ अर्थाग्निराजाभिः क्लेशं रवेः प्राणगते प्यहौ ॥ २४ ॥ (सू०वृ०) नानाविद्यार्थसंपत्तिः कार्यलाभो गतागतेः॥ जीवप्राणश्रमेनाशो रवेः प्राणगते गुरौ ॥२५॥ ( सू०श० ) बंधनं प्राणनाशश्च चित्तोद्वेगस्तथैव च ॥ बहुबाधा महाहानी रवेः प्राणगते शनौ ॥ २६ ॥(सू०बु०)राजान्नभोग सततं राजलांछनतत्पदम् ॥ आत्मा संतर्पयेदेवं रवेः प्राणगते बुधे

॥ २७ ॥ ( सू०के० ) अन्योन्यं कलहश्चैव वसुहानिः पराजयः ॥ गुरुजीवंधुहानिश्च सूर्यप्राणगते ध्वजे ॥ २८ ॥ ( सू०शु० ) राजपूजा धनाधिक्यं स्त्रीपुत्रादिभवं सुखम् ॥ अन्नपानादिभोगादि- सूर्यप्राणगते भृगौ ॥ २९ ॥

## अथ चंद्रप्राणदशाफलम् ।

( चं०चं० ) योगाभ्यासं समाधिं च देशिकत्वं च पश्यति ॥ इति सर्वं समासेन चंद्रप्राणदशाफलम् ॥ ३० ॥ ( चं०मं० ) क्षयं कुष्ठं बंधुनाशं रक्तस्रावान्महद्भयम् ॥ भूतावेशादि जायेत चंद्रप्राणगते कुजे ॥ ३१ ॥ ( चं०रा० ) सर्पभीतिर्विशेषेण भूतोपद्रववान्सदा ॥ दृष्टिक्षोभो मतिभ्रंशश्चंद्रप्राणगतेप्यहौ ॥३२॥ ( चं० बृ० ) धर्मवृद्धिः क्षमाप्राप्तिर्देवब्राह्मणपूजनम् ॥ सौभाग्यं प्रियदृष्टिश्च चंद्रप्राणगते गुरौ ॥ ३३ ॥ ( चं०श० ) सहसा देहपतनं शत्रूपद्रववेदना ॥ अंधत्वं च धनप्राप्तिश्चंद्रप्राणगते शनौ ॥३४॥ ( चं०बु० ) चामरच्छत्रसंप्राप्ती राज्यलाभो नृपात्ततः ॥ समत्वं सर्वभूतेषु चंद्रप्राणगते बुधे ॥ ३५ ॥ ( चं०के० ) शस्त्राग्निरिपुजा पीडा विषाग्निः कुक्षिरोगता ॥ पुत्रदारावियोगश्च चंद्रप्राणगते शिखी ॥ ३६ ॥ ( चं०शु० ) पुत्रमित्रकलत्राप्ति विदेशाच्च धनागमः ॥ सुखसंपत्तिरर्थश्च चंद्रप्राणगते भृगौ ॥ ३७ ॥ ( चं०सू० ) तीव्रदोषप्रदोषी च प्राणहानिर्मनोविषम् ॥ देशत्यागो महाभीतिश्चंद्रप्राणगते रवौ ॥ ३८ ॥

## अथ भौमप्राणदशाफलम् ।

( मं०मं० ) शास्त्रे परजनाद्दः शास्त्रेण परकेन वा ॥ मृत्युना मरणं याति भौमप्राणदशाफलम् ॥ ३९ ॥ ( मं०रा० ) विच्युतः सुतदारादिबंधूपद्रवपीडितः ॥ प्राणत्यागी विषेणैव भौमप्राणग-

तेष्वहो ॥ ४० ॥ ( मं०बृ० ) देवार्चनपरः श्रीमान्मंत्रानुष्ठानतत्परः ॥ पुत्रपौत्रसुखावाप्तिर्भौमप्राणगते गुरौ ॥ ४१ ॥ (मं०श०) अभिबाधा भवेन्मृत्युरर्थनाशः पदच्युतिः॥बंधुभिर्बंधुतावाप्तिर्भौमप्राणगते शनौ ॥४२॥ (मं०बु०) दिव्यांबरसमुत्पत्तिर्दिव्याभरणभूषितः ॥ दिव्यांगनायाः संप्राप्तिर्भौमप्राणगते बुधे ॥ ४३ ॥ ( मं०के० ) पतनोत्पातपीडा च नेत्रक्षोभो महद्भयम् ॥ भुजंगाद्द्रव्यहानिश्च भौमप्राणगते ध्वजे ॥ ४४ ॥ (मं०शु०) धनधान्यादिसंपत्तिर्लोकपूजा सुखागमा ॥ नानाभोगैर्भवेद्रोगी भौमप्राणगते भृगौ ॥ ४५ ॥ (मं०सू०)ज्वरोन्मादः क्षयोर्थश्च राजविग्रहसंभवः ॥ दीर्घरोगी दरिद्रः स्याद्भौमप्राणगते रवौ ॥ ४६ ॥ (मं० चं०) भोजनादिसुखप्रीतिर्वस्त्राभरणवांछितम् ॥ शीतोष्णव्याधिपीडा च भौमप्राणगते विधौ ॥ ४७ ॥

## अथ राहोः प्राणदशाफलमाह ।

(रा०रा०) अन्नाशने विरक्तश्च विषभीतिस्तथैव च ॥ साहसाद्धननाशश्च राहोः प्राणदशाफलम् ॥ ४८ ॥ (रा०बृ०) अंगसौख्यं विनिर्भीतिर्वाहनादेश्च संगता ॥ नीचैःकलह संप्राप्ती राहोः प्राणगते गुरौ ॥४९॥ (रा०श०) गृहदाहशरीरे च नीचैरपहृतं धनम् ॥ रोगबंधनसंप्राप्ती राहोः प्राणगते शनौ ॥ ५० ॥ (रा०बु०) गुरूपदेशविभवो गुरुसत्कारवर्धनम् ॥ गुणवाञ्च्छीलवांश्चापि राहोः प्राणगते बुधे ॥ ५१ ॥ ( रा०के० ) स्त्रीपुत्रादिविरोधश्च गृहान्निष्क्रमणादपि ॥ साहसात्कार्यहानिश्च राहोः प्राणगते ध्वजे ॥ ५२ ॥ ( रा०शु० ) छत्रवाहनसंपत्तिः सर्वार्थफलसंचयः ॥ शिवार्चनगृहारंभी राहोः प्राणगते भृगौ ॥ ५३ ॥ (रा०सू०) अर्शादिरोगभीतिश्च राज्योपद्रवसंभवः ॥ चतुष्पदा-

दिहानिश्च राहोः प्राणगते रवौ ॥ ५४ ॥ ( रा०चं० ) सौमनस्यं च सद्बुद्धिःसत्कारो गुरुदर्शनम् ॥ पापभीतिर्मनःसौख्यं राहोः प्राणगते विधौ ॥ ५५ ॥ ( रा०मं० ) चंडालाग्निवशाद्भीतिः स्वपदच्युतिरापदः ॥ मलिनश्चादिवृत्तिश्च राहोः प्राणगते कुजे ॥५६॥

## अथ गुरोः प्राणदशाफलम् ।

( बृ०बृ० ) शोकनाशो धनाधिक्यमग्निहोत्रं शिवार्चनम् ॥ वाहनं छत्रसंयुक्तं जीवप्राणदशाफलम् ॥ ५७ ॥ ( बृ०श० ) व्रतहा सूर्यवर्त्तिश्च विदेशे वसुनाशनम् ॥ न रोधो धननाशश्च गुरोः प्राणगते शनौ ॥ ५८ ॥ ( बृ०के० ) ज्ञानं विभवपांडित्यं शास्त्रः श्रोता शिवार्चनम् ॥ अग्निहोत्रं गुरोर्भक्तिर्गुरोः प्राणगते ध्वजे ॥५९॥ ( बृ०शु० ) रोगान्मुक्तिः सुखं भोगं धनधान्यसमागमम्॥ पुत्रदारादिकं सौख्यं गुरोः प्राणगते भृगौ ॥६०॥ ( बृ०सू० )वातपित्तप्रकोपं च श्लेष्मोद्रेकस्तु दारुणः ॥ रसव्याधिकृतं शूलं गुरोः प्राणगते रवौ ॥ ६१ ॥ ( बृ०च० ) छत्रचामरसंयुक्तं वैभवं पुत्रसंपदः ॥ नेत्रकुक्षिगता पीडा गुरोः प्राणगते विधौ ॥ ६२ ॥ (बृ०मं०) स्त्रीजनाच्च विषोत्पत्तिर्बंधनं चातिनिग्रहम् ॥ देशांतरगमं भ्रांतिर्गुरोः प्राणगते कुजे ॥ ६३ ॥ ( बृ० रा ) व्याधिभिः परिभूतः स्याच्चौरैरपहृतं महत् ॥ सर्पवृश्चिदष्टत्वं गुरोः प्राणगतेप्यहौ ॥ ६४ ॥

## अथ शनिप्राणदशाफलम् ।

( श० श० ) ज्वरेण ज्वलिता कांतिः कुष्ठरोगोदरादिरुक् ॥ जलाग्निकृतमृत्युः स्यान्मंदप्राणदशाफलम् ॥ ६५ ॥ ( श०बु० ) धनं धान्यं च मांगल्यं व्यवहाराभिपूजनम् ॥ देवब्राह्मणभक्तिश्च शनेः प्राणगते बुधे ॥ ६६ ॥ ( श०के० ) मृत्युवेदनदुःखं च

भूतोपद्रवसंभवः ॥ परदाराभिभूतत्वं शनेः प्राणगते ध्वजे ॥६७॥ ( श०शु० ) पुत्रार्थविभवैः सौख्यं क्षितिमानादिना सुखम् ॥ अग्निहोत्रं विवाहश्च शनेः प्राणगते भृगौ ॥६८॥ ( श०सू० ) अक्षिपीडा शिरोव्याधिः सर्पशत्रुभयं भवेत् ॥ अर्थहानिर्महाक्लेशः शनेः प्राणगते रवौ ॥६९॥ ( श०चं० ) आरोग्यं पुत्रलाभश्च शांतिपौष्टिकवर्धनम् ॥ देवब्राह्मणभक्तिश्च शनेः प्राणगते विधौ ॥७०॥ ( श०मं० ) गुल्मरोगः शत्रुभीतिर्मृगया प्राणनाशनम् ॥ सर्पाग्निशत्रुतो भीतिः शनेः प्राणगते कुजे ॥७१॥ ( श० रा० ) देशत्यागो नृपाद्भीतिर्मोहनं विषभक्षणम् ॥ वातपित्तकृता पीडा शनेः प्राणगतेप्यहौ ॥७२॥ ( श० बृ० ) सेनापत्यं भूमिलाभं संगमं स्वजनैः सह ॥ गौरवं नृपसन्मानं शनेः प्राणगते गुरौ ॥७३॥

## अथ बुधप्राणदशाफलमाह ।

(बु०बु०)आरोग्यं सुखसंपत्तिर्धर्मकर्मादिसाधनम्॥समत्वं सर्वभूतेषु बुधप्राणदशाफलम् ॥७४॥(बु० के०)दहनं चौरविद्धांगपरमान्नं विषोद्भवैः ॥ देहांतःकरणे नाशं बुधप्राणगते ध्वजे॥ ७५॥ ( बु० शु० ) प्रभुत्वं धनसंपत्तिः कीर्तिर्धर्मशिवार्चनम् ॥ पुत्रदारादिकं सौख्यं बुधप्राणगते भृगौ ॥ ७६ ॥ ( बु० सू ) अंतर्दाहो ज्वरोन्मादो बांधवानां रतिः स्त्रिया ॥ पापनिस्तेयसंपत्तिर्बुधप्राणगते रवौ ॥७७॥ ( बु०चं० ) स्त्रीलाभश्चार्थसंपत्तिः कन्यालाभो धनागमः ॥ लभते सर्वतः सौख्यं बुधप्राणगते विधौ॥ ७८॥ ( बु०मं० ) पतितः कुक्षिरोगी च दंतनेत्रादिजा व्यथा ॥ अर्शांसि प्राणसंदेहो बुधप्राणगते कुजे ॥ ७९ ॥ ( बु०रा० ) वस्त्राभरणसंपत्तिर्वियोगो विप्रवैरिता ॥ सन्निपातोद्भवं दुःखं बुधप्राणग-

तेप्यहो ॥ ८० ॥ ( बु० गु० ) गुरुत्वं धनसंपत्तिर्विद्या सद्गुणसंग्रहम् ॥ व्यवसायेन सल्लाभो बुधप्राणगते गुरौ ॥ ८१ ॥ ( बु० श० ) चौर्येण निधनप्राप्तिर्विधनत्वं दरिद्रता ॥ याचकत्वं विशेषेण बुधप्राणगते शनौ ॥ ८२ ॥

## अथ केतोः प्राणदशाफलम् ।

( के०के० ) अश्वपातेन घातं च पादस्वबलमेव च ॥ निर्विचारवधोत्पत्तिः केतोः प्राणदशाफलम् ॥ ८३ ॥ ( के०शु० ) क्षेत्रलाभो वैरिनाशो हयलाभो मनःसुखम् ॥ पशुक्षेत्रधनाप्तिश्च केतोः प्राणगते भृगौ ॥ ८४ ॥ ( के० सू० ) स्तेयाग्निरिपुत्रासादिघातश्चैवांबरोधयुक् ॥ प्राणांतकरणं कृच्छ्रं केतोः प्राणगते रवौ ॥ ८५ ॥ ( के० चं० ) देवद्विजगुरोः पूजा दीर्घयात्रा धनं सुखम् ॥ कंठाश्रिते नेत्ररोगी केतोः प्राणगते विधौ ॥ ८६ ॥ ( के० मं० ) ताम्ररोगो नसावृद्धिर्विभ्रमः सन्निपातजः ॥ स्वबंधुजनविद्वेषः केतोः प्राणगते कुजे ॥ ८७ ॥ ( के० रा० ) शस्त्रव्रणैर्महारोगैर्हृत्पीडादिसमुद्भवः ॥ सुतदारवियोगं च केतोः प्राणगते गुरौ ॥ ॥ ८८ ॥ ( के० श० ) मतिविभ्रमतीक्ष्णश्च क्रूरकर्मरतः सदा ॥ व्यसनाद्बंधनं दुःखं केतोः प्राणगते शनौ ॥ ८९ ॥ ( के० बु० ) कुसुमं शयनं भूषालेपनं भोजनादिकम् ॥ सौख्यं सर्वांगभोग्यं च केतोः प्राणगते बुधे ॥ ९० ॥

## अथ शुक्रप्राणदशाफलम् ।

( शु० शु० ) ज्ञानमीश्वरभक्तिश्च तोषकर्म रसायनम् ॥ पुत्रपौत्रसमृद्धिश्च शुक्रप्राणगते फलम् ॥ ९१ ॥ ( शु०सू० ) लोकप्रकाशकीर्तिश्च सुतसौख्यविवर्जितः ॥ उष्णादिरोगजं दुःखं शुक्रप्राणगते रवौ ॥ ९२ ॥ ( शु० चं० ) देवार्चने कर्मरतिर्मंत्रतोषणत-

त्परः ॥ धनसौभाग्यसंपत्तिः शुक्रप्राणगते विधौ ॥९३॥ (शु० मं० ) ज्वरो मसूरिकास्फोटकंडूचिपिटकादिका ॥ देवब्राह्मणपूजा च शुक्रप्राणगते कुजे ॥ ९४ ॥ ( शु०रा०) नित्यं शत्रुकृता पीडा नेत्रकुक्षिरुजादयः ॥ विरोधः सुहृदां पीडा शुक्रप्राणगतेऽप्यहौ ॥ ९५ ॥ ( शु०बृ० ) आयुरारोग्यमैश्वर्यं पुत्रस्त्रीधनवैभवम् ॥ छत्रवाहनसंप्राप्तिः शुक्रप्राणगते गुरौ ॥ ९६ ॥ ( शु०श० )राजोपद्रवजा भीतिः सुखहानिर्महारुजः ॥ नीचैः सह विषादं च शुक्रप्राणगते शनौ ॥९७॥(शु०बु०) संतोषं राजसन्मानं नानादिग्भूमिसंपदः ॥ नित्यमुत्साहवृद्धिः स्याच्छुक्रप्राणगते बुधे॥९८॥(शु० के० ) जीवितात्मयशोहानिर्धनधान्यपरिच्छदः ॥ त्यागभोगधनानिस्युः शुक्रप्राणगते ध्वजे ॥ ९९ ॥ इति श्रीबृहत्पाराशरहोरा पूर्वखंडसारांशे सूर्यादिप्राणदशाफलकथनं नामाऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## अथ कालचक्रदशाप्रकरणमाह ।

वंदेऽहं गोपिकानाथं भारतीं गणनायकम् ॥ पार्वत्यै कथितं पूर्वं कालचक्रं पिनाकिना ॥ १ ॥ तच्चक्रसारमुद्धृत्य लघुमार्गेण कथ्यते ॥ शुभाशुभं मनुष्याणां भूतं भव्यं च भावितम् ॥ २ ॥ भूतै ५ र्कविंश २१ गिरयो ७ नवदिक् १० षोडशा १६ ब्धयः ४ ॥ सूर्यादीनां क्रमाद्वायूराशीनां स्वामिनो वशात् ॥ ३ ॥ नरस्य जन्मकाले वा प्रश्नकाले यदंशकः ॥ तदादिनवपर्यन्तमायुषं परिचक्षते ॥ ४ ॥ अश्विन्यदितिहस्तर्क्षमूलप्रोष्ठपदाभिधाः ॥ अंशकाद्गणयेन्मेषात्प्रादक्षिण्यक्रमेण तु ॥ ५ ॥ प्राजापत्यमघेंद्राग्निश्रवणं च यथाक्रमम् ॥ अप्रदक्षिणधिष्ण्यानि भवंत्येतानि पार्वति॥६॥अश्विन्यादित्रयं चैव सव्य मार्गे व्यवस्थितम् ॥ रोहिण्या-

दित्रयं चैव अपसव्ये व्यवस्थितम् ॥७॥ एवमृक्षं चतुर्भागं कृत्वा चक्रे समुद्धरेत् ॥ अंशावसाने जातस्य आयुर्दायोऽस्य कस्य चित् ॥८॥ संपूर्णायुर्भवेदादावधमांशस्य मध्यमम् ॥ अपमृत्युसमं कष्टं अंशांते चापरे जगुः ॥ ९ ॥ ज्ञात्वैवं स्फुटसिद्धांतो राश्यंशं गणयेद्बुधः ॥ अनुपातेन वक्ष्यामि तदुपायमतः परम् ॥ १० गतताराः त्रिभिर्भक्ता शेषं चत्वारिसंगुणम् ॥ वर्तमानं पदेनाढ्यं राशीनामंशको भवेत् ॥ ११ ॥ ये च जीवांशके जाता गतनाडिविनांशकाः ॥ स्वस्वदशावर्षसंख्यापंचभूमि १५ विभाजिताः ॥ १२ ॥ एवं महादशा ज्ञेयाः सूर्यादीनां यथाक्रमम् ॥ गणयेज्जीवपर्यन्तमायुष्यं परिचिंतयेत् ॥ १३ ॥

## सव्ये मेषादि अपसव्ये वृश्चिकादि अंशं ज्ञातव्यम् ।

ये जीवा अंशके जाता गतनाडीपलेन तु ॥ तदंशोनहताब्दस्तु पंचभूमिविभाजिताः ॥ १४ ॥ एवं महादशारंभो भवेदंशाद्यथाक्रमात् ॥ गणयेन्नवपर्यंतं आयुष्यं तत्प्रकीर्तितम् ॥ १५ ॥ सूर्यादीनां क्रमादेतद्दशाः सर्वदशासु च ॥ १६ ॥ मेषगोयमकुलीरराशिषु स्वांशकेषु परमायुरुच्यते ॥ ज्ञानकं १०० मद ८५ गज ८३ स्तद ८६ भ्रमात्त्रिकोणभवनेषु तद्भवेत् ॥ १७ ॥ द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वसमानकम् ॥ गृहा द्वादश जायंते सव्यचक्रे यथाक्रमम् ॥ १८ ॥ द्वितीयादिषु कोष्ठेषु राशीन्मेषादिकाँल्लिखेत् ॥ एवं द्वादशराश्याख्यकालचक्रमुदीरितम् ॥ १९ ॥ विश्वर्क्षपूर्वाभाद्रं च रेवती सव्यतारकः ॥ एतद्दशोडुपादीनामश्विन्यादौ च वीक्षयेत् ॥ विशदस्तत्प्रकारस्तु कथ्यते शृणु पार्वति ॥ २० ॥ देहजीवौ मेषचापौ दस्राद्यचरणस्यच ॥ मेषादिचापपर्यंतं राशिपा-

श्च दशाधिपाः ॥ २१ ॥ देहजीवौ नक्रयुग्मौ दिगीशार्काष्टभूधराः ॥ षड्वेदशरलोकाश्च राशिपाश्च दशाधिपाः ॥ २२ ॥ दस्रादिदशताराणां तृतीयचरणेषु च ॥ गोदेहो मिथुनं जीवो द्विकार्केशदशांशकाः ॥ २३ ॥ अक्षिरामाख्यनाथास्ते दशाधिपतयः क्रमात् ॥ अश्विन्यादिदशोडूनां चतुर्थचरणेषु च ॥ २४ ॥ कर्कमीनौ देहजीवौ कर्कादिनवभेश्वराः ॥ दशाधिपा नव ज्ञेयाः शृणु पार्वति निश्चितम् ॥ २५ ॥ याम्येज्यचित्रतोयर्क्षा उत्तराभाद्रतारकाः ॥ एतत्पंचोडुपादीनां भरण्यादौ च वीक्षयेत् ॥ २६ ॥ याम्यप्रथमपादस्य देहजीवावलीझषः ॥ नागागर्तुपयोधीषु रामाक्षींद्वर्कभेश्वराः ॥ २७ ॥ याम्यद्वितीयपादस्य देहजीवौ घटांगने ॥ रुद्रदिङ्नंदचंद्राक्षिरामाब्धीषु रसेश्वराः ॥ २८ ॥ याम्यतृतीयपादस्य देहजीवौ तुलांगने ॥ सप्ताष्टांकदिगीशार्कगजादिरसराशिपाः ॥ २९ ॥ देहजीवौ कर्कचापौ चतुर्थचरणे स्मृतौ ॥ वेदबाणाग्निनेत्रेंदुसूर्येशदशनंदपाः ॥ ३० ॥ सव्यमेव विजानीयादपसव्यं तु कथ्यते ॥ द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वसमानकम् ॥३१॥ द्वितीयादिषु कोष्ठेषु वृश्चिकाद्व्यस्तमालिखेत् ॥ प्राजापत्ये मचंद्राग्निश्रवणं च चतुष्टयम् ॥ ३२ ॥ धातृवद्वीक्षयेद्देहजीवौ कर्किधनुर्धरौ ॥ नवदिग्रुद्रसूर्येन्दुनेत्राग्निष्वब्धिराशिपाः ॥ ३३ ॥ धातृद्वितीयचरणे तुलास्त्रीदेहजीवकौ ॥ षष्ठसप्ताष्टार्करुद्रा दिङ्नवा गिरिराशिपाः ॥ ३४ ॥ धातृतृतीयचरणे ( देह ) जीवौ कुंभांगनाधिपौ ॥ षड्बाणाब्धिगुणाक्षींदुनंददिग्रुद्रराशिपाः ॥ ३५ ॥ रोहिण्यंतपदे देहजीवावलिझषौ स्मृतौ ॥ सूर्येन्दुद्विगुणेष्वब्धितर्कशैलाष्टराशिपाः ॥ ३६ ॥ चांद्ररौद्रभगार्यम्णमित्रेंद्रवसुदारुणम् ॥ एतत्ताराष्टकं चैव विज्ञेयं चांद्रवक्रमात् ॥ ३७ ॥ देहजीवौ

कर्किमिनौ मृगाद्यचरणस्य च ॥ व्यस्तमीनादिकर्कान्तं राशिपाश्च दशाधिपाः ॥ ३८ ॥ गौर्देहो मिथुनं जीव इंदुभस्य द्वितीयके ॥ त्रिद्व्यर्काकदिगीशार्कचन्द्रर्क्षभवनाधिपाः ॥ ३९ ॥ देहजीवौ नक्रयुग्मौ मृगपादे तृतीयके ॥ त्रिबाणाब्धिरसागाष्टसूर्येशदशराशिपाः ॥ ४० ॥ मेषचापौ देहजीवाविंदुभस्य चतुर्थके ॥ व्यस्तं चापादि मेषांतं राशिपाश्च दशाधिपाः ॥ ४१ ॥ एवं व्यस्ततरे ज्ञेयं देहजीवदशादिकम् ॥ स्पष्टं तवाग्रे कथितं पार्वति प्राणवल्लभे ॥ ४२ ॥

## अथ कालचक्रदशानयनोदाहरणमाह ।

स्पष्टचंद्रः १।८।१५।७ अस्य कलापिंडं कृत्वा २२९५।७ अष्टशतेन ८०० भक्तेर्लब्धं गतनक्षत्रं २ व्यर्थं शेषं ६।९।५।७ षष्टिघ्नं जातं ४१७०७अष्टशतैः ८०० र्भक्तेर्लब्धं एता नक्षत्रघटिकाः ५२ शेषं १०७ षष्टिघ्नं जातं ६४२० अष्टशतेन भक्तेर्लब्धं ८ पलानि एवं कृत्तिकानक्षत्रे भुक्तघटीपलानि ५२८ शेषं २० व्यर्थं नक्षत्रभुक्तघटिकात्पंचदशघटिकादाधिकं अत एव पंचदशभक्तेर्लब्धं ३ व्यर्थं शेषं ७।८ कृत्तिकानक्षत्रे चतुर्थचरणे देहाधिपतिश्चंद्रः जीवाधिपतिर्गुरुः मीनांशदशाआगताब्दानि ८६ शेषं ७।८ षष्टिघ्नं ४२८ पुनः दशाआगताब्दानि ८६ गुणनीयं जातं ३६८०८ यदंकेषु नवशतेन ९०० भक्तेर्लब्धं ४० वर्षाणि शेषं ८०८ द्वादशघ्नं जातं ९६९६ नवशतेन भक्तेर्लब्धं १० मासशेषं ६९६ त्रिंशघ्नं जातं २०८८० नवशतेन भक्तेर्लब्धं दिनानि २३ शेषं १८० षष्टिघ्नं १०८०० नवशतेन भक्तेर्लब्धं घटी १२ शेषं पूर्णं ० एवं मीनांशदशापूर्वजन्मभुक्तवर्षादि ४०।१०।२३।१२।० एषां स्वदशाब्देषु ८६ ऊनं इह जन्मनि भोग्यवर्षादि ४५।१६।४०।० स्युः एवं सर्वत्र ज्ञेयम् ॥ मीनांशदशांतर्गतमृत्युमध्ये जन्म १०।१६।४८।०

अथ कालचक्रे मेषांशादशावर्षाणि १०० तन्मध्ये भौमांतर्वर्षाणि ७ तस्योपदशाचक्रम्‌.

| क्रमांक | मं० १ | शु० २ | बु० ३ | चं० ४ | सू० ५ | बु० ६ | शु० ७ | मं० ८ | गु० ९ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| २ | ० | १ | ० | १ | ० | ० | १ | ० | ० | ७ |
| ० | ५ | १ | ७ | ५ | ४ | ७ | १ | ५ | ८ | ० |
| २५ | २६ | १३ | १६ | ११ | ६ | १६ | १३ | २६ | १२ | ० |
| १२ | २४ | १२ | ४८ | १२ | ० | ४८ | १२ | २४ | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ कालचक्रे मेषांशादशावर्षाणि १०० तन्मध्ये भृग्वंतर्वर्षाणि १६ तस्योपदशाचक्रम्‌.

| क्रमांक | शु० २ | बु० ३ | चं० ४ | सू० ५ | बु० ६ | शु० ७ | मं० ८ | गु० ९ | मं० १ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | २ | १ | ३ | ० | १ | २ | १ | १ | १ | १६ |
| १ | ६ | ५ | ४ | ९ | ५ | ६ | १ | ६ | १ | ० |
| २७ | २१ | ८ | ९ | १८ | ८ | २१ | १३ | ३६ | १३ | ० |
| ३६ | ३६ | २४ | ३६ | ० | २४ | ३६ | १२ | ० | १२ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ कालचक्रे मेषांशादशावर्षाणि १०० तन्मध्ये बुधांतर्वर्षाणि ९ तस्योपदशाचक्रम्‌.

| क्रमांक | बु० ३ | चं० ४ | सू० ५ | बु० ६ | शु० ७ | मं० ८ | गु० ९ | मं० १ | शु० २ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | ० | ० | १ | ० | ० | ० | १ | ९ |
| १ | ९ | १० | ५ | ९ | ५ | ७ | १० | ७ | ५ | ० |
| २ | २१ | २० | १२ | २१ | ८ | १६ | २४ | १६ | ८ | ० |
| २४ | ३६ | २४ | ० | ३६ | २४ | ४८ | ० | ४८ | २४ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ कालचक्रे मेषांशादशावर्षाणि १०० तन्मध्ये चंद्रांतर्वर्षाणि २१ तस्योपदशाचक्रम्‌.

| क्रमांक | चं० ४ | र० ५ | बु० ६ | शु० ७ | मं० ८ | गु० ९ | मं० १ | शु० २ | बु० ३ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ४ | १ | १ | ३ | १ | २ | १ | ३ | १ | २१ |
| २ | ४ | ० | १० | ४ | ५ | १ | ५ | ४ | १० | ० |
| १५ | २७ | १८ | २० | ९ | ११ | ६ | ११ | ९ | २० | ० |
| ३६ | ३६ | ० | २४ | ३६ | १२ | ० | १२ | ३६ | २४ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथ कालचक्रे मेषांशादशावर्षाणि १०० तन्मध्ये रव्यंतर्वर्षाणि ५ तस्योपदशाचक्रम्‌.

| क्रमांक | सू० ५ | बु० ६ | शु० ७ | मं० ८ | गु० ९ | मं० १ | शु० २ | बु० ३ | चं० ४ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | ५ |
| ० | ३ | ५ | ९ | ४ | ६ | ४ | ९ | ५ | ० | ० |
| १८ | ० | १२ | १८ | ६ | ० | ६ | १८ | १२ | १८ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथकालचक्रमेषांशदशावर्षाणि १०० तन्मध्येबुधांतर्वर्षं ९ तस्योपदशा चक्रम्·

| क्रमांक | बु· ६ | शु· ७ | मं· ८ | गु· ९ | मं· १ | शु· २ | बु· ३ | चं· ४ | सू· ५ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | ० | ० | ० | १ | ० | १ | ० | ९ |
| २ | १ | ५ | ७ | १० | ७ | ५ | १ | १० | ५ | ० |
| २४ | २१ | ८ | १६ | २४ | १६ | ८ | २१ | २० | १२ | ० |
| ० | ३६ | २४ | ४८ | ० | ४८ | २४ | ३६ | २४ | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथकालचक्रमेषांशादशावर्षाणि १०० तन्मध्ये भृगोरंतर्वर्षं· १६ तस्योपदशाचक्रम्·

| क्रमांक | शु· ७ | मं· ८ | गु· ९ | मं· १ | शु· २ | बु· ३ | चं· ४ | र· ५ | बु· ६ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | २ | १ | १ | १ | २ | १ | २ | ० | १ | १६ |
| १ | ६ | १ | ७ | १ | ६ | ५ | ४ | १ | ५ | ० |
| २७ | २१ | १३ | ६ | १३ | २१ | ८ | १ | १८ | ८ | ० |
| ३६ | ३६ | १२ | ० | १२ | ३६ | २४ | ३६ | ० | २४ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथकालचक्रमेषांशदशावर्षाणि १०० तन्मध्ये भौमांतर्वर्षं ७ तस्योपदशाचक्रम्

| क्रमांक | मं· ८ | गु· ९ | मं· १ | शु· २ | बु· ३ | चं· ४ | र· ५ | बु· ६ | शु· ७ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | १ | ० | १ | ५ | १ | १ | ७ |
| ० | ५ | ८ | ५ | १ | ७ | ५ | ४ | ७ | १ | ० |
| २५ | २६ | १२ | २६ | १३ | १६ | १९ | ६ | ४८ | १३ | ० |
| १२ | २४ | ० | २४ | १२ | ४८ | १२ | ० | १६ | १२ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथकालचक्रमेषांशदशावर्षाणि १०० तन्मध्ये गुरोरंतर्वर्षं· १० तस्योपदशाचक्रम्·

| क्रमांक | गु· ९ | मं· १ | शु· २ | बु· ३ | चं· ४ | सू· ५ | बु· ६ | शु· ७ | मं· ८ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | १ | ० | २ | ० | ० | १ | ० | १० |
| १ | ० | ८ | ७ | १० | १ | ६ | १० | ७ | ८ | ० |
| ६ | ० | १२ | ६ | २४ | ६ | ० | २४ | ६ | १२ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अथकालचक्रवृषभांशदशावर्षाणि· ८५ तन्मध्येशन्यंतर्वर्षं· ४ तस्योपदशाचक्रम्

| क्रमांक | श· १० | श· ११ | गु· १२ | मं· ८ | शु· ७ | बु· ६ | चं· ४ | सू· ५ | बु· ३ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ४ |
| १६ | २ | २ | ५ | ३ | ० | ५ | ११ | २ | ५ | ० |
| ५६ | ५ | ५ | १९ | २८ | १ | २ | २५ | २४ | २ | ० |
| २८ | ४३ | ४५ | १४ | ३५ | ३ | २८ | ४५ | ४२ | ४८ | ० |
| १४ | ५३ | ५३ | ४२ | १८ | ३२ | १४ | ५३ | २१ | १४ | ० |

अथकालचक्रवृषभांशदशाय· ८५ तन्मध्येशन्यंतर्वर्षाणि ४ तस्योपदशाचक्रम्·

| क्रमांक | श· ११ | गु· १२ | मं· ८ | शु· ७ | बु· ६ | चं· ४ | सू· ५ | बु· ३ | श· १० | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ४ |
| १६ | २ | ५ | ३ | १ | ५ | ११ | २ | ५ | २ | ० |
| २८ | ७ | १९ | २८ | १ | २ | २५ | २४ | २ | ७ | ० |
| ५६ | ४५ | २४ | ३५ | ३ | १८ | ४५ | ४२ | २८ | ४५ | ० |
| १४ | ५३ | ४२ | १८ | ३२ | १४ | ५३ | २१ | १४ | ५३ | ० |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्येगुरोरंतर्वर्ष १० तस्योपदशाचक्रम्

| क्रमांक | गु १२ | मं ८ | शु ७ | बु ६ | चं ४ | सू ५ | बु ३ | श १० | श ११ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | ० | १ | १ | २ | ० | १ | ० | ० | १० |
| १२ | २ | ९ | १० | ० | ५ | ७ | ० | ५ | ५ | ० |
| २१ | ३ | २६ | १७ | २१ | ११ | १ | २१ | १९ | [illegible] | ० |
| १० | २१ | २८ | ३८ | १० | २४ | ४५ | १० | २४ | २४ | ० |
| ३५ | ४६ | १४ | ४९ | ३५ | ४२ | ५३ | ३५ | ४३ | ४३ | ० |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्येभौमांतर्दशावर्ष ७ तस्योपदशाचक्रम्

| क्रमांक | मं ८ | शु ७ | बु ६ | चं ४ | सू ५ | बु ३ | श १० | श ११ | गु १२ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | ० | १ | ० | ० | ० | ० | ० | ७ |
| ० | ६ | ३ | ८ | ८ | ४ | ८ | ३ | ३ | ९ | ० |
| २९ | २७ | २४ | २६ | २२ | ३८ | २६ | ३८ | ३८ | २६ | ० |
| ३८ | ३१ | ३१ | ४९ | ३५ | १४ | ४९ | ३५ | ३५ | ३८ | ० |
| ४९ | ४६ | १७ | २५ | १७ | ७ | २५ | १८ | १८ | १४ | ० |
| २४ | | | | | | | | | | |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्ये भृगोरंतर्वर्ष १६ तस्योपदशाचक्रम्

| क्रमांक | शु ७ | बु ६ | चं ४ | सू ५ | बु ३ | श १० | श ११ | गु १२ | मं ८ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ३ | १ | ३ | ० | १ | ० | ० | १ | १ | १६ |
| २ | ० | ८ | ११ | ११ | ८ | ९ | ९ | १० | ३ | ० |
| ७ | ४ | ९ | १२ | ८ | ९ | १ | १ | १७ | २४ | ० |
| ४५ | १४ | ५२ | २ | ४९ | ५२ | २ | २ | ३८ | ३१ | ० |
| ५२ | ७ | ५६ | ३२ | २५ | ५६ | ३२ | ३२ | ४९ | १७ | ० |
| ५६ | | | | | | | | | | |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्येबुधांतर्वर्ष ९ तस्योपदशाचक्रम्

| क्रमांक | बु ६ | चं ४ | सू ५ | बु ३ | श १० | श ११ | गु १२ | मं ८ | शु ७ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | २ | ० | ० | ० | ० | १ | ० | १ | ९ |
| १ | ११ | २ | ६ | ११ | ५ | ५ | ० | ८ | ८ | ० |
| ८ | १२ | २० | १० | १२ | २ | २ | २१ | २६ | ९ | ० |
| ७ | ३ | २८ | ३५ | ३ | २८ | २८ | १० | ४९ | ५२ | ० |
| ३ | ३२ | १४ | १८ | ३२ | १४ | १४ | ३५ | २५ | ५६ | ० |
| ३१ | | | | | | | | | | |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्येचंद्रांतर्वर्ष २१ तस्योपदशाचक्रम्

| क्रमांक | चं ४ | सू ५ | बु ३ | श १० | श ११ | गु १२ | मं ८ | शु ७ | बु ६ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ५ | १ | २ | ० | ० | २ | १ | ३ | २ | २१ |
| २ | २ | २ | २ | ११ | ११ | ५ | ८ | ११ | २ | ० |
| २८ | ७ | २४ | २० | २५ | २५ | १९ | २२ | १२ | २० | ० |
| ५६ | ४५ | ४२ | २८ | ४५ | ४५ | २४ | ३५ | ३ | २८ | ० |
| २८ | ५३ | २१ | १४ | ५३ | ५३ | ४३ | १७ | ३२ | १४ | ० |
| १४ | | | | | | | | | | |

अथकालचक्रवृषभांशादशावर्षाणि ८५ तन्मध्येसूर्यांतर्वर्ष ५ तस्योपदशाचक्रम्

| क्रमांक | सू ५ | बु ३ | श १० | श ११ | गु १२ | मं ८ | शु ७ | बु ६ | चं ४ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | ५ |
| ० | ३ | ६ | २ | २ | ७ | ४ | ११ | ६ | २ | ० |
| २१ | १५ | १० | २४ | २४ | १ | २८ | ८ | १० | २४ | ० |
| १० | ५२ | ३५ | ४२ | ४२ | ४५ | १४ | ४९ | ३५ | ४२ | ० |
| ३५ | ५६ | १८ | २१ | २१ | ५३ | ७ | २५ | १८ | २१ | ० |
| १७ | | | | | | | | | | |

अथकालचक्रवृषभांशदशावर्षाणि ८५ तन्मध्ये बुधांतर्व० ९ तस्योपदशाचक्रम्·

| ध्रुवांक | शु· २ | श· १० | श· ११ | गु· १२ | मं· ८ | शु· ७ | बु· ६ | चं· ४ | र· ५ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | १ | ० | १ | ० | २ | ० | ९ |
| ८ | ११ | ५ | ५ | ० | ८ | ८ | ११ | २ | ६ | ० |
| ७ | १३ | २ | २ | २१ | २६ | ९ | १३ | २० | १० | ० |
| २ | ३ | २८ | २८ | १० | ४९ | ५२ | ३ | २८ | ३५ | ० |
| ३१ | ३२ | १४ | १४ | ३५ | २५ | ५६ | ३२ | १४ | १८ | ० |

अथकालचक्रमिथुनांशदशावर्षाणि ८३ तन्मध्ये भृगोरंतर्वर्ष १६ तस्योपदशाचक्रम्·

| ध्रुवांक | शु· २ | मं· १ | गु· १२ | श· ११ | श· १० | गु· ९ | मं· १ | शु· २ | बु· ३ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| २ | ३ | १ | १ | ० | ० | १ | १ | ३ | १ | १६ |
| ९ | १ | ४ | ११ | ९ | ९ | ११ | ४ | १ | ८ | ० |
| २३ | ० | ५ | ३ | ७ | ७ | ३३ | ५ | ० | २४ | ० |
| ५१ | २१ | ४७ | ५८ | ३५ | ३५ | ५८ | ४७ | २१ | ३४ | ० |
| १९ | ४१ | ० | ३३ | २५ | २५ | ३३ | ० | ४१ | ४२ | ० |

अथकालचक्रमिथुनांशदशावर्षाणि ८३ तन्मध्ये भौमांतर्वर्ष ७ तस्योपदशाचक्रम्·

| ध्रुवांक | मं· १ | गु· १२ | श· ११ | श· १० | गु· ९ | मं· १ | शु· २ | बु· ३ | शु· २ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | १ | ० | १ | ७ |
| ० | ७ | १० | ४ | ४ | १० | ७ | ४ | ९ | ४ | ० |
| २१ | २ | ३ | १ | १ | ३ | २ | ५ | ३ | ५ | ० |
| २१ | ३१ | ३६ | २६ | २६ | ३६ | ३१ | ४७ | १५ | ४७ | ० |
| १२ | ४८ | ५२ | ४५ | ४५ | ५२ | ४८ | ० | १० | ० | ० |

अथकालचक्रमिथुनांशदशावर्षाणि ८३ तन्मध्ये गुरोरंतर्दशाव· १० तस्योपदशाचक्रम्

| ध्रुवांक | गु· १२ | श· ११ | श· १० | गु· ९ | मं· १ | शु· २ | बु· ३ | शु· २ | मं· १ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | ० | ० | १ | ० | १ | १ | १ | ० | १० |
| १३ | २ | ५ | ५ | २ | १० | ११ | १ | ११ | १० | ० |
| २२ | १३ | २३ | २३ | १३ | ३ | ३ | ० | ३ | ३ | ० |
| २४ | ४४ | २९ | २९ | ४४ | ३६ | ५८ | २१ | ५८ | ३६ | ० |
| ३४ | ६ | ३८ | ३८ | ६ | ५२ | ३३ | ४२ | ३३ | ५२ | ० |

अथकालचक्रमिथुनांशदशावर्षाणि ८३ तन्मध्ये शन्यंतर्वर्ष· ४ तस्योपदशाचक्रम्·

| ध्रुवांक | श· ११ | श· १० | गु· ९ | मं· १ | शु· २ | बु· ३ | शु· २ | मं· १ | गु· १२ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ४ |
| ० | २ | २ | ५ | ४ | ९ | ५ | ९ | ४ | ५ | ० |
| १७ | ९ | ९ | २३ | १ | ७ | ६ | ७ | १ | २३ | ० |
| २० | २३ | २३ | २९ | २६ | ३५ | ८ | ३५ | २६ | २९ | ० |
| ५७ | ५२ | ५२ | ३८ | ४५ | २५ | ४० | २५ | ४५ | ३८ | ० |
| ४९ | | | | | | | | | | |

अथकालचक्रमिथुनांशदशावर्षाणि ८३ तन्मध्ये शन्यंतर्वर्ष· ४ तस्योपदशाचक्रम्·

| ध्रुवांक | श· १० | गु· ९ | मं· १ | शु· २ | बु· ३ | शु· २ | मं· १ | गु· १२ | श· ११ | योगाः |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ४ |
| १७ | २ | ५ | ४ | ९ | ५ | ९ | ४ | ५ | २ | ० |
| २० | ९ | २३ | १ | ७ | ६ | ७ | १ | २३ | ९ | ० |
| ५७ | २३ | २९ | २६ | ३५ | ८ | ३५ | २६ | २९ | २३ | ० |
| ४९ | ५२ | ३८ | ४५ | २५ | ४० | २५ | ४५ | ३८ | ५२ | ० |

च ससंधयः ॥ २ ॥ दृश्याद्विशोध्य द्रष्टारं षड्राशिभ्योऽधि-
का भवेत् ॥ दिग्भ्यो विशोध्य द्वाभ्यां तु भागीकृत्य च

## टीका ।

१।२६।५०।१६ लग्ने योजितः २।२६।५३।५८ जातोऽयं सहजभावः। एवं सुखसप्तम दशमभावेषु ज्ञेयमिति ॥ अथ संध्युदाहरणम्। लग्नं ०।६।३।४२ धनभावः १।४।२८।५० अनयोर्योगः १।१०।३२।२२ अस्यार्धं ०।२०।१६।१६ तनुधनयोः संधिः एवं रीत्याग्रेऽपि क्रमशः संधयो ज्ञेयाः एवं च द्वादश

| तन्वादयो द्वादशभावाः ससन्धयस्स्युः । | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ल. | सं. | २ | सं. | ३ | सं. | ४ | सं. | ५ | सं. | ६ | सं. |
| ० | ० | १ | १ | २ | २ | ३ | ३ | ४ | ४ | ५ | ५ |
| ६ | २० | ४ | १८ | २ | १७ | १ | १७ | २ | १८ | ४ | २० |
| ३ | १६ | २८ | ४१ | ५३ | ६ | १९ | ६ | ५३ | ४१ | २८ | १६ |
| ४२ | १६ | ५० | २५ | ५९ | ३३ | ८ | ३३ | ५४ | १५ | ५० | १६ |
| ७ | सं. | ८ | सं. | ९ | सं. | १० | सं. | ११ | सं. | १२ | सं. |
| ६ | ६ | ७ | ७ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ |
| ६ | २० | ४ | १८ | २ | १७ | १ | १७ | २ | १८ | ४ | १० |
| ३ | १६ | २८ | ४१ | ४३ | ६ | १९ | ६ | ५३ | ४१ | २८ | १६ |
| ४२ | १६ | ५० | २५ | ५२ | ३३ | ८ | ३३ | ५७ | २५ | ५० | १६ |

भावाः तन्वादयः संधयो भवंति ॥ १ ॥ २ ॥ एवं भावसाधनमुक्त्वा षड्बलसाधनं वक्तुमारभते। तानि तु दृग्बलं ६ स्थानबलं १ दिग्बलं २ कालबलं ३ निसर्गबलं ४ चेष्टाबलं ५ इति बलानि षड्विधानि, तत्र स्थानादिपंचविधस्यैक्यतया दृग्बलस्यैव ऋणधनतया मुख्यत्वादादौ दृग्बलसाधनं वक्तुमाह ग्रहदृष्टिसाधनरीतिमाह दृश्यादिति सार्धत्रिभिः। दृश्यात् द्रष्टुं योग्यः तस्माद् ग्रहाद्भावाद्वा द्रष्टारं पश्यंतं ग्रहं विशोध्य ऊनं कृत्वा शेषश्चेत् षड्राशिभ्यः राशिस्थानापन्नषडंकेभ्यः अधिकः भवेत् तर्हि दिग्भ्यः दश रा-

## भाषा ।

करना अब संधि करनेका विधि बताते हैं. पहिले घरके भावांक और आगेके भावके अंक इन दोनों भावोंकू एकट्ठे मिलायके पीछे उस अंकोंका अर्ध करना सो संधि भए ऐसे बारह संधि करना उसको करनेका उदाहरण संस्कृत टीकामें बताया है और स्पष्ट चक्र यहां दिखाया है ॥ १ ॥ २ ॥ अब दृष्टिबल साधन

## टीका।

शिम्भ्यो विशोध्य शेषं भागीकृत्य अवशिष्टराशिभागान्कृत्वा भागेषु संयोज्य द्वाभ्यां हराभ्यां यद्भागादि फलं तदेव दृष्ट्यः भवतीति शेषः। तथा शराधिके दृष्टृदृश्यावशेषे राश्यंके पंचाधिके सति विना राशिं राश्यंकांस्त्यक्त्वा द्विघ्नाः द्विगुणिताश्च भागाः अंशा एव दृष्टयो भवंति तथा वेदाधिके वेदेभ्यश्चतुर्भ्यः अधिके दृष्टृदृश्यावशेषे राश्यंके सति भूतात्पंचभ्यः त्यजेत् विशोधयेत् शेषस्य भागा एव दृष्टयो भवंति तथा त्रिभाधिके त्रीणि च तानि भानि राशयश्च त्रिभानि तेभ्योऽधिके प्राग्वदवशिष्टराश्यंके सति अर्णवतः चतुर्भ्यः विशोध्य द्वाभ्यां यल्लब्धं तत्त्रिंशद्युतं त्रिंशद्भिः युतं भागस्थानमित्यर्थः। तद्दृष्टिर्भवेत् तथा प्राग्वदवशिष्टे कराधिके राश्यंके सति राशिं विना राश्यंकं परित्यज्य ये अवशिष्टा भागाः ते तिथियुताः कार्या इति तथा प्राग्वद्दृष्टिर्भवेत् तथा रूपाधिके प्राग्वदवशिष्टराश्यंके सति विना राशिं राश्यंकं विहाय भागाः द्वाभ्यां विभाजिताः दृष्टिस्थान्। अत्र क्रमेणोदाहरणानि तत्रादौ षडधिकोदाहरणम्। द्रष्टा चंद्रः ३।५।२।१ दृश्यः सूर्यः ९।७।५।४३ अस्माद्विशोध्य शेषः ६।२।३।४२ अयं दिग्भ्यः विशोध्य अंकाः ३।२७।५६।१८ एतदुपरिस्थराश्यंकभागाः ९० मूलभागाः २७ मिलित्वा जाताः ११७।५६।१८ द्वाभ्यां भाजिताः ५८।५८।९ इयं दृष्टिरिति। अथावशिष्टशराधिकराश्यंकदृष्ट्युदाहरणम्। द्रष्टा चंद्रः ३।५।२।१ दृश्यः सूर्यः ८।७।५।४३ अस्माद्धीनः शेषं ५।२।३।४२ राश्यंकं विहाय शेषमंशादि २।३।४२ द्विगुणीकृत्य ४।७।२४ इयं दृष्टिरिति। अथावशिष्टवेदा ४ धिकराश्यंकदृष्ट्युदाहरणम्। द्रष्टा चंद्रः ३।५।२।१ दृश्यः सूर्यः ७।७।५।४३ अस्माद्धीनः शेषांकाः ४।२।३।४२ भूताः ५ शोधिताः शेषाः ०।२७।५६।१८ इयं दृष्टिरिति। अथ त्रिभाधिकशेषराश्यंकदृष्ट्युदाहरणम्। द्रष्टा चंद्रः ३।५।२।२१ दृश्यः सूर्यः ६।७।५।४३ अस्माद्धीनः शेषं ३।२।३।४२ एतत् अर्णवेभ्यः विशोध्यावशिष्टं०।२७।५६।१९द्वाभ्यां विभज्य लब्धफलं ०।१३।५८।९ एतत्त्रिंशद्युतं ४३।५८।९ जाता दृष्टिः। अथ करा २ धिकावशेषराश्यंकोदाहरणम्। द्रष्टा चंद्रः ३।५।२।१ दृश्यः सूर्यः ५।७।५।४२ अस्माद्धीनः शेषं २।२।३।४२ अत्रत्यराश्यंकं परित्यज्य अवशिष्टाः २।३।४२ इमे तिथि १५

दृष्टयः ॥ ३ ॥ शराधिके विना राशिं भागाद्विघ्नाश्च दृष्ट-
यः ॥ वेदाधिके त्यजेद्भुताद्भागादृष्टिस्त्रिभाधिके ॥ ४ ॥ वि-
शोध्यर्णवतो द्वाभ्यांलब्धत्रिंशद्युतं भवेत्॥कराधिके विना-
राशिभागास्तिथियुतास्तथा ॥ ५ ॥ रूपाधिके विना राशिं

## टीका।

युताः १७।३।४२ इयं दृष्टिरिति। अथ रूपाधिकावशेषराश्यंकोदाहरणम्। द्रष्टा चंद्रः ८।२५।३७।१६ दृश्यः सूर्यः १०।४।१४।२२ अस्माद्धीनः शेषं १।८।३७।६ अत्रत्यराशिं त्यक्त्वा शेषभागाः ८।३७।६ द्वाभ्यां भक्ताः फलं ४।१८।३३ इयं दृष्टिरिति ॥ ३ ॥ ४ ॥ ५ ॥ एवं सर्वग्रहसाधारणदृष्टयानय-

## भाषा।

करनेकी रीति बताते हैं. जिस ग्रहके ऊपर जिस ग्रहका या भावकी दृष्टि है उस-मेंसे देखनेवालेकू कमी करके शेष जो छः राशिसे जादा होवे तो दस राशिमें गिरावके उसके अवशेषके राशिके अंश करके उसका दोसे भाग लेके जो फल आया ओही दृष्टिबल होता है. और दृश्य द्रष्टाका शोधन करके जो शेष अंक आवे वे पांचसे जादा होवे तो राश्यंक छोडके अंशकू द्विगुणित करना ओही दृष्टियां होती हैं. शोधन करके शेष राश्यादिक अंक चारसे जादा होवे तो पांचमें शोधन करके जो अंश आवे ओही दृष्टि होती है. और शोधन करके शेष राश्यादिक अंक तीनसे जादा होवे तो चारमें शोधन करके दोसे भाग लेके जो लब्धांश अंक है उसमें तीस मिलाना. वह दृष्टि होती है. ऐसा शेषांक जो दोसे जादा होवे तो वे राशिकूं छोडके अंश जो है उसमें पं-

अथ ग्रहदृष्टिचक्रमाह.

| | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
|---|---|---|---|---|---|---|---|---|
| सू. | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० |
| चं. | ०।२५ | ०।०।० | ०।४५।१२ | ०।०।० | ०।१०।४ | ०।२६।४५ | ०।०।० | ०।०।० |
| मं. | ०।१।० | ०।३६।४७ | ०।०।० | ०।१८।१५ | ०।०।० | ०।०।० | ०।९।११ | ०।०।० |
| बु. | ०।०।० | ०।०।० | ०।१३।३४ | ०।०।० | ०।०।० | ०।३२।२० | ०।०।० | ०।०।० |
| गु. | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० |
| शु. | ०।०।० | ०।२६।५२ | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० | ०।०।० |
| श. | ०।०।० | ०।०।० | ०।५७।१७ | ०।०।० | ०।०।० | ०।२५।२९ | ०।०।० | ०।०।० |
| शुभ | ०।३।२२ | ०।६।५२ | ०।१६।१२ | ०।०।० | ०।१०।४ | ०।४०।५ | ०।०।० | ०।१६।४५ |
| पाप | ०।०।० | ०।१६।४६ | ०।५०।१७ | ०।८।१५ | ०।०।० | ०।५७।५४ | ०।९।११ | ०।१०।४४ |

दरा मिलाये ओही दृष्टि होती है. शेषांक एकसे जादा होवे तो राशिकू छोडके अंशको दोसे भाग लेना जो लब्ध आवे ओही दृष्टि जानना. इसका उदाहरण संस्कृत टीकामें दिखाया है. इसके चक्र स्पष्ट यहां दिखाया है ॥ ३ ॥ ४ ॥ ५ ॥

भागा द्वाभ्यांविभाजिताः॥ त्रिदशे च त्रिकोणे च चतुरस्रे क्रमादथ ॥६॥ शरवेदाः स्वरामाश्च तिथयो योजिताः क्र-

## टीका।

नमुक्का अथानंतरं शनिगुरुभौमानां द्रष्टृणां स्थानविशेषेण संस्कारविशेष-माह त्रिदश इत्यादिसार्द्धश्लोकेन । शनिदेवेज्यभौमानां शनिगुरुभौमानां द्रष्टृणां क्रमात्रिदशे ३।१० स्थानद्वये त्रिकोणे ५।९ स्थानद्वये चतुरस्रे ४।८ स्थानद्वये च तत्तत्स्थानस्थग्रहे च दृश्ये सति आदौ पूर्वं उक्तसंस्कारेण दृ-श्याद्विशोध्येत्यादिना संस्कृतेति आदौ शब्दार्थः या दृष्टिरुत्पन्ना तत्र क्र-मात् क्रमशः शरवेदाः ४५ शनिदृष्ट्यां स्वरामाः ३० गुरुदृष्ट्यां तिथयः १५ भौमदृष्ट्यां च योजिताः संयुक्ताः कार्याः । अनेन विशेषसंस्कारेण शनि-गुरुभौमानां प्रत्येकं उक्तस्थानद्वये दृष्टिः स्फुटा स्पष्टा भवेदिति । अत्रोदा-हरणम् । तत्र शनेः द्रष्टा शनिः ९।८।१७ दृश्यो भृगुः ११।७।१४ अयं दृश्यः द्रष्टुः शनेः तृतीयस्थानापन्नः अस्माद्दृश्याद्द्रष्टारं विशोध्य शेषांकाः १।२८। ५७ रूपाधिके विना राशिमिति राश्यंकं त्यक्त्वा शेषांकाः २८।५८ एते भा-गाः द्वाभ्यां विभाजिताः फलं १४।२९ अयं सर्वसाधारणसंस्कारो जातः तस्य विशेषसंस्कारस्तु त्रिदशे शरवेदा इति ४५ इमे योजिताः जाता तृती-यस्थानीयशनिस्पष्टदृष्टिः ५९।२९ एवं रीत्यादशमस्थानेपि ज्ञेयम् । एवमेव प्रकारेण गुरोः ५।९ स्थानयोः पूर्वोक्तसर्वसाधारणदृष्टिसंस्कारं विधाय विशे-षस्तु स्वरामाः३० योज्याः इति त्रिकोणस्थानयोर्गुरुदृष्टिः स्पष्टा स्यात् एव-मेव भौमस्य ४।८ स्थानीयदृष्टिविचारे सर्वसाधारणसंस्कारांते विशेषसंस्कारः

## भाषा।

ऐसा साधारण सर्व ग्रहोंका दृष्टिबल कहके शनि, गुरु, मंगलका विशेष दृष्टिबल कहते हैं. आगे जो दृष्टिबल लानेका प्रकार बताया है, ओही रीतिसे इन तीनों ग्रहोंका दृष्टिबल लाना. परंतु शनि जो तीसरे, १० वें घरमें देखता होवे तो प-हिले लाये हुवे दृष्टिफलमें पैंतालीस और मिलाना. ओदृष्टि होती है. गुरुकी जो ५।९ घरमें दृष्टि होवे तो पहिले लाये हुवे दृष्टिफलमें तीस मिलाना. ओ दृष्टि स्पष्ट जानना. मंगल जो ४ वे ८ वें घरमें देखता हो तो पहिले लाये हुवे दृष्टिफ-

मात् ॥ शनिदेवेज्यभौमानामादौदृष्टिः स्फुटा भवेत् ॥७॥
नीचोनं तु ग्रहं भार्धाधिके चक्राद्विशोधयेत् ॥ भागीकृत्य

## टीका।

विषयः १५ योजिताः कार्या इति स्पष्टभौमदृष्टिश्चतुरस्त्रस्थानयोः स्यात् ॥६॥७॥एवं प्रथमं दृग्बलमुक्त्वा क्रमप्राप्तं षड्बलांतर्गतं द्वितीयं पंचविधस्थानबलं उच्चबलं १ सप्तवर्गबलं २ युग्मायुग्मबलं ३ केंद्रादिबलं ४ द्रेष्काणबलं ५ चेति तत्रादौ उच्चबलमाह नीचेति। ग्रहं सूर्याद्यन्यतमं नीचोनं स्वनीचेन ऊनं कृत्वा भार्धाधिके उर्वरिते षड्राश्यधिके सति चक्रात् द्वादशराशिभ्यः विशोधयेत्। अनंतरं नीचोनषडधिकं चक्रतः शुद्धं ग्रहं भागीकृत्य राशिभागान् कृत्वांशेषु नियोज्य त्रिभिर्भक्तं भाजितं लब्धफलं उच्चबलं एतत् संज्ञकं बलं भवेत् स्यात्। अत्रोदाहरणम्। रवि १०।४।१४ नीचं ६।१० ऊनं ३। २४।१४ इदं षड्राश्यूनं भागीकृतं ११४।१४ त्रिभिर्भक्तं ३८।४ इदं सूर्यस्यो-

## भाषा।

अथोच्चबलचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ३ |
| ३८ | १७ | ४० | २१ | १३ | ३३ | ३३ | ३८ |
| ४ | २९ | १९ | २९ | ३२ | २४ | ५४ | २ |

अथ सप्तवर्गबलचक्रमिदम्.

| मू. | स्व. | ऽमि. | मि. | स. | श. | ऽश. |
|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० |
| ४५ | ३० | २० | १५ | १० | ४ | २ |
| ० | ० | ० | ० | ० | ० | ० |

अथ तात्कालिकमैत्रीचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| चं.मं. शु.श. बु. | सू.चं. बु.गु. शु.श. | सू.चं. बु.गु. श. | मू.चं. मं.शु. गु. | चं.मं. शु.बु श. | सू.चं. बु.गु. श. | सू. मं.गु. शु. | मित्र. |
| शु. | ० | श. | श. | सू. | मं. | बु. | शत्रु. |

अथ नैसर्गिकमैत्रीचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| चं.मं. गु. | सू.बु. | सू.चं. गु. | सू.शु. | सू.चं. मं. | बु.श. | बु.शु. | मित्र. |
| बु. | मं.शु. गु.श. | शु. श. | मं.गु. श. | श. | मं. गु. | गु. | सम. |
| शु. श. | ० | बु. | चं. | बु. शु. | सू. चं. | सू.चं. मं. | शत्रु. |

हमें पंधरा मिलाना. ओ दृष्टि स्पष्ट जानना. उदाहरण संस्कृत टीकामें स्पष्ट है ॥ ६ ॥ ७ ॥ अब उच्चबल कहते हैं. जिस ग्रहका उच्चबल करना होवे उस ग्रहके राशि अंशमें अपनी नीचकी राशि और अंश कमी करके जो राशि रही वो राशी जो कमी छः अंशसे जादा होवे तो बारहमें शुद्ध करके राशिके अंश करना. उसमें नीचेके अंश मिलायके तीनसे भाग लिये जो लब्ध आवे उसकूं उच्चबल

त्रिभिर्भक्तं फलमुच्चबलं भवेत् ॥८॥ मूलत्रिकोणस्वभाधिमित्र-

टीका।

च्चबलोदाहरणमिति सर्वग्रहेषु ज्ञेयमिति ॥ ८ ॥ अथ स्थानबलांतर्गतं द्वितीयसप्तवर्गबलमाह मूलेत्यादिसार्धश्लोकद्वावितिपदाधिकेन । अत्र यस्य कस्यापि रव्याद्यन्यतमस्य सप्तवर्गजं बलं ग्राह्यमस्ति तद्ग्रहसंबंधि वर्तमानग्रहहोराद्रेष्काणसप्तमांशद्वादशांशत्रिंशांशाधिपतीनां मूलत्रिकोणस्वर्क्षाधिमित्रमित्रसमार्यधिशत्रुगृहस्थितानां क्रमशः भूताब्धि ४५ खराम ३० नख २० तिथि १५ दिक् १० युग ४ द्वि २ परिमितं बलं ग्राह्यं अत्रेत्थं तत्वं रव्याद्यन्यतमस्य ग्रहाद्यन्यतमसप्तवर्गपतिः स्वमूलत्रिकोणे एव विद्यते चेत्तद्बलं४५ ग्राह्यं तत्र न चेत्स्वर्क्षस्थे सति तद्बलं३०ग्राह्यम् तत्रापि न चेदधिमित्रस्थान स्थिते सति तद्बलं २० ग्राह्यम् तत्रापि न चेन्मित्रस्थाने स्थिते सति तद्बलं १५ ग्राह्यम् तत्रापि न चेत्समराशिस्थिते सति तद्बलं १० ग्राह्यम् तत्रापि न चेदरिस्थानस्थिते तद्बलम् ४ तत्राप्यसति अधिशत्रुस्थानजं बलं २ ग्राह्यम्। मूलत्रिकोणादिपूर्वपूर्वाधिके भावे उत्तरोत्तरक्रमशः उपलब्धगौणस्य ग्राह्यत्वं ज्ञेयम् । मूलत्रिकोणादधिकमुच्चस्थानं तत्रस्थे गृहादिवर्गपतौ उच्चस्थानजमेव ग्राह्यम् । तदभावे मूलत्रिकोणादिजमिति पूर्वार्धे सप्तवर्गबलविचारप्रकरणे उच्चस्थबलग्राह्यत्वप्रामाण्यादिति । ननु कस्यापि ग्रहहोराद्यधिपस्य मूलत्रिकोणस्वक्षेत्रसंबंधद्वये उच्चमूलत्रिकोणस्वक्षेत्रसंबंधत्रये च कथमिति चेत्पूर्वार्धोक्तिप्रामाण्याद्व्यवस्थोच्यते । तत्र रवेः सिंहराशिवर्तमानस्य मूलत्रिकोणस्वक्षेत्रस्थानद्वयसंबंधः अत्र २० अंशपर्यंतं वर्तमानस्य मूलत्रिकोणोक्तं ४५ बलं ततस्त्रिंशदंशपर्यंतं स्वक्षेत्रजं ३० बलं ग्राह्यम् । एवं वृषराशिवर्तमानस्य चंद्रस्य उच्चमूलत्रिकोणस्थानद्वयसंबंधः अत्रतु ३ अंशपर्यन्तमुच्चोक्तं ३।०।० ततस्त्रिंशत्पर्यन्तं मूलत्रिकोणजं ४५ बलं ग्राह्यम् । एवं मेषराशिवर्तमानस्यभौमस्य मूलत्रिकोणस्वक्षेत्रसंबंधद्वयं अत्र १२ अंशपर्यंतं मूलत्रिकोणोक्तं ४५ ततश्च स्वक्षेत्रोक्तं ३०

भाषा।

कहना ॥ ८ ॥ अब सप्तवर्ग बल कहते हैं. जिस सूर्यादिक ग्रहोंका सप्तवर्गीयबल

मित्रसमारिपुअधिशत्रुगृहे चापि स्थितानां क्रमशो बलम् ९,

टीका ।

एवं कन्याराशिवर्तमानस्य बुधस्य उच्चमूलत्रिकोणस्वक्षेत्रस्थानत्रयसंबंधः अत्र तु १५ अंशावधि उच्चोक्तं १।०।० ततो विंशत्यंशपर्यन्तं त्रिकोणोक्तं ४५ ततस्त्रिंशदंशपर्यन्तं स्वक्षेत्रोक्तं ३० एवमेव धनूराशिस्थगुरोर्मूलत्रिकोणस्वक्षेत्रसंबंधः अत्र १० अंशपर्यंतंमूलत्रिकोणोक्तं ४५ ततः स्वक्षेत्रोक्तं ३० बलं ग्राह्यम् । एवं तुलाराशिस्थशुक्रस्यमूलत्रिकोणस्वक्षेत्रद्वयसंबंधः अत्र १५ अंशपर्यंतं मूलत्रिकोणोक्तं ४५ ततश्च स्वक्षेत्रोक्तं ३० एवं कुंभराशिवर्तमानस्य शने मूलत्रिकोणक्षेत्रद्वयसंबंधः अत्र २० अंशपर्यन्तं मूलत्रिकोणोक्तं ४५ ततश्च स्वक्षेत्रोक्तं ३० बलं ग्राह्यम् । अस्योदाहरणम् । अथात्रक्रमान्मूलत्रिकोणस्वक्षाधिमित्रमित्रसमार्यधिशत्रुस्थानोक्तानि सप्तवर्गबलोदाहरणानि । रविः १०।४।१४।२२ कुंभस्थः तत्पतिः शनिः १०।८।१७।३० स्वमूलत्रिकोणस्थः अतस्तद्बलं स्वमूलत्रिकोणस्थोक्त ४५ इतिविंशत्यंशपर्यन्तम् । ततश्च स्वक्षेत्रस्थोक्तं ३० ग्राह्यमिति क्षेत्रबलविचारे मूलत्रिकोणस्थोदाहरणम् । अत्र तु कल्पितोदाहरणम् । चंद्र ३।१०।५।२ अयं चं ० होरायां व ० होरापतिश्चंद्रः स्वक्षेत्रस्थः अतः होराबलविचारे स्वक्षेत्रस्थोक्तबलं ३० ग्राह्यमिति स्वक्षेत्रोदाहरणम् । रविः १०।४।१४।० अयं वृश्चिकनवांशे वर्तमानः तत्पतिर्भौमो मीनराशिस्थः तत्पतिर्गुरुर्भौमस्याधिमित्रः अतः अधिमित्रोक्तं बलं २० नवमांशविचारेणाऽत्रग्राह्यमित्यधिमित्रबलोदाहरणम् । रविः १०।४।१४ २२ अयं मीनद्वादशांशे वर्तमानः तत्पतिर्गुरुर्मित्रक्षेत्रे वर्तमानः अतोऽत्र मित्रोक्तं बलं १५ ग्राह्यमितिमित्रबलम् । चंद्रः ८।२५।२९।९ अयं द्रेष्काणविशेषसिंहद्रेष्काणे वर्तमानः तत्पतिः सूर्यः समक्षेत्रस्थः अतोत्र समोक्त १० बलं ग्राह्यम् इति समबलोदाहरणम् ॥ ५ ॥ अथ बुधः ९।१०।३४।० अयं कन्यासप्तमांशे वर्तमानः तत्पतिर्बुधः शनिक्षेत्रस्थः तस्य बुधेन पंचधा मैत्र्यां शत्रुत्वात् शत्रुबलं ४ ग्राह्यमिति सप्तमांशविचारे शत्रुबलोदाहरणमिति ॥ ६॥ रविः १०।५।७।९ अयं कुंभत्रिंशांशे स्थितः तत्पतिः शनिः अधिशत्रुक्षेत्रस्थः अतस्तद्बलं अधिशत्रूक्तं २ त्रिंशांशविचारे ग्राह्यमिति अधिशत्रुबलोदाहरणम् ॥ ७ ॥ ८ ॥ ९ ॥

## भाषा।

करना होवे तो जो ग्रह मूल त्रिकोणका होवे तो उसका बल ४५ लेना, स्वराशिका होवे तो तीसका बल लेना, अधिमित्रका होवे तो वीसका बल लेना, मित्रका होवे तो पंधराका बल लेना, समस्थानका होवे तो दसका बल लेना, शत्रुका होवे तो चारका बल लेना, अधिशत्रुका होवे तो दोका बल लेना ॥ ९ ॥

**अथ पंचधा मैत्रीचक्रम्.**

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| चं. मं. | सू. बु. | सू. चं. गु. | सू. शु. | चं. मं. | बु. श. | शु. | ऽमित्र. |
| बु. | मं.गु.शु.श. | बु. श. | मं. गु. | श. | गु. | गु. | मित्र. |
| शु.गु.श. | ० | ० | चं. | सू.शु.बु. | सू. चं. | मं.बु.सू.चं. | सम. |
| ० | ० | शु. | श. | ० | मं. | ० | शत्रु. |
| ० | ० | ० | ० | ० | ० | ० | ऽतिशत्रु. |

**अथ सप्तवर्गचक्रम्.**

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| ११<br>श.<br>स्व. | ९<br>गु.<br>मि. | १२<br>गु.<br>मि. | १०<br>श.<br>स्व. | ११<br>श.<br>स्व. | १२<br>गु.<br>मि. | १०<br>श.<br>स्व. | गृ. |
| ५<br>सू.<br>स्व. | ४<br>चं.<br>स्व. | ५<br>सू.<br>स्व. | ४<br>चं.<br>मि. | ४<br>चं.<br>मि. | ४<br>चं.<br>मि. | ४<br>चं.<br>मि. | हो. |
| ११<br>श.<br>स्व. | ५<br>सू.<br>स. | ८<br>मं.<br>ऽमि. | २<br>शु.<br>मि. | ३<br>बु.<br>श. | १२<br>गु.<br>मि. | १०<br>श.<br>स्व. | द्रे. |
| ११<br>श.<br>स्व. | २<br>शु.<br>मि. | १२<br>गु.<br>मि. | ६<br>बु.<br>श. | २<br>शु.<br>मि. | ७<br>शु.<br>मि. | ५<br>सू.<br>स. | स. |
| ८<br>मं.<br>ऽमि. | ८<br>मं.<br>ऽमि. | १२<br>गु.<br>मि. | ६<br>बु.<br>श. | ११<br>श.<br>स्व. | ६<br>बु.<br>श. | १२<br>गु.<br>मि. | न. |
| १२<br>गु.<br>मि. | ७<br>शु.<br>मि. | १०<br>श.<br>स्व. | २<br>शु.<br>मि. | ५<br>सू.<br>स. | २<br>शु.<br>मि. | १<br>मं.<br>ऽमि. | द्वा. |
| १<br>मं.<br>ऽमि. | ७<br>शु.<br>ऽमि. | ८<br>मं.<br>ऽमि. | ६<br>बु.<br>श. | ९<br>गु.<br>मि. | ६<br>बु.<br>श. | ६<br>बु.<br>श. | त्रि. |

**अथ सप्तवर्गबलचक्रम्.**

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहा. |
|---|---|---|---|---|---|---|---|
| ०<br>३०<br>० | ०<br>१५<br>० | ०<br>१५<br>० | ०<br>३०<br>० | ०<br>३०<br>० | ०<br>१५<br>० | ०<br>३०<br>० | गृ. |
| ०<br>३०<br>० | ०<br>१५<br>० | ०<br>१५<br>० | ०<br>३०<br>० | ०<br>३०<br>० | ०<br>१५<br>० | ०<br>३०<br>० | हो. |
| ०<br>३०<br>० | ०<br>१०<br>० | ०<br>२०<br>० | ०<br>१५<br>० | ०<br>४<br>० | ०<br>१५<br>० | ०<br>३०<br>० | द्रे. |
| ०<br>३०<br>० | ०<br>१५<br>० | ०<br>१५<br>० | ०<br>४<br>० | ०<br>१५<br>० | ०<br>१५<br>० | ०<br>१५<br>० | स. |
| ०<br>३०<br>० | ०<br>२०<br>० | ०<br>१५<br>० | ०<br>२०<br>० | ०<br>३०<br>० | ०<br>४<br>० | ०<br>१५<br>० | न. |
| ०<br>१५<br>० | ०<br>१५<br>० | ०<br>३०<br>० | ०<br>१५<br>० | ०<br>१०<br>० | ०<br>१५<br>० | ०<br>२०<br>० | द्वा. |
| ०<br>२०<br>० | ०<br>१५<br>० | ०<br>२०<br>० | ०<br>४<br>० | ०<br>१५<br>० | ०<br>४<br>० | ०<br>४<br>० | त्रि. |
| ३<br>५<br>१ | १<br>४५<br>० | २<br>१०<br>० | १<br>५८<br>० | २<br>१४<br>० | १<br>२३<br>० | १<br>२४<br>० | योग. |

भूताब्धयः खरामाश्च नखास्तिथिर्दिशो युगाः ॥ द्वाविंदु-
शुक्रौ युग्मांशे तिथिरोजांशगाः परे ॥१०॥ केंद्रादिषुस्थि-

## टीका ।

अथ स्थानबलांतर्गतं तृतीयं युग्मायुग्मबलमाह द्वाविंदुशुक्राविलर्धेन । अत्र द्वाविति पदं पूर्वान्वयि इंदुशुक्रौ चंद्रभृगू युग्मांशे युग्मश्चासावंशश्च त-स्मिन्समांशे ग्रंथांतरप्रामाण्याद्युग्मराशौ च संतौ तिथि १५ संख्याकं बलं दद्या-ताम् । एवं परे रविभौमबुधगुरुशनयः ओजांशगाः ओजश्चासावंशश्च तस्मि-नाच्छंतीति तथा विषमांशगा इत्यर्थः । प्राग्वद्विषमराशिस्था अपि तिथिबलं १५ दद्युरिति अर्थादुक्तान्यराश्यंशगता बलहीना इति ज्ञेयम् । अत्रोदाहरण-माह । अथ युग्मायुग्मबलोदाहरणम् । चंद्रशुक्रौ ८।२५।२९।० इमौ अयुग्म-राशिसंबंधियुग्मनवांशे वर्तमानौ अतस्तद्बलं युग्मांशविचारेण ग्राह्यम् । अ-पि च चंद्रशुक्रौ १।४।४।५ विषमांशस्थावपि ग्रंथांतरप्रामाण्यात्समराशिस्थि-त्या १५ बलं दत्त इतियुग्मबलोदाहरणम् । अथायुग्मबलोदाहरणम् । रवि-भौमबुधगुरुशनयः एते पंच ग्रहाः १।४।५।७ एवं युग्मराशावपि विषमांश-स्थित्या अपि च २।४।५।७ एवं युग्मांशस्था अपि विषमराशिस्थित्या बलं १५ दद्युरित्ययुग्मोदाहरणम् ॥ १० ॥ अथ स्थानबलांतर्गतं चतुर्थं केन्द्रा-

## भाषा ।

| अथ युग्मायुग्मबलचक्रम्. | | | | | | | | अथ केंद्रादिबलचक्रमिदम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | ० | ० | १ | ३ |
| ० | १५ | ० | १५ | १५ | १५ | ० | ० | ३० | १५ | १५ | ० | ३० | १५ | ० | ४५ |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

अब युग्मायुग्म बल कहते हैं. चंद्र और शुक्र यह दोनों सम राशि सम नवमां-शके होवे तो पंधराका बल लेना. विषम राशि विषम नवमांशके होवे तो बलहीन शून्य बल जानना. और सूर्य, मंगल, बुध, गुरु, शनि, यह विषम राशि विषम न-वमांशके होवे तो १५ का बल लेना. और सम राशि सम नवमांशके होवे तो शू-न्य बल जानना ॥१०॥ अब ग्रहोंका केंद्रबल कहते हैं. जन्मलग्नसे जो ग्रह केंद्र-

ता लग्नात्षष्टिस्त्रिंशत्तिथिः क्रमात् ॥ आदिमध्यावसानेषु द्रेष्काणेषु स्थिताः क्रमात् ॥११॥ पुंनपुंसकयोषाख्या द-

## टीका ।

दिबलमाह केन्द्रेत्यर्धेन । लग्नात्सकाशात्केंद्रादिषुस्थिताः केंद्राणि आदीनि येषु तानि पणफरापोक्लिमानि तेषु केंद्रपणफरापोक्लिमेषु स्थिताः क्रमेण षष्टिः ६० त्रिंशत् ३० तिथिः १५ बलानि दद्युरिति । अथात्र केन्द्रबलोदाहरणम् । जन्मलग्नं ५।२।२७।४ कन्याख्यं अस्य केन्द्राणि कन्याधनुर्मीनमिथुनानि अत्रस्था ग्रहाः षष्टिः ६० बलदाः । तुलामकरमेषकर्कोणि पणफरसंज्ञानि अत्रस्था ग्रहाः ३० बलदाः । वृश्चिककुंभवृषभसिंहाख्यानि आपोक्लिमसंज्ञानि अत्रस्था ग्रहाः १५ बलदाः । इति केंद्रादिबलोदाहरणम् । अथ स्थानबलांतर्गतं पंचमं द्रेष्काणबलमाह आदीतिद्वादशश्लोकपर्यंतम् । ग्रहा रव्यादयः आदिमध्यावसानेषु प्रथममध्यमांत्येषु द्रेष्काणेषु क्रमात् क्रमेण पुंनपुंसकयोषाख्याः एतत्संज्ञकाः स्थिताः वर्तमानाः सतस्तिथिबलं १५ दद्युः एते एव षड्वर्गगताः स्वेषां षड्वर्गेषु गताः वर्तमानाः संतः त्रिंशत् ३० बलं दद्युः अर्थात् क्रमोऽक्तान्यद्रेष्काणे वर्तमाना विबला इत्यर्थः । एवमुक्तपंचप्रकारकं स्थानबलं विदुः पूर्वाचार्या इत्यध्याहारः । अथ द्रेष्काणबलोदाहरणम् । जन्मलग्नं ५।८।२७।४ सूर्यभौमगुरवः एते पुरुषसंज्ञका ग्रहाः ५।७।२।९ अथ वा ७।४।११।५ एवं वर्तमानाः कन्याप्रथमद्रेष्काणे वृश्चिक प्रथमद्रेष्काणे वा वर्तमानाः अतः १५ फलदाः पुंस्त्वे सति प्रथमद्रेष्काणे स्थितत्वात् बुधशनी क्लीबसंज्ञौ ५।१३।९।१७ अथ वा ९।१७।१९।१२ एवं

## भाषा ।

| अथ द्रेष्काणबलचक्रम्. | | | | | | | | अथ पंचानां योगचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ० | ० | ० | ० | ० | ० | ० | ० | ४ | २ | १ | १ | १ | २ | १ | २४ |
| १५ | १५ | ० | १५ | ० | ० | ० | ४५ | २८ | ४७ | २७ | ४५ | १२ | ५६ | ५७ | २७ |
| ० | ० | ० | ० | ० | ० | ० | ० | ४ | २९ | १५ | २९ | ३१ | २४ | ५४ | १४ |

स्थानमें १।४।७।१० बैठा होवे तो साठका बल लेना, और स्थानसे जो ग्रह २।५।८।११ यह पणफर स्थानमें बैठा होवे तो तीसका बल लेना, और स्थानसे

युक्तिथिबलं ग्रहाः ॥ स्वषड्वर्गगतास्त्रिंशदेवं स्थानबलं विदुः ॥ १२ ॥ अर्कात्कुजात्सुखं जीवाज्ज्ञाच्चास्तं लग्नमा-

## टीका ।

वर्तमानाः एवं कन्याद्वितीयद्रेष्काणे मकरद्वितीयद्रेष्काणे वा वर्तमानाः अतः १५ फलदो भवतः क्लीबत्वे सति द्वितीयद्रेष्काणस्थत्वात् तथा शुक्रचंद्रौ स्त्रीसंज्ञको ५।२२।१७।२ अथ वा १०।२५।७।५ एवं कन्यान्त्यद्रेष्काणे कुंभांत्यद्रेष्काणे वा वर्तमानौ अतः १५ फलदौ ज्ञेयौ स्त्रीत्वे सति अंत्यद्रेष्काणे स्थितत्वात् तथा एते एव षड्वर्गविभागेन स्ववर्गगताः संतः ३० बलं दद्युरिति ॥ ११ ॥ १२ ॥ एवंषड्वर्गांतर्गतं पंचविधं प्रथमं स्थानबलमुक्त्वा द्वितीयं दिग्बलमाह अर्कादित्यादिसार्धेन । अर्काद्रवेः कुजाद्भौमात्सुखं चतुर्थभावं विशोध्य षड्भाधिके षड्राश्यधिकेऽवशिष्टे सति चक्रात् १२ अंकात् विशोध्य शेषं भागीकृत्य राशिभागान् भागस्थानांके संयोज्य रामाप्तं त्रिभिर्भक्ते यत्फलं तद्बलं भवति एवमग्रे जीवाद्गुरोः ज्ञाद्बुधाच्च अस्तं सप्तमभावं विशोध्य प्राग्वत्संस्कारे कृते बलं भवति एवमार्कितः शनेः लग्नं तनुभावं विशोध्य तथा भृगोः शुक्राचंद्राच्च मध्यलग्नं दशमभावं हित्वा विशोध्य प्राग्वत्षड्भाधिके चक्राद्विशोध्य भागीकृत्य च रामाप्तं फलमेव तद्बलं भवति

## भाषा ।

३।६।९।१२ यह आपोक्लिम स्थानमें बैठा होवे तो पंधराका बल लेना । अथ द्रेष्काणबल कहते हैं. पुरुषग्रह सूर्य, मंगल, गुरु, यह तीन प्रथम द्रेष्काणमें कहते हैं । दश अंशके अंदर होवे तो १५ का बल लेना. दससे ज्यादा अंश होवे तो बलहीन जानना. ऐसा नपुंसक ग्रह बुध शनि यह दोनों मध्य द्रेष्काणमें अर्थात् दस अंशसे ज्यादा व वीसके अंदर होवे तो १५ का बल लेना अन्यथा बलहीन जानना. स्त्रीग्रह शुक्र चंद्र तीसरे द्रेष्काणमें होवे तो पंधराका बल लेना अन्यथा बलहीन जानना. इस द्रेष्काणबलमें थोडा विशेष कहते हैं. जो ग्रह अपने ग्रह होरा आदि षड्वर्गमें होवे तो तीसका बल लेना ॥ ११ ॥ १२ ॥ अब ग्रहोंका दिशाका बल कहते हैं. राश्यादि सूर्यमें और राश्यादिमंगलमें चतुर्थ भावकी राश्यादिक

र्कितः ॥ मध्यलग्नं भृगोश्चंद्राद्धित्वा षड्भाधिके सति॥१३॥
चक्राद्विशोध्यरामाप्तं भागीकृत्य च तद्बलम् ॥ आमध्या-

## टीका ।

इति दिग्बलम् । अथोदाहरणम् । अर्क १०।४।१४। अस्माच्चतुर्भावं ३।१।१९ हित्वा शेषं ७।२।५५ इदं षड्भाधिकं चक्राद्विशोध्यावशिष्टं ४।२७।५ अस्य भागाः १४७।५ त्रिभिर्भक्ताः लब्धं फलं ०।४९।१ जातं रविदिग्बलं एवं सर्वत्र ज्ञेयमिति ॥ १३ ॥ अथ षड्बलांतर्गतं तृतीयं कालबलं सार्धविंशति श्लोकपर्यंतं तत्रादौ आमध्यान्हादित्यादिसपादद्वयेन नतोन्नतबलमाह । आमध्यान्हात् अर्धरात्रं मध्यान्हमारभ्यार्धरात्रपर्यंतं मध्यरात्रिमारभ्य मध्यान्हपर्यंतं दिवा दिवसः रात्रिः प्रसिद्धा इति क्रमात् नतोन्नते ग्राह्ये एवमुक्तं भवति मध्यान्हमारभ्यार्धरात्रिपर्यंतं इष्टकालस्य नतं कृत्वा तदेवाग्रिमसंस्कारे ग्राह्यम् । मध्यरात्रिमारभ्य मध्यान्हपर्यंतं इष्टकालसमुत्पादितनतस्य उन्नतं कृत्वाग्रिमसंस्कारे ग्राह्यमिति । अथ दिवाशब्दोक्तोन्नतस्य नाड्यो द्विघ्नाः द्विगुणिताः अर्कभार्गवसूरीणां रविशुक्रगुरूणां दिवाबलं भवति तथा उक्तनाड्यः इमाः षष्टिभ्यो वर्जिताः कृत्वा यदवशिष्टं तत्तेषामेव रात्रिबलं भवति भौमचंद्रशनीनां तु अन्यथा उक्तक्रमविपर्ययेण ज्ञेयं एवमुक्तं भवति अर्कभार्गवसूरीणां दिवाबलवत्संस्कृतं भौमचंद्रशनीनां रात्रिबलं भवति तथा तेषां उक्तरात्रिबलवत्संस्कृतं एषां दिवाबलं भवति इत्यन्वयाशब्देन

## भाषा ।

कमी करके शेषांक छःसे जादा होवे तो बारहमें घटायके राशीकूं अंशादिक करके तीनसे भाग लेना जो लब्ध आवे वो दिग्बल जानना. ऐसा गुरुबुधमें सप्तम भाव घटायके पूर्वसरीखा बल लाना. और शनिमें लग्न कम करना. शुक्र और चंद्रमे दशमभाव घटायके पूर्वरीतिप्रमाणसे बल जानना । इति दिग्बलम् ॥ १३ ॥ अब नतोन्नत बल कहते हैं. मध्यान्ह काल लेके अर्ध रात्रपर्यंत जो समय इष्टकाल होवे तो दिवाबल. मतके तरफसे सूर्य, शुक्र, गुरु,

| अथ दिग्बलचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
| ० | ० | ० | ० | ० | ० | ० | १ |
| ४९ | १ | ३२ | ३१ | ४३ | २१ | ० | [illegible] |
| १ | ५६ | २५ | ३० | १२ | ५८ | | १५ |

षष्टिबलं भवेत्॥१८॥आधाने चित्प्रवेशे तु त्रिंशन्मूलाद्र्धका बलम्॥ ॥ र्कमंदेंदुशुकाराःपतयः सर्वदा गुरुः॥१९॥ वर्षमासदिनेशानां तिथित्रिंशच्छराणवाः ॥ कालहोराधिप-

## टीका ।

सर्वरात्रिदिव... ...षु गुरुः सर्वदा दिनरात्रिसर्वत्रिभागेषु जन्मलग्नाधानचित्प्रवेशविचारे च रूपबलदो ज्ञेयः । अथोदाहरणम् । दिनमानं २७।४८ तस्य त्रिभागः ९।१६ इष्टं १२।१७ एतत्कालीनं लग्नं आधानं चित्प्रवेशश्च दिनद्वितीयभागे वर्तते अतोस्य पतिः रविः लग्ने १।०।० तथा आधाने ०।३०।० अर्धबलं तथा चित्प्रवेशे ०।४५।० पादोनं एवं क्रमेण बलदो ज्ञेयः गुरोस्तु सर्वदा बलदत्वात्स्पष्टमुदाहरणम् एवं सर्वत्र ज्ञातव्यमिति॥१८॥१९॥ अथ कालबलांतर्गतं चतुर्थं वर्षमासदिनहोरेशबलमाह वर्षादितिसार्धश्लोकेन । वर्षमासदिनेशानां वर्षमासदिनपतीनां क्रमात् तिथिः १५ त्रिंशत् ३० शराणवाः ४५ कालहोराधिपस्य होरापतेः एवं पूर्णरूपं बलं उदाहृतं कथितं आधाने तु वर्णादीनां चतुर्णामपि त्रिंशत् ३० अर्धबलं ग्राह्यम् तथा चित्प-

## भाषा ।

| अथ दिनरात्रित्रिभागचक्रम्. | | | | | | | | अथ वर्षमासादि चक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| १ | ० | ० | ० | १ | ० | ० | २ | ० | ० | ० | १ | ० | ० | ० | २ |
| ० | ० | ० | ० | ० | ० | ० | ० | ३० | ० | ० | ० | ४५ | ० | १५ | ३० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

भाग करके वे छः भागके छः अधिपति हैं. बुध, सूर्य, शनि, चंद्र, शुक्र, मंगल, ये छः ग्रह हैं, क्रमकरके जानना पीछे जिस भागमें लग्न होवे उस भागका जो अधिपति होवे वो ६० साठ कलात्मक बल देता है. और यही रीतिसे आधानकालका विचार होवे, तो तीस ३० का बल ग्रह देता है. चैतन्यप्रवेशकालका विचार होवे तो पैंतालीस ४५का बल देता है. अन्य ग्रहोंकी बलहीनता जाननी. गुरुका सदैव एक बल है ॥ १८ ॥ १९ ॥ अब वर्षपति, मासपति, दिनपतिका बल कहते हैं. गणितका उदाहरण टीकामें दिखाया है. उस मार्गसे वर्षेश, मासेश, दिनेश, निकालके बल लेना. वर्षपतिके बलमें १५ पंधरा कलात्मक बल लेना. मासपतिके

सोऽब्दे पूर्णं बलमुदाहृतम्॥२०॥आधाने नित्यवेशे तु त्रिश-

टीका।

वेशी शरजलाकराः ४५ पादोनं बलं ग्राह्यमिति । अथ वर्षादिपत्युत्पादनं श्लोकोक्तविषयोदाहरणं च अत्र केशव्युदाहरणोक्तश्लोकः । "द्विष्ठोयं ग्रहलाघवद्युनिचयश्चक्राहतैः षट्शरैः ५६ षड्दस्रै २६ श्च युतः सबाणतपनः १२५ सेषु ५ श्च खांगाग्निभिः ३६०॥ खाज्याशै ३० र्विहृतः फलं गुण३यम २ घ्ने चक्रनिघ्नाक्षखो ५।० एते द्वि २ त्रि ३ युते नगो ७ द्धैरितकेऽस्तेऽर्कास्तमामासपौ ॥ " ग्रहलाघवद्युनिचयः १८३२ चक्रं २९ अनेन हतैः गुणितैः षट्शरैः ५६ जातैः १६२४ युतः ३४५६ सबाणतपनः १२५ एभिः युक्तः २५८१ खांगाग्निभिः ३६० भक्तं जातं फलं ९ गुण ३ घ्नं २७ एतत् चक्रं २९ अनेन निघ्नाऽक्षाः ५ जाताः १४५ एभिरुपेतं १७२ एतत् द्वि २ युतं १७४ इदं नगोर्वैरितं सप्तभिस्तष्टं शेषं जातो रविः क्रमेण षष्ठो वर्षपः शुक्रः विद्यमानो वर्षपः शनिरिति । अथ मासेशानयनोदाहरणम् । द्युनिचयः १८३२ चक्रं २९ तेन हतैः षद्दस्रैः २६ जातैः ७५४ युतः २५८६ सेषु ५ युतः २५९१ खाज्याशैः ३० एभिर्हृतः फलं ८६ इदं यमघ्नं १७२ चक्रनिघ्नखोपेतं नामांकांतरयोगाभावः ततः त्रि ३ युतं १७५ नगोर्वैरितं सप्ततष्टं शेषं० गतो रविः क्रमेण सप्तममासपतिः शनिः वर्तमानो रविरिति । अत्र जन्मवारपतिर्गुरुः अस्मिन्विषये जन्मवारपतिरेव दिनेश इति बोध्यम् । अथ होरेशानयनोदाहरणम् मुहूर्तमार्तंडोक्तम् । "द्विघ्नको व विलग्नके रविसितज्ञेंद्वार्किजीवासृजो होरेशाद्युपतेः खलेऽन्हि खलजा होरा शुभे मध्यमा ॥ " अर्कः १०।४।१४।२२ विलग्नं ०।६।३।४२ एतदर्केण ऊनं जातं २।१।४९।२० द्वि २ घ्नं जातं ४।३।३८।४० एतत्सप्ताधिकाभावान्न सप्ततष्टप्राप्तिः अस्य राशिस्थानांक ४ परिमितः द्युपतेः गुरोः सकाशात् रविसितज्ञेंद्वार्किजीवासृज इति क्रमेण चतुर्थ- शुक्रः गतहोरापतिः अर्थात् वर्तमानहोरापतिः पंचमोज्ञः बुधः ज्ञेय इति एवं च अस्मिन्नुदाहरणे वर्षपतिः शनिः अस्य बलं२१

भाषा।

बलमें ३० तीस कलात्मक बल लेना दिनपतिके विचारमें दिनपतिका पैंतालीस ४५

च्छरजलाकराः॥सायनांशग्रहभुजराशीनिष्वब्धिभिः सुरैः

## टीका ।

मासपतिः रविः अस्य बलं ३० दिनपतिः गुरुः अस्य बलं४५होरापतिर्बुधः अस्य बलं १।०।० एवं च रवेः नतोन्नतबलं ०।४८।४४ पक्षबलं ०।४७।५ दिनरात्रिबलं [illegible]।०।० वर्षपत्यादिबलं ०।३०।० एतेषां चतुर्णां योगं जातं कालबलं सूर्यस्य ३।५।४९। एवं सर्वेषां ज्ञातव्यमिति ॥२०॥ अथ षड्बलांतर्गतं चतुर्थमयनचेष्टाबलद्वयात्मकं बलं तत्रादौ अयनांशेत्यादिसपादचतुर्विंशतिश्लोकावधि अयनबलमाह । सायनांशग्रहभुजराशीन् अयनांशैः सहितस्य ग्रहस्य यो भुजः न्यूनता तद्राशिपरिमितानि इष्वब्धिसुरसूर्यसंज्ञकानि खंडानि तैः हत्वा भागादि गुणयित्वा एवमुक्तं भवति सायनांश भुजराश्यंकज्ञेयानि ध्रुवांकरूपाणि तानि च इष्वब्धि ४५ परिमितं प्रथमं सुर ३३ परिमितं द्वितीयं सूर्य १२ परिमितं तृतीयं एवं त्रीणि खंडानि क्रमादहभुजाराशिस्थानविद्यमानपूर्णकद्विपरिमितस्थानविचारेण ४५।३३।१२ इमानि अधस्ताद्वर्तमानभागादिगुणकानि ज्ञात्वा गुणयेत् तद्यथा उपरिष्टराश्यंके पूर्णे सति भागादिकं ४५ अनेन गुणयेत् तस्मिन्नेके सति भागादिकं ३३ अनेन गुणयेत् तथा तस्मिन्द्विपरिमिते सति १२ अनेन भागादिकं गुणयेत् तस्माद्यत्रिंशद्भक्तफलं अंशकलाविकलात्मकं तत् गतखंडयुक्तं कार्यं गतखंडद्वये तद्द्वयैक्ययोगः ततश्च भागं त्रिंशद्भिर्भक्त्वा राशिस्थाने योजयेत् अनंतरं एवं राश्यादिके फले पूर्वकृतसायनग्रहे मेषादिषट्कस्थे सति अर्कारार्योशनःसु रविभौमगुरुशुक्रेषु बलार्थं गृह्यमाणेषु सत्सु राशित्रयं युंज्यात्

## भाषा ।

कलात्मक बल लेना अन्य ग्रहोंका शून्य हैं. इष्टकालमें जिस ग्रहकी होरा होवे वो ग्रहका होराबल एक लेना. पीछे सब बलोंका ऐक्य करना. सो ग्रहोंका कलाबल भया ॥ २० ॥ अब अयनबल कहते हैं. तात्कालिक

| अथ कालबलचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | वो. |
| ३ | ० | ० | १ | २ | २ | १ | १२ |
| ४५ | २४ | ५८ | ४७ | ४६ | १ | १३ | १७ |
| ४९ | ११ | २१ | ५ | ३९ | ३८ | २१ | ४ |

स्पष्ट ग्रह करके उन्होंमें अयनांश कला विकला मिलायके उसका भुज करके फेर भुजकी राशि देखना जो राशिके ठिकाने पूर्ण होवे तो शेषांक पैंतालीससे गुणन

॥ २१ ॥ सूर्येर्हत्वा क्रमाद्राशिभागः स्यादनुपाततः ॥ एवं राश्यादिके युंज्यादर्कारार्योशनःसु च ॥ २२ ॥ राशित्रय- मथो युंज्यान्मेषादिस्थेषु तेष्वथ ॥ तुलादिस्थेषु राश्यादीं- स्त्रिराशिभ्यस्तु वर्जयेत् ॥ २३॥ चंद्रार्क्योर्विपरीतं स्यात्स- दा युंज्याद्बुधस्य तु ॥ भागीकृत्य त्रिभिर्भक्तं ग्रहाणामायनं बलम् ॥ २४ ॥ रवेर्द्विगुणमेवं स्याद्युध्यतोर्ग्रहयोरथ ॥ वि-

## टीका ।

तेषु तुलादिषट्कस्थेषु सत्सु तु त्रिराशिभ्यः वर्जयेत् त्रिपरिमितराशौ पूर्वल- ब्धं राश्यादिकं हीनं कुर्यात् । अथ च चंद्रार्क्योः चंद्रशनैश्चरयोः विपरीतं विलोमं तद्यथा मेषादिषट्के त्रिराशिभ्यो वर्जनं, तुलादिषट्के राशित्रयसं- योजनं कार्यम् । बुधस्य तु बुधबलविचारे सदा द्वादशराशिष्वपि राशित्रयं युंज्यादेव न तु प्राग्वद्राशिविचारेण विलोमानुलोमतः अपि च भागीकृत्य राशिभागस्थाने संयोज्य त्रिभिर्भक्तं फलं अयनबलं भवति तत्र एवं लब्ध- बलं द्विगुणीकृतं रविबलं भवतीति रविविषये विशेषसंस्कारः । अत्रोदाहर- णम् । रविः १०।४।१४ अयनांशाः २२।१ एतद्योगेन रविः १०।२६।१५ अ- स्य भुजः १।३।४५ अस्य राश्यंकः १ तत्परिमितं ४५ खंडं प्रथमं गतं ए- ष्यखंडं द्वितीयम् ३३ अनेन भुजभागादि ३।४५ गुणितं जातं १२३।४५ एतस्मात् त्रिंशद्भक्तलब्धांशादि फलम् ४।७।३० एतद्भक्तखण्डेन ४५ अनेन युक्तं कृत्वा जाताः ४९।७।३० एतदंशत्रिंशद्भागलब्धम् राशिस्थानांकः अधःस्थमंशादिकं च १।१९।७।३० एतत् सायनरवेस्तुलादिषट्कवर्तमानत्वात् त्रिराशिषु हीनं कृत्वा जातम् १।१०।५२।३० अस्य भागादि ४०।५२।३०

## भाषा ।

| अथ अयनबलचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | योग. |
| ० | ० | ० | ० | ० | ० | ० | ० |
| २७ | ५७ | ३९ | ५५ | १८ | १८ | ५५ | ९१ |
| १५ | ४० | ३२ | ९ | ५० | ४५ | ५१ | ४ |

श्लेषंबलयोश्चापि निर्जितस्य बलं भवेत् ॥ २५ ॥ अपनीते योजिते तु जितस्य च बलं भवेत् ॥ षष्टिर्वक्रगतेर्वीर्यमनु-

## टीका।

एतत् त्रिभिर्भक्त्वा जातं फलम् १३।३७।३० एतत्सूर्यबलत्वाद्द्विगुणीकृतं जातम् ०।२७।१५।० एवमयनबलम् एवं रीतिः सर्वत्र ज्ञेयेति ॥ २१ ॥ २२॥ ॥ २३ ॥ २४ ॥ अथ चेष्टाबलक्रमप्राप्तं भौमादिग्रहयुद्धबलमाह युध्यतोरि-त्यादिसार्धपंचविंशतिश्लोकपर्यन्तम् । अथ ग्रहयोः भौमाद्यन्यतमयोर्द्वयोः युध्यतोः युद्धं कुर्वतोः सतोः । अस्यार्थः जन्मकाले ग्रहयोः समराश्यां क-लाविकलारूपयोः युद्धं ज्ञेयम् तद्बलं तु इत्थं युध्यतोर्ग्रहयोः प्रागुक्तबलैक्य-योः विश्लेषमंतरं कृत्वा निर्जितस्य पराभूतस्य ग्रहस्य बलैक्यमध्ये विश्लेषां-तरेऽपनीते हीने कृते सति निर्जितस्य बलं दक्षिणादिग्गतं भवेत् । अथ च जितस्य जेतुः बलैक्यमध्ये विश्लेषांतरे योजिते जितस्य जेतुः उत्तरदिग्गतं बलं भवेत् । अत्र कल्पितमुदाहरणम् । जन्मकाले बुधः ५।२।७५ शुक्रः ५। २।७५ बुधबलैक्यं ३।२।१ शुक्रबलैक्यं २।५।३। अनयोरंतरं ०।५६।५८ एतन्निर्जितस्य न्यूनबलस्य शुक्रस्य बलमध्ये २।५।३० अपनीतं हीनं कृतं जातं १।८।५ शुक्रबलं तदेवांतरं ०।५६।५८ जितस्य जेतुः बुधस्य बलैक्ये ३।२।१ योजितं ३।५८।५९ एतज्जातं जेतुर्बुधस्य बलमिति ॥ २५ ॥ अथ प्रसंगप्राप्तं गतिबलमाह षष्टिरितिसार्धसप्तविंशतिश्लोकपर्यन्तम् । वक्रगतेः

## भाषा।

करना. एक होवे तो तेंतीस ३३ गुणन कराना दो होवे तो बारहसे गुणन करके तीससे भाग लेना. लब्ध अंशादिक फल आवे उसमें गतखंड जोडना पीछे रा-श्यादि करके तुलादि छः राशिमें होवे तो तीन घटाना मेषादि छः राशिमें होवे जैसा नें मिलाना परंतु चंद्र शनि यह दोनोंकू उलटा जानना जैसा मेषादि छः पीछे सें होवे तो तीन घटाना तुलादि छः राशिमें होवे तो मिलाना. और बुध ग्रह-स्या ! सर्वकाल १२ बारह राशिमेंसे कोई हो परंतु ३ मिलाना. और सूर्यके बल पष्ट गुणन करना ॥२१॥२२॥२३॥२४॥ अब ग्रहोंको युद्धबल कहते हैं. युद्धका लक्षण ऐसा कि जन्मकालकी बखत जो ग्रह राशि अंश कला विकलासे दूसरेके

वक्रगते दलम् ॥ २६ ॥ पादं विकलभुक्तेः स्याद्दलमेव समागमे ॥ पादं मंदगतेस्तस्य दलं मन्दतरस्य च ॥ २७ ॥ शीघ्रभुक्तेस्तु पादोनं दलं शीघ्रतरस्य तु ॥ मध्यमस्फुटवि-

## टीका ।

वक्रगतिर्यस्य तस्य ग्रहस्य वीर्यं बलं षष्टिः ६० रूपबलं अनुवक्रगतेः ऋजुगतेरित्यर्थः दलं त्रिंशत् ३० बलं विकलभुक्तेः विकला रविसाहचर्यान्निर्बला भुक्तिर्यस्य तस्य रविसहितस्येत्यर्थः पादं बलं १५ तथा समागमे समः आगमो गतिर्यस्य तस्य चंद्रसहितस्येत्यर्थः दलमेव ३० बलं मंदगतेः मंदा मध्यमा निरल्पा गतिर्यस्य तस्य पादं १५ बलं मंदतरस्य पूर्वतोऽपि अल्पतरगतेः तस्य पादस्य दलं ७।३० बलं शीघ्रभुक्तेः शीघ्रा मध्यमाधिका भुक्तिर्यस्य तस्य पादोनं ४५ बलं शीघ्रतरस्य पूर्वतः अतिशीघ्रगस्य ग्रहस्य दलं ३० बलं एवं गतिबलं ज्ञेयमिति ॥ २६ ॥ २७ ॥ अथ क्रमप्राप्तं चेष्टा-

## भाषा ।

समान होवे तो वो दोनों ग्रहोंका युद्ध जानना. इसमें जित पराजितादिकोंका बल लानेका विधि बतलाते हैं. युद्ध करने वाले दोनों ग्रहोंका पहले कह्या हुवा बलैक्य है उस दोनोंका अंतर करके जो बलमें हीन है वो यह निर्जित (हारा) जानना. उसके बलैक्यमें अंतरके अंक हीन करना वो दक्षिण दिशाका निर्जितबल जा-

न[illegible] ॥ अब [illegible] उ- [illegible]का अंक जादा है वो जीत हुवा ऐ[illegible]

स[illegible] जो सरल [illegible]लाना तो उत्तर दिशाका बल आया [illegible] ये जो स्वाभा-

म[illegible]का बल [illegible] ग्रह वक्री है उसका ६० साठ बल लेना,

[illegible] १५ का [illegible] ३० बल लेना. जो सूर्यके साथ है उसका

[illegible]हका बल [illegible] है उसका बल ३० लेना. जो मंदगति है[illegible]

॥ अब [illegible]ल्पगति होवे उसका बल ७।३० लेना. शी[illegible]

ग्रहोंको [illegible] शीघ्रगति ग्रहका ३० का बल लेना ॥ २६[illegible]

[illegible]के जो [illegible] जिन ग्रहोंका चेष्टाबल करना है सो ऐसा कि[illegible]

मध्यम [illegible] और स्पष्ट ग्रह करना पीछे मध्यम और स्पष्टका अंत[illegible]

[illegible] [illegible]कूं अर्ध भाग करके मध्यम ग्रह स्पष्ट ग्रहसे अधिक होवे त[illegible]

श्लेषदलयुक्तोनितं स्फुटात् ॥ २८ ॥ मध्यमे त्वधिके न्यूने शीघ्रादत्रास्फुटं त्यजेत्॥चेष्टाकेन्द्रं भखेटानां रवीन्द्वोरयनांशयुक् ॥२९॥अंगाधिकेऽर्कात्संशोध्य भागीकृत्य त्रिभिर्भजे

## टीका ।

बलमाह मध्यमस्फुटेत्यादिसपादत्रिंशत्पर्यंतम् । अत्र चेष्टाबलविषये अस्फुटं मध्यस्पष्टे ग्रहे मध्यमस्फुटविश्लेषदलयुक्तोनितं मध्यमस्पष्टग्रहयोः विश्लेषस्य अंतरस्य यद्दलं अर्धं तेन युक्तोनितं युक्तं हीनं वा स्फुटात्स्पष्टग्रहान्मध्यमे मध्यमग्रहे अधिके न्यूने च सति क्रमात्कृत्वा तं शीघ्राच्छीघ्रोच्चात्त्यजेज्जह्यात् हीने कुर्यादित्यर्थः तदित्थं स्पष्टग्रहात् मध्यमे ग्रहेऽधिके सति पूर्वोक्तदलेन युक्तं कृत्वा स्पष्टग्रहात् मध्यमग्रहे न्यूने सति ऊनिते हीनं कृत्वा शीघ्रोच्चात्त्यजेदित्यर्थः एवं सति भखेटानां भौमादिताराग्रहाणां चेष्टाकेंद्रं भवति रवीन्द्वोस्तु पूर्वसंस्कारानंतरं अयनांशयुक् अयनांशयुक्तं चेष्टाकेन्द्रं भवति तच्चेष्टाकेन्द्रं भखेटानां अंगाधिके षड्राशितः अधिके सति अर्कात् १२ संशोध्य हीनं कृत्वा भागीकृत्य राशिभागान्कृत्वा भागस्थाने संयोज्य त्रिभिर्भजेत् एवं लब्धफलं चेष्टाबलं भवति । चन्द्रसूर्यौ तु चेष्टाकेन्द्रेंगाऽधिके सति सत्रिराशी त्रिराशिभिः सहितौ कृत्वा ततः प्रोक्तविधिः अर्कात्संशोध्य भागीकृत्य त्रिभिर्भजेदेवं पूर्वोक्तरूपः कार्यः तयोर्लब्धं फलं चेष्टाबलमिति प्रोक्तं सूरिभिरितिगमाः॥ उदाहरणम् । मध्यमो भौमः ०।१६।४० स्पष्टभौमः ११।२७। ततः ११।१०।२३ अस्य दलं ५।२०।११ एतत्स्पष्टभौमान्मध्यमभौमे मध्यमग्रहे ०।१६।४१ ऊनितं कृत्वा जातं ६।२६।३० एतच्छीघ्रके

## भाषा ।

अगर स्पष्ट ग्रहसे मध्यम ग्रह कम होवे तो अंतरार्धफलकूं मध्यममें

| | मध्यम | स्पष्ट. | केन्द्र. | [illegible] | शीघ्रो. | [illegible] |
|---|---|---|---|---|---|---|
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |

करना. ए
तीससे भाग
इत्यादि करके
जिस.नें मिल
पीछे सम्हो
भया । म
स्पष्ट

त ॥ सूर्यचंद्रौ सत्रिराशी कृत्वा प्रोक्तविधिस्तथा ॥ ३० ॥ एवं चेष्टाबलं प्रोक्तं नैसर्गिकमथो शृणु॥षष्टिरेकेषवः सप्तदश षड्विंशतिस्ततः ॥ ३१ ॥ चतुस्त्रिंशत्त्रिवेदांकाः सू-

टीका ।

घ्रोच्चात् १०।२।३२ अस्मात्त्यक्त्वाऽवशिष्टं ३।६।२ जातमेतद्भौमस्य चेष्टाकेन्द्रं अस्य भागान् ०।३।० त्रिभिर्विभज्य लब्धं ०।३२।० एतद्भौमचेष्टाबलोदाहरणम् एवं सर्वत्र ज्ञेयम् । चंद्रसूर्ययोस्तु चेष्टाकेन्द्रे त्रिराशिमेलनमिति विशेषः अन्यत्सर्वं समानमिति ॥ २८ ॥ २९ ॥ अथ नैसर्गिकबलाबलमाह नैसर्गिकमित्यादिसार्धैकत्रिंशत्पर्यंतम् । अथ अनंतरं हेमैत्रेयेति शेषः नैसर्गिकं निसर्गे विद्यमानं स्वाभाविकं बलमित्यध्याहारः शृणु । तत्र सूर्यस्य षष्टिः ६०, चंद्रस्य एकेषवः ५१, भौमस्य सप्तदश १७, बुधस्य षड्विंशतिः २६, गुरोश्चतुस्त्रिंशत् ३४, शुक्रस्य त्रिवेदाः ४३, शनेः अंकाः ९, एते निसर्गजाः स्वाभाविकबलनियताः अंकाः क्रमात्सूर्यादीनां ज्ञातव्या इति ॥३०॥३१॥ अथ उक्तानां पंचविधानामपि बलानां दृष्टिबलेन संस्कारमाह शुभेत्यर्धेक-

भाषा ।

हीन करना. पीछे उसकूं शीघ्रोच्चफलमें कम करना जो अंक आवे वो चेष्टाकेंद्र भया उसके अंश करके ३ से भाग लेना ओ फल जावे वो चेष्टाबल जानना. सूर्यचंद्रकूं पूर्वसरीखा करके ३ राशि मिलानेसे चेष्टाबल होता है ॥ २८ ॥ २९ ॥ अब नैसर्गिक बल कहते हैं. निसर्ग कहिये जो स्वाभा-

अथ नैसर्गिकबलचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | धो. |
|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | ४ |
| ० | ५१ | १७ | २६ | ३४ | ४३ | ९ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० |

अथ षड्बलचक्रमाह.

| ग्रह. | सू. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| स्था. | ४ २८ ४ | २ ४७ १९ | ३ ५ १९ | ४ ४९ २९ | ३ १२ ३३ | २ ४६ २४ | ३ १७ ५४ |
| दिग्बलं. | ० ४९ १ | ० १ ५६ | ० ३१ २५ | ० ३१ ३० | ० ४३ १२ | ० २१ ५८ | ० २९ १५ |
| कालबलं. | ३ ५ ४९ | ० २४ ११ | ० ५८ २१ | ० ४७ ५ | २ ४६ ३९ | २ १ ३८ | १ १३ २१ |
| चेष्टाबलं. | ० २७ १५ | ० ५७ ४० | ० ३२ ० | १ १२ २८ | १ १३ २६ | ० ५६ ५७ | १ ४८ ४८ |
| नैसर्गिकबलं. | १ ० ० | ० ५१ ० | ० १७ ० | ० २६ ० | ० ३४ ० | ० ४३ ० | ० ९ ० |
| दृग्बलं. | ० ० ९ ध. | ० ० ३९ ऋ. | ० ६ १३ ध. | ० २ ४ ऋ. | ० २ ३१ ध. | ० ४ २० ऋ. | ० २ १८ ऋ. |
| एकत्रबलं. | ९ १ १३ | ४ ४९ ५९ | ५ ३० १८ | ४ ४४ ० | ८ ३२ ९ | ६ ४१ ३० | ७ ३० ३० |

विक बल है. सो हे मैत्रेय ! तुम श्रवण करो सूर्यका६०बल, चंद्रका५१निस-

र्यादीनांनिसर्गजाः ॥ शुभपापदृगब्ध्यंशयुतहीनानि ता-
नि च ॥३२॥ षड्बलानि ग्रहाणां स्युरेवमेकीकृतानि तु ॥

## टीका।

द्वयेन। तानि पूर्वोक्तानि स्थानादिपंचविधानि बलानि बलसमूहं शुभपापदृगब्ध्यंशयुतहीनानि शुभाः चंद्रादयः पापाः रव्यादयः एषां दृशां दृष्टीनां यः अब्ध्यंशः चतुर्थांशः तेन युतहीनानि युक्तानि हीनानि वा पूर्वोक्तं समूहं तद्ग्रहोपरि शुभदृष्टियोगे पापदृष्टियोगादधिके सति दृक्चतुर्थांशेन युक्तं कृत्वा तथैव पापैर्दृष्टियोगे शुभदृष्टियोगादधिके सति पूर्वोक्तं समूहं पापदृष्टिचतुर्थांशेन हीनं कुर्यात्। एवं रीत्या एकीकृतानि तानि पूर्वोक्तानि ग्रहाणां षड्बलानि स्युरिति। अत्रोदाहरणम्। रवेः स्थानबलं ४।१८।४ दिग्बलं ०।४९।१ कालबलं ३।५।४९चेष्टाबलं ०।२७।१५ नैसर्गिकबलं १।०।० एषां योगः ९।४०।९ अयं सूर्योपरि शुभदृष्टियोगात् ०।४।२२ एवंरूपाद्धेतोः अस्य चतुर्थांशः ०।१।५ अनेन युक्तः कृतो जातः ९।४१।१४ जातमेतत्सूर्यषड्बलं एवं सर्वत्र ज्ञेयमिति ग्रहाणां षड्बलविचारः॥ ३२ ॥ अथ भावबलानयनमाह शुभदृष्टीत्यादिसार्द्धत्रयस्त्रिंशत्पर्यंतम्। स्वामिबलं यस्य भावस्य यः स्वामी तस्य पूर्वोक्तरीत्या आनीतं षड्बलं शुभदृष्टिचतुर्थांशयुतं भावोपरि प्राप्तशुभदृष्टिचतुर्थांशेन युक्तं तथा भावोपरीत्यत्राप्यध्याहारः पा-

## भाषा।

भौमका, १७, बुधके, २६, गुरुके ३४, शुक्रके ४३, शनिके ९ ग्रहस्वाभाविक निसर्गबल जानना ॥ ३० ॥ ३१ ॥ अब छट्टा बल कहते हैं। पहिले जो लाये ग्रहोंके पांच बल ( स्थानबल, दिग्बल, कालबल, चेष्टाबल, नैसर्गिकबल ) यह पांचोंका एक बल करना पीछे शुभग्रहका दृष्टियोग करना, और पाप ग्रहका दृष्टियोग करना. पीछे दोनोंका अंतर करके उसका चतुर्थांश लेके पापग्रह दृष्टियोग जादा होवे तो षड्बलयोगमें हीन करना शुभग्रहदृष्टियोग होवे तो वो फल षड्बलयोगमें मिलाना उसकू षड्बल कहते हैं ॥ ३२ ॥ अब भावबल कहते हैं. जिस भावका जो स्वामी होवे उसका पहिले लाया हुवा जो षड्बल है उसमें शुभपापग्रहदृष्टिका अंतर करके अंतरका चतु-

शुभदृष्टिचतुर्थांशं युतं स्वज्ञार्यदर्शने: ॥ ३३ ॥ हीनपाप-

टीका।

षड्गब्ध्यंशैः पापानां दृष्टिचतुर्थांशः हीनं ऊनितम् । ततः स्वज्ञार्यदर्शनैः

अथ भावदृष्टिचक्रमिदम्.

| | त. | ध. | स. | सु. | स. | रि. | जा. | मृ. | ध. | क. | आ. | व्य. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | ० १६ ४९ | ० ३७ ५३ | ० ३० ४१ | ० २ २५ | ० ५७ १८ | ० ४४ ५३ | ० २९ ६ | ० १४ ५३ | ० ० ४१ | ० ० ० | ० ० ० | ० ० ७ |
| चं. | ० ३९ ४३ | ० २१ १ | ० १४ २८ | ० ५७ ५ | ० ४१ १८ | ० २५ ३१ | ० ९ ४१ | ० ० ० | ० ० ० | ० ० ० | ० ३ ४२ | ० २३ ५९ |
| मं. | ० ० ० | ० ३ ४६ | ० ३३ ४४ | ० ५५ ४५ | ० २४ ११ | ० १४ ४८ | १ ० ० | ० ५२ ३६ | ० २७ ६ | ० १२ ५३ | ० ० ० | ० ० ० |
| बु. | ० ४० २९ | ० ३३ ३ | ० ७ ४१ | ० ४१ ३० | ० ४८ ५१ | ० ३ ३३ | ० १७ १६ | ० ३ ३ | ० ० ० | ० ० ० | ० ० ० | ० ११ ५७ |
| गु. | ० १० १२ | ० ३३ ४९ | ० ५३ ३७ | ० २८ ४० | ० ३४ २८ | ० ५० ३६ | ० ५५ १२ | ० ३१ ४६ | ० ९ २३ | ० ० ० | ० ० ० | ० ० ० |
| शु. | ० ० ० | ० १३ ३७ | ० ४० ३९ | ० ३२ ५८ | ० ५ १ | ० ५४ २८ | ० ४५ ३६ | ० २८ ३१ | ० १७ ११ | ० २ ५८ | ० ० ० | ० ० ० |
| श. | ० ४६ ७ | ० ३१ ५५ | ० ५ २४ | ० ४६ ४ | ० ४७ ४२ | ० ३१ ५५ | ० ५४ १४ | ० ७ ३८ | ० ० ० | ० ० ० | ० ० ० | ० ५२ २६ |
| ध. | १ ३० २८ | १ ४१ ३० | १ ५६ २५ | २ ४० १३ | २ ९ ३८ | २ १४ १० | २ ७ ४७ | १ ३ २० | ० १७ ३४ | ० २ ५८ | ० ३ ४२ | १ ५ ४६ |
| पा. | १ २ ५६ | १ १३ ३० | ० ५९ ४५ | १ ४४ १४ | २ ९ ५१ | १ ३० ३६ | ३ २१ २७ | १ १५ ७ | ० २७ ४७ | ० १२ ५३ | ० ० ० | ० ५३ ५९ |
| ऽंत. | ० २७ ३२ | ० २८ ० | ० ५६ ४० | ० ५५ ५९ | ० ० १३ | ० ४३ ३४ | ० १३ ३३ | ० ११ ५३ | ० १० १३ | ० ९ ५५ | ० ३ ४२ | ० १३ १७ |
| दृग्बलं | ० ६ ५३ ध. | ० ७ ० ध. | ० १४ १० ध. | ० १३ ५९ ध. | ० ० ३ ऋ. | ० १८ ५३ ध. | ० ६ २३ ऋ. | ० २ ५८ ऋ. | ० २ ३३ ऋ. | ० २ २९ ऋ. | ० ० १५ ध. | ० ३ १९ ध. |

दृगब्ध्यंशैर्युतं स्वामिबलं बलम् ॥ गुरुज्ञाभ्यांतु युक्तस्य पूर्णमेकं तु योजयेत् ॥ ३४ ॥ मंदाररवियुक्तस्य बलमेकेन

## टीका ।

स्वस्मिन् भावे एव यानि ज्ञार्यदर्शनानि बुधगुरुदृष्टयः तैश्च युतं ईदृशं यत्स्वामिबलं भावाधिपबलं तदेव भावबलं ज्ञेयमिति ॥ ३३ ॥ अथात्र ग्रहविशेषयोगेन विशेषसंस्कारमाह गुरुज्ञाभ्यामित्यादिसार्धचतुस्त्रिंशच्छ्लोकपर्यंतम् । पूर्वसंस्कारेण संस्कृतभावस्य गुरुज्ञाभ्यां युक्तस्य एतदन्यतरेण वा युक्तस्य प्राप्तबलमध्ये एकं योजयेत् मेलयेत् । मंदाररवियुक्तस्य एतदन्यतमेन वा युक्तस्य भावस्य तु बलं भावबलं एकेन वर्जितं कृत्वा पूर्णबलं भवति अत्रोदाहरणं । तनुभावः ०।६।३।४२ मेषाख्यः अस्य स्वामिनो भौमस्य षड्बलैक्यं ५।५९।१६ तनूपरि शुभदृष्टयैक्यं १।३०।२४ अस्य चतुर्थांशः ०।२२।३६ भावोपरि पापदृष्टिः १।२।५६ अस्य चतुर्थांशः ०।१५।४४ चतुर्थांशद्वयस्य क्रमाद्योगन्हासत्वात् चतुर्थांशद्वयस्य अनंतरं ०।६।५२ एतच्छुभदृष्टयवशेषत्वात्स्वामिबलं युक्तं जातं ६।६।८ ज्ञेज्यदृष्टियोगः ०।५०।४१ अनेनापि युक्तं जातं ६।५६।४९ भावे गुरुज्ञयोगाभावान्नात्रैकयोगः तथा मंदाररवियोगाभावान्नात्रैकहानिरिति दृग्बलग्रहयोगबलसंस्कृतभावबलोदाहरणम् ॥ ३४ ॥ अथ भावविशेषे तु कालविशेषेण बलाधिक्यमाह दिवेत्यादिसार्धपंचत्रिंशच्छ्लोकपर्यंतं । शीर्षोदयाः मिथुनतुलासिंहकन्यावृश्चिककुंभाः दिवाबलाः दिनकाले सबला भवंति उभयोदयाः मीनः संध्यायां प्रातः सायं

## भाषा ।

र्थांश फल निकालके शुभग्रहदृष्टि जादा होवे तो युक्त करना. पापाधिक्य होवे तो हीन करना. उसकूं भावबल कहना ॥ ३३ ॥ अब भावबलमें विशेष संस्कार कहते हैं. जिस भावमें गुरु बुध युक्त होवे तो पूर्वोक्त भावबलमें एक मिलाना. शनि और मंगल इसमेंसे कोईभी मिलाया होवे तो भावबलमें एक कम करना ॥ ३४ ॥ अब भावका कालबल कहते हैं. दिवसका जन्म होवे तो मिथुन, तुला, सिंह, कन्या, वृश्चिक, कुंभ यह भाव बलवान् जानना. बाकीके निर्बल जानना. रात्रिका जन्म होवे तो मेष, वृष, कर्क, मकर, धन, यह भाव बलवान् जानना.

वर्जितम् ॥दिवा शीर्षोदयाश्चैव संध्यायामुभयोदयः॥३५॥ नक्तं पृष्ठोदयाश्चैव बलाधिक्य उदीरिताः ॥ नृयुग्मजूक-पाथोनचापपूर्वार्द्धकुंभभात् ॥ ३६ ॥ मृगचापपरार्धास्य-मेषसिंहवृषादपि ॥ अलेः कर्कटकाच्चापि मृगांत्यार्धाच्च मीनभात् ॥ ३७ ॥ अस्तं सुखं क्रमाल्लग्नं खं हित्वांगाधिके सति ॥ चक्राद्विशोध्य रामैश्च भजेद्भागीकृतंबलात् ॥ ३८ ॥

## टीका ।

संध्याद्वयकाले बली तथा पृष्ठोदयाः मेषवृषकर्कमकरधनूंषि नक्तं रात्रौ बलाधिक्ये बलबाहुल्ये उदीरिताः कथिताः इति ॥ ३५ ॥ अथ भावानां दिग्बलमाह नृयुगमित्यादिअष्टात्रिंशत्पर्यन्तम् । अस्तं सप्तमभावं नृयुग्मजूकपाथोनचापपूर्वार्धकुंभभात् अयं समाहारद्वंद्वः मिथुनतुलाकन्याधनुःपूर्वार्द्धकुंभराशिभ्यः सकाशाद्धित्वा तथा सुखं चतुर्थभावं मृगचापपरार्धास्यमेषसिंहवृषात् अत्रापि समाहारः मृगपूर्वार्धधनुःपरार्धमेषसिंहवृषेभ्यः हित्वा तथा लग्नं अलेः वृश्चिकात् कर्कटकाच्च हित्वा तथा खं दशमभावं मृगांत्यार्धात् मकरोत्तरार्धान्मीनभान्मीनराशेश्च सकाशात् हित्वा क्रमात् एवं क्रमेण सप्तमचतुर्थलग्नदशमभावैः ऊनिताः ये सर्वे राशयः तेषां शेषेऽङ्गाधिके सति षडधिके सति चक्राद्द्वादश राशिभ्यः विशोध्य ऊनयित्वा शेषं भागीकृतं भागान्कृत्वा रामैः त्रिभिर्भजेत् एवं लब्धफलं तत्तद्राशीनां दिग्बलं भवति । अथोदाहरण-

## भाषा ।

अन्य निर्बल हैं. प्रातःकाल और सायंकालकूं जन्म होवे तो मीन बलवान् जानना. बाकी सर्व निर्बल हैं ऐसा जानना ॥ ३५ ॥ अब भावका दिग्बल कहते हैं. मिथुन, तुला, कन्या, धनका पूर्वार्ध, कुंभ यह राशीभावमें सप्तम भाव कम करना शेष अंक जो आवे वह छःसे जादा होवे तो बारामें शोधके शेषांकका भाग करके तीनसे भाग लेना जो लब्ध आवे वो दिग्बल जानना. ऐसा मकरका पूर्वार्द्ध और धनका उत्तरार्ध, मेष, सिंह, वृषभ, यह राशिमें चतुर्थ भावकूं कम करके ऊपर लिखी हुई रीतिसे लाना. वैसा वृश्चिक कर्क राशिमें लग्नकूं कम करके फल लाना. वैसा मक-

भावानां च ग्रहाणां च बलान्येवं विदुर्बुधाः॥अंकाग्रयोऽग-

## टीका।

म्। लग्नं ०।६।४ एतच्चतुष्पादाख्यं अतोस्माच्चतुर्थभावः कर्कः ३।१।१९ अयं शोधितो जातः ९।४।४५ अंगाधिकः अयं चक्रतः १२ अस्माच्छोधितो जातः २।२५।१५ भागीकृत्य८५।१५जाताः त्रिभिर्भक्त्वा लब्धफलं ०।२८।२५ एवं सर्वत्र। एवं दिग्बलं पूर्वोक्तदृग्ग्रहयोगसंस्कृतभावबले ६।५६।४९ अस्मिन् योजितं जातं ७।२५।१२ जातमेतत्स्पष्टभावबलोदाहरणम् ॥३६॥३७॥३८॥ आरब्धं बलप्रकरणमुपसंहरति भावानामित्यर्धेन। भावानां तन्वादिद्वादशानां ग्रहाणां रव्यादिसप्तानां च एवं पूर्वोक्तरीत्या कथितानि बलानि बुधाः विदुरिति। अथ ग्रहाणां भावानां च उक्त षड्बलैक्ये तेषां सुबलत्वपूर्णबलत्वनियतसंख्यां परिगणयति अंकेत्यादिसार्धचत्वारिंशच्छ्लोकपर्यन्तम्। तत्र

अथ भावषड्बलचक्रमिदम्.

| त. | ध. | स. | सु. | सु. | रि. | जा. | मृ. | ध. | क. | आ. | लग्न | नाम. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८।४।२० | ६।४५।३० | ८।४४।२८ | ४।४९।४७ | ९।४१।१४ | ८।४४।२८ | ६।४५।३० | ८।४।२० | ८।३२।२१ | ७।३५।३० | ७।३५।३० | ८।३२।२१ | भावस्वामिबलं. |
| ०।२८।२५ | ०।१८।५७ | ०।४१।३ | ०।२८।२५ | ०।१०।३१ | ०।१०।३१ | ०।०।० | ०।५०।३१ | ०।१८।५६ | ०।०।० | ०।१८।५६ | ०।११।३ | दिग्बलं. |
| ८।३२।४५ | ७।४।२७ | ९।२८।३१ | ५।२८।१२ | ९।५१।४५ | ८।५४।५९ | ६।४५।३० | ८।३२।४५ | ८।५१।१७ | ७।३५।३० | ८।१४।२६ | ८।४३।२४ | योगबलं. |
| ०।६।५३ ध. | ०।७।० ध. | ०।१४।१० ध. | ०।१३।५९ ध. | ०।०।३ ऋ. | ०।१०।५३ ध. | ०।३।२३ ऋ. | ०।२।५८ ऋ. | ०।२।३३ ऋ. | ०।९।२९ ऋ. | ०।०।१५ ध. | ०।३।१९ ऋ. | दृग्बलं. |
| ९।२९।३८ | ७।११।२७ | ९।३९।४१ | ५।४२।११ | ९।५१।४२ | ९।५।५२ | ६।४२।७ | ९।२९।३८ | ८।४८।४४ | ७।३३।१ | ८।१४।४१ | ८।४६।४३ | स्प. योगबलं. म. |
| ०।५०।४१ | १।६।५२ | १।१।१८ | १।१०।१० | १।२७।१९ | ०।५४।९ | १।१२।२८ | ०।३४।४९ | ०।६।२३ | ०।०।० | ०।०।० | ०।४८।४३ | कुजघट्टगु. बलम्. |
| १०।२०।१९ | ८।१८।१९ | १०।४०।५९ | ६।५२।२१ | ११।१५।१ | १०।०।१ | ७।५४।३५ | १०।२०।१९ | ६।५५।७ | ७।३३।१ | ८।१४।१४ | ९।३०।२८ | षड्बलैक्यं. |

## भाषा।

रका उत्तर भाग और मीन इन राशिमें दशम भावकूं कम करके ऊपर लिखी हुई रीतिसे फल लाना. उसकूं दिग्बल कहते हैं ॥ ३६ ॥ ३७ ॥ ३८ ॥ अब ग्रहोंका और भावोंका सुबलत्वादिभेद कहते हैं. सूर्यादिग्रहोंके ध्रुवांकोंकूं दशगुणित करके साठमें भाग लेना जो लब्ध आवे उस अंकोंसे जादा षड्बल होवे तो वह सुबली

रामाश्च खाग्निः करजलाकराः ॥ ३९ ॥ नवाग्नयः सुराः खाग्निर्दशसंगुणिताः क्रमात् ॥ रव्यादयः सुबलिनो राशीनांस्वामिनो वशात् ॥ ४० ॥ अधिकं पूर्णमेवं स्याद्दलं

## टीका ।

सूर्यस्य अंकाग्नयः ३८ दशसंगुणिताः ३८० षष्टिभाजिताः ६।२० एतावत्संख्यापर्यन्तं षड्बलैक्ये सुबली भवति अतोऽधिके रविः पूर्णबली ज्ञेयः अर्थात् अतोऽल्पे केवलं बली एव । एवमग्रे सर्वत्र । तदित्थं चंद्रस्य अंगरामाः ३६ दशसंगुणिताः ३६० षष्टिभाजिताः ६।० एतत्पर्यंतं सुबली अतोऽधिके चंद्रः पूर्णबली ज्ञेयः । तथा भौमस्य अंकाः खाग्नयः ३० दशसंगुणिताः ३०० षष्टिभाजिताः ५।० एतत्पर्यंतं सुबली अतोऽधिके भौमः पूर्णबली । एवं बुधस्य करजलाकराः ४२, गुरोः नवाग्नयः ३९, शुक्रस्य सुराः ३३, शनेः खाग्नयः ३०, एते दशसंगुणिताः प्राग्वत्षष्टिभाजिताः ७।६।०।० एतावंतो बुधादीनामंका भवंति तत्तदंतसंख्यापर्यन्त बुधादयः ०।३०।६०।० सुबलिनः तत्तदधिके पूर्णबलिनः एवं क्रमाद्रव्यादयः सुबलिनः अर्थादतो न्यूने बलिन एव पूर्णबलिनो वा ज्ञेयाः । राशीनां सुबलिनो वा ज्ञेयाः । सुबलं पूर्णबलं च स्वामिनो वशात् अधिपबलानुसारतो ज्ञेयम् । एवं च बलं षड्बलैक्यं एवं पूर्वोक्तसंख्यातः अधिकं अतिरिक्तं चेद्रव्यादयः पूर्णबलिनो मताः इत्यन्वयः अथोक्तसंख्यान्यूनत्वे बलिन एवेत्यर्थः । ननु दशसंगुणिताः इत्येवोक्ते षष्टिभाजिताः कार्याः इति भवता कथमुच्यत इति चेद्दलस्य षष्ट्यतिरेकानुपपत्तेरिति ज्ञेयम् ॥ ३९ ॥ ४० ॥ नन्वाचार्येण षड्बलसमुच्चयविषये पूर्णबलज्ञानाय अंकाग्नय इत्यादिसंख्योक्ता, तथा स्थानाद्यवांतरबलविशे-

## भाषा ।

जानना जो कभी ध्रुवांकसे कम होवे तो बली जानना । राशिके बल स्वामीके आधीन है. सो स्वामीके निमित्तसे सुबल पूर्णबल जानना । पहिले कहे हुवे अंकसे कमी होवे तो बली और अधिक होवे तो सुबली । इसका चक्र आगे स्पष्ट दिखाया है ॥ ३९ ॥ ४० ॥ अब गुरु, बुध, सूर्यका सुबलत्वादिक बताते हैं. गुरु, बुध, सूर्य इनोंका मुख्य क्षेपक १६५ हैं उसकूं साठसे भाग लिया तो फल लब्ध २ शेष

चेद्बलिनो मताः ॥ गुरुसौम्यरवीणां तु भूतषट्केंदवो द्विज ॥ ४१ ॥ पंचाग्नयः खभूतानि करभूमिसुधाकराः ॥ खाग्नयश्च क्रमात्स्थानदिक्चेष्टासमयायने ॥ ४२ ॥ सितेन्द्वोरुयग्निचंद्राश्च खेषवःखाग्नयः शतम् ॥ चत्वारिंशत् क्र-

## टीका ।

षस्य पूर्णत्वं कथं वा ज्ञेयमिति चेत्समाधानायावांतरस्थानादिपंचबलानां पृथक्संख्यामाह गुरुसौम्येत्यादित्रिचत्वारिंशच्छ्लोकपर्यन्तत् । हे द्विज मैत्रेय ! गुरुसौम्यरवीणां त्रयाणां भूतषट्केन्दवः १६५ षष्टिभक्तया २।४५ स्थानबले सुबलत्वमतोऽधिके पूर्णत्वम् तेषां पंचाग्नयः ३५ दिग्बले सुबलत्वम् अतोऽधिके पूर्णत्वम् तेषां खभूतानि ५० चेष्टाबले सुबलत्वं अतोऽधिके पूर्णत्वं तेषां करभूमिसुधाकराः ११२ षष्टिभक्त्या १।५२ कालबले सुबलत्वं अतोऽधिके पूर्णबलत्वम् तेषां खाग्नयः ३० अयनबले सुबलत्वम् अतोधिके पूर्णबलत्वं एवं सितेन्द्वोः शुक्रचंद्रयोः स्थानबले अग्निचंद्राः १३३ षष्टिभाजिते २।१३ दिग्बले खेषवः ५० चेष्टाबले खाग्नयः ३० कालबले शतं १०० षष्टिभक्ते १।४० अयनबले चत्वारिंशत् ४० क्रमात्सुबलत्वम् पूर्णबलत्वं ज्ञेयम् एवं च भौममंदयोः कुजशन्योः स्थानबले षण्णवति ९६ षष्टिभक्त्या १।३६ दिग्बले त्रिंशत् ३० चेष्टाबले खवेदाः ४० कालबले सप्तांगाः ६७ षष्टिभक्ते १।७ अयनबले नखाः २० एतत्संख्यायां सुबलत्वम् अधिके पूर्णत्वं अर्थात् उक्तसंख्यान्यूनत्वे बलवत्त्वमेवेति । ननु अत्र षड्बलैक्यांकनियमे पंचबलानामेव भिन्नतया संख्योक्ता षष्ठस्य दृग्बलस्य नियत संख्या कुतो नोक्ता वेति चेत्तस्य स्थानविशेषोदलब्ध्याऽनियतत्वादृणधनसाधनीभूतत्वाच्चेतिज्ञा-

## भाषा ।

४५ ऐसा २।४५ स्थानबलमें सुबलत्व जानना इस अंकसे जादा होवे तो पूर्ण बल जानना वैसा दिग्बलमें इनोंका मुख्य अंक ३५ है साठसे भाग लिया तो लब्ध ० शेष ३५ दिग्बलमें सुबलत्व जानना. इससे अधिक होवे तो पूर्ण बली जानना ऐसा आगे सब बलमें जानना. इसका स्पष्ट चक्र आगे दिखाया है ॥ ४१ ॥

माद्रौममन्दयोः षण्णव क्रमात् ॥ ४३ ॥ त्रिंशत्खवेदाः सप्तांगा नखाश्च बलिनोविदुः ॥ भावस्थानग्रहैः प्रोक्तया-

## टीका।

नव्यम् । अथास्यसुगमतया परिज्ञानाय नियतांकचक्रमग्रे लिख्यते ॥ ४१ ॥ ४२ ॥ ४३ ॥ अथ प्राप्तेषु बहुषु योगहेतुषु विशेषयोगकर्तृतया फलप्रदज्ञान-माह भावस्थानेत्यादिपंचचत्वारिंशच्छ्लोकपर्यन्तम् । भावस्थानग्रहैः भावाः तन्वादयः स्थानानि स्वक्षेत्रोच्चत्रिकोणादीनि तेषु वर्तमानाः ये ग्रहाः तैः

अथ ग्रहाणां भावानां च बलसुबलपूर्णबलत्वज्ञापकनियतांकचक्रमिदम्.

| रवेः. | चंद्रस्य. | भौमस्य. | बुधस्य. | गुरोः. | शुक्रस्य. | शनेः. | ग्रहाणाम्. |
|---|---|---|---|---|---|---|---|
| अंकाग्नः | अगरामाः | खाग्नयः | करजलाः | नवाग्नयः | सुराः | खाग्नयः | षड्बलैक्यं. |
| ३९ ६ | ३६ ६ | ३० ५ | ४२ ७ | ३९ ६ | ३३ ५ | ३० ५ | सुबलपूर्णत्व |
| ३९० ३० | ३६० ० | ३०० ० | ४२० ० | ३९० ३० | ३३० ३० | ३०० ० | लोकाः |
| भू. प. द. | अग्निचं. | षण्णव. | भू. प. द. | भू. प. द. | अग्निच. | षण्णव. | स्थानबले. |
| १६५ | १३३ | १६ | १६५ | १६५ | १३३ | ९६ | सुबलपूर्ण |
| २<br>४५ | २<br>१३ | १<br>३६ | २<br>४५ | २<br>४५ | २<br>१३ | १<br>३६ | बलांकाः |
| पंचाग्र. | खेषवः | त्रिंशत् | पंचाग्नयः | पंचाग्र. | खेषवः | त्रिंशत्. | दिग्बले. |
| ०<br>३५ | ०<br>५० | ०<br>३० | ०<br>३५ | ०<br>३५ | ०<br>५० | ०<br>३० | सुबलत्वादि द्योतकांकाः |
| खभूताः | खाग्राः | खवेदाः | खभूताः | खभूताः | खाग्नयः | खवेदाः | चेष्टाबले. |
| ०<br>५० | ०<br>३० | ०<br>४० | ०<br>५० | ०<br>५० | ०<br>३० | ०<br>४० | सुबलत्वादि द्योतकांकाः |
| क. भू. भू. | शतं. | सप्तांगाः | करभूभू. | क. भू. भू. | शतम्. | सप्तांगाः | कालबले. |
| ११२ | १०० | ६७ | ११२ | ११२ | १०० | ६७ | |
| १<br>५२ | १<br>४० | १<br>७ | १<br>५२ | १<br>५२ | १<br>४० | १<br>७ | सुबलत्वादि द्योतकांकाः |
| खाग्नयः | चत्वारिं. | नखाः | खाग्नयः | खाग्नयः | चत्वारिं. | नखाः | अयनबले. |
| ०<br>३० | ०<br>४० | ०<br>२० | ०<br>३० | ०<br>३० | ०<br>४० | ०<br>२० | सबलत्वादि द्योतकांकाः |
| ६<br>३२ | ५<br>५३ | ४<br>१३ | ६<br>३२ | ६<br>३२ | ५<br>५३ | ४<br>१३ | पंचबलसंहतिः |

## भाषा।

॥ ४२ ॥ ४३ ॥ अब अनेक बली ग्रहोंमें मुख्य योगफल देनेवाला कौन है. उसका लक्षण कहते हैं. पहिले स्वक्षेत्र मुलत्रिकोणोच्चादिकके होयके तनुधनादिक

गे ये योगहेतवः ॥ ४४ ॥ तेषां बलीयः कर्तासौ स एवा-
स्य फलप्रदः ॥ योगेष्वाप्तेषु बहुषु न्याय एवं प्रकीर्तितः
॥ ४५ ॥ गणितेषु प्रवीणश्च शब्दशास्त्रे कृतश्रमः ॥ न्या-
यविद्बुद्धिमान् होरास्कंधश्रवणसम्मतः ॥ ४६ ॥ दैवविद्दे-
शिको देवसंमतो देशकालवित् ॥ ऊहापोहपटुः प्राज्ञः प-

## टीका ।

साधनीभूतैरित्यर्थः प्रोक्तयोगे कथितफलविषये ये ग्रहाः योगहेतवः फलहे-
तुभूताः बहव इत्यध्याहारः तेषः मध्ये यः बली षड्बलाधिक्यवान् स एव
व असौ ग्रहः अस्य उक्तयोगस्य कर्ता संपादकः अतः स एवास्य योगस्य
फलप्रदो ज्ञेयः इति षड्बले विशिष्टफलदत्वं ध्वनितम् एवं बहुषु योगेषु आ-
प्तेषु प्राप्तेषु एवमुक्तप्रकारकन्यायः प्रकीर्तित इत्यन्वयः ॥ ४४ ॥ ४५ ॥ अथ
एतच्छास्त्राधिकारिलक्षणमाह गणितेष्वित्यादियावदध्यायसमाप्ति । गणितेषु
गणितविषयेषु प्रवीणः कुशलः च परं न्यायविस्रे ध्याकरणशास्त्रे कृतश्रमः
कृतः श्रमो दृढाभ्यासो येन सः च परं न्यायवित् न्यायशास्त्रं वेत्तीति स त-
था न केवलं शाब्दिक एव शब्दव्युत्पत्त्या केवलं शब्दग्रहेण दुरूढार्थाग्रहप्र-
संगदोषापाकरणस्य शाब्दिकाशक्त्यादित्यर्थः बुद्धिमान् बुद्धिरस्यास्तीति स
तथा न केवलं अधीतशास्त्रोपि जडधीरिति तत्तात्पर्यम् । एतादृशसाहित्य-
वान् सन् होरास्कंधश्रवणसम्मतः होरास्कंधः होराशास्त्रसमूहः तस्य श्रवणं
तद्विषये संमतः संमान्यः दैववित् दैवं वेत्तीति तथा देशिकः शिक्षणसमर्थः
देवसंमतः देवाः संमता यस्य देवताराधक इत्यर्थः देशकालवित् देशकालज्ञः

## भाषा ।

स्थानोंमें बैठे जो ग्रह उसमेंसे जो ग्रह ग्रहबलमें अधिक बलवान् होवे वो वक्ष्यमा-
ण योगफलकूं देनेवाला जानना ॥ ४४ ॥ ४५ ॥ अब इसका फल कहनेकूं कौन
योग्य है सो कहतेहैं. गणितविद्यामें कुशल, व्याकरणमें निपुण, न्यायकूं जाननेवा-
ला, बुद्धिमान्, साहित्य शास्त्रमें कुशल, देवताराधन नित्य करनेवाला, देशकालकूं
जाननेवाला, तर्क समाधान करनेकूं समर्थ, स्वजनसे मिलापी रहनेवाला, ऐसा

ट्ठः स्वजनसंमतः ॥ ४७ ॥ इतिश्रीबृहत्पाराशरहोरायामु-
त्तरभागे भावषड्वलादिवर्णने द्वितीयोऽध्यायः ॥ २ ॥
नीचोनं तु ग्रहं भार्धाधिक्ये चक्राद्विशोधयेत् ॥ उच्चरश्मि-

## टीका।

होराशास्त्रीयफले देशकालतारतम्येन विचारशील इत्यर्थः ऊहापोहपट्टः ऊहः तर्कः अपोहः समाधानं तयोः पटुः कुशलः प्राज्ञः प्रकर्षेण उत्कार्थेष्वपि विशेषतया जानातीति तथा विशेषकल्पक इत्यर्थः पटुः सर्वप्रकारेण कुशलः स्वजनसंमतः स्वजनाविरोधी एतादृशः पुरुषः एतच्छास्त्रेऽधिकारी भवतीति ॥ ४६ ॥ ४७ ॥ एवं पराशरोक्तेस्मिन् द्वितीयेऽध्यायके मया ॥ यथामति कृता टीका गणेशायार्पितास्तु सा ॥ १ ॥ इति श्रीमद्बृहत्पाराशरहोराशास्त्रे श्रीमदध्यङ्कान्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदिग्मंडलजटाशंकरसूनु-ज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटीकायां द्वितीयोऽध्यायः ॥ २ ॥

उच्चरश्म्यादीष्टकष्टविचारमुपदिष्टवान् ॥ अध्याये तु तृतीयेऽस्मिन्स्वभि-ध्यायर्षिराण्मुदा ॥ १ ॥ अथ श्रीपराशरमहर्षिर्भगवानस्मिंस्तृतीयाध्याये इष्टकष्टं विशदयन्नादौ नीचोनमित्येकेनोच्चरश्म्यानयनमाह । नीचोनं नीचेन ऊनं हीनं तथोक्तं कृतमिति शेषः ग्रहं रव्याद्यन्यतमं भार्धाधिक्ये भानां द्वादशराशीनां अर्धं षण्मितं भार्धं तस्माद्राशिस्थानीयांकषट्संख्यायाः आधिक्यम् अधिकस्य भाव आधिक्यं विशेषत्वम् तस्मिन् सति चक्राद्राशिसमूहात् द्वादशराशिभ्य इत्यर्थः विशोधयेत् अवशेषयेदित्यर्थः । ततः राशिः राशिस्था-

## भाषा।

दैवज्ञ पुरुष इस शास्त्र पढनेकू और फलादेश कहनेकू समर्थ होवेंगे ॥४६॥४७॥
इति श्रीबृहत्पाराशर होरायां श्रीधरकृतभाषाटीकायां द्वितीयोऽध्यायः ॥ २ ॥

अब उच्चरश्मिका बल कहते हैं. स्पष्ट राश्यादिक ग्रहमेंसे अपना अपना नीच राशि अंशहीन करके शेष अंकमें राशि छःसे जादा होवे तो बारहमें शुद्ध करके पीछे राशीके ठिकानें एक मिलाना. अंश कला विकलाकू दुगनी करके साठसे ऊपर चढाना औ उच्चरश्मि आया ॥ १ ॥

| अथोच्चरश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
| ४ | २ | ५ | ३ | २ | ६ | ४ | ८ |
| ४८ | ५४ | १ | ८ | २६ | २० | ३३ | ५८ |
| २८ | ५८ | ५२ | ५२ | १८ | २८ | २६ | २२ |

भवेद्राशिः सैको द्विघ्नांशसंयुतः ॥ १ ॥ सायनांशार्क इंदु-
श्च सत्रिभो भानुवर्जितः ॥ चेष्टाकेन्द्रं कुजादीनां पूर्वाध्याा-
ये समीरितम् ॥ २ ॥ उच्चरश्मिवदानीय चेष्टारश्मि द्वयो-

## टीका ।

नीयांकः सैकः एकसंख्यया सहितः द्विघ्नांशसंयुतः द्वाभ्यां हन्यंते गुण्यंते ते द्विघ्नाः ते च ते अंशाः लक्षणया अंशकलाविकलाः द्विघ्नांशाः तै संयुतः राश्यंक इत्यर्थः उच्चरश्मिः भवेदिति अथोदाहरणम् सूर्यः १०।४।१४।० अस्य नीचं ६।१०।० अनेन हीनः सूर्यः ३।२४।१४ अयं राशौ सैकः १ जातो राश्यंकः ४ ततः अवशिष्टाः अंशादयः २४।१४।० एते द्विगुणिताः ४८।२८।० एतैर्युक्तो राशिः ४ जात उच्चरश्मिः सूर्यः ४।४८।२८।० एवं सर्वेषु ग्रहेषु उच्चरश्मिसंस्कारो ज्ञेय इति ॥ १ ॥ अथ शुभाशुभरश्म्यानयनार्थमादौ चेष्टारश्मीन्कथयंस्तत्साधनं चेष्टाकेंद्रमाह सायनेत्येकश्लोकेन । सायनांशार्कः अयनांशैः सहितः सायनांशः स चासावर्कः रविः इंदुः निरयन एव चंद्रश्च चकारः क्रमद्योतनाय ज्ञेयः स त्रिशः त्रीणि च तानि भानि राशयश्च त्रिभानि तैः सहितः सत्रिभः भानुवर्जितः भानुना रविणा वर्जितः हीनश्च क्रमात् सूर्यकेन्द्रं चंद्रकेंद्रं च भवति कुजादीनां भौमादिपंचग्रहाणां तु पूर्वाध्याये 'मध्यमस्फुटे' त्यादिभिः समीरितं स्पष्टीकृतं बोध्यमिति ॥ २ ॥ अथ चेष्टारश्मीञ्छुभाशुभ-

## भाषा ।

| अथ शुभरश्मिचक्रम्. | | | | | | | | अथाशुभरश्मिचक्रमिदम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ३ | २ | ४ | २ | ४ | ५ | ५ | २८ | ८ | ५ | ३ | ५ | ३ | २ | २ | २६ |
| ५० | ३१ | ५ | ५६ | २४ | ३४ | १८ | ४१ | ९ | २८ | ५४ | ३ | ३५ | २५ | ४१ | १८ |
| २९ | १४ | १६ | २३ | २८ | ५१ | ५८ | ३९ | ३१ | ४६ | ४४ | ३७ | ३२ | ९ | २ | २१ |

| अथ चेष्टारश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| २ | २ | ३ | २ | ६ | ४ | ६ | २८ |
| ४२ | १७ | ८ | ४३ | २७ | ४९ | ४ | २३ |
| ३० | ३० | ४० | ५४ | ३८ | १४ | ३० | ५६ |

अब चेष्टारश्मी कहते हैं. सूर्यकू सायन करके उसमें तीन राशि जोडके जो राश्यादि अंक भये उसकू सूर्यकेन्द्र कहना, और चंद्रकू सूर्यमें हीन किया सो चंद्रकेंद्र भया मंगलादि पांच ग्रहोंका चेष्टाकेंद्र द्वितीयाध्यायमें पहिले स्पष्टरीतिसे बताया है ॥ २ ॥ अब चेष्टारश्मि, शुभरश्मि और अ-

युतेः ॥ दलं तु शुभरश्मिः स्यादष्टभ्यो वर्जितोऽशुभः ॥३॥
उच्चचेष्टाकरौ व्येकौ दिग्भिर्हत्वा तु योजयेत् ॥ दलयंदि-

## टीका ।

रश्मींश्चाह उच्चेति । चेष्टारश्मिं तु उच्चरश्मिवदेव प्रागुक्तरीत्या भार्धाधिके च-
क्राद्विशोधयेत् इत्यादि ज्ञेयम् । नात्र नीचोनमित्युक्तसंस्कारः । आनीय सं-
पाद्य तं चेष्टारश्मिं जानीयात् । अथ शुभाशुभरश्मीनाह । द्वयोर्युतेः द्वयोः
चेष्टारश्म्युच्चरश्म्योः युतेः योगस्य दलमर्धं शुभरश्मिर्भवति स एव शुभरश्मिः
अष्टभ्यो वर्जितः अशुभरश्मिर्भवति । अथ चेष्टारश्म्युदाहरणम् । सूर्यः
१०।४।१४ अयनांशाः २२।१ एभिर्युक्तो जातः १०।२६।१५ अयं राशित्रयेण
युक्तो जातः १।२६।१५ जातमेतद्रविचेष्टाकेन्द्रं एतच्चेष्टाकेन्द्रं सेकं २।२६।१५
एतदंशकलाविकलाद्विगुणितं २।५२।३० जातोऽयं चेष्टारश्मिः । अथ शुभ-
रश्म्युदाहरणम् । सूर्योच्चरश्मिः ४।४८।२८ सूर्यचेष्टारश्मिः २।५२।३० अन-
योर्योगः ७।४०।५८ अस्यार्धम् ३।५०।२९ जातोऽयं शुभरश्मिः । अथाशुभ-
रश्म्युदाहरणम् । सूर्यः शुभरश्मिः ३।५०।२९ अयमष्टवर्जितः जातः ४।९।३१
जातोयमशुभरश्मिरिति ॥३॥ अथ केवलं ग्रहाणां इष्टकष्टमाह उच्चेति । उच्च-
चेष्टाकरौ उच्चं च चेष्टा च उच्चचेष्टे ते च ते करौ रश्मी च तथोक्तौ " किरणो-

## भाषा ।

शुभरश्मि उसके लानेकी रीति कहते हैं. चेष्टारश्मि जो उच्चरश्मि पहिले कही है
उस रीतिसे लाना चेष्टारश्मि उच्चरश्मि इन दोनोंकूं मिश्रित करके उसका अर्ध क-
रना ओ शुभरश्मि होती है. उसकूं आठसे घटाया तो अशुभरश्मि भई ॥ ३ ॥
अब इष्टकष्ट कहते हैं. उच्चरश्मीमें एक हीन करके उसकू दशगुणित करना, और
चेष्टारश्मीभेंभी एक हीन करके उसकूं दशगुणित करना पीछे दोनोंकूं जोडिके उसकू

| अथ इष्टचक्रम्. | | | | | | | | अथ कष्टचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | रा. | सू. | चं. | मं. | बु. | गु. | शु. | श. | रा. |
| २८ | १५ | ३० | १९ | ४४ | ४५ | ४३ | १६ | ३१ | ४४ | २९ | ४० | २५ | १४ | १६ | [illegible] |
| ५४ | १२ | ५२ | २३ | ४ | ४८ | १९ | ५६ | ५ | ४७ | ७ | ३६ | ५५ | ११ | ४० | ५३ |
| ५० | २० | ५० | ५० | ४० | ३० | ४० | ४० | १० | ४० | १० | ४० | १० | ३० | २० | १० |

अर्ध करना सो इष्टबल जानना उसकूं साठमें पाडे तो कष्टबल हुवा जानना ॥ ४ ॥

ष्टमन्यत्स्यात्षष्टिभ्यो वर्जितं फलम् ॥ ४ ॥ स्वोच्चे मूल-
त्रिकोणे च स्वर्क्षेऽधिसुहृदि क्रमात् ॥ मित्रर्क्षे च समर्क्षे च
शत्रुभे चातिशत्रुभे ॥ ५॥ नीचे च षष्टिरिष्वब्धिः खाग्निः
करकरास्तिथिः ॥ नागा वेदाः करौ शून्यं शुभमेतत्फलं
विदुः ॥६॥ षष्टिभ्यो वर्जिताश्चैते शिष्टं स्यादशुभं फलम् ॥

## टीका ।

स्मयूखांशुगभस्तिघृणिरश्मयः । भानुःकरोमरीचिस्त्री " इत्यमरः । द्वंद्वांते श्रूयमाणपदस्य प्रत्येकमभिसंदध्यादेतदर्थलाभः उच्चरश्मिश्चेष्टारश्मिश्चेत्यर्थः व्येकौ विगतः एको वाभ्यां तौ तथा दिग्भिः हत्वा दशभिर्गुणयित्वा तु यो-जयेत् मिश्रयेदित्यर्थः पुनः दलयेत् दलं कुर्यात् द्वाभ्यां विभजेदित्यर्थः । एवं कृते तत्फलमिष्टंस्यात् इष्टसंज्ञकं भवति तदिष्टं षष्टिभ्यो वर्जितं षष्टितो हीनं फलमवशेषरूपं अन्यत् इष्टेतरत् कष्टसंज्ञकमित्यर्थः स्यात् इष्टशब्देन शुभम् कष्टशब्देन अशुभं ज्ञेयमिति । अथास्योदाहरणम् सूर्योच्चरश्मिः ४।४८।२८ व्येकः ३।४८।२८ अयं दशगुणितः ३०।४८०।२८० तथैव सूर्यचेष्टार-श्मिः २।५२।३० व्येकः १।५२।३० दिग्घतः १०।५२०।३०० व्येकदिग्घ-तसूर्योच्चचेष्टारश्म्योर्योगः ४०।१०००।५८० अस्य दलं २०।५००।२९० तत् षष्ट्यधिकत्वात् षष्ट्यंशोद्धृतं जातं २८।२४।५० एतदिष्टम् । अथ कष्टोदाहरणम् । इष्टं २८।२४।५० एतत् षष्टिवर्जितं ३१।३५।१० जातमेतत्क-ष्टमिति ॥ ४ ॥ अथेष्टकष्टफलसप्तवर्गेषु स्वोच्चादिस्थानविशेषवर्तमानतत्तत्प-तिवशाज्ज्ञेयमित्याह स्वोच्चइत्यादिसप्तमश्लोकपर्यंतम् । स्वोच्चे स्वोच्चादिस्थान-विचारो द्वितीयाऽध्याये नवमश्लोकटीकायां विशदीकृतो बोध्यः । स्वस्वउच्चं तस्मिन् ग्रहवर्तमानराशिवर्गपतिश्चेत् तादिष्टं फलं षष्टिः ६० कलापरिमितं ज्ञेयं अयमुच्चध्रुवांकः ६० एनं षष्टिभ्यो ६० वर्जयित्वा शिष्टं ०।०।० अशुभं कष्टसंज्ञकं ज्ञेयमिति सप्तमश्लोकपूर्वार्धेनान्वयः इति अग्रिमेष्टध्रुवांकेषु कष्टव-

## भाषा ।

अब बृहत् इष्ट कष्ट बल कहते हैं. उच्चराशिका ग्रहका बल६०,मूलत्रिकोणका४५,

## टीका।

गमे षष्टिवर्जनावशेषो ज्ञेयः यथा मूलत्रिकोणे वर्तमानराशिवर्गपतिश्चेत् तदिष्टं इष्टाब्धिः ४५ कलात्मकं अयं ०।० वांकः एनं षष्टिभ्यो ६० वर्जयित्वा शेषं १५ कष्टं एवमेव स्ववर्गे वर्तमानराशिवर्गपतिश्चेत् तदिष्टध्रुवांकः साग्निः ३० अस्मिन्षष्टिवर्जिते शेषं ३० कष्टं तथा अधिसुहृदि अधिमित्रक्षेत्रे ग्रहवर्तमानराशिवर्गपतिश्चेत्तदिष्टध्रुवांकः करकराः २२ एतत् षष्टिवर्जावशेषस्तु ३८ कष्टं ज्ञेयं तथा मित्रर्क्षे मित्रक्षेत्रे ग्रहवर्तमानराशिवर्गपतिश्चेत् तदिष्टं तिथिः १५ अयं ध्रुवांकः षष्टिवर्जितः कृतः शेषं ४५ कष्टं तथा समर्क्षे उदासीनक्षेत्रे ग्रहवर्तमानराशिपतिश्चेत्तदिष्टध्रुवांकः नागाः ८ एनं ६० एषु वर्जयित्वा शेषं ५२ कष्टं तथा शत्रुभे शत्रुक्षेत्रे वर्गपतिश्चेत्तदिष्टध्रुवांकः वेदाः ४ एनं ६० एषु वर्जयित्वा शेषं ५६ कष्टं तथा अति शत्रुभे अतिशत्रुक्षेत्रे वर्गपतिश्चेत्तदा ध्रुवांकः २ षष्टिवर्जनावशेषं ५८ कष्टं नीचे नीचस्थिते ऽवर्गपतौ तदिष्टध्रुवांकः शून्यं० षष्टिवर्जनावशेषः ६० एतत्कष्टं एवं उच्चादिस्थानस्थिततत्तद्वर्गपतिवशात् सप्तवर्गेष्टकष्टं ज्ञेयम्। ननु वर्गपतिवशादिति मूलेनुक्तत्वात् तत्तद्वर्गदृष्ट्यैवेष्टकष्टं कुतो न ग्राह्यमितिचेन्न। केशवदैवज्ञैः "ग्रहाधिपवशात् खेटस्य सप्तैक्यजम्" इतिस्पष्टमुक्तत्वात्। अपि च प्रौढमनोरमाकारेण सोपपत्तिकं "स्वग्रहादिगतानां यद्ग्रहाणामुदितं बलम्। तदेव सप्तवर्गेपि नदीशस्य वशाद्भवेत्" इति श्रीधराचार्यादिवचनप्रमाणसहितं च प्रपंचितं तद्बोध्यम्। अत्रानावश्यकत्वाद्ग्रंथविस्तारभिया न प्रतिपादितं एतत्सर्वफलं केवलं ग्रहवर्गजमेव बोध्यम्। न होराद्रेष्काणादिवर्गजं होरादिवर्गेषु तु तदर्धं त्विति अन्यवर्गे होरादिरूपे तु तदर्धं तस्य स्वोच्चादिविहितपूर्वोक्तस्य अर्धं उक्तध्रुवांकार्धं शुभाशुभं इष्टकष्टसंज्ञकं फलं प्रोक्तं कथितमिति न तु अन्यशब्देन होरादिस्थानग्रहेण किं मानमिति चेत् श्रीपतिपद्धतौ "तद्बलं भवति शेषवर्गजम्" इति। अत्र शेषशब्देन ग्रहेतरहोरादिवर्ग एव स्वीकृतः "इष्टे गेहे तदूनैकमसदथ दलं षट्सु कार्यं तदैके" इति केशवदैवज्ञोक्तेः। मनोरमादिटीकाप्रमाण्यात् युक्तियुक्त-

## भाषा।

स्वराशिका ३०, अधिमित्रका २२, मित्रक्षेत्रका १५, समराशि का ८, शत्रुराशिका

## टीका।

त्वात् शिष्टानुमतेश्चेतिदिक्। अथास्योदाहरणमाह। सूर्यः १०।४।१४ शनिः क्षेत्रगः गृहवर्गपतिः शनिः ५।८।११ स्वस्थानगः अतः तद्बलं स्वक्षेत्रोक्तं ०। ३०।० इष्टबलं प्राप्तं तत् षष्टिवर्जितमवशिष्टं ०।३०।० इति क्षेत्रजकष्टोदाहरणम्। अथ होरादिषट्कोदाहरणम्। सूर्यः १०।४।१४ रविहोरायां वर्तमानः अतो होरापतीरविः शत्रुक्षेत्रस्थः तत्रत्यमिष्टं ०।४।० षष्ट्यूनं ०।५६।० एतन्मूलध्रुवांकतः प्राप्तमपि "तदर्धं तु फलं प्रोक्तमन्यवर्गे" इति विशेषोक्तेः सामान्योक्तिप्राप्तेष्टाः ०।२।० कष्टं तु ०।२८।० एतद्धोराबलोदाहरणम्। अथ द्रेष्काणोदाहरणम्। सूर्यः १०।४।१४ शनिद्रेष्काणस्थः अतस्तत्पतिः शनिः ९।

| अथ अशुभसप्तकवर्गकष्टबलचक्रम्. | | | | | | | | अथ शुभसप्तकवर्गइष्टबलचक्रमिदम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहाः | सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्रहाः |
| ०।३०।० | ०।४५।० | ०।४५।० | ०।३०।० | ०।३०।० | ०।४५।० | ०।३०।० | ग्रह. | ०।३०।० | ०।१५।० | ०।१५।० | ०।३०।० | ०।३०।० | ०।१५।० | ०।३०।० | ग्रह. |
| ०।२८।० | ०।२२।३० | ०।२२।३० | ०।२६।० | ०।२२।३० | ०।२२।३० | ०।२२।३० | होरा. | ०।३।० | ०।७।३० | ०।४।० | ०।७।३० | ०।७।३० | ०।७।३० | ०।७।३० | होरा. |
| ०।१५।० | ०।२६।० | ०।१२।० | ०।२२।३० | ०।२८।० | ०।२२।३० | ०।१५।० | द्रेष्काण. | ०।१५।० | ०।४।० | ०।११।० | ०।७।३० | ०।२।० | ०।७।३० | ०।१५।० | द्रेष्काण. |
| ०।१५।० | ०।०।० | ०।२२।३० | ०।२८।० | ०।०।० | ०।०।० | ०।२६।० | सप्तांश. | ०।१५।० | ०।३०।० | ०।७।३० | ०।२।० | ०।३०।० | ०।३०।० | ०।४।० | सप्तांश. |
| ०।१९।० | ०।१९।० | ०।२२।३० | ०।१८।० | ०।१६।० | ०।२८।० | ०।२२।३० | नवांश. | ०।११।० | ०।११।० | ०।७।३० | ०।११।० | ०।१५।० | ०।२।० | ०।७।३० | नवांश. |
| ०।२२।३० | ०।०।० | ०।१५।० | ०।०।० | ०।२६।० | ०।०।० | ०।१९।० | द्वादशांश. | ०।७।० | ०।३०।० | ०।१५।० | ०।३०।० | ०।४।० | ०।३०।० | ०।११।० | द्वादशांश. |
| ०।१९।० | ०।०।० | ०।१९।० | ०।२८।० | ०।२२।३० | ०।२८।० | ०।२८।० | त्रिंशांश. | ०।११।० | ०।३०।० | ०।११।० | ०।२।० | ०।७।३० | ०।२।० | ०।२।० | त्रिंशांश. |
| २।२८।३० | १।१२।३० | ०।४९।० | २।२९।० | २।२४।० | २।२६।० | २।४३।० | ऐक्य. | १।३२।३० | २।७।३० | १।११।० | १।३०।० | १।३६।० | १।१४।० | १।१७।० | ऐक्य. |

तदर्धं तु फलं प्रोक्तमन्यवर्गे शुभाऽशुभम् ॥ ७ ॥ पंचस्विष्टफलं चादौ षष्ठं सममुदाहृतम् ॥ अशुभास्तु त्रयः प्रो-

## टीका ।

८।११ स्वक्षेत्रगः अतः द्रेष्काणकष्टबलं मूलध्रुवांकतः प्राप्तं स्वक्षेत्रजं ०।३०।० षष्ट्यूनं कष्टं तु ०।३०।० अस्यार्धं ०।१५।० इष्टं षष्ट्यूनं कष्टं ०।१५।० एवं रीत्या होरादित्रिंशांशपर्यंतं ध्रुवांकार्धं ज्ञेयम् न तु गृहवर्गवत् समग्रमिति सर्वत्र बोध्यम् ॥ ५ ॥ ६ ॥ ७॥ एवं स्वोच्चादिनीचांतनवस्थानवर्तमानवर्गपतितारतम्येन नवविधं सर्ववर्गेष्टफलमुक्तं तन्मध्ये शुभाशुभं विभजते पंचस्वित्येकेन । आदौ पंचसु प्रथमोक्तस्वोच्चत्रिकोणस्वक्षाधिमित्रमित्रसंज्ञकेषु पंचसु स्थानेषु वर्तमानवर्गपतेः प्राप्तमिष्टं इष्टफलं शुभफलकं ज्ञेयम् तत उक्तसमसंज्ञकषष्ठस्थानगतवर्गपतेः इष्टं सममुदाहृतं तुल्यशुभाशुभफलकं ज्ञेयम् तत उक्तास्त्रयः शत्र्वधिशत्रुनीचसंज्ञकस्थानत्रयवर्तमाना इष्टप्रदवर्गपतयः अशुभाः दुष्टफलसूचकाः प्रोक्ताः कथिताः अर्थात् शत्र्वधिशत्रुनीचस्थानत्रयवर्गपतिसमुद्भूतं इष्टं कष्टं च द्वे अपि अशुभफले एव तेन तेषां ग्रहवर्गैरुपमितं होरादिवर्गेषु तदर्धं संभावितं अशुभमेवेति तात्पर्यम् इति एवं प्रकारकः

## भाषा ।

४, अतिशत्रुका २, नीचका० यह शुभका बल कह्या यह बलमें अंकोंकू साठमें घटाये तो अशुभकष्ट बल होता है. और होरा, द्रेष्काण.सप्तमांश.नवमांश.द्वादशांश. त्रिंशांश, इनकी राशियोंमें स्वोच्चादिक होवे तो साठ आदि जो बल कह्या है उसका अर्थ फल लेना वैसा पापवर्गमें जानना उसका अन्यवर्ग नाम है उसका बलका निर्णय ऐसा है कि शुभइष्टमें होवे तो शुभका अर्थ लेना पापमें पापका अर्थ लेना ॥ ५ ॥ ६ ॥ ७ ॥ अब पहिले जो उच्चादि नव प्रकारका बल कह्या है उसका शुभाशुभ कहते हैं. जो उच्च, मूल, त्रिकोण, स्वग्रह, मित्रक्षेत्र, अधिमित्रक्षेत्र, यह-पांच स्थानोंके ग्रहोंका बल शुभ जानना, और समक्षेत्रगत ग्रहका बल सम जानना. नीच, शत्रु अधिशत्रु, राशिगतग्रहका बल अशुभ जानना. ऐसा इस शास्त्र-

क्ता इति शास्त्रेषु निश्चयः ॥ ८ ॥ दिग्बलं दिक्फलं तस्य तथा दिनफलं भवेत् ॥ तयोः फलं शुभं प्रोक्तं षष्ट्या वर्ज्यं तथेतरत् ॥ ९ ॥ शुभाधिके शुभं नेष्टमशुभे चाधिके शुभात् ॥ बलैरेव हते स्यातां दृष्टिं हन्यात्स्फुटैव सा॥१०॥ बलैः षड्भिः समेधित्वा समानीतैः पृथक् पृथक् ॥ बलि-

## टीका ।

शास्त्रेषु ज्योतिःशास्त्रेषु निश्चयः निर्णय इति ॥ ८ ॥ अथ दिग्बलं दिनफलं च शुभाशुभफलसहितमाहदिग्बलमितिद्वाभ्याम् । अथ विवक्षितग्रहस्य दिग्बलं उक्तरीत्या प्राप्तं तदेव दिक्फलं तथा ग्रहस्य दिनबलं उक्तरीत्या आनीतं तदेव दिनफलं भवेदिति । नन्वेवं प्राप्ते दिग्दिनफले शुभे अशुभे वा ज्ञेये इति चेदाह तयोः प्राप्तदिग्दिनफलयोः फलं शुभं कल्याणकरं ज्ञेयम् तत्षष्ट्या वर्ज्यं वर्जितं कार्यं एवं कृते यच्छेषं तत् दिग्बलं दिनफलं वा इतरत् शुभादन्यत् अशुभमित्यर्थः एवं संपादितं उभयरूपं फलम् अशुभात् शुभेऽधिके शुभं ज्ञेयं तथैव शुभात् अशुभेधिके नेष्टं अशुभमित्यर्थः अथानयोः दृष्टेश्च स्पष्टीकरणमाह उभे फले बलैः षड्बलैर्हते गुणिते स्फुटं स्यातां तथैव बलैर्दृष्टिं हन्यात् सापि स्फुटा भवति ॥ ९ ॥ १० ॥ अथ पूर्वोक्तं शुभाशुभदिग्दिनफलानयनम् दृष्टिशुभाशुभफलानयनं च विस्तरेण स्फुटमाह बलैरिति सार्धद्वयेन । बलिन इति बलमस्यास्तीति बली तस्य विवक्षितग्रहस्येत्यर्थः पृथक् पृथक्

## भाषा ।

का निश्चय है ॥ ८ ॥अब दिग्बलादिकके ऊपरसे बृहत् इष्टकष्ट लानेकी रीति कहते हैं. दिग्बलका दससे भाग लेके फल लेना, वैसा दिग्बलका पंधरासे भाग लेके फल लेना, और दिनोंकूं एकट्ठे करके जो अंक होवे वो बलकू शुभ जानना. उसकूं साठसे कम किये तो अशुभ बल जानना शुभ जादा होवे तो शुभ जानना, शुभसे अशुभ जादा होवे तो अशुभ जानना. अब इष्ट कष्ट दृष्टी कहते है. पहिले जो चार पांचवें श्लोकमें इष्टबल कष्टबल कह्या है उससे दृष्टीकू गुणन करनेसे इष्टदृष्टी कष्टदृष्टी होती है ॥ ९ ॥ १० ॥ पहिले जो होरा द्रेष्काणादि छः

नश्चोक्तसंज्ञैश्च बलैरेव हरेत्ततः ॥ ११ ॥ तत्तद्बलफलानि स्युरशुभानि शुभानि च ॥ शुभपापफलाभ्यां च दृष्टिं ह-न्याद्बलं तथा ॥ १२ ॥ दृष्टेश्च शुभपापोत्थे बले स्यातां तथैव च॥भावानां च फले प्रोक्ते पतीनां च फले उभे॥१३॥

## टीका।

स्थाने षट्स्थाने इत्यर्थः दिग्बलं दिनबलं च संस्थाप्य समानीतैः पूर्वोक्तरीत्या संपादितैः पृथक् षड्बलैः समेधित्वा सम्यग्वर्धयित्वा गुणयित्वेत्यर्थः उक्तसंज्ञैः एकीकृतैः षड्बलैः पूर्वोक्तपृथग्गुणितं षट्स्थानस्थं हरेत् पृथग्भाजयेत्। ततः षट्फलानामेकीकृतं फलं बलफलं जातं एवं शुभानि अशुभानि बलफलानि नाम दिग्बलफलानि दिनबलफलानि च स्युः। अथैवं दृष्टिशुभाशुभफलानि यथा शुभपापफलाभ्यां पूर्वश्लोकसंपादिताभ्यां दृष्टिं हन्याद्गुणयेत् कथं यथा-बलं प्रागुक्तदिग्दिनबलं सर्वबलपिंडेनापहृत्य तत्तत्फलं कृतं तथैवैतत् कार्यं एवं सति दृष्टेश्च शुभपापोत्थे शुभपापग्रहोत्पन्ने बले इष्टानिष्टबले स्यातां क-थं तदाह तथैव चेति तथैव दिग्दिनबलशुभाशुभफलवत् दृष्टिशुभाशुभबल-फले स्यातामिति ॥ ११ ॥ १२ ॥ अथोक्तमनूद्य सग्रहराशिफलसाधनमाह भावानामिति सार्द्धद्वयेन। भावानां तन्वादीनां फले इष्टानिष्टसंज्ञके प्रोक्ते तथैव पतीनां भावस्वामिनामपि उभे इष्टानिष्टे द्वे फले प्रोक्ते। अथ सः फल-विवक्षितो राशिः ग्रहयुक्तः सग्रहश्चेत् भावसाधनसंगुणे भावफलसाधनविषये इत्यर्थःशुभे शुभग्रहे भावस्थे सति तस्य भावस्य फले फलमध्ये युंज्यात् शुभ-ग्रहफलं मिश्रयेत् कदा शुभे फले सति अशुभे भावफले सति वर्जयेत् शुभे

## भाषा।

बल जुदा जुदा लाये हैं उसकू एकठ्ठा करके ओ पिंडांक भया. उसका पूर्वोक्त इ-ष्ट कष्ट बलके अंकसे भाग लेना जो फल आवे वो बृहत् इष्ट बृहत्कष्ट बल भया जानना, इष्टबलकू शुभ, कष्टबलकू अशुभ जानना, और शुभपापफलांकसे दृष्टिकू गुणन करना, ऐसा बलकू गुणन करना ॥ ११ ॥ १२ ॥ जो फल आवे वो दृष्टि-का और बलका शुभाशुभ फल जानना पहिले जो भावबल कहा है और ग्रहबल

सराशिर्ग्रहयुक्तश्चेद्भावसाधनसंगुणे ॥ फले तस्य शुभे युं-
ज्यादशुभे वर्जयेच्छुभे ॥ १४ ॥ पापश्चेदन्यथा चैवं बले
दृष्ट्यां च तेऽत्र तु ॥ युंज्यादुच्चादिषु फलममित्रादिषु वर्ज-
येत् ॥ १५ ॥ स्थानेचैवंक्रमात्प्रोक्तं करणे चान्यथा क्रमः ॥
राशिद्वयगते भावे तद्राश्यधिपतेः क्रिया ॥ १६ ॥ स्थाना-
धिकस्तु भावेन लाभभावः प्रकीर्तितः ॥ तत्समाने च त-

## टीका।

ग्रहफले शुभे वर्जयेत् । अथ पापश्चेत् पापग्रहो भावस्थो यदि भवति तदा अन्यथा वैपरीत्यं कार्यम् पापस्य अशुभफलं मिश्रयेत् पापस्य शुभफलं वर्जयेदित्यर्थः एवं भावस्थग्रहे भावबलग्रहफलविचारमुक्त्वा भावस्थे ग्रहे बलदृग्बलविचारमाह । अत्र तु भावस्थग्रहविषये बले बलफलविचारे दृष्ट्यां दृष्टिफलविचारे तु भावस्थे ग्रहे उच्चादिषु उच्चत्रिकोणस्वमित्रस्थानवर्तमाने फलं ग्रहे युंज्यात् अमित्रादिषु भावस्थे ग्रहे अमित्राधिशत्रुनीचस्थानवर्तमाने सति वर्जयेत् भावफलं ग्रहफले वर्जयेदिति ॥ १३ ॥ १४ ॥ १५ ॥ अथ स्थानकरणविचारमाह स्थानइत्याद्यध्यायसमाप्तिपर्यंतम् । एवं क्रमात् उक्तक्रमात् स्थाने स्थानविचारेपि कर्तव्यं प्रोक्तं करणे करणविषये तु कर्तव्यस्य अन्यथा क्रमः स्थानापेक्षया विपरीतः क्रमो ज्ञेयः । अथ भावे राशिद्वयगते संधिगते

## भाषा।

कह्या है उसमें जो भाव राशियुक्त होवे और जो ग्रहका क्षेत्र ग्रहयुक्त होवे तो भावसाधन करके उससे गुणन करना. भाव साधनका प्रकार द्वितीयाध्यायके प्रथम श्लोकमें कह्या है. शुभ होय तो फल जोडना, अशुभ होय तो फल हीन करना, और बलका जो फल है उसकू अन्यथा जानना, जैसा शुभ होवे तो हीन करना, पाप होवे तो युक्त करना, दृष्टिमेंभी ऐसा जानना, यह फल उच्चादिकका होवे तो युक्त करना, शत्रुआदिका होवे तो हीन करना ॥ १३ ॥ १४ ॥ १५ ॥ अब अष्टक वर्गमें रेखाका फल कह्या है ओ बिन्दुमें विपरीत जानना. और भावमें दो राशिका स्वामी कहते हैं. भाव और संधिका स्वामी होवे जो लाभदायक जानना. जिस

द्भावे तदानीं स्थानदान् ग्रहान् ॥ १७ ॥ संयोज्य स्थान-संख्यायां दलमेतत्समं भवेत् ॥१८॥ इति श्रीबृहत्पाराश-रहोरायामुत्तरभागे इष्टकष्टवर्णनंनाम तृतीयोऽध्यायः॥ ३॥ विधातृलिखिता या सा ललाटाक्षरमालिका ॥ तस्याः श-

## टीका ।

इत्यर्थः तद्राश्यधिपतेः भावराशिद्वयस्वामिनः क्रिया पूर्ववत् कर्तव्यं बोध्यम् भावेन सहितः ग्रहः स्थानाधिकश्चेत् स लाभभावः लाभदायको भावः प्रकीर्तितः तत्समाने ग्रहसमाने तद्भावे तस्य ग्रहस्य भावे सति तदानीं स्थान-दान् ग्रहान् संयोज्य स्थानसंख्यायां यद्दलमर्धं तत्समं भावफलं ज्ञेयमिति ॥ १६ ॥ १७ ॥ १८ ॥

तृतीयेऽध्यायके चास्मिन्कृतया व्याख्यया मया ॥
गणेशः प्रीयतां देवः सर्वज्ञो बुद्धिचालकः ॥ १ ॥

इति श्रीमद्बृहत्पाराशरहोरायामुत्तरभागे श्रीमद्वेदशास्त्राद्यनवद्यविद्याविद्योतितदिग्मंडलज्योतिर्विज्जटाशंकरात्मजश्रीधरेण विरचितायां सुबोधिनीटीकायामिष्टकष्टवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

द्वादशानां तु भावानां ज्ञेयं फलमथो मुनिः ॥ चतुर्थे रश्मिसंभूतिं तत्फलं चाब्रवीत्स्फुटम् ॥ १ ॥ अथ भगवान् पराशरमहर्षिः मैत्रेयं प्रति चतुर्थाऽध्याये भावाऽवलोकनीयविषयं रश्म्यानयनं तत्फलं च विशदयति । तत्रादौ पूर्वार्जितकर्मानुरूपविधिलिखितशुभाशुभफलसूचकललाटाक्षरफलं जन्मकालीनभावसाधनेन वक्तुं प्रतिजानीते विधात्रिति । सा पूर्वोपार्जितकर्मसमुद्भवा-

## भाषा ।

भावका अधिपति होवे वो भावका लाभ करेगा. और ओ भावका बल जो है वो भावकी राशि संख्यामें मिलायके उसका आधा करना. जो फल आवे वो भावफल जानना ॥ १६ ॥ १७ ॥ १८ ॥इति बृहत्पाराशरहोरायामुत्तरभागे श्रीधरकृतभाषा-टीकायां इष्टकष्टवर्णनं नाम तृतीयोध्यायः ॥ ३ ॥

अब तनू आदि करके बारह भावोंका निर्णय कहते हैं. विधाता जो ब्रह्मा उनोंने संपूर्ण प्राणिमात्रके ललाटमें जो प्रारब्धभोगकर्मकी अक्षरपंक्ति लिखी है उसमें मनुष्यका

रीरकथनं वक्ष्यामि च पृथक् पृथक् ॥ १ ॥ लग्नाच्छरीर-
चिंता च द्वितीयात्स्वं च पैतृकम् ॥ भरणीयं कुटुंबं च
पश्वादि च वदेद्बुधः ॥ २ ॥ तृतीयात्सोदरं बुद्धिं दुःपूर्वां
विक्रमं विदुः ॥ चतुर्थात्पितरं वेश्म सुखं लालित्यमेव च
॥ ३ ॥ सौमनस्यमपत्यानि प्रज्ञां मेधां च पंचमात् ॥

## टीका।

अनिर्वाच्या विधातृलिखिता विधात्रा विश्वसृजा ब्रह्मणा लिखितांऽकिता ल-
लाटे भाले अक्षराणां शुभाशुभज्ञापकवर्णानां मालिका पंक्तिः याऽस्ति तस्याः
शरीरकथनं शरीरस्य स्वरूपस्य कथनं वर्णनप्रकारं पृथक्पृथक् तन्वादिद्वाद-
शभावभेदेनेत्यर्थः वक्ष्यामि कथयिष्यामि ॥ १ ॥ अथ द्वादशभावस्थाने किं
किं विचारणीयं तदाह लग्नादित्यादिसार्धपंचश्लोकपर्यंतम्। लग्नात् तनुभावात्
सकाशात् शरीरस्य देहस्य चिंता विचारः कार्श्यादि गौरत्वादि विवेक इत्य-
र्थः। द्वितीयात् धनभावात् स्वं स्वीयं पैतृकं पितृसंबंधि च धनं द्रव्यं तथा
भरणीयं पोषणीयं भृत्यादीत्यर्थः, तथा कुटुंबं स्त्र्यादिवश्यमित्यर्थः, तथा
पश्वादि पशवः आदयो यस्मिंस्तत् गोश्वपक्षिवृक्षादीत्यर्थः वदेत् कथयेत्
बुधः ज्योतिर्वित् ॥ २ ॥ तृतीयात्सहजभावात् सोदरं समानमुदरं यस्य
तत् साक्षात् भ्रात्रादि तथा दुःपूर्वां बुद्धिं दुरिति उपसर्गः पूर्वः प्रथमो यस्याः तां
दुर्बुद्धिं दुष्टमनीषां तथा विक्रमं पराक्रमं च विदुः बुबुधुः। चतुर्थात् सुहृद्भावात्
पितरं स्पष्टं तथा वेश्म गृहं तथा सुखं स्पष्टं तथा लालित्यं ललितस्य सुंदरस्य
भावः तथोक्तं च ॥ ३ ॥ पंचमात् भावात् सौमनस्यं सुष्ठु च तन्मनश्च तस्य

## भाषा।

विशेषकरके फल है. वो अक्षरपंक्ति प्रत्यक्ष दिखपडती नहीं है. वास्ते वो अक्षरपंक्तिके
देहका वर्णन पृथक् पृथक् कहते हैं. तन्वादिक बारह भावोंका फल कहताहूं ॥ १ ॥
लग्नसे शरीरसंबंधि सब विचार देखना, धन भावसे स्वउपार्जित द्रव्य और पितृसंबंधी
द्रव्यका सेवकका, स्त्री आदि कुटुंबका, पशुवोंका, पक्षी वृक्षादिकोंका, विचार दे-
खना ॥ २ ॥ तीसरे भावसे भाइयोंका, दुष्टबुद्धिका, पराक्रमका, विचार देखना.
चौथे भावमें घरोंका, सुखका, सुंदरताका, पितरका, विचार देखना ॥ ३ ॥ पंच-

हानिं व्याधिमरिं षष्ठान्मैथुनं स्त्रीं जयं ततः ॥ ४ ॥ मृतिं पराजयं दुःखं हानिं व्याधिं तथाष्टमात् ॥ सौशील्यभाग्यधर्मांश्च नवमाद्दशमात्तथा ॥ ५ ॥ मानास्पदाज्ञाकर्माणि आयादर्थं व्ययाद्व्ययम् ॥ दिग्भवेष्विषुसप्ताष्टशगाःस्वो-

## टीका ।

भावः मनःप्रसन्नतामित्यर्थः तथा अपत्यानि पुत्रादीनि तथा प्रज्ञां प्रकर्षेण ज्ञायते अनयेति विशेषबुद्धिं तथा मेधां धारणावतीं बुद्धिं च विचारयेत् । षष्ठात् रिपुभावात् हानिं द्रव्यादिनाशं तथा व्याधिं रोगं अरिं शत्रुं च वदेत् । ततः नाम सप्तमभावात् मैथुनं मिथुनीभावं तथा स्त्रीं भार्यां तथा जयं उत्कर्षं च वदेत् ॥ ४ ॥ अष्टमात् मृत्युभावात् मृतिं मरणं तथा पराजयं पराभवं तथा दुःखं व्यसनं तथा हानिं नाशं तथा व्याधिं रोगं च वदेत् । नवमात् भाग्यभावात् सौशील्यं सुशीलतां च भाग्यं वैभवं धर्मो विध्युक्ताचरणं चेति द्वंद्वसमासः तान्वदेत् तथा तेन प्रकारेण दशमात् कर्मभावात् ॥ ५ ॥ मानास्पदाज्ञाकर्माणि मानं सत्कारं तथा आस्पदं स्थानं तथा आज्ञां भृत्यादिप्रेरणाम् तथा कर्माणि शुभाऽशुभाचरणानि च द्वंद्वः तानि वदेत् । आयादेकादशभावात् अर्थं द्रव्यादभीष्टलाभं वदेत् । व्ययात् द्वादशभावात् व्ययः द्रव्यादिव्ययं चेति कथयेत् । एवं भावविचारणीयमुक्त्वा फलविशेषं वक्तुं रश्मीन्साधयति दिगित्यादिसार्धसप्तमश्लोकपर्यंतम् । तत्रादौ सर्वरश्मिसाधनाय उच्चरश्मिध्रुवांकानाह । स्वोच्चे उच्चस्थे रव्याद्यन्यतमे ग्रहे सति रवेः सूर्यात्सकाशाद् ग्रहाणां क्रमात् दिशः

## भाषा ।

म भावसे मनप्रसन्नताका, पुत्रादिकोंका, सुबुद्धिका, धारणाशक्तिका विचार देखना. षष्ठ भावसे हानिका, द्रव्यादिनाशका, व्याधिरोग, शत्रु. इनोंका विचार देखना. सप्तम भावसे मैथुनका, भार्याका, जयका, उत्कर्षताका विचार कहना ॥ ४ ॥ अष्टमभावसे मरण, पराजय, (हारना.)दुःख. व्यसन. हानि. व्याधि. रोग. कहना. नवम भावसे सुशीलता, भाग्य. वैभव. धर्म इसका विचार करना ॥ ५ ॥ दशम भावसे सत्कार, स्थान, आज्ञा, शुभाऽशुभ कर्म. इसका फल कहना. ग्यारहवें भावसे इच्छित द्रव्यादि प्राप्तिका विचार करना. बारहवें भावसे उत्तम नीच

**च्चे करा रवेः ॥ ६ ॥ नीचेन चांतरा प्रोक्ता रश्मयस्त्वनुपातजाः ॥ नीचोनं तु ग्रहं भार्धाधिके चक्राद्विशोधयेत् ॥ ७ ॥ स्वीयरश्मि हतं षड्भिर्भजेत्स्यूरश्मया स्वकाः ॥**

## टीका ।

१०, भवाः ११, इषवः ५, सप्त ७, अष्टौ ८, शरः ५, द्वंद्वसमासः एते क्रमाद्रविचंद्रभौमबुधगुरुशुक्रशनीनां कराः रश्मिध्रुवांका बोध्याः ॥ ६ ॥ नीचे तु न ध्रुवांका न संति अंतरे उच्चनीचमध्यवर्त्यारोहाऽवरोहमूलत्रिकोणादिसर्वस्थले तु अनुपातजाः अनुपाताद्वक्ष्यमाणाज्जायंते ते तथा रश्मयो बोध्याः । अथानुपातरीतिमाह । ग्रहं रश्मिचिकीर्षमाणं रव्याद्यन्यतमं तु नीचोनं नीचेन हीनं कृत्वा भार्धाधिके षड्राश्यधिकेऽवशिष्टे सति चक्राद्राशिसमूहात् द्वादशराशिभ्य इति यावत् विशोधयेत् ॥ ७ ॥ ततः स्वीयरश्मिहतं स्वस्य विहिताः स्वीयाः अत्र स्वस्य चेति वार्तिकेन कुकाभाव्यं परमार्षत्वे दोषप्रसंगाभाव इति वेदितव्यं । पूर्वोक्ता दिग्भवेत्यादयः ये रश्मयः तैः हतं कृत्वा षड्भिः ६ अंकैः भजेत् एवं स्वकाः स्वीयाः रश्मयः स्युः भवेयुः । अथास्योदाहरणम् । रविः १०।४।१४।० रविनीचं ६।१०।०।० अनेन हीनो जातः ३।२४।१४।० रव्युच्चध्रुवांकाः १० एभिर्गुणनेन जाताः ३०।२४०।१४०।० अंशादिपरिमाणाधिक्यात्षष्ट्युद्धृता जाताः ३४।२।२०।० एते षड्भक्ताः जाताः ५।४०।२३।० जातोऽयमनुपातजोरविरश्मिः एवं सर्वत्र ज्ञेयम् ॥ ७ ॥ एवं स्वोच्चादिराशिस्थितानां ग्रहाणां रश्म्यानयनमुक्त्वा

## भाषा ।

मार्गसे द्रव्यखर्चका विचार देखना. अब ग्रहोंका उच्चरश्मिसाधन कहते हैं. उसमें पहले उच्चके ध्रुवांक कहते हैं. सूर्यके १०, चंद्रके ११, मंगलके ५, बुध ५, गुरु ७, शुक्र ८, शनिके ५, यह रश्मिके ध्रुवांक कहे ॥ ६ ॥ नीचके ध्रुवांक नहीं हैं. उच्च नीचादि स्थलोंमें अनुपातसे रश्मि जानना. स्पष्ट ग्रहकूं नीचमें हीन करके छः राशिसे जादा होवे तो बारहमें शोधन करके ७ शेषकूं अपने रश्मि ध्रुवांक जो पहले कहे हैं उस अंकसे गुणन करना पीछे छःसे भाग देना, जो लब्ध आवे वो रश्मि जानना ॥ ७ ॥ अब षड्वर्ग उच्चरश्मिका विशेष

| अथ रश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ५ | २ | ३ | १ | १ | ६ | २ | २४ |
| ४० | ३१ | ४५ | ४३ | २२ | ५३ | २६ | २३ |
| २३ | १२ | ४६ | ४१ | २५ | ३८ | २६ | ३२ |

उच्चस्वर्क्षसुहृत्सूर्यभागेऽगाब्धिद्विसंगुणाः ॥ ८ ॥ नीचारि-
द्वादशांशे तु नृपांशोनाः कराश्च ते ॥ मूलत्रिकोणस्वर्क्षा-

## टीका ।

तेषां स्वोच्चादिराशिवर्तमानानामेतदन्यराशिवर्तमानानामपि द्वादशांशे-
शवक्ष्यमाणस्वोच्चादिस्थितानां विशेषसंस्कारांतरेण रश्म्यानयनमाह उच्चस्वे-
त्यादिसार्धाष्टमश्लोकपर्यंतम् । अथ कस्मिन्नपि राशौ उच्चस्वर्क्षसुहृदां स्वोच्च-
स्वक्षेत्रस्वमित्राणां सूर्यभागे द्वादशांशे सति क्रमात् अंगानि ६, अब्धयः ४,
द्वौ २, एभिःसम्यग्गुण्यंते ते संगुणाः गुणिताः कार्या इत्यर्थः । अपि च नी-
चार्योः स्वनीचस्वशत्र्वोः द्वादशांशे सति तु नृपांशोनाः षोडशांशहीनाः
कार्याः । एवमुच्चाद्युक्तपंचकद्वादशांशवर्तमानानां विशेषसंस्कारेण ते पूर्वो-
क्ताः कराः रश्मयः स्पष्टा भवेयुः । अथास्योदाहरणम् । रविः १०।४।१४।०
अयं मीनद्वादशांशे वर्तमानः द्वादशांशपतिर्गुरुः रवेः पंचधा मैत्र्यां समः अ-
तोऽस्य स्वोच्चाद्युक्तद्वादशांशाभावात् द्वादशांशोपलक्षितविशेषसंस्काराभा-
वः । अथ चंद्रः ८।२५।२९।० अयं तुलाद्वादशांशेवर्तमानः द्वादशांशप-
तिः शुक्रः चंद्रस्य पंचधा मैत्र्यां मित्रं अतोऽस्य द्वादशांशोपलक्षितमित्र-
द्वादशांशसंस्कारे यथा मूलरश्मिः २।३१।१३ अयं द्विगुणितः ५।२।२६
एवं सर्वत्र द्वादशांशोपलक्षितविशेषसंस्कारो बोध्य इति ॥ ८ ॥ अथ नवां-
शादिवक्ष्यमाणांशैर्मूलत्रिकोणादिवक्ष्यमाणस्थानस्थितानां विशेषरश्मिसं-

## भाषा ।

अथ द्वादशांशरश्मिचक्रमिदं.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | अ. |
|---|---|---|---|---|---|---|---|
| ० | ५ | २२ | ० | ० | २७ | २ | [illegible] |
| ० | २ | ३४ | ० | ० | ३४ | १३ | २८ |
| ० | २६ | २६ | ० | ० | ३२ | १७ | ४१ |

संस्कार कहते हैं. जो ग्रह द्वादशांशमें होवे वहां राशि
द्वादशांशकी उच्चकी होवे तो ६ से गुणना, स्वक्षेत्र होवे
तो ४ से गुणन करना, स्वमित्र राशि होवे तो २ से गु-
णन करना, नीच शत्रु राशिका द्वादशांश होवे तो सोल-
हका अंश हीन करना. इस रीतिसे उच्चादि पूर्व कहे हुवे पंचक, द्वादशांशोंमें वर्त-
मान विशेष संस्कारसे पूर्वोक्त कर और रश्मि स्पष्ट होते हैं ॥ ८ ॥ अब नवमांश,
द्रेष्काण, होरा, त्रिंशांश, उच्चरश्मिका विशेष संस्कार कहते हैं. जो कोई स्पष्ट ग्र-
हका पहिले उच्चरश्मि फल लाये हैं उसमें संस्कार करना, वो ग्रहकी राशि अंश

## टीका ।

स्कारांतरमाह मूलत्रिकोणेत्यादिसार्धदशश्लोकपर्यंतम् । मूलत्रिकोणस्वर्क्षाधिमित्रमित्राणां मध्ये प्रत्येकं मित्रेति लुप्तविभक्तिकं पदं तेनात्र षष्ठीबहुवचनं बोध्यं नवांशके वा द्रेष्काणे वा होरायां वा त्रिंशांशे वा सति मूलरश्मयः अष्टघ्नाः अष्टाभिर्हन्यंते गुण्यंते ते तथोक्ताः पश्चात् क्रमात् यथाक्रमं द्व्यब्धिषट्सप्तभिः भक्ताः भाजिताः तथोक्ताः पश्चात् अनेन भागेन युक्ता मिलितास्ते मूलरश्मयः तु स्पष्टं रश्मयो भवंति । एतदुक्तं भवति नवांशद्रेष्काणहोरात्रिंशांशान्यतमवर्गे मूलत्रिकोणस्थितस्य ग्रहस्य उक्तध्रुवांकोत्पन्नमूलरश्मयः अष्टघ्नाः कृत्वा द्वाभ्यां भागमाहृत्य ध्रुवांकोत्पन्नरश्मिषु योजयेत् एवं क्रमात् नवांशाद्युक्तान्यतमवर्गे स्वर्क्षाधिमित्रमित्रान्यतमस्थानस्थितस्य ग्रहस्य ध्रुवांकोत्पन्नमूलरश्मयः अष्टघ्नाः क्रमात् गृहीताब्धिषट्सप्तांशेन युक्ता मूलरश्मय एव स्पष्टा भवेयुरिति । अथ नवांशद्रेष्काणहोरात्रिंशांशान्यतमवर्गे अरौ अरिस्थाने 'अध्यरि' अत्र विभक्त्यर्थे "अव्ययं विभक्ति" इत्यादिना समासस्याव्ययत्वात् 'अव्ययादाप्सुप' इति विभक्तिलुक् अध्यरिस्थाने अथ वा नीचे स्वनीचस्थाने वर्तमानग्रहस्य मूलध्रुवांकोत्पन्नरश्मयः क्रमात् वेदद्वयखिलहीनकाः यथाक्रमं चतुर्भिः द्वाभ्यां सर्वेण अंशमाहृत्य स्वस्मिन्नेव ऊनयेत् । ते स्पष्टा रश्मयो भवेयुः। अत्रेदं तत्त्वं नवांशाद्युक्तान्यतमवर्गे अरिस्थानस्थितस्य ध्रुवांकोत्पन्नरश्मयः स्वचतुर्थांशहीनाः तथा अध्यरिस्थानस्थितस्य मूलरश्मयः अर्धावशेषिताः तथा नीचस्थानस्थितस्य सर्वेण हीनाः शून्यरूपाः स्पष्टा भवेयुरिति तात्पर्यम् । अत्रोदाहरणम् । रविः १०।४।१४ वृश्चिकनवांशे वर्तमानः तत्पतिर्भौमो रवेः पंचधामैत्र्यां अधिमित्रं अतः रविध्रुवोत्पन्नरश्मयः ५।४०।३३ एते अष्टघ्नाः ४०।३२०।१८४ षष्ट्युद्धृताः ४५।२३।४ अधिमित्रभाजकांकाः ६ एभिर्भाजिताः ७।३३।५० एते मूलरश्मिषु योजिताः १३।१४।१३ जातोयं नवांशेनाधिमित्रस्थानस्थितस्य रवेः विशेषसंस्कारतः स्पष्टरश्मिः । एवं मूलत्रिकोणस्वर्क्षमित्रस्थानेषु सर्वत्र बोध्यम् । अथ नीचस्थोदाहरणम् । चंद्रः ८।२५।२९।० अयं वृश्चिकनवांशे वर्तमानः तत्पतिर्भौमः स च पंचधामैत्र्यां चंद्रस्य मित्रं । अत्र मित्रस्थानविहितसंस्कारः, मूलरश्मयोऽष्टघ्नाः तत्सप्तांशयोजिताः स्पष्टा भवेयुः तथापि चंद्रस्य स्वनीचनवांश-

धिमित्रमित्रनवांशके ॥ ९ ॥ द्रेष्काणेऽपि च होरायां त्रिंशांशे च क्रमात्तथा ॥ अष्टघ्ना द्व्यब्धिषट्सप्तभक्ता युक्तास्तुरश्मयः॥१०॥अरावध्यरिनीचे च वेदद्व्यखिलहीनकाः॥

## टीका ।

स्थितत्वात् द्वितीयो नीचांशसंस्कारोपि प्राप्तः तस्मिन्सति रश्म्यभावः शून्यफलकत्वादिति एवं अरावध्यरि च बोध्यम् ॥ ९ ॥ १० ॥ अथ रश्मीन्प्रकारांतरेण स्पष्टयति उच्चेत्यादित्रयोदशश्लोकपर्यंतम् । अंशपतावुच्चे सति प्राग्ध्रुवांकोत्पादितरश्मयः त्रिगुणं तत्सर्वं त्रिगुणं प्रोक्तं त्रिगुणिताः स्पष्टास्स्युरित्यर्थः । रश्मिपतौ स्वत्रिकोणे मूलत्रिकोणे सति मूलध्रुवांकोत्पादितं सर्वं द्विसं-

## भाषा ।

कलादिकमें देखके नवमांश, द्रेष्काण, होरा, त्रिंशांशमें देखना कि मूलत्रिकोणमें राशि है, या स्वक्षेत्र है, या अधिमित्रकी राशि है, मित्रकी राशिहै, पीछे पहिलेका उच्चरश्मिफलकूं अठगुणाकरके मूल त्रिकोणका नवमांशादिक वर्ग होवे तो दोसे भाग लेना, स्वक्षेत्रका वर्ग होवे तो चारसे भाग लेना, अधिमित्रका वर्ग होवे तो छःसे भाग लेना, मित्रका होवे तो सातसे भाग लेना, मूलरश्मिमें मिलाना तो अपने अ-

| अ.न.मा.मू त्रिकोणर.च.मि.मा. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| १३ | ० | ८ | ५ | २ | ० | ५ | ३३ |
| १४ | ० | २ | १० | ५६ | ० | १३ | ३८ |
| १३ | ० | ४७ | ४३ | ३६ | ० | ४७ | ६ |

| अथ द्रेष्काणरश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ० | ५ | ११ | ४ | ० | ० | ० | २१ |
| ० | ५९ | १७ | १० | ० | ० | ० | २७ |
| ० | ३० | १८ | २२ | ० | ० | ० | १० |

| अथ होरारश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| १७ | ७ | ८ | ० | ० | ० | ० | ३४ |
| १ | ३३ | ४६ | ० | ० | ० | ० | २१ |
| ९ | ३९ | ४७ | ० | ० | ० | ० | ३५ |

| अथ त्रिंशांशरश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ० | ५ | ११ | ० | ६ | ० | ० | २२ |
| ० | २४ | १७ | ० | ५२ | ० | ० | ३३ |
| ० | २ | १८ | ० | ५ | ० | ० | २५ |

पने वर्गकी उच्चरश्मी आती है. जो कभी पुर्वोक्त ग्रहोंमें. नवमांशादि वर्गोंमें शत्रुराशि होवे तो चारका भाग लेके मूलरश्मिमें हीन करना, अति शत्रु राशि होवे तो दोका अंश हीन करना, नीच राशि होवे तो शून्य मांडना ॥ ९ ॥ १० ॥ अब पूर्वोक्त रश्मिबलकूं विशेषकरके स्पष्ट करते हैं. अंशपति उच्चका होवे तो ध्रुवांकोंसे

उच्चे च त्रिगुणं प्रोक्तं स्वत्रिकोणे द्विसंगुणम् ॥ ११ ॥ स्वर्क्षे त्रिघ्ना द्विसंभक्तास्त्वधिमित्रगृहेपि च ॥ वेदघ्ना रामसंभक्ता मित्रभे षड्गुणास्ततः ॥ १२ ॥ पंचभक्तास्तथा शत्रुगृहे द्विघ्नाश्चतुर्हृताः ॥ अतिशत्रोः करघ्नाश्च पंचभक्ता

## टीका ।

गुणं द्वाभ्यां सम्यग्गुणिताः स्पष्टाःस्युः रश्मिपतौ स्वर्क्षे स्वक्षेत्रगे सति मूलध्रुवांकसाधिता रश्मयः त्रिघ्नाः त्रिभिर्गुणिताः द्विसंभक्ताः द्वाभ्यां भाजिता अर्धावशेषिता इत्यर्थः अपि च अधिमित्रगृहे रश्मिपतौ मूलरश्मयः वेदघ्नाः चतुर्भिर्गुणिताः रामसंभक्ताः त्रिभिर्भाजिताः तृतीयांशावशेषिता इत्यर्थः स्पष्टाः स्युः रश्मिपतौ मित्रभे मित्रक्षेत्रगे मूलरश्मयः आदौ षड्गुणाः षड्भिर्गुणिताः ततः पश्चात् पंचभक्ताः पंचभिर्भक्ताः पंचावशेषिता एव स्पष्टाः स्युः तथा तेन प्रकारेण रश्मिपतौ शत्रुगृहे शत्रुक्षेत्रस्थे द्विघ्नाः द्विगुणिता मूलरश्मयः चतुर्हृताः चतुर्भिर्भाजिताः चतुर्थांशाऽवशेषिताः स्पष्टाः स्युः अतिशत्रुगृहे अतिशत्रुक्षेत्रस्थे रश्मिपतौ सति मूलरश्मयः करघ्नाःद्विगुणिताः च पश्चात् पंचभाजिताः पंचांशावशेषिताः स्पष्टाः स्युरिति । अथास्योदाहरणम् । चंद्रः ८।२५।२९ अयं धनूराशिवर्तमानोऽस्य पतिर्गुरुश्चंद्रस्य पंचधा मैत्र्यां मित्रं अतोऽस्य मित्रक्षेत्रे विहितं संस्कारो यथा मूलध्रुवांकानीतचंद्ररश्मयः २।३१।१३ एते षड्गुणिताः १२।१८६।७८ षष्ट्युद्धृताः १५।

## भाषा ।

करी हुई रश्मिकू त्रिगुणित करनेसे स्पष्ट होती है. रश्मिपति मूल त्रिकोणमें होवे तो पूर्वरश्मिकू द्विगुणित करनेसे स्पष्ट होती है. रश्मिपति स्वराशिका होवे तो पूर्व रश्मिकू द्विगुणित करके इसका अर्ध भाग करना. सो स्पष्ट रश्मि होती है. रश्मिपति अधिमित्र घरमें होवे तो पूर्वरश्मिकूं चतुर्गुणित करके तीनसे भाग लेना, जो लब्ध आवे वो रश्मिबल स्पष्ट जानना. रश्मिपति मित्रराशिमें होवे तो पूर्वरश्मिकूं छः गुणित करके पांचका भाग लेना, लब्ध जो आवे वो स्पष्टरश्मि जानना. रश्मिपति शत्रुराशिका होवे तो पूर्वरश्मिकू दुगुनी करके चारका भाग लेके जो लब्ध आवे वो स्पष्ट रश्मि जानना. रश्मिपति अति शत्रुके राशिमें होवे तो पूर्वरश्मिकूं

न नीचभे ॥ १३ ॥ शनिं सितं विना ताराग्रहा अस्तंगता यदि ॥ विरश्मयो भवंत्येवं वक्रादौ द्विगुणास्ततः॥१४॥ अनुपातोऽन्तरे वक्रं त्यागेऽष्टांशविहीनकाः ॥ मंदायां दशभागोना वस्वंशोनाः कराः स्मृताः ॥ १५ ॥ तथा शी-

## टीका।

७।१८ एते पंचभक्ताः ३।११२७ जातोऽयं विशेषसंस्कृतश्चंद्ररश्मिः स्पष्टइति॥११॥१२॥१३॥ अथ मतांतरेण गतिवशाद्रश्मीनां ह्रासवृद्धी आह शनिमित्यादिषोडशश्लोकपर्यंतम्। यदि यर्हि शनिं सितं विना शनिशुक्राव्यतिरेकेण ताराग्रहाः भौमादयः अस्तंगताः रविरश्मिलुप्तकिरणाश्चेत् तर्हि भौमबुधगुरवः विरश्मयः रश्मिहीनाः भवेयुः एवं प्रकारेण वक्रादौ वक्रारंभे द्विगुणाः मूलरश्मयः द्विगुणिताः स्पष्टाः स्युः वक्रत्यागे वक्रांते अष्टांशविहीनकाः अष्टभागोनाः स्पष्टाः स्युः अंतरे वक्रं वक्रत्यागमध्यभागे अनुपातः त्रैराशिकगणितेन वक्राद्यंकवक्रत्यागांकानां मध्यांकोत्पादनं तेन मध्यरश्मयः स्पष्टाः स्युः मंदायां रश्मिपतिगतौ दशभागोनाः स्वदशांशहीनाः मूलरश्मयः स्पष्टाः स्युः मंदतरायामित्यध्याहारः गतौ तु वस्वंशोनाः स्वाष्टांशहीना मूलरश्मयः स्पष्टाः स्युः तथा तेनैव प्रकारेण शीघ्रायां गतौ अंगांशोनाः स्वषष्ठांशोनाः तथा शीघ्रतरायां तु वेदांशोनाः स्वचतुर्थांशहीनाः स्पष्टा रश्मयो भवंति इति केचिद्वदंतीति केचिच्छब्देन नैतन्मुख्यमतमिति ध्वनि-

## भाषा।

दुगुनी करके पांचसे भाग लेना, लब्ध जो आवे वो स्पष्ट रश्मि जानना. रश्मिपति नीचका होवे तो विशेष संस्कार नहीं है ॥ ११ ॥ १२ ॥ १३ ॥ अब मतांतरसे रश्मियोंका हानिवृद्धिका लक्षण कहते हैं. जो कभी शनि शुक्र यह दोनों विना मंगल, बुध, गुरु यह तीनों ग्रह अस्तंगत होवे तो उनोंका रश्मि हीन जानना. रश्मिपति वक्रारंभमें होवे तो पूर्व रश्मि द्विगुणित करनेसे स्पष्ट होती है. वक्रीके अंतमें रश्मिपति होवे तौ पूर्वरश्मिकूं ८ आठसे भाग लेना जो लब्ध आवे वो स्पष्ट रश्मि होती है. वक्रगतिसे मध्यभागसे होवे तो त्रैराशिकके गणितमार्गसे फल लब्धके

घ्रतरायां च वेदांशोनाः कराः स्मृताः ॥ अंगांशोनाश्च शीघ्रायां केचिदेवं वदन्ति हि ॥ १६ ॥ वक्रानुवक्रा विकला शीघ्रा शीघ्रतरा गतिः ॥ वृद्धिहीने तु शिष्टे द्वे वर्जनीये समासमा ॥ १७ ॥ योगेषु ये ग्रहाः प्रोक्तास्तेषां यो-

## टीका ।

तम् ॥१४॥१५॥१६॥अथैकविंशतितमश्लोके रश्मीनां ग्रहगतिसंज्ञारूपतःफलानि निर्णयिष्यन्नादौ अष्टविधसंज्ञा आह वक्रेति । वक्रा १, अनुवक्रा २, विकला ३, शीघ्रा ४, शीघ्रतरा ५, अपि च इमे शीघ्रे शीघ्रतरे एव वृद्धिहीने सत्यौ तु वृद्ध्या वर्धनेन हीने रहिते तथोक्ते तु शिष्टे नाम मंदमंदतरे ६।७ भवतः अथाष्टमी समा तु द्वे वर्जनीये वर्जितुं योग्ये कृते तु समासमा द्विप्रकारकसमा भवति । अत्रेत्थं तत्वं।शीघ्रतरा वृद्धिहीना जाता सती मंदसंज्ञका षष्ठी गतिः भवति तथा शीघ्रा वृद्धिहीना सती मंदतरा सप्तमी गतिर्भवति तथा च मंदया शीघ्रा हीना कृता समा तथैव मंदतराया शीघ्रतरा हीना कृता सती समैव एवं द्विप्रकारेण समत्वं समासमा इति द्विरुक्त्योपलभ्यते इति अष्टमी समा संज्ञका ज्ञेयेति अष्टविधा गतिरुपदिष्टा। एतल्लक्षणानि सूर्यसिद्धांतादिष्ववगंतव्यानि ॥१७॥ अथ प्राप्तरश्मिषु योगविशेषेण ह्रासवृ-

## भाषा ।

पूर्वरश्मिकू स्पष्ट करना. रश्मिपतिकी गति मंद होवे तो पूर्वरश्मिका दशांश लेके पूर्वही रश्मिमें हीन करना तो स्पष्ट होती है. रश्मिपतिकी गति बहुत मंद होवे तो अष्टमांश हीन करना. शीघ्र गति होवे तो छठा भाग हीन करना. शीघ्र तर गति होवे तो चतुर्थांश हीन करना. ऐसा कितनेक ऋषि कहते हैं ॥ १४ ॥ १५ ॥ १६ ॥ अब गतिके अठ भेद कहते हैं. वक्रगति १, अनुवक्रा गति २, विकला गति ३, शीघ्रगति ४, शीघ्रतरा गति ५, मंदगति ६, मंदतरगति ७, समासमा गति ८, वो वर्ज करनेयोग्य हैं. शीघ्रतरगति वृद्धिहीन भई इसकूं मंदगति कहना. वैसी शीघ्रगति वृद्धिहीन भई तो अतिमंदतर गति कहना. विशेष टीकामें स्पष्ट है ॥१७॥ अब राजयोग दरिद्रयोग होवे तब रश्मिका विशेष संस्कार

अथ मतांतररश्मिचक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
|---|---|---|---|---|---|---|---|
| ० | ३ | ५ | ० | १ | २० | ३ | ३४ |
| ० | १ | १ | ५१ | ३८ | ४० | ३९ | ५३ |
| ० | २७ | १ | ५१ | ५४ | ५४ | ३९ | ४६ |

गे च रश्मयः ॥ पापसौम्यारिमित्राणां योगे हानिश्च कीर्तिताः ॥ १८ ॥ उच्चादिषु च पूर्वोक्तः पापो बलवशाद्भवेत् ॥ १९ ॥ चतुर्गुणा राजयोगे पूर्वन्यायेन बोधिताः ॥

## टीका ।

द्धी आह । योगेष्विति योगेषु राजयोगदारिद्र्यादिसंज्ञकेषु ये योगकर्तारो ग्रहाः प्रोक्ताः तेषां योगे सति दुष्टशुभयोगकारकसंबंधतारतम्येन रश्मयः स्पष्टाःस्युः। एतदुक्तं भवति राजयोगकारकग्रहस्य दारिद्र्ययोगकारकग्रहेण योगे एकराशिसंबंधे सति दारिद्र्यकारकग्रहप्राप्तरश्मिभीराजयोगकारकग्रहरश्मीन्संशोध्यावशिष्टा राजयोगकारकग्रहरश्मयो ज्ञेयाः एवं राजदारिद्र्ययोगकारकयोरेव द्वयोस्त्रयाणां वा संयोगे तयोस्तेषा वा रश्मिमीलनेन स्पष्टरश्मयस्तयोस्तेषां वा ज्ञेया इतिदिक् । एवमेव शुभाशुभग्रहयोगेन रश्मीनां ह्रासवृद्धी विशदयत्युत्तरार्धेन । पापः खलः सौम्यः शुभः अरिः शत्रुः मित्रं सुहृत् एतेषां योगे एकराशिसंबंधे सति हानिः पापरश्मिभिः शुभरश्मीनां अरिरश्मिभिः मित्ररश्मीनां हानिः ह्रासः एवमर्थात्सौम्यानां मित्राणां च योगे एव रश्मयः कीर्तिताः कथिता इति ॥ १८ ॥ अथोच्चादीनां पापानां च रश्मीनाह उच्चेति । उच्चादिषु नीचांतपूर्वोदितनवस्थानेषु पापानां च रश्मीनाह उच्चादिषु उच्चत्रिकोणस्वर्क्षादिनीचांतनवलक्षणेषु पूर्वोक्तो रश्मिः बोध्यः पापः पापग्रहरश्मिस्तु दलवशात् मूलरश्मिः बलतारतम्येन न्यूनातिरिक्तो भवेत् ॥ १९ ॥ अथ राजयोगकारकग्रहाणां ध्रुवांकैः प्राग्वत् रश्मीनाह चतुर्गुणाइ-

## भाषा ।

कहते हैं. राजयोग करनेवाले ग्रह और दरिद्रयोग करनेवाला ग्रह यह दोनोंका एकराशिसंबंध होवे. दरिद्र करनेवाले ग्रहकी रश्मिकू राजयोग करनेवाले रश्मिमें न्यून करके जो राजयोग ग्रहकी शेष रहे वो स्पष्ट जानना. ऐसा शुभाशुभ शत्रुमित्रादिक ग्रहोंका एकराशिसंबंधसे उपर लिखे हुवे प्रकारसे कहना ॥ १८ ॥ अब पहिले जो उच्चादिक नव स्थान कहे हैं उसमें पापग्रहोंकी रश्मिका निर्णय कहते हैं. उच्चादि नव स्थानोंमे रश्मि पहिले सरिखे जानना. पापग्रह रश्मिको बलवान्पना देखके कमजास्त करना ॥ १९ ॥ अब पहिले जो रश्मिबल

पंचाष्टषण्नवाष्टांकवेदाः स्यूरश्मयः स्वकाः ॥२०॥ द्विग्र-
हादिषु योगेषु ग्रहभावफलाहताः ॥ गतिसंज्ञानुरूपेण

## टीका ।

ति । राजयोगे राजयोगकारकग्रहे पूर्वन्यायेन नीचोनमिति सप्तमश्लोकोक्तेन रश्मयो बोधिता ज्ञापिताः तत्र विशेषस्तु दिगित्यादिषष्ठश्लोकोक्तध्रुवांकस्थानापन्नानन्यध्रुवांकान्नव्यादिसप्तग्रहविहितानाहोत्तरार्धेन पंच ५ रवेः, अष्टौ ८ चंद्रस्य, षट् ६ भौमस्य, नव ९बुधस्य, पुनरष्टौ ८ गुरोः, अंकाः ९ शुक्रस्य, वेदाः ४ शनेः इति ध्रुवांकैः प्राग्वद्रश्मीनानीय चतुर्गुणाः कार्याः स्वकाः तत्तद्ग्रहाणां स्वीया रश्मयः स्युः ॥ २० ॥ अथ द्विग्रहादियोगे रश्मीन्संक्षेपतः फलनिर्णयं चाह द्विग्रहेति । द्विग्रहादिषु द्वौ च तौ ग्रहौ च द्विग्रहौ तौ आदिर्येषां ते द्विग्रहचतुर्ग्रहादयः तेषु योगेषु पंचाष्टेत्यादय उक्तरश्मयः ग्रहभावफलाहताः ग्रहाणां संयुक्तानां यो भावः संयोगवर्तमानभावः तद्रूपे यत्फलं तेन हता गुणिताः तेषां द्व्यादीनां युक्तग्रहाणां स्पष्टा रश्मयो भवंति अत्रोदाहरणम् । रविः १०।४।१४ गुरुः १०।१५।३९ अनयोर्भावः १०।२।५३ रव्युक्तरश्मयः ५ एभिर्गुणितो भावः ५०।२।२६५ षष्ट्युद्धृताः ५०।१४।२५ ऊर्ध्वांकोंशस्थानापन्नः त्रिंशद्धीनो जातः २०।१४।२५ अयं रविस्पष्टरश्मिः एवं गुरोरपि रश्मयः । एवंत्रिग्रहादियोगेषु ज्ञेयम् । अथैषां रश्मीनां फलानां निर्णयः निश्चयः गतिसंज्ञानुरूपेण गतीनां याः संज्ञाः प्रागुक्ताः वक्रानुवक्रेत्यादयः तासां अनुरूपेण सादृश्येन स्मृतः यस्य ग्रहस्य या वक्राद्यन्यतमा-

## भाषा ।

लाये हैं उसमें जो राजयोगकारक ग्रहकी रश्मि हैं, वहां विशेष कहते हैं. सोलह राजयोग जो हैं वो पूर्वभागमें कहे हैं, सो वे ग्रहोंके अब रश्मि संस्कारमें क्षेपक कहते हैं. सूर्यके ५, चंद्रके ८, मंगलके ६, बुधके ९, गुरुके ८, शुक्रके ९, शनिके ४, यह ध्रुवांकोंसे पूर्वरीतिप्रमाणसे रश्मि लायके चतुर्गुणित करना अपनी अपनी ग्रहकी रश्मि होवै ॥ २० ॥ अब द्विग्रह, त्रिग्रह, चतुर्ग्रहयोग ग्रहोंकी रश्मिके वहां वे ग्रह रश्मिसे ग्रहस्थित भावांक गुणन करके साठसे भाग लेना, लब्ध

फलानां निर्णयः स्मृतः ॥ २१ ॥ इष्टकष्टफलसंगुणास्तत-स्तत्करानथ च संयुतांस्तुतान् ॥ निश्चितार्थमखिलं स-मीक्ष्यतत्प्रस्तुतं तु सकलं वदेद्बुधः ॥ २२ ॥ एकादि पंच-कं यावद्दरिद्रा भृशदुःखिताः ॥ नीचानां दासतां याता अ-

## टीका।

गतिः तत्साहश्येन वक्राद्यन्यतमं फलं रश्मीनां ज्ञेयमित्याशयः ॥ २१ ॥ एवमिष्टकष्टं रश्मींश्चोक्त्वा एषां प्रयोजनमाह इष्टेति। ततः रश्म्युत्पादनानंतरं इष्टकष्टफलसंगुणानिष्टफलगुणितान् कष्टफलसंगुणितांश्च कृत्वा तानिष्टसंगु-णितान्सर्वान्संयुतान्कृत्वा तान् कष्टसंगुणितांश्च सर्वान्पृथक् संयुतांश्च करान् राशीन् कृत्वा अखिलं सर्वं ग्रहजं भावजं राजयोगपरिव्राड्योगादिजं नाना-विधं शुभाशुभफलं निश्चितार्थं निश्चितः अर्थः इष्टकष्टरश्मिसंयोगसमुद्भवं फलं यस्मिन्कर्मणि यथा तथा प्रस्तुतं तत्कालीनं पूर्णं समीक्ष्यावलोक्य वि-चार्येत्यर्थः। बुधो विद्वान् वदेत् कथयेदिति। अथेष्टकष्टबलगुणितरश्म्युदा-हरणम्। यथा सूर्येष्टबलं ०।२८।२५ सूर्यरश्मयः ५।४०।२३ इमे गोमूत्रिका-रीत्या गुणितांकाः ०।०।०।१४०।११२०।६४४।१२५।१०००।५७५ जातं अ-स्यां संख्यायां षष्ट्युद्धृतायां २।४१।१२ अयं सूर्येष्टरश्मिः एवं सूर्यकष्टबलं ०।३१।३५ एते सूर्यरश्मयः ५।४०।२३ इमे गोमूत्रिकारीत्या गुणितांकाः ।०।०।०।१५५।१२४०।७१३।१७५।१४००।८०५ जातं अस्यां संख्यायां ष-ष्ट्युद्धृतायां २।५९।१० अयं सूर्यकष्टरश्मिः एवं सर्वत्रानुक्तस्थलेषु बोध्यम् ॥ २२ ॥ अथ फलं वदेदित्युक्तं तदेकादिरश्मिसंख्यातारतम्येन स्फुटयति त्रयोविंशतिश्लोकमारभ्यद्विचत्वारिंशच्छ्लोकपर्यंतम्। तत्र तु एकादित्या-

## भाषा।

जो हैं ओ उच्चरश्मि फल आया. रश्मिका फल गतिके अनुसारसे कहना ॥ २१ ॥ इष्टकष्टफलसे रश्मिकू गोमूत्रिकान्यायसे गुणन करके जो फल आवे उसकू इष्टर-श्मिकष्टरश्मि होवे पीछे उस ऊपरसे शुभाशुभ फल कहना ॥ २२ ॥ अब रश्मिका फल कहते हैं. एकसे पांचतक रश्मिका योग होवे तो वो मनुष्य दरिद्री दुःखी होवे.

पि जाताः कुलोत्तमे ॥ २३ ॥ परतो दशकं यावत्केवलं ज-ठराय वै ॥ निःस्वाः कदाचिद्दासाश्च भारवाहाः कदाचन ॥ स्त्रीपुत्रग्रहहीनाश्च वंशायोग्यक्रियारताः ॥ २४ ॥ एका-दशेऽल्पपुत्राः स्वल्पधनाः स्त्रीविमानिता मनुजाः ॥ बि-

## टीका ।

| अथ इष्टबलचक्रमाह. | | | | | | | | अथ कष्टबलरश्मिचक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | गो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | गो. |
| २ | ० | १ | ० | ० | ५ | १ | १३ | २ | १ | ४ | १ | ० | १ | ० | १० |
| ४१ | ३८ | ५६ | ३३ | ४६ | १५ | ४५ | ३७ | ५९ | ५२ | ४९ | १० | ३५ | ३७ | ४० | ४७ |
| १२ | १८ | १० | ३१ | ४७ | ४४ | ४३ | २७ | १० | ५१ | २३ | ९ | ३६ | ४७ | ४८ | ५६ |

दिषड्विंशतिश्लोकपर्यंतमशुभफलं विवृणोति । एवं प्रागुक्तरीत्या संस्कृत-रश्मयः एकादि एकमारभ्य यावत्पंचकपंचांकपर्यंतं प्राप्ताश्चेत्तद्रश्मिवंतो नराः दरिद्रः रंकाः अपि च भृशदुःखिताः अतिव्यथिताः संतः कुलोत्तमे सत्कुले-पि जाताः उत्पन्नाः नीचानां हीनानां दासतां दासस्य भावस्तां नीचभृत्य-त्वमित्यर्थः याताः यास्यंतीत्यर्थः किं पुनर्नीचजातीया नीचसेवकाः स्युरिति वक्तव्यम्॥२३॥ततः परतो यावद्दशकं पंचप्रभृति दशपर्यंतं प्राप्ताश्चेत् तेषां जन्म जठराय वै केवलमुदरभरणार्थमेव ज्ञेयं तदेवविशदयति ते निःस्वाः दरिद्राः अतः कदाचिद्दासाः कदाचिदुदरपोषणार्थं भारवाहका भारं वहंति धरंतीति तथाभूताः स्त्रीपुत्रगृहहीनाः भार्यासुतवेश्मरहिताः च परं वंशायोग्यक्रियार-ताः स्ववंशानुचितकर्मसक्ताश्च भवेयुरिति ॥ २४ ॥ एकादशे रश्मौ सति म-नुजाः अल्पपुत्राः अल्पसंतानाः अल्पधनाः अल्पद्रव्याः अतः स्त्रीविमानिताः अबलावमानयुक्ताः संतः तदा स्वल्पमपि निजं कुटुंबं कृच्छ्रेणैव कष्टेनैव बि-

## भाषा ।

और जो कभी उत्तम कुलमें पैदा हुवा होवे तथापि नीचकी चाकरी करेगा ॥ २३ ॥ छसे दसतक योग होवे तो केवल उदरपोषण करेगा. कोई बखत द्रव्यहीन, कोई बखत दास्य, कोई बखत भारवाहक होवेंगे. स्त्रीपुत्रघरसे हीन रहेंगे. वंश कुल जावे. ऐसे कर्ममें रत रहेंगे ॥ २४ ॥ ग्यारहरश्मिका योग होवे तो अल्पपुत्रवान् स्त्रियोंसे अपमानित होवेगा. और अपने स्वल्प कुटुंबकाभी पालन बडे कष्टसे करे-

अति कृच्छ्रेण निजं स्वल्पं च कुटुंबमेव तदा ॥ २५ ॥ द्वादशे निर्धना मूर्खा धूर्ताः सत्वविनाशकाः ॥ त्रयोदशे च चोराः स्युर्निर्धनाः कुलपांसनाः ॥ २६ ॥ विद्वांश्चतुर्दशे धर्मे रतो मर्षी धनार्जकः ॥ कुटुंबभरणे सक्तः कुलयोग्यक्रियो भवेत् ॥ २७ ॥ रश्मिभिः पंचदशभिरेवं गुणयुतोऽपि सन् ॥ स्ववंशमुख्यो धनवानित्याह भगवान्मुनिः ॥ २८ ॥ आविंशतेः कुलेशाना बहुभृत्याः कुटुंबिनः ॥

## टीका।

अति पालयंतीति ॥ २५ ॥ अथ द्वादशपरिमिते रश्मौ जाताः निर्धना दरिद्राः मूर्खा बुद्धिहीनाः धूर्ताः परवंचकाः सत्वविनाशकाः सतो भावः सत्त्वं उत्तमत्वं तस्य नाशकाः गुणाद्युत्तमत्वत्यागशीला इत्यर्थः। अथ त्रयोदशमिते रश्मौ जनाः चोराः तस्कराः निर्धनाः स्पष्टं कुलपांसनाः कुलाधमाश्च स्युरिति ॥ २६ ॥ अथ विद्वानित्यादित्रयस्त्रिंशच्छ्लोकावधि शुभत्वं कथयति तत्र विद्वानिति। रश्मिभिरिति च। चतुर्दशपरिमिते रश्मौ विद्वाञ्ज्ञाता धर्मे पुण्यकर्मणि रतः तथा मर्षी मर्षः सहनशक्तिः तद्वान् धनार्जकः धनसंपादकः कुटुंबभरणे सक्तः कुटुंबपालनपरः कुलयोग्यक्रियः स्ववंशोचिताचरणशीलश्च भवेत् ॥ २७ ॥ अथ पंचदशपरिमितैरश्मिभिस्तु एवं गुणयुतोऽपि सन् पूर्वोक्तफलसंपन्नोऽपि सन् स्ववंशमुख्यः स्वकुलश्रेष्ठः धनवांश्चेति भगवान्पराशरमुनिराहेत्यन्वयः ॥ २८ ॥ अथ षोडशरश्मिमार-

## भाषा।

गा ॥ २५ ॥ बारह रश्मिका योग होवे तो मनुष्य निर्धन मूर्ख धूर्त सत्यहीन होवेगा. तेरह रश्मिका योग होवे तो चोर निर्धन कुलपांसक होवेंगे ॥ २६ ॥ चौदह रश्मिका योग होवे तो वो मनुष्य धर्मी क्रोधरहित रहै, द्रव्योपार्जन करनेमें तत्पर रहे, कुटुंबपालन करे, कुलयोग्य कर्म करे ॥ २७ ॥ पंद्रहरश्मिका योग होवे तो सताईसवें श्लोकका फल जो है वो फलसहित होयके और अपने वंशमें मुख्य होवेगा, धनी होवेगा, ऐसा पराशरमुनि कहते हैं ॥ २८ ॥ सोलहसे

कीर्तिमंतश्च पूर्णाश्च स्वजनेन च षोडश ॥ २९ ॥ एकविंशतिविख्यातः पंचाशज्जनपोषकः ॥ दानशीलः कृपायुक्तो द्वाविंशे लोभसंयुतः ॥ ३० ॥ धनवानल्परिपुश्च प्रभुः स्वल्पगुणो भवेत् ॥ त्रयोविंशे तु मुख्यश्च विद्याहीनो धनी सुखी ॥ ३१ ॥ आत्रिंशत्परतः श्रीमान्सर्वसत्वसमन्वितः॥

## टीका ।

म्य विंशतिरश्मिपर्यंतं फलानि कथयति आविंशतेरिति । षोडशाद्रश्मेः सकाशात् आविंशतेः विंशतिरश्मिपर्यंतं जनाः कुलेशानाः कुलपालका बहुभृत्याः प्रचुरसेवकाः कुटुंबिनः कुटुंबवंतः कीर्तिमंतश्च स्वजने पूर्णाश्च भवेयुरिति ॥ २९ ॥ एकेत्यादित्रयस्त्रिंशत्पर्यंतं फलान्याह । एकविंशति विख्यातः एकविंशतिसंख्याप्रसिद्धो रश्मिश्चेत् नरः पंचाशज्जनपोषकः शतार्धनरपालकः च परं दानशीलः वितरणस्वभावः कृपायुक्तो दयालुः स्यात् । अथ द्वाविंशे रश्मौ लोभसंयुतः अतिलुब्धः ॥ ३० ॥ धनवान् संपन्नः अल्परिपुः अल्पशत्रुः प्रभुः स्वामी स्वल्पगुणो भवेदिति । मध्यमं शुभाशुभमिश्रफलमुक्तम् त्रयोविंशे रश्मौ तु मुख्यः जातिश्रेष्ठः विद्याविहीनः सामान्यविद्यावान् धनी द्रव्यवान् सुखी सौख्यसंपन्नश्च भवेत्॥३१॥ अथ चतुर्विंशतिरश्मिमारभ्य परतः अग्रे आत्रिंशत् त्रिंशत् त्रिंशद्रश्मिपर्यंतं श्रीमान् लक्ष्मीवान् सर्वसत्वसमन्वितः अश्वगोगजादिप्राणियुक्तः राजप्रियः

## भाषा ।

लेके वीसतक रश्मियोग होवे तो कुलकू पालन करनेवाले बहुत सेवक बहुत कुटुंब जिनका और कीर्तिमान् अपने संबंधि लोकोंसे पूर्ण होवेगे ॥२९॥एकीस रश्मिका योग होवे तो पचास मनुष्यका पालन करेगा, दानशील दयावंत होवेगा, और बावीस रश्मिका योग होवे तो लोभी होवेगा. और धनवान्, शत्रुहीन, समर्थ, अल्पगुणी होवेगा ॥ ३० ॥ तेवीस रश्मिका योग होवे तो विद्याहीन हो जावेगा तथापि सब ठिकानें प्राधान्यताकू पाव धनवान् सुखी होवे ॥ ३१ ॥ चोवीससे लेके तीसपर्यंत रश्मिका योग होवे तो लक्ष्मीवान् सर्वबलयुक्त होवे राजप्रिय प्र-

राजप्रियश्च चंडश्च जनश्च बहुभिर्वृतः ॥ ३२ ॥ एकत्रिंशे च सचिवो द्वात्रिंशे वाहिनीपतिः ॥ पूर्वभागे समुद्दिष्टफलानि परतो विदुः ॥ ३३ ॥ पंक्तिः सूर्या तिथिर्नृपात्यष्टिर्धृतिश्च विंशतिः ॥ नखा मूर्च्छा जिनास्तत्वं त्रिंशद्द्वात्रिंश-

## टीका ।

नृपप्रीतिपात्रः चंडः उग्रस्वभावः चपरं बहुभिः असंख्यातैर्जनैर्वेष्टितः ॥३२॥ एकत्रिंशे च रश्मौ सचिवः मंत्री प्रधान इत्यर्थः । द्वात्रिंशत्परिमिते रश्मौ वाहिनीपतिः सेनारक्षकः अतः परतः त्रयस्त्रिंशद्रश्मिप्रभृतिफलानि पूर्वभागे समुद्दिष्टफलानि विदुः ज्योतिषिका इतिशेषः । एवं एकरश्मिमारभ्य यावत् षट्पंचाशद्रश्मिसमागमे सामान्यतः शुभाशुभफलानि कथितानि ज्ञेयानि विशेषतस्तु अग्रे वक्ष्यतीति ॥ ३३ ॥ अथारंभतो यावद्रश्मिसमापनं संततिविचारमाह पंक्तिरित्यादिसार्धश्लोकेन। पंक्तिः दश "द्वात्रिंशे वाहिनीपतिः" इति द्वात्रिंशद्रश्मिपर्यंतं प्राक्सामान्यफलान्युक्तानि तावत्संख्यारश्मिपर्यंतं नवसंख्याकसंततिर्ध्वन्यते, सा च एकरश्मितो द्वात्रिंशद्रश्मिपर्यंतं अनुपाततो ज्ञेया। द्वात्रिंशद्रश्मिषु नवसंततिश्चेत्तन्न्यूनामुकरश्मिषु कियती संततिरिति-ततः परं क्रमप्राप्तद्वात्रिंशद्रश्मीनामग्रे भागे त्रयस्त्रिंशद्रश्मिषु सत्सु पंक्तिः दशसंख्याः सुतादयः, चतुस्त्रिंशद्रश्मिषु सूर्याः द्वादश संततिः, पंचत्रिंशद्रश्मिषु तिथयः पंचदश संततिः, षट्त्रिंशद्रश्मिषु नृपाः षोडश, एवं ३७ रश्मिषु भूयः पुनः नाम प्रागुक्ताः नृपा एव, ३८ रश्मिषु अत्यष्टिः सप्तदश, ३९ र-

## भाषा ।

तापी और बहुत लोक उसके संग रहाकरे ॥ ३२ ॥ एकत्रीस रश्मिका योग होवे तो प्रधान पदवीकू पावे, बत्तीस रश्मि होवे तो सेनापति होवे वहांसे आगे जो रश्मिका फल हैं सो पूर्वभागमें कहा है ॥ ३३ ॥ अब रश्मि ऊपरसे संतानविचार कहते हैं. तेहेतीस रश्मिका योग होवे तो दश पुत्रादिक होवे, चौतीस रश्मियोग होवे तो बारा संतान होवे, पैंतीस रश्मिसे पंधरा संतान होवे, छैतीस रश्मिसे सोलह संतान होवे, सैंतीस रश्मिसे सोलह संतान होवे, अडतीस रश्मिसे सतरा संतान होवे, ओगनचालीस रश्मिसे अठारा संतान होवे,

देव च ॥ ३४ ॥ पंचाशच्चैव षष्टिश्च शतं चैव सुतादयः ॥ आरभ्य विश्वसंख्यायाः क्रमात्स्वजनपोषकः ॥ ३५ ॥ अत ऊर्ध्वं नृपे श्रांतं आपंचत्रिंशतः क्रमात् ॥ शतपंचकमारभ्य

## टीका ।

श्मिषु धृतिः अष्टादश, ४० रश्मिषु धृतिः अष्टादशैव, ४१ रश्मिषु नखः विंशतिः, ४२ रश्मिषु मूर्छाः एकविंशतिः, ४३ रश्मिषु जिनाः चतुर्विंशतिः ४४ रश्मिषु तत्वं पंचविंशतिः, ४५ रश्मिषु त्रिंशत् संततिः, ४६ रश्मिषु द्वात्रिंशत्, ४७ रश्मिषु पंचाशत्, ४८ रश्मिषु षष्टिः, ४९ रश्मिषु शतं सुतादयः, अग्रे अनुक्तत्वात् शत संख्यातोऽधिकाऽसंख्याता ज्ञेयेत्याशयः ॥ ३४ ॥ अथैश्वर्यविचारो रश्मिषु कथ्यते आरभ्येत्यर्धेन । तत्र प्राक्सर्वसामान्यविचारे त्रयोदशरश्मिपर्यंतमशुभमेव फलमुक्तम् । तावद्रश्मिपर्यंतं दारिद्र्यदुःखाद्यशुभफलत्वादैश्वर्याभाव एव । ततः विश्वसंख्यायाः पुरतः चतुर्दशरश्मिमारभ्य सामान्यफलनिर्णीतद्वात्रिंशद्रश्मिसंख्यापर्यंतं क्रमाद्रश्म्यंकसंख्यापरिमितस्वजनपोषकाः जना ज्ञेयाः ॥ ३५ ॥ अथ द्वात्रिंशद्रश्म्यूर्ध्वं प्रागवद्रश्मिसंख्यां संत्यज्य बहुपोषकत्वं कथयति अत ऊर्ध्वमिति । अत उर्ध्वं द्वात्रिंशद्रश्म्यूर्ध्वं आपंचत्रिंशतः पंचत्रिंशद्रश्मिपर्यंतं शतपंचकं पंचशतान्यारभ्य सहस्रावधि सहस्रं अवधिर्यस्मिन्कर्मणि तत्तथा पोषकाः सहस्रपर्यंतं पालका इत्यर्थः । कया रीत्या पोषकास्तत्साधनं कथयति नृपे राज्ञि राजकर्मणीत्यर्थः श्रांतः जातश्रमः

## भाषा ।

चालीस रश्मिसे अठारा संतान होवे, एकेचालीस रश्मि होवे तो वीस संतान होवे, बियाँलीस रश्मि होवे तो एकईस संतान होवे, तियालीस रश्मि होवे तो चोवीस संतान होवे, चौवाँलीस रश्मि होवे तो पचीस संतान होवे, ४५ रश्मि होवे तो ३० संतान होवे ४६ रश्मि होवे तो ३२ संतान होवे ४७ रश्मि होवे तो ५० संतान होवे, ४८ रश्मि होवे तो साठ संतान होवे, ओगनपचास रश्मि होवे तो सौ संतान होवे, आगे कह्या नहीं है वास्ते इसमें अधिक रश्मि होवे तो १०० से अधिक संतान वृद्धि जानना ॥ ३४ ॥ ३५ ॥ अब रश्मिके मानसे बहुपोषकयोग कहते हैं ३२ रश्मिका योगसे ४५ पर्यंत, ५०० सौसे १००० पर्यंत मनुष्यका

सहस्रावधि पोषकः॥ ३६ ॥ अत ऊर्ध्वं तु देशानां संख्याः स्युः पंचविंशतिः ॥ षड्विंशतिश्च भानि स्युस्त्रिंशत् षट्त्रिंशदेव च ॥ ३७ ॥ अत ऊर्ध्वं नृपाः क्षात्रधर्मिणः क्ष-

## टीका ।

राजाधिकारक्रमेणेति यावत्क्रमात् त्रयस्त्रिंशच्चतुस्त्रिंशत्पंचत्रिंशद्रश्मिषु फलं ज्ञेयमिति॥३६॥अथ पंचत्रिंशद्रश्मिभ्यः परतो देशाधिपत्यं कथयति अतऊर्ध्वमिति । अत ऊर्ध्वं षट्त्रिंशदंशादारभ्य क्रमाद्देशानामाधिपत्ये संख्याश्चत्वारिंशद्रश्मिपर्यंतं पंचविंशत्यादयः स्युः एतदुक्तं भवति षट्त्रिंशद्रश्मिषु पंचविंशतिः २५, सप्तत्रिंशद्रश्मिषु षड्विंशतिः २६, अष्टत्रिंशद्रश्मिषु भानि २७, एकोनचत्वारिंशद्रश्मिषु त्रिंशत् ३०, चत्वारिंशद्रश्मिषु षट्त्रिंशत् ३६, एवं देशानामाधिपत्यं ज्ञेयमिति ॥३७॥ अथ रश्मीनां राजफलमाह अत इति । अत ऊर्ध्वं चत्वारिंशद्रश्म्यूर्ध्वं क्षत्रियः जात्येकवचनं क्षत्रियजातीयाः नृपाः राजानो भवेयुः । अथ च अन्यजातीयाश्चत्वारिंशदधिकरश्मिवंतश्चेत् क्षात्रधर्मिणः क्षत्रधर्मवंतः संतः नृपाः स्युः । तत्र क्रममाह एकचत्वारिंशद्रश्मिमारभ्य सप्तचत्वारिंशद्रश्मिपर्यंतं क्रमात् भू १, द्वि २, त्र्य ३, ब्धी ४, षु ५, षट् ६, सप्त, ७, संख्यानां भूभृतां राज्ञां ये जनपदाः देशाः तेषामधिपाः स्वामिनो भवेयुः । एतदुक्तं भवति । एकचत्वारिंशद्रश्मिषु सत्सु भूपसंख्याकभूभृज्जनपदानां अधिपः स्यात् तथा द्विचत्वारिंशद्रश्मिषु द्वि २ संख्याकनृपदेशपालकाः एवं क्रमेण त्रिचत्वारिंश ४३ चतुश्चत्वारिंशत् ४४, पंचचत्वा-

## भाषा ।

पोषण करेगा ॥ ३६ ॥ छत्तीस रश्मिका योग होवे तो पच्चीस गांवोंका अधिपति होवे, सैंतीस रश्मिका योग होवे तो छब्बीस गांवोंका अधिपति होवे, अड़तीस रश्मिका योग होवे तो सत्ताबीस गांवोंका अधिपति होवे, ओगनचालीस रश्मिका योग होवे तो तीस गांवोंका अधिपति होवे, चालीस रश्मिका योग होवे तो छत्तीस गांवोंका अधिपति होवे ॥ ३७ ॥ एकेचालीस रश्मिका योग होवे तो एक देशका राज्य करे, बैयालीस रश्मिका योग होवे तो दो देशोंका राज्य करे, तियाँलीस रश्मिका योग होवे तो तीन देशोंका राज्य करे, चैंमालीस रश्मियोग होवे तो चार

त्रियोऽथ वा ॥ भूद्वित्र्यब्धीषु षट्सप्तभूभृज्जनपदाधिपाः ॥ ३८ ॥ पंचाशद्रश्मिसंयोगे सम्राट् स्यादनुपाततः ॥ अत ऊर्ध्वं तु देवेन्द्रतुल्याः स्युरिति पद्मभूः ॥ ३९ ॥ उच्चचेष्टोत्थयोगार्धगुणिताः षष्टिभाजिताः ॥ नरादीनां तु सं-

टीका।

रिंशत् ४५, षट्चत्वारिंशत् ४६, सप्तचत्वारिंशत् ४७, रश्मिषु क्रमात् त्र्य ३ ब्धी ४ षु ५ षट् ६ सप्त ७ भूभृज्जनपदानामाधिपत्यं ज्ञेयमिति ॥ ३८ ॥ अथ सप्तचत्वारिंशद्रश्म्यूर्ध्वं सार्वभौमपदाप्तिमाह पंचाशदित्यर्धेन । पंचाशत्संख्याकरश्मिषु सम्राट् सम्यक् राजतेऽसौ तथा सार्वभौम इत्यर्थः स्यात् ननु मध्यावशिष्टरश्मिद्वयस्य का गतिस्तत्राह। अनुपाततः ५० रश्मिषु पूर्णं साम्राज्यं चेत् एकोनेषु ४९ द्व्यूनेषु ४८ कियत्साम्राज्यमिति त्रैराशिकेन तद्वैगुण्यं ज्ञेयमिति विवेकः । अथ पंचाशदूर्ध्वं साक्षादिंद्रतुल्यत्वमेवाह अत इति । अत ऊर्ध्वं पंचाशद्रश्म्यूर्ध्वं रश्मिसमागमे तु देवेंद्रतुल्या भुवि साक्षादिंद्रतुल्या एव ते नराः स्युरिति पद्मभूर्ब्रह्मा आहेति शेषः ॥ ३९ ॥ अथ नरादिपोष्यसंख्यामाह उच्चेति । उच्चचेष्टोत्थयोगार्धगुणिताः रश्मय इत्यनुवृत्तं उच्चं उच्चबलं चेष्टाचेष्टाबलं च उच्चचेष्टे ताभ्यां उत्थः संभूतः यो योगः मिश्रणं तस्य यदर्धं द्विभागोपलब्धिः तेन गुणिताः कृतगुणाकाराः ये प्रकरणप्राप्ता रश्मयः ते षष्टिभाजिताः षष्टिभिः भक्ताः कार्याः एवं कृते ये लब्धांकाः ते एव नरादीनां नरा मनुष्याः आदयो येषां ते अश्वगजगो-

भाषा।

देशोंका राज्य करे. पैंतालीस रश्मियोग होवे तो पांच देशोंका राज्य करे. छैंयालीस रश्मिका योग होवे तो छः देशोंका राज्य करे, सैंतालीस रश्मिका योग होवे तो सात देशोंका राज्य करे ॥ ३८ ॥ पचास रश्मिका योग होवे तो सार्वभौम राजा होवे. अडतालीस रश्मिका और ओगनपचास रश्मिका फल वोही जानना. पचासके ऊपर रश्मिका योग होवे तो इंद्रके तुल्य होवे, ऐसा ब्रह्माजीनें कहा है ॥ ३९ ॥ अब रश्मिमें विशेष फल कहते हैं. उच्चरश्मि चेष्टारश्मिका योग करके उसका अर्ध करना पीछे वो अर्ध जो अंक हैं उससे पूर्व योगकू गुणना गोमूत्रिकान्यायसे पीछे

ख्याः स्युः स्पष्टा इत्याह पद्मभूः ॥ ४० ॥ शूद्रादयः कलौ राजधर्मिणो म्लेच्छधर्मिणः ॥ विप्राश्चेच्छ्रीधनैर्युक्ता यज्ञकर्मक्रियारताः ॥ ४१ ॥ योगरश्मिसमायोगे तदानीं

## टीका।

प्रभृतिपोष्याः तेषां स्पष्टाः स्फुटाः संख्याः स्युरिति एवं प्रकारकनरादिज्ञानं पद्मभूर्ब्रह्माऽऽह उक्तवानिति ॥ ४० ॥ एवमुक्तराजयोगाः कलौ शूद्रादीनामेवेत्याह शूद्रादय इति । कलौ कलियुगे शूद्रादयो हीनजातीयाः म्लेच्छधर्मिणः म्लेछानां धर्मोस्त्येषामिति ते यवनाश्च राजधर्मिणः राज्यकर्तारः स्युः न ब्राह्मणादयः अर्थात् रश्म्युक्तराजयोगः शूद्रादीनां म्लेच्छानां च ज्ञातव्य इति भावः । ननु अष्टचत्वारिंशत्प्रभृतिसंख्याकरश्मिसमागमे ब्राह्मणादीनां फलाभाव एवेत्याशंकायामाह । राजधर्मे सूचकसंख्याकरश्मिवंतो विप्राश्चेच्छ्रीधनैर्युक्ताः श्रीमंतः धनवंतश्च स्युः अपि च राजयोगघटकरश्मियोगात् यज्ञकर्मक्रियारताः स्युः तेन किं राज्यप्रापकक्रियाचरणेन उत्तरजन्मनि स्वर्गराज्यभोक्तारः स्युरिति ध्वनितार्थः । "ज्योतिष्टोमेन स्वर्गकामोयजेत" इतिश्रुतिप्रामाण्यात्स्वर्गराज्यप्राप्तिकामस्य यस्य साधननिबंधनत्वादितिदिक् । ननु क्षत्रियवैश्ययोः राजयोगः स्यान्नवेति चेन्महर्षिणा तत्फलानुक्त्या शुकभागवतोक्त्या च तज्जातिद्वयस्य कलौ राज्यसत्तानिर्वाहकत्वाभाव एव सूचित इति मंतव्यम् ॥ ४१ ॥ ननु रश्मिभिरेव राज्यफलावगमे "भाग्येशात्कारके लग्ने पंचमे सप्तमेपि वा । राजयोगप्रदातारो गजवा-

## भाषा।

साठसे भाग लेना जो लब्ध आवे वो संख्या नर, अश्व, गज, गौ आदि पोष्यवर्गकी जानना इतने जीवोंका पालन करेगा, ऐसा जानना, ऐसा ब्रह्माजीने कह्या है ॥ ४० ॥ वे जो पूर्व राजयोग कहे हैं वे कलियुगमें शूद्रादिक म्लेच्छ धर्मियोंके जानना. और जो यह राजयोग और उत्तम रश्मियोग ब्राह्मणकू होवे तो यज्ञयागकर्मनिष्ठ होयके उस पुण्यप्रतापसे स्वर्गराज्य भोगेंगे ऐसा जानना॥ ४१॥ पूर्व जो राजयोग कहे हैं और रश्मियोगका फल कह्या है, परंतु केवल राजयोगसे राज्यफल प्राप्ति नहीं होनेकी किंतु राजयोग होयके बाद रश्मियोग राज्यफल-

तत्फलं विदुः ॥ नाभसादिषु योगेषु राजयोगे स्थितं तु तत् ॥ ४२ ॥ योगकर्तारमारभ्य बलिनं च विनिर्णयेत् ॥ पूर्वे भागे समुद्दिष्टभाग्यकर्मफलानि तु ॥४३॥ अनु पातेन

## टीका ।

जिधनैरपि" इत्यादिग्रहयोगादिना उक्तराजयोगस्य वैफल्यप्रसंगः स्यादिति चेन्न किंतु उभयमपि कारणतया ज्ञेयमित्याह योगेति । योगरश्मिसमायोगे सति योगाः स्थानकारकादिग्रहसमुद्भवा योगाः अष्टचत्वारिंशदादिसंख्याकराजयोगसूचकरश्मयश्च योगरश्मयः तेषां समायोगे संप्राप्तौ सत्यां तदानीमेव तत्फलं उक्तरश्मिराजयोगफलं विदुः बुबुधुः कथयामासुरित्यर्थः आचार्या इति शेषः अर्थात् न केवलं उक्तग्रहयोगैः न चापि केवलमुक्तरश्मिभिरेव किंतु राजयोगकारकग्रहयोगरश्मिसमागमनेनैव राजयोगफलं ज्ञेयमिति भावः । अथ नाभसादियोगेषु अनेकग्रहोपलब्धौ आरंभादिक्रमेण योगकर्तृन्विचिनोति नाभसादिष्विति श्लोकार्धकाभ्याम् । नाभसादिषु नाभसः आदिर्येषां ते आश्रयादयः रज्वादयश्च तेषु राजयोगे च यत्स्थितं उक्तफलं तत्तु योगकारकानेकग्रहेषु बलिनमधिकबलवंतं ग्रहं योगे नाभसादौ राजयोगे च कर्तारं मुख्यं कारकं विज्ञाय तं पूर्णापूर्णहीनाहीनरश्मिवंतं विचार्य तादृशतारतम्येन फलं विनिर्णयेन्निश्चिनुयात् ॥ ४२ ॥ अथ पूर्वभागोक्तभाग्यादिफलानां व्यवस्थामाह पूर्वेत्यादिना अन्वित्यादिना च । पूर्वभागेसमुद्दिष्टभाग्यकर्मफलानि सम्यगुद्दिष्टानि कथितानि यानि भाग्यफलानि कर्मफलानि च तानि तु अनुपातेन शुभानि विज्ञाय योजयेत् मेलयेत् अनुपातेन अशुभानि विज्ञाय वर्जयेत् घटयेत् अर्थात् एतत्संस्कारानिर्णीतं सिद्धं फलमिति विजानीयादित्यभिप्रायः ॥ ४३ ॥ अथैवमेव अनुपाततः षड्बलव्यवस्थानमाह स्था-

## भाषा ।

दायक होवेगा. तब उक्त फल यथार्थ होवेगा. और नाभसादिक जो योग हैं उसमेंभी रश्मियोगका फल मिलानेसे यथार्थ मिलेगा ॥ ४२ ॥ पहिले भागमें जो भाग्यभाव कर्मभावका फल कहा है उसका शुभाशुभ यहांके रश्मि अनुपातसे शुभाशुभ फलकू जोडना घटाना ॥ ४३ ॥ अब सप्त बलमें जो अधिक बल होवे उससे उ-

विज्ञाय योजयेद्वर्जयेद्बुधः ॥ स्थानवीर्याधिके देशे मुख्यः स्यादनुपाततः ॥ ४४ ॥ दिग्बले विजयश्चेष्टा वीर्ये तु प्रभुता भवेत् ॥ कालवीर्याधिके कार्ये सदोत्साही तथायने ॥ ४५ ॥ स्ववंशोत्कर्षता स्वोच्चे नैसर्गे जातिनिर्णयः ॥

## टीका ।

नेत्यादिश्लोकद्वयेन । अत्र अनुपाततः सप्तबलमध्येऽधिकावशिष्टस्य स्थानादिकस्य पृथक् सप्तविधं फलं विशदयति । तदित्थं स्थानबलं दिग्बलाच्चेष्टाबलात्कालबलादयनबलादुच्चबलान्नैसर्गिकबलाच्च अनुपाततः पृथक् संस्कृत्य सर्वेभ्योऽप्यधिके स्थानबले देशे मुख्यः स्यादिति स्थानबलाधिक्यफलम् । एवं स्थानचेष्टादिग्बलैक्यं प्राग्वदनुपाततः पृथक् संस्कृत्य सर्वेभ्योप्यधिकतयावशिष्टे दिग्बले सति विजयः फलं ज्ञेयं एवमेव सर्वबलेभ्योऽनुपाततः चेष्टावीर्ये चेष्टाख्यबले सति प्रभुता प्रभुत्वं भवेत् एवं प्राग्युक्तरीत्या कालवीर्याधिके सर्वबलेभ्यः कालबले अधिके सति कार्ये कर्तव्यकर्मणि सदा सर्वदा उत्साही भवेत् तथा पूर्वोक्तमेव फलं अयने अयनबलेऽपि ज्ञेयं न भिन्नं० अथ स्वोच्चे उच्चबलेऽधिके सति स्ववंशोत्कर्षता निजकुलोन्नतता ज्ञेया तथा नैसर्गे निसर्गबलाधिक्ये जातिनिर्णयः स्वजातिविशेषत्वनिश्चयो बोध्य इति ॥४४॥४५॥ एवं बलाधिक्यफलमुक्त्वा कथयित्वा इत्युपसंहारेणाध्यायं समापयति राशीनामित्यर्धकद्वयेन । मया संहिताकारेण अत्र संहितायां ये के चन राशीनां मेषादीनां ग्रहाणां रव्यादीनां च स्वभावाः स्वानां भावाः याथातथ्येन वर्तमानत्वमित्यर्थः कथिता वर्णिताः ते देवज्ञेन ज्योतिर्विदा सुबुद्धिना

## भाषा ।

बरश्मिका फल कहते हैं. स्थानबल १, दिग्बल २, चेष्टाबल ३, कालबल ४, अयनबल ५, उच्चबल ६, नैसर्गिकबल ७, यह सातोंका फल कहते हैं. स्थानबल अधिक होवे तो देशमें मुख्य होवे, दिग्बल अधिक होवे तो विजयी होवे, चेष्टाबल अधिक होवे तो प्रभुताई भोगे, कालबल अधिक होवे तो सर्वकार्यमें कुशल होवे, अयनबल अधिक होवे तो सर्वकाल आनंदमें रहे ॥ ४४ ॥ ४५ ॥ उच्चबल अधिक होवे तो अपने वंशमें मुख्यत्व पावे, नैसर्गबल अधिक होवे तो अपना स्वजाति-

राशीनां च ग्रहाणां च स्वभावाः कथिता मया ॥ ४६ ॥
ये चात्र योजनीयाश्च देवज्ञेन सुबुद्धिना ॥ ४७ ॥ इति
श्रीबृहत्पाराशरहोरायामुत्तरार्धे रश्मीष्टकष्टादिशासने च-
तुर्थोऽध्यायः ॥ ४ ॥

मूलस्थानाधिके स्थाने स भावः शुभ इष्यते ॥ न्यूने शु-

## टीका।

अतिकुशलप्रज्ञेन योजनीयाः कथनीया इत्यर्थः ॥ ४६ ॥ ४७ ॥ श्री-मत्पराशरोक्तायां संहितायां परार्धके। टीकाचतुर्थोऽध्यायस्य रचितेश्वरतुष्टये ॥ इति श्रीमद्बृहत्पाराशरहोराशास्त्रे श्रीमदध्यङ्कन्वयवेदशास्त्रा॰विद्याविद्योतितदिङ्मंडलजटाशंकरसूनुना ज्योतिर्विदा श्रीधरेण विरचितायां सुबोधिनीटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

पंचमे ऋषिराहास्मिन्नध्याये ग्रहजं फलम्। तथा रेखावर्गणादिफलान्यपि सविस्तरम् ॥ १ ॥ अथ श्रीमत्पराशरमहर्षिर्भगवानस्मिन् पंचमेऽध्याये भावगतग्रहविचारेण रेखास्थानादिविचारेण शुभाशुभफलान्युपदिशति तत्रादौ रेखाविचारेण भावविचारः क्रियते मूलेति। यस्मिन्कस्मिंश्चिद्भावे मूलस्थानाधिके मूलस्थानानि द्वादशभावानां प्रथमाध्याये उक्तानि ननु "स्वायुलिरिष्फेषु पंच कामे सुखेर्णवा" इत्यादीनि तेभ्यः अधिके बहुले स्थाने रेखायां सति सप्तमी स भावः शुभः शुभफलक इष्यते पूर्वैरित्यध्याहारः अथ च न्यूने उक्तमूलस्थानतोऽल्पे स्थाने सति स भावः अशुभः तथा समे उक्तपरिमिते स्थाने सति स भावः सम इति शेषः एवं भावानां शुभाशुभसमत्वं

## भाषा।

धर्मका विशेष प्रतिपादन करे ॥ ४६ ॥ यह संहितोत्तरभागमें राशिका और ग्रहोंका स्वभाव मैने कह्या सो जहां जैसा चाहिये वैसा कहना ॥ ४७ ॥ ॥ इति श्रीबृहत्पाराशरहोराशास्त्रे श्रीमदध्यङ्कन्वयवेदशास्त्राध्यनव॰ विद्यावि॰ दिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण विरचितायां भाषाटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

अब इस अध्यायमें अष्टकवर्गका फल कहते हैं. जिस ग्रहकी जो भावमें रेखा कही है उससे रेखा जादा होवे तो शुभ फल जानना, कम होवे तो अशुभ फल

भः समे मातृपितृबंधून्वादिष्यते ॥ १ ॥ स्ववेश्मधर्मकर्मायलग्नैर्द्युम्नं पतिं वदेत् ॥ मृतिव्ययारिभिस्तेषां व्ययं हानिं पृथग्वदेत् ॥ २ ॥ ये योगाः पूर्वभागे तु द्विग्रहाद्या नभादयः ॥ राजयोगादयः सर्वे यथान्यायं प्रयोजयेत् ॥ ३ ॥ भरणीयकुटुंबस्य द्वितीयेन शुभाशुभे॥अन्येषां चैव भावानां

## टीका ।

ज्ञात्वा तदनुरूपं मातृपितृबंधून् मातृपितृबंध्वादिविषयकमित्यर्थः तत्तद्भावविहितफलं वदिष्यते वद्धातोरात्मनेपदे लुङ्रूपमार्षम् "प्रयोगश्चांद्रेण वा उभयपदी" इति ॥ १ ॥ अथ भावफलानां बलहानिपालननाशानाह स्वेति। स्ववेश्मधर्मकर्मायलग्नैः षड्भावैः स्थानानुरूपं द्युम्नं बलं "द्युम्नं वित्ते बलेऽपि च" इतिमेदिनी । तत्तद्भावफलस्य बलातिशयमित्यर्थः । तथा पतिं रक्षकं पालनमित्यर्थः । एवं मृतिव्ययारिभिः त्रिभावैः स्थानानुरूपं तत्तद्भावफलानां व्ययं नाशं हानिं ऱ्हासं च वदेत् । अर्थादवशिष्टस्त्रिपंचसप्तमैः साम्यं स्थानतुल्यं भावफलं बोध्यमिति ॥ २ ॥ अथ पूर्वभागोक्तयोगानां व्यवस्थामाह यइति । पूर्वभागे तु पूर्वार्धे तु द्विग्रहाद्याः तथा नभादय इत्यार्षप्रयोगः नाभसादयः तथा राजयोगादयः ये अनेकप्रकारकाः योगाः मया कथिता इतिशेषः सर्वांस्तान् यथान्यायं बलेष्टकष्टरश्मिभावस्थानकरणादिविचारन्यायमनतिक्रम्य यथा स्यात्तथा प्रयोजयेत्कथयेदित्यर्थः ॥ ३ ॥ अथ भावविचारमाह भरणीयइति । तद्यथा द्वितीयेन द्वितीयभावेन कुटुंबस्य कुटुंबवर्तिनामित्यर्थः भरणीये भर्त्तुं योग्यं पोषणीयं तस्मिन्विषये शुभाऽशुभे पूर्वोक्तरीत्या स्थानकरणविचारेण इष्टानिष्टे वदेदितिशेषः । एवमेव अन्येषां मूर्तिसहजा-

## भाषा ।

जानना, समकू सम फल जानना ॥ १ ॥ दूसरा, चौथा, नववां, दशवां, ग्यारहवां, लग्न, यह छः भाव अपने स्वभावसे उत्तम फल देनेवाले हैं. और आठवां, बारहवां, यह भाव खर्च हानि करनेवाले हैं ॥ २ ॥ पूर्वभागमें जो नाभसादि योग राजयोग कहे हैं, उनोंका इष्ट कष्ट रश्मि अष्टवर्ग बलाबल देखके फल कहना ॥ ३ ॥ दूसरे भावसे रेखाशून्यका न्यूनाधिक्यका बल देखके कुटुंबपोषणका शुभाशुभ देखना.

स्वनामसदृशं फलम् ॥४॥ सूर्येण वेश्मस्थानेन पितुर्मृतिप-
दंवदेत् ॥ चंद्रेणपंचमेनैव मातुर्मृतिपदं वदेत्॥५॥सूर्ये चंद्रे
सपापे च तयोश्च मरणं भवेत् ॥ तयोरंतरलिप्ताश्च शतद्वय-

टीका ।

दिभावानां सर्वेषामपि स्थानादिविचारेण शुभाशुभं स्वनामसदृशं भावना-
मानुरूपं फलं वदेत् । एतदुक्तं भवति । मूर्तौ रेखादिविचारेण देहसौंदर्योच्चत्व-
पुष्टत्वादिविषये इष्टानिष्टं फलं वदेत् एवमेव सहजादिभावेषु बंध्वादिविषये
इष्टानिष्टं रेखादिविचारेण वदेदिति ॥ ४ ॥ अथ पितृमात्रारिष्टविचारमाह
सूर्येणेति । सूर्येण तथा वेश्मस्थानेन चतुर्थभावेन च पितुः मृतिपदं मृत्यु-
समयं वदेत्कथयेत् तथैव चंद्रेण तथा पंचमेन पंचमभावेन च मातुः मृति-
पदं मृत्युस्थानं वदेदिति ॥ ५ ॥ ननु कया रीत्या सूर्यवेश्मचंद्रपंचमैः पि-
तृमातृमरणविचार इति चेत्तत्राह सूर्य इति त्रिभिः । सूर्ये चंद्रे च चकारात्
वेश्मस्थाने पंचमस्थाने च सपापे पापसहिते सति क्रमात् तयोः पितुर्मातुश्च
मरणं मृत्युर्भवेत् । ननु कस्मिन्काले इति चेदब्दादीन् कथयति । तयोः सू-
र्यपापयोः चंद्रपापयोर्वा अंतरलिप्ताः अंतरस्य राश्यादिरूपस्य लिप्ताः कलाः
कृत्वा ताः शतद्वयविभाजिताः द्विशतैर्भक्ताः अब्दादयः वर्षादिसमयो ज्ञेयः
अरिपापे समबले एव अथ न्यूनातिरिक्तसहचारिपापग्रहतारतम्येन विशेष-
संस्कारं कथयन्नादौ सहचारिपापबलाधिक्यसंस्कारमाह । तस्मात् सूर्यात्
चंद्राद्वा पापे बलोत्तरे सहचारिपापबलाधिक्ये सति ये अब्दादयः संप्राप्ताः

भाषा ।

दूसरे भावोंका अपने नामसरीखा फल जानना॥४॥सूर्यसे और चौथे घरमें पिताका
मरणयोग कहना ॥ ५ ॥ कौनसी रीतिसे मरणयोग कहना, सो कहते हैं. सूर्य चंद्र
चतुर्थ पंचम भाव यह पापग्रहोंसे युक्त होवे तो दोनोंका मरण कहना. परंतु कब होवे-
गा सो कहते हैं. सूर्यादिक और पापग्रह इनोंका यथाक्रमसे अंतर करके उनकी कला
करके दोसौसे भाग लेना, वर्षादिक फल लाना, सो मरणकाल जानना ये समबल होवे
तब जानना. न्यूनाधिक्य बल होवे तो उसका निर्णय कहते हैं. सूर्यसें चंद्रसे पापग्रह
बलवान् होवे तो उस फलकू पापग्रहदृष्टीसे गुणन करना. पीछे साठसे भाग लेके

विभाजिताः॥६॥अब्दादयोऽशुभस्यापि दृष्ट्या संगुणयेत्त-
तः॥ षष्ट्या विभज्याब्दाद्याश्च तस्मात्पापे बलोत्तरे॥७॥तदा
मृतिर्भवेन्न्यूने तद्बलेनैव वर्धयेत् ॥ तदा मृत्युस्तयोर्मृत्यु-
स्थाने पापग्रहे सति॥८॥ तस्याशुभस्य विन्यस्य चाष्टवर्गं

## टीका ।

ते शुभस्य सहचारिणः पापस्य दृष्ट्या गुणयेत् ततः षष्ट्या विभज्य अब्दा-
दयो ज्ञेयाः चपरं तदा मृतिर्ज्ञेया। अथ सहचारिपापबलाल्पत्वे विशेषसं-
स्कारमाह। न्यूने सहचारिपापबलेऽल्पे सति तु ये समबलप्राप्ताब्दादयः तान्
तद्बलेन सूर्यबलेन चंद्रबलेन वा वर्धयेत् गुणयेत् तदा मृतिः तयोः पितुर्वा
मातुर्वा मृतिर्ज्ञेया एवं सपापसूर्यचंद्रसंभूतं तथैवानुवृत्तत्वात् सपापचतुर्थभा-
वपंचमभावाभ्यामिति पितृमात्ररिष्टं वेदितव्यम्। एवं सपापग्रहभावेभ्यः पि-
तृमात्ररिष्टमुक्त्वा सूर्यचंद्राभ्यां चतुर्थपंचम भावाभ्यां च अष्टमपापग्रह सू-
चकपितृमात्ररिष्टकालविचारमाह । तयोः सूर्यचंद्रयोश्चतुर्थपंचमभावयोश्च
संबंधेन अष्टमस्थाने पापग्रहे सति तु पितृमात्ररिष्टविचरमुत्तरश्लोकैर्विशदय-
ति॥ ६ ॥ ७ ॥ ८ ॥ स्थानकरणतारतम्येन नवमश्लोकमारभ्य पंचदशश्लो-
कपर्यंतं तस्येत्यादिभिः तत्रादौ त्रिकोणशोधनमाह तस्येति सार्धद्वयेन । त-
स्य पूर्वोक्तसूर्यचंद्रचतुर्थपंचमभावाष्टमस्थानवर्तिनः अशुभस्य पापस्य अ-
ष्टवर्गं विन्यस्य क्रमात् वक्ष्यमाणप्रकारेण अब्दादयो बोध्याः । तत्प्रकारमे-
वाह त्रिकोणैकाधिपत्यस्य त्रिकोणप्रथमपंचमनवमस्थानरूपं एकाधिपत्यं
एकः अधिपतिः ययोस्ते एकाधिपतिनी तयोर्भावः एकाधिपत्यं मेषवृश्चिक-
वृषतुलादिरूपं तच्च तच्च समाहृत्य त्रिकोणैकाधिपत्यं तस्य क्रमात् नवमपंच-

## भाषा ।

वर्षादिक फल लाना. और जो कभी पापग्रह अल्पबली होवे तो सूर्यबलसे चंद्रब-
लसे पूर्वोक्त वर्षादिककूं गुणन करके ६० से भाग लेके वर्षादि लायके फल क-
हना. और अष्टम भावमें पापग्रह होवे तो उसके संबंधसे मातापिताका अरिष्ट
कहना॥ ६ ॥ ७ ॥ ८ ॥ अब आगे स्पष्ट दिखाते हैं. सूर्य चंद्र चतुर्थभाव पंचम
भाव अष्टम भाव यहां सहवार्ती जो पापग्रह हैं उनोंका अष्टवर्ग स्थापन करके उस-

ततः क्रमात् ॥ त्रिकोणैकाधिपस्यास्य कुर्याच्छोधनकं बुधः ॥ ९ ॥ त्रिषु द्वयोर्वा यन्न्यूनमितरच्च समं भवेत् ॥ एक-

## टीका ।

मात् बुधः विद्वान् शोधनकं कुर्यात् । एतत्रूपं शोधनं तु॥९॥त्रिकोणस्यैव संभवति नत्वेकाधिपत्यस्येति बोध्यम् । शोधनप्रकारमाह त्रिषु द्वयोर्वा प्रथमपंचमनवमेषु त्रिषु चतुर्थपंचमयोः पंचमनवमयोः नवमप्रथमयोर्वा द्वयोः मध्ये यत्स्थानं करणं वा रेषाबिंदुर्वेत्यर्थः न्यून अल्पं स्यात् तदितरस्थानयोः समं तुल्यं भवेत् । एतदुक्तं भवति त्रयाणां मध्ये एकस्मिन्स्थाने स्थानद्वयापेक्षया या न्यूनसंख्याका रेषा बिंदुर्वा सा स्वस्मिञ्छोधिता सती नष्टा स्यात् एवमेव अन्यस्थानयोः प्राप्तरेखासु शोधिता चेत् स्वसंख्याया न्यूनीकुर्यात् एवं समत्वं बोध्यम् नतु स्वयमेका चेत्सर्वत्र एकत्र स्थितिरिति । अथ च एकस्मिंस्त्रयाणां स्थानानां मध्ये एकस्मिन् भवने स्थले शून्यं चेत् रेखाभावश्चेत् तत्त्रिकोणं रेखाशोधनविषये न शोधयेत् न शोध्येत्किं तु यथास्थितमेव स्थाप्यम् तस्य शोधनाभाव इति यावत् एवमेव करणविषये बोध्यम् अथ च सर्वगेहेषु त्रिष्वपि स्थानेष्वित्यर्थः समत्वं रेखासाम्यं चेद्बुधः विद्वान् सर्व स्थानत्रयरूपमपि संशोधयेत् वर्जयेत् तुल्यशोधनेन शेषाभावात् सर्वं शून्यरूपमेवस्थापनीयमित्यर्थः । एवं त्रिकोणशोधनं बोध्यम् । अथोदाहरणम् । सूर्याष्टकवर्गविचारे मेषे रेषे २, सिंहे रेषाः ३, धनुषि रेषाः ४, अत्र न्यूनं मेषस्थं रेषाद्वयम् तन्मेषसिंहधनुःस्थरेषासु संशोध्य अवशिष्टं जातं मेषाधः०, सिंहाधः १, धनुरधः २, एवं सर्वत्र बोध्यम् । एकन्यूनत्वोदाहरणम् । अथ त्रिकोणस्थैकभवने रेषाभावोदाहरणम् । मेषे रेखा १, सिंहे रेषा ५, धनुषि रेखाभावः अत्र शोधनाभावात् यथास्थितमेव स्थाप्यं अथ त्रिकोणस्थानत्रयेपि समत्वोदाहरणं यथा मेषे रेखाः ४, सिंहे रेखाः ४, धनुषि रेखाः ४, अथ सर्वसमत्वात् सर्वत्र रेखाभाव एव । एवं सर्वभावत्रिकोणेषु त्रिप्रकारेण शोधनं

## भाषा ।

का त्रिकोण शोधन करना और एकाधिपत्यका शोधन करना ॥ ९ ॥ त्रिकोणशोधनमें तीन ठिकाने दोठिकानेसे जो कम होवे उससे शोध और जो त्रिकोणमें

स्मिन् भवने शून्यं तत्त्रिकोणं न शोधयेत् ॥ १० ॥ समत्वे सर्वगेहेषु सर्वं संशोधयेद्बुधः ॥ क्षीणेन सहचान्यस्मि-

## टीका ।

ज्ञ्यम् ॥१०॥ अथैकाधिपत्यशोधनप्रकारमाह क्षीणेनेत्यादि सपादपंचदश-श्लोकपर्यंतम् । अत्रादौ त्रिकोणशोधनेन पूर्वोक्तरीत्या सर्वभावेषु रेखाः संशोध्य अवशिष्टासु अयमेकाधिपत्यविचारः कर्तव्यः स यथा एकाधिपत्यशोधनं नाम राशिद्वयस्य मेषवृश्चिकरूपस्य वृषतुलारूपस्य मिथुनकन्यारूपस्य धनुर्मीनस्य मकरकुंभरूपस्य अन्योन्यरेषाभिः सग्रहत्वाग्रहत्वतया संस्कारः, कर्कसिंहयोस्तु चंद्रसूर्ययोः एकक्षेत्रत्वान्नैकाधिपत्यसंस्कारप्राप्तिः किंतु भौमादिक्षेत्राणामेवेति तत्प्रकाराणां पदशः टीका तु विस्तरभयान्नलिखिता किंतु कल्पितोदाहरणैरेव स्पष्टीक्रियते । तत्रादौ सग्रहरेषासाम्यैकाधिपत्यराशिद्वयोदाहरणम् यथा मेषत्रिकोणे प्राप्ते रेषाः ।।।, वृश्चिके च रेषाः ।।।, एतद्राशिद्वयं प्राप्तसमरेषं सग्रहं च अतः "उभयोर्ग्रहसंयुक्ते न संशोध्यः कदाचन" इति वचनेन शोधनाभावाद्यथास्थितिरेव मेषे रेषाः ।।।, वृश्चिके रेषाः ।।।, इत्येकः प्रकारः । अथ सग्रहराशिद्वये रेषावैषम्योदाहरणम् यथा मेषे त्रिरेषाः ।।।, वृश्चिके त्रिकोणशोधनप्राप्तरेखे ॥ अथोभयत्र सग्रहत्वेपि रेखावैषम्यात् न्यूनरेखा अधिकरेखासु संशोध्य शिष्टं मेषे वृश्चिके "ग्रहयोगेन हानिः स्यात्" इति न्यूनेनाधिकस्य हानिः सग्रहत्वान्न सर्वहानिरिति द्वितीयः प्रकारः । अथ उभयत्र सग्रहत्वेपि एकत्र त्रिकोणशोधनप्राप्तरेषासहितत्वं एकत्र रेषार-

## भाषा ।

एक जगमें शून्य होवे वो त्रिकोणका शोधनही करना ॥ १० ॥ तीन ठिकाने समान होवे तो सर्व ठिकाणे शून्य रखना इसका विस्तार टीकामें है ॥ १० ॥ अब एकाधिपत्यशोध कहते हैं. एक ग्रहकी दो राशि हैं वहां एक राशिमें रेखा कम हैं दूसरी राशिमें रेखा जास्ती हैं और दोनों राशिमें ग्रह नहीं हैं तो अधिक रेखासंख्या राशिकी रेखामें कमरेखा संख्याकू न्यून करके शेष रखना. कम जो हैं वहां शून्य रखना. उदाहरण मेषराशी नीचे रेखा तीन हैं, वृश्चिकके नीचे रेखा दो हैं और दोनों ग्रहरहित हैं. वो तीनमेंसे दो हीन किये तो मेषके नीचे १

## टीका।

हितत्वं चेदुभयत्र शून्योदाहरणम् यथा मेषे त्रिरेषाः ।।।, वृश्चिके त्रिरेषाः ।।।, मेषे कश्चिद् ग्रहोऽस्ति वृश्चिके ग्रहाभावः अतः " एकत्र नास्ति चेत्सर्वेहानिरन्यत्र कीर्तिता " इतिवचनात् मेषस्य सग्रहत्वेऽपि वृश्चिके रेषाभावादुभयत्रापि हानिः इति तृतीयः प्रकारः। अथ उभयोस्संग्रहत्वेऽपि उभयत्र रेषाभावे शून्यमेवेति नात्रोदाहरणम् इति चतुर्थः प्रकारः। अथ ग्रहरहितफलसाम्योदाहरणम् यथा मेषे रेषाः ।।।, वृश्चिके ।।।, उभयत्रापि ग्रहाभावः अत्र उभयोर्ग्रहहीनाभ्यां " समत्वं सकलं त्यजत् " इति उभयत्र समफलशोधनेन फलाभाव एव इति पंचमः प्रकारः। अथ ग्रहरहितोभयविषमरेषोदाहरणम् यथा मेषे रेषाः ।।।, वृश्चिके रेषे ।।, अत्रोभयत्रापि ग्रहरहितत्वं फलवैषम्ये च अतः " क्षीणेन सह चान्यस्मिञ्छोधयेद्ग्रहवर्जितम् " इति हीनमधिकात्संशोध्य शेषमधिकस्थले स्थापितं मेषे रेषा। वृश्चिके० इति षष्ठः प्रकारः अथ अग्रहं सरेषाकं सग्रहं रेषारहितं यथा मेषे रेषाः ।।।, अत्र ग्रहाभावः वृश्चिके रेषाभावः अत्रापि " एकत्र नास्ति चेत्सर्वेहानिरन्यत्र कीर्तिता " इति उभयत्रापि सर्वहानिः मेषे० वृश्चिके इति सप्तमः प्रकारः। अथ उभयत्र ग्रहराहित्यं रेषाऽभावोऽपि चेदार्थिकमेव फलाभावत्वं नात्रोदाहरणप्रयोजनम् इत्यष्टमः प्रकारः। अथ रेषाधिकसंग्रह न्यूनरेषाकाग्रहे च उदाहरणम् यथा मेखे रेषाः ।।।, एतत्संग्रहे वृश्चिके रेषे ।।, एतदग्रहं अत्र "फलाधिके ग्रहैर्युक्ते चान्यस्मिन्सर्वमुत्सृजेत्" इति फलाधिकं यथा पूर्वं स्थितं बलहीनं ग्रहराहित्याद्रेषाशून्यमेव मेषे रेषाः ।।।, वृश्चिके रेषाः ।।। इति नवमः प्रकारः। अथ सग्रहाग्रहफलसाम्योदाहरणम् यथा मेषे रेषाः ।।।, सग्रहं वृश्चिके रेषाः ।।।, अग्रहं अत्र "सग्रहाग्रहतुल्यत्वात्सर्वं संशोध्यमग्रहात्" इति तुल्यफलत्वेपि सग्रहाग्रहतयोभयत्रापि फलाभावः मेषे० वृश्चिके० इति दशमः प्रकारः। अथ सग्रहन्यूनरेषांकाग्रहाधिकरेषांकोदाहरणम् यथा मेषे रेषाः ।।।, एतत्सग्रहं वृश्चिके रेषाः ।।।।, एतदग्रहं अत्र "ग्रहयुक्ते फले हीने ग्रहाभावे फलाधिके। अनेन सह चान्यस्मिञ्छोधयेद्ग्रहवर्जिते" इति ग्रहवर्जिताधिकरेषासु सग्रहन्यूनरेषाः संशोध्य शिष्टामग्रहस्थलस्थरेषां सग्रहस्थलमाचकर्ष मेषे रेषा।, वृश्चिके रेषाभावः इत्येकादशः प्रकारः। अथ सग्रहाग्रहद्वयरेषा-

ञ्छोधयेद्ग्रहवर्जितम् ॥ ११ ॥ ग्रहयुक्ते फले हीने ग्रहाभावे फलाधिके ॥ अनेन सह चान्यस्मिञ्छोधयेद्ग्रहवर्जिते ॥ १२ ॥ फलाधिके ग्रहैर्युक्ते चान्यस्मिन्सर्वमुत्सृजेत् ॥ उभयोर्ग्रहसंयुक्ते न संशोध्यः कदाचन॥ १३॥ उभयोर्ग्रहहीनाभ्यां समत्वं सकलं त्यजेत् ॥ सग्रहाग्रहतुल्यत्वात्सर्वं संशोध्यमग्रहात् ॥ १४ ॥ एकत्र नास्ति चेत्सर्वहानिरन्यत्र कीर्तिता ॥ कुलीरसिंहयो राश्योः पृथक् क्षेत्रं पृथक् फलम् ॥ १५ ॥ ग्रहयोगेन हानिः स्यात् वर्गणाघ्नं पृथक् ततः ॥

## टीका ।

भावे तु आर्थिकशून्यत्वान्नात्रोदाहरणम् इति द्वादशतमः प्रकारः । अथ उभयत्र सग्रहत्वे एकत्र रेषासहितत्वं एकत्र रेषाभावत्वं अत्रापि "एकत्र नास्ति चेत्सर्वहानिरन्यत्र कीर्तिता" इति त्रयोदशतमः प्रकारः । अथ च कर्कसिंहयोः एकेशस्थानैकत्वात् यथास्थितिरिति शोधनाभावः प्रागेव लिखितः इति एकाधिपत्यशोधनप्रकारः वृषादिसर्वराशिषु ज्ञेयः एवमेव करणशोधनप्रकारः अथ प्रकृतमेवं प्रकारेण सूर्यचंद्रचतुर्थभावपंचमभावेभ्यः अष्टमे पापे त्रिकोणैकाधिपत्यशोधनेन रेषाः करणं च संपाद्याग्रिमसंस्कारः कर्तव्य इति ॥ ११ ॥ १२ ॥ १३ ॥ १४॥१५॥ अथ त्रिकोणैकाधिपत्यशोधनप्राप्तरेषासु करणेषु च विशेषसंस्कारेण अब्दाद्यानयनं बलाबलतारतम्येन स्थानकरणादिकं चाह वर्गणाघ्नमित्यादिएकोनविंशतिश्लोकपर्यंतम् । वर्गणाघ्नं वर्गणया हन्यते तथोक्तं वर्गणा तु प्रथमाध्यायावसाने "मुनिदिग्वसुवेदादिगिष्वब्ध्य-

## भाषा ।

रेखा लिखना. वृश्चिकके नीचे शून्य लिखना. यह एकाधिपत्य शोधन भया. इस तरहके चौदा उदाहरण टीकामें दिखाये हैं. इसलिये यहां विस्तारके लिये लिखते नहीं ॥ ११ ॥ १२ ॥ १३ ॥ १४॥१५॥ अब एकाधिपत्यके उपरसे मातापिताका स्पष्ट मरणकाल बताते हैं. एकाधिपत्यके जो अंक मेषादिकमें आये हैं उनोंकू मेषादि ध्रुवांकोंसे गुणन करके जहां ग्रह बैठे होवे तो वे एकाधिपत्यके अंकोंकू

संयोज्य सप्तभिर्हत्वा सप्तविंशतिभाजिताः ॥ १६॥ अब्दा-दयस्तदा देहनाशः करणदे सति ॥ तस्मिन्पापे ग्रहे त-स्माद्बलिन्येवं विधिः स्मृतः ॥ १७ ॥ बलहीने तु तं ह-न्यात्सप्तभिः पंचभिर्भजेत् ॥ आयुस्तयोः स्यात्स्थानस्य प्रदे चेदशुभे सति ॥ १८ ॥ मुनिभक्तं वसुघ्नं स्याद्येवं चे-

## टीका ।

ष्टनवेषवः । रुद्रार्के वर्गणा मेषाद्विषयेष्वष्टवायवः । पंक्तिस्वरेषवः सूर्याद्वर्गणा प्रोच्यते बुधैः" इत्युक्तध्रुवांकैः पृथक् पृथक्करणं स्थानं वा गुणयेत् ततः राशिफलं ग्रहफलं च पृथक् पिंडीकृत्य उभे अपि संयोज्य सकलं पिंडीभूतं सप्तभिर्हत्वा सप्तविंशतिभाजिताः लब्धं फलं अब्दादयः भवेयुः तदा तस्मिन्नब्दादिकाले देहनाशः पित्रोर्मरणं ज्ञेयम् अयं विधिः तस्मिन्करणे पापग्रहे बालिनि सति स्मृतः अत्रोदाहरणम् चतुर्थभावादष्टमस्थो रविः पापः चक्रे द्रष्टव्यः अस्य बलं ९।४१।१४ चतुर्थभावादष्टमभावबलं ८।१४।४१ अस्मात्पापबलमधिकं अतः चतुर्थभावादष्टमस्थबलोत्तरकरणादपापग्रहसंभूतपित्ररिष्टाब्दाद्युदाह-रणं यथा त्रिकोणैकाधिपत्यशोधनावशिष्टराशिकरणांकाः कुंभे १, कर्के १, सिंहे १, मकरे ३, अर्कक्रमाद्राशिवर्गणांकाः ११।४१।०।५ एभिः क्रमात्पृथ-ग्गुणितांकाः ११।४।१०।१५ एतेषां पिंडः ४० अथ पापग्रहाणां त्रिकोणै-काधिपत्यशोधनावशिष्टग्रहकरणांकाः रवेः १, शनेः ३, सपापबुधस्य ३, एषां ग्रहाणां वर्गणांकाः ५।५।५ एभिर्गुणिताः करणांकाः ५।१५।१५ एतेषां

## भाषा ।

वो वो ग्रह ध्रुवांकोंसे गुणन करना पीछे दोनोंके योग करके दोनोंका एक योग करना. सात अंकसे गुणन करके सत्ताईससे भाग लेना तो लब्धांक वर्षादिक मातापिताके आयुष्यका मान जानना. ए बिंदूसे मृत्युबल कह्या परंतु वो पापग्रह बलवान् होवे तो पूर्वकी बात जो कही है ओही रीति जानना और बलहीन होवे तो योगकू सातसे गुणन करके पांचसे भाग लेना. वर्षादिक लब्ध जो वो माता पिताका आयुष्य जानना. और रेखाप्रद पापग्रह बलवान् होवे तो पूर्व पिंडकू अष्ट-गुणित करके सातसे भाग लेना. लब्ध वर्षादिक दोनोंका आयुष्यप्रमाण जानना.

मेतयोर्मृतिः ॥ वक्ष्यमाणेन विधिना वदेदाह पराशरः ॥ १९ ॥ सूर्यादायुःकरा भूपा मनवोर्का नवार्णवाः ॥ वेदो-क्षीणि तु लग्नस्य वक्ष्याम्यायुस्तथैव तत् ॥ २० ॥ स्वोच्चे

## टीका ।

पिंडः ३५ पिंडद्वयैक्यं ७५ एतत्सप्तगुणितं ५२५ सप्तविंशतिभाजनलब्धाद-यः वर्षाणि १९ मासाः ५ दिनानि १० घट्यः ० पलानि ० अयं पित्ररिष्टका-लो वेदितव्य इति अर्थात् रेखाप्रदे पापिनि बलिनि सति उक्तविधिना प्राप्ता-ब्दादिकाले आयुर्वेदितव्यमिति भावः अथ च करणदे बलहीने तु पूर्वोक्तं सकलं पिंडं सप्तभिर्हत्वा पंचभिर्भजेत् न सप्तविंशतिभिरिति पितृमरणकाली-नाब्दादयः स्पष्टाः स्युः अथ च स्थानस्य प्रदे रेखाप्रदे अशुभे बलिनीति पूर्वान्वयेनाध्याहारः सति प्रागुक्तसर्वपिंडं वसुघ्नं अष्टगुणितं मुनिभक्तं सप्त-भाजितं कृत्वा प्राप्ताब्दादयः तयोः पित्रोः आयुः सिद्धं स्यात् एवं स्थानप्र-दात् आयुरब्दाधिके चेदेतयोर्न मृतिः एवं सूर्याच्चतुर्थभावाद्वा अष्टमस्थपाप-स्यायुः कथितं एतत् वक्ष्यमाणचतुर्थभावसूर्यरश्म्यायुःसंपादनेन न्यूनातिरिक्तं परमावर्योध्यमिति मूलकार एवाह वक्ष्यमाणेन विधिना वक्ष्यमाणप्रकारेण वदेदिति पराशरः आहेति ॥ १६॥१७॥१८॥१९ एवं स्थानकरणतारतम्येन सूर्यचतुर्थभावाष्टमस्थपापायुरुक्त्वा केवलं सूर्यचतुर्थभावाभ्यामेवायुः कथय-ति तत्रादौ ग्रहलग्नायुर्ध्रुवांकानाह सूर्यादिति । सूर्याद्रवेः सकाशात् क्रमशो ग्रहाणां आयुरंकाः क्रमशो ज्ञातव्याः कराः २, भूपाः १६, मनवः १४, अर्काः १२, नवः ९, अर्णवाः ४, वेदः ४, इति । अथ लग्नस्य तु अक्षिणी २ इति आयुः तथैव स्थानकरणवदेव वक्ष्यामि ॥ २० ॥ एवमुक्तायुर्ध्रुवांकाः स्वोच्चस्थ एव ग्रहे

## भाषा ।

अथ रवेस्त्रिकोणैकाधिपत्यशोधितकरणचक्रम्.

| र. गु. | शु. मं. | ल. | | | | | | | | चं. | श. बु. | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कुं. | मी. | मे. | वृ. | मि. | क. | सि. | क. | तु. | वृ. | ध. | म. | राशयः । |
| ३ | ४ | ६ | ५ | ४ | ५ | ५ | १ | २ | ४ | ४ | ५ | मूलप्राप्तकरणाविंदवः । |
| १ | ० | २ | ४ | २ | १ | १ | ० | ० | ० | ० | ४ | त्रिकोणशोधनेनावशिष्टाः । |
| १ | ० | ० | ० | ० | १ | १ | ० | ० | ० | ० | ३ | एकाधिपत्यशोधनावशिष्टाः । |

नीचे तु पातः स्याद्धरणादिविधिस्ततः ॥ आयुस्तयोः स्यात्तौ तस्मिन् भवने तु तथा स्थितौ ॥ २१ ॥ न कश्चित्स्थानदः स्याच्चेत्तत्काले च मृतिर्भवेत् ॥ शुभयोगे शुभाः

## टीका ।

ज्ञेया इत्याह स्वोच्चे इत्यादिपादोनद्वाविंशतिश्लोकपर्यंतम् । स्वोच्चे स्वकीयोच्चस्थे ग्रहे सति उक्तध्रुवांकपरिमितमायुर्ज्ञातव्यं नीचे तु ग्रहे नीचस्थानगे सति तु हरणादिविधिः आयुःस्वीकरणादिप्रकारः पातः अनुपातो ज्ञेयः तदित्थं उच्चे चेत्पूर्वोक्तमिति यदायुस्तर्हि उच्चारोहे उच्चच्युते च कियत् ततोपि क्रमशः उच्चाधिमराशिषु कियत् एवं नीचे कियदिति अनुपातः एवं तयोः रविचतुर्थभावयोः आयुः स्यात् तौ तथा स्वोच्चनीचादौ भवने स्थाने स्थितौ वर्तमानौ संतौ तयोरनुपातादायुर्ज्ञेयमित्यर्थः । एवं सत्यपि तत्र न कश्चिदपि ग्रहः स्थानदः स्थानदाता स्याच्चेत्तत्काल एव मृतिः भवेत् स्थानदायुर्विशेषालाभात् सा मृतिस्तु शुभयोगे शुभासुखेनेत्यर्थः अर्थात् अशुभयोगेन पातराजदंडाग्निजलादिदुःखादित्यर्थः ॥ २१ ॥ अथ सूर्यानीतसूर्यचतुर्थभावसामान्यायुषः रश्मिविचारेण परमावधितया स्पष्टत्वं मातृपित्ररिष्टं चाह तयोरित्यादिपादसहितार्धश्लोकेन । तयोः सूर्यचतुर्थभावयोः रश्मिसंभवः रश्म्युत्पत्तिः स्याच्चेत्तान् रश्मीन् अष्टभिर्गुणयेत् ततः षड्भिः विभज्य परं आयुः परमायुर्दाय इति यावत् भवेत् । अथास्योदाहरणम् । चतुर्थ भावः कर्कः रविः कुंभे वर्तमानः चतुर्थभावो भुक्तः ३।१।१५ भोग्यांशाः २८।४१ तदायुरभावः भोग्यत्वात् भुक्तांशाः १।१९ त्रिंशद्भागात्मकलग्नस्याक्षिणीत्युक्तत्वाद्वर्षद्वयमायुश्चेल्लग्नभु-

## भाषा ।

शून्यमतके आयुष्यसे रेखाका आयुष्य अधिक आवे तो मरण नहीं है ऐसा पराशर कहते हैं ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ पहिले सूर्य चतुर्थभाव अष्टम भावसे आयुर्दाय कहके आगे सूर्यचतुर्थभावमें आयुर्दाय कहते हैं. उसमें सूर्यादि लग्नांतके आयुर्ध्रुवांक कहते हैं. सूर्यादिकके ध्रुवांक २।१६।१४।१२।९।४।४।२ यह जानना ॥२०॥ उच्चका ग्रह होवे तो ध्रुवांकका आयुष्य स्पष्ट जानना, और नीचका ग्रह होवे तो अनुपातसे आयुष्य लाना ॥ २१ ॥ और वहां कोई रेखा देनेवाला ग्रह न होवे तो

प्रोक्तास्तयोः स्याद्रश्मिसंभवः ॥ २२ ॥ अष्टभिर्गुणयेत्षड्भिर्विभज्यायुः परं भवेत् ॥ वेश्मनि स्थानदा न स्युर्जन्म-

## टीका।

त्तस्य अंशः १ कलाः १९ एवंरूपस्य कियदादिरित्यनुपातेन प्राप्तं चतुर्थभावलग्नभुक्तायुः ०।१।२ अथ उच्च इत्युक्तत्वात् उच्चत्वाभावत्वात् तत्पतेश्चंद्रस्य उच्चत्वोपलक्षितायुर्गृह्यते तदित्थं चतुर्थभावस्य कर्काख्यस्य पतिश्चंद्रः स च ८।२५।२९ एवं वर्तमानः अस्य उच्चे ग्रहायुःप्रकरणोक्तध्रुवांकाः १६ एवं संख्याकाः परमोच्चे वृषत्रिभिर्तेशे चेत् अनुपातेन धनराशिपंचविंशतितमांशे वर्तमानस्य चंद्रस्य कियद्वर्षाद्यायुरितित्रैराशिकेन प्राप्तं चंद्रायुर्वर्षादि४।५।१४ अथ रविः १०।४।१४ एवं वर्तमानः अस्य ग्रहायुःप्रकरणोक्तपरमोच्चायुर्ध्रुवांकाः करौ इत्युक्तत्वात् मेषराशिदशमांशे वर्तमानस्य रवेः वर्षद्वयं चेत् अनुपातेन कुंभराशिपंचमांशे वर्तमानस्य कियदिति प्राप्तं रव्यायुर्वर्षादि १।३।१५ एवं चतुर्थभावायुः तत्पतिश्चंद्रायुः रव्यायुश्च संयोज्य जातं ५।१०।१ एतत्सामान्यायुः। अथ रश्म्यायुरित्थं रवेरश्मयः ५।४०।२३ भावस्य रश्म्यभावात् चतुर्थभावपतेश्चंद्रस्य रश्मयः २।३१।१३ अनयोर्योगः ८।११।३६ अष्टसंगुणितः जातं ६५।३२।४८ अयं षड्भिर्भक्तः लब्धफलं १४।७।२८ जातमेतद्रश्म्यायुः एतत्सामान्यायुर्योगेन जातं वर्षादि २०।५।२९ एतत्परमायुर्बोध्यं एतट्टीकाकर्तुरनुभवसिद्धं पित्ररिष्टमिति ॥ २२ ॥ एवं सपापचतुर्थभावसूर्यायुः तत्तत्सृष्टपापानामस्थानायुः केवलं चतुर्थभावसूर्यायूरश्मिसमुद्भूतपरमायुश्च कथयित्वा अथ वेश्मस्थाने रेखाभावे कथमायुर्विचार इत्याह वेश्मनि चतुर्थस्थाने स्थानदाः रेखाप्रदाः ग्रहा न स्युः तत्र केवलं रेखाभावश्चेत् जन्मकाले स चतुर्थभावः स्फुटीकृतः पश्चात्कलीकृतः कलारूपतां प्रापितः खनखैः २०० तं विभज्य क्रमात् अब्दादयः वर्षमासादयः क्रमेण वर्ष-

## भाषा।

उसी वख्त मृत्युकाल जानना. शुभयोग होवे तो मरण उत्तम रीतिसे होवेगा. पापाधिक्य होवे तो दंडपातादिकसे होवेगा ॥ २२ ॥ अब रश्मी ऊपरसे आयुष्य कहते हैं. सूर्य चतुर्थभावकी रश्मीका संभवकूं अष्टसे गुणन करके छःसे भाग लेना.

काले स्फुटीकृतः ॥ २३ ॥ कलीकृतश्च खनखैर्विभज्याब्दा-
दयः क्रमात् ॥ एवं शुभाशुभं ब्रूयान्मातापित्रोर्द्विजोत्तम
॥ २४ ॥ करणस्थानदातारः पापपुण्यफलप्रदाः ॥ पुन-
श्चोच्चादिषु तथा त्रिगुणाद्यास्तु पूर्ववत् ॥ २५ ॥ शत्रुनी-

## टीका ।

मासदिनानीत्यर्थः स्युरित्यध्याहारः ॥ २३ ॥ एवमित्युपसंहरति । हे द्वि-
जोत्तमे ! द्विजवर्य मैत्रेय । एवमुक्तपंचप्रकारकं मातापित्रोः जननीजनकयोः
शुभाशुभं समाहारः शुभमायुः अशुभं मृत्युः समाहृत्य तद्ब्रूयादिति ॥२४॥
अथ करणादिविचारेण भावविचारमाह करणइत्यादियावदध्यायसमाप्ति ।
करणस्थानदातारः भावेषु करणानि बिंदवः स्थानानि रेखाः ताः ददति ते
करणस्थानदातारः यथासंख्यं पापपुण्यफलप्रदाः पापं अशुभं पुण्यं शु-
भं ते च ते फले च प्रददतीति पापपुण्यफलप्रदाः करणदा अशुभफलप्रदाः
स्थानदाः शुभफलदा इत्यर्थः पुनश्चेति प्रकारांतरं तथा तेन प्रकारेण उच्चा-
दिषु उच्चत्रिकोणस्वमित्रादिराशिषु भावफलानि त्रिगुणादीनीति पूर्ववत्
त्रिगुणाद्याः त्रिगुणादिफलदातारा भावेषु ग्रहाः बोध्याः शत्रुनीचाधिश-
त्रूणां स्थानेषु वर्तमानानां ग्रहाणां चापि पूर्ववदेव ज्ञातव्यम् तादित्थं पूर्वं र-
श्मिप्रकरणे "उच्चे च त्रिगुणं प्रोक्तं स्वत्रिकोणद्विसंगुणम्"॥स्वर्क्षे त्रिघ्नादिसं-
भक्तास्त्वधिमित्रगृहेऽपि च ॥ वेदघ्ना रामसंभक्ता मित्रभे षड्गुणास्ततः ॥ पंचभ-
क्तास्तथा शत्रुगृहे द्विघ्नाश्चतुर्हताः ॥अधिशत्रोः करघ्नाश्च पंचभक्ता न नीचभे॥"
इत्युक्तप्रकारो बोध्य इति ॥ २५ ॥ अथ वक्ष्यमाणभावविचारक्रिया अंशा-

## भाषा ।

लब्ध परमायुष्य जाननी. टीकामेंस्पष्ट है ॥ २३ ॥ चौथे घरमें जो रेखाप्रद ग्रह
नहीं होवे तो चतुर्थ भावकूं स्पष्ट करके उसी कला करके २०० से भाग लेना. व-
र्षादि आयुष्य आवे ऐसा मातापिताका शुभाशुभ योग कहना ॥ २४ ॥ शून्यके दे-
नेवारे जो ग्रह हैं वे पापफल देनेवाले जानना, और रेखाके देनेवारे जो जो ग्रह हैं
वे पुण्यफल देनेवारे हैं उससे उच्चनीचमूलत्रिकोणादिकके होवे तो त्रिगुणादिक फल
पूर्वसरीखा जानना ॥ २५ ॥ जहां भावपरसे आयुष्यका विचार देखना होवे वहां

चाधिशत्रूणां स्थानेष्वपि तु पूर्ववत् ॥ राशिं हित्वा तु भावानां सर्वत्रैवं क्रिया भवेत् ॥ २६ ॥ द्वितीयभावलिप्ताश्च राशिलिप्ता विभाजिताः ॥ स्ववर्गणाहतास्तत्स्थखेटा-

## टीका ।

दिग्रहणेनैवेत्याह राशिमित्यर्धेन । राशिं राश्यंकं विहाय त्यक्त्वा क्रिया वक्ष्यमाणा भवेदित्येवं सर्वत्र सर्वभावेषु वक्ष्यमाणेषु बोध्यमित्यध्याहारः ॥२६॥ अथ तन्वादिद्वादशभावेषु भावोक्तफलविचारे संस्कारविशेषेण विचाररीतिं कथयन् द्वितीयभावमुदाहरति द्वितीयेत्यादिसार्धैकोनविंशच्छ्लोकपर्यंतम् । द्वितीयभावलिप्ताः द्वितीयश्चासौ भावश्च तस्य लिप्ताः कलाः अत्र "राशिं हित्वा तु भावानां सर्वत्रैवं क्रिया भवेत्" इति द्वितीयभावस्य राश्यंकं विहाय शिष्टांशलिप्ताः कृत्वेत्यर्थः राशिलिप्ता विभाजिताः राश्याः याः लिप्ताः एकराश्यंकस्य अंशान्विधाय ३० षष्टिगुणनसंपादिताः १८०० ताभिः विभाजिताः भक्ताः ततः स्ववर्गणाहताः स्वस्य द्वितीयभावस्य वा उक्ता वर्गणा प्रथमाध्यायाग्रे "मुनिदिग्वसुवेदादिगिष्वंत्र्यष्टनवेषवः ॥ रुद्रार्का वर्गणा भेपात्" इति द्वितीयभावस्य वर्गणा दिक्संख्याका १० तया हताः गुणिताः तथा तत्स्थखेटानां तस्मिन् द्वितीये भावे तिष्ठंति ते च ते खेटाः ग्रहाश्च तेषां वर्गणा तत्रैवोक्ता "विषयेष्वष्टवायवः ॥ पंक्तिः स्वरेषवः सूर्याद्वर्गणा प्रोच्यतेबुधैः" इति तथा हताः च हताः गुणिताः तस्मिन् भावे ग्रहसत्त्वे इति भावः ततः भावरश्मिभिः आहन्यात् भावस्य रश्म्यभावात्तदधिपस्य रश्मिभिर्गुणयेदित्यर्थः । ततः सप्तभिः ७ विभाजयेत् भागमाहरेदित्यर्थः तत्र लब्धांकसं-

## भाषा ।

राशिकूं छोडके अंशादिकका जैसा संस्कार कह्या है वैसा करना ये क्रिया राशि छोडनेकी सब ठिकानें जानना ॥ २६ ॥ भावफलमें पहिले द्वितीय भावका उदाहरण बताते हैं. द्वितीय भावके अंशादिककी लिप्ता करके पछि द्वितीय भावकी राशिकी लिप्ता करके उससे भाग लेना. लब्ध जो कलादिक फल उसकूं द्वितीय भावके ध्रुवांकसे गुणन करना द्वितीय घरमें ग्रह होवे तो ग्रहध्रुवांकसे और गुणन करना न होवे तो नहीं करना, पछि द्वितीयभावस्वामीकी रश्मिसे गुणन करना. स-

नां वर्गणाहताः ॥ २७ ॥ भावरश्मिभिराहन्यात्सप्तभिश्च विभाजयेत् ॥ मूलरश्मिसमूहेन शिष्टं हन्यात्तथैव तान् ॥ २८ ॥ इष्टानिष्टफलाभ्यां च हत्वांतरमथ द्वयोः ॥ सप्त-

## टीका ।

ख्याकाः भरणीयकुटुंबानां पुमांसः बोध्याः अथ तथैव तेन प्रकारेण शिष्टं अवशिष्टांकाः तन्मूलरश्मिसमूहेन मूलाः प्रथमोत्पादिताः ये सर्वग्रहाणां रश्मयः तेषां यः समूहः संहतिर्मिलनमित्यर्थः तेन हन्यात् गुणयेत् ततः तान् मूलरश्मिगुणितान् इष्टानिष्टफलाभ्यां इष्टं च अनिष्टं च ते एव फले ताभ्यां हत्वा गुणयित्वा एकत्र कष्टेन हत्वेत्यर्थः । अथानंतरं द्वयोः उभयोः अंतरं विवरं कृत्वा सप्तविंशतिभिः गुणयित्वा सप्तभिर्विभाजयेत् । एवं रीत्या ये प्राप्तांकाः तत्समाः तत्तुल्याः भरणीयकुटुंबानां पोषणीयकुटुंबानां संबंधे षष्ठी स्त्रीः अबलाः विदुः पूर्वाचार्या इत्यध्याहारः इति एवमेव सर्वभावफलानयनरीतिर्बोध्या । अथास्योदाहरणम् । द्वितीयभावः १।४।२८।५० अस्य राश्यंकं विहाय ४।२८।५० अस्य लिप्ताः २६९ राशिलिप्ताः १८०० आभिर्भक्ताः जातं कलारूपं फलम् ०।९ द्वितीयभाववर्गणांकाः १० एभिर्हत्वा जातं ०। ९० एतत् विकलास्थमधिकृत्वा षष्ट्युद्धृतं १।३० द्वितीयभावे ग्रहाभावाद्ग्रहवर्गणागुणनसंस्काराभावः द्वितीयभावेशरश्मिः ६।५३।३८ अनेन गोमूत्रिकया गुणिता जाताः कलाः १०।२० एताः सप्तभाजिताः सत्यः लब्धं ०। १।२८ जातेयं भरणीयकुटुंबपुरुषसंख्या । अथ शेषांकाः ४ एते मूलरश्मिसमूहेन २४।२३।३२ एवं भूतेन हताः जाताः ९७।१४ कलाधिक्यात्षष्ट्युद्धृताः १।३७।१४ भावस्वामिनः इष्टफलं ०।४५।४८ अनेन गुणिताः ०। ७४।१३ कलास्थानाधिक्यात् षष्ट्युद्धृताः १।१४।१३ जातमेतादिष्टगुणितं फलम् तथा ते एव मूलरश्मिसमूहांकाः १।३७।१४भावस्वामिनः कष्टं०।१४।११

## भाषा ।

नसे भागलेना, लब्ध जो अंक होवे वो भरणीय कुटुंबकी संख्या जानना. शेषकूं मूलरश्मिसमूहसे गुणन करके भावस्वामीके इष्टफलसे गुणन करके उसी प्रकारसे भावस्वामिकष्टबलांकोंसे मूलरश्मिसमूहकू गुणन करके दोनोंका अंतर करके २७

विंशतिभिर्हत्वा सप्तभिश्च विभाजयेत् ॥ २९ ॥ भरणीय-
कुटुंबानां पुंस्त्रियस्तत्समा विदुः ॥ राशीन् हित्वा तु लग्ना
दि भावभागादिकान् पृथक् ॥ ३० ॥ गुणयेद्रश्मिभिः स्वैः
श्च भावभागादयोविदुः ॥ कलीकृत्य भलिप्ताभिर्विभज्याप्तं

## टीका ।

अनेन हता जाताः ०।२३।० अनयोरिष्टकष्टफलहतयोः प्राप्तफलयो-
रंतरं ०।५१।१३ एतत्सप्तविंशतिभिर्गुणितं जातं कलादि फलम् ०।
१३८२।५१ एतदधिकत्वात् षष्ट्युद्धृतं २३।३।० सप्तभिर्भक्तं जातं ३।९ एते
भरणीयकुटुंबस्त्रीसंख्या इति ॥ २७ ॥ २८ ॥ २९ ॥ एवं भावगतपुंस्त्रीसंख्या-
नयनरीतिमुक्त्वा अग्रिमाध्याये तेषां कालपरिज्ञानं विवक्षुरादौ भावसाधन-
प्रकारांतरेण संख्यानयनं चाह राशीन्हित्वेत्यादिश्लोकद्वयेन । लग्नादिभा-
वभागान् राशीन् हित्वा राश्यंकं विहाय भावभागादय एव फलज्ञापका
इति शेषः इति विदुः ते भागादयः भावानां स्वैः स्वैः निजैर्निजैः रश्मि-
भिः तत्तद्भावपतिरश्मिभिरित्यर्थः गुणयेत् । ततः कलीकृत्य षष्टिगु-
णनेन कलास्थाने संयोज्य पृथक् द्विधा स्थापयित्वा एकत्र भलिप्ताभिः
१८०० विभज्य यत् आप्तं तत्फलं भावफलसंज्ञकं फलं बोध्यम् । ततः अन्यत्र
स्थापितं फलं सूर्यभक्तावशिष्टं द्वादशभागेन उर्वरितं तद्भावानां लग्नादीनां
साधनं साधनसंज्ञकं विदुरिति अग्रिमाध्यायविषयार्थं साधितं ज्ञेयम् । अ-
थात्रोदाहरणम् । तृतीयभावः २।२।५३।५९ राश्यंकं विहाय जातः २।५३।
५९ अस्य स्वामिनो बुधस्य रश्मयः १।४३।४१ एभिर्गोमूत्रिकागुणितो जा-
तः ५।०।३९ अस्य कलाः ३००।३० एताः पृथक् स्थापिताः एकत्र भ-

## भाषा ।

से गुणित करनेसे जो कलादिक फल आवे उसकूं ७ से भाग लेना. जो फल आवे
वो स्त्रियोंकी संख्या जाननी ॥ २७ ॥ २८ ॥ २९ ॥ राशीकूं छोडके लग्नादिकोंके
जुदे जुदे भावके अंशादिकोंकूं अपने अपने स्वामीकी रश्मियोंसे गुणन करना उस-
कूं भावभागादिक कहते हैं. कला करके दो ठिकाने रखना. राशीकी लिप्तिकासे
भाग लेना जो फल आवे उसकूं भावफल कहना. और दूसरे समूहका बारहसे भाग

फलं ततः ॥ ३१ ॥ सूर्यभक्तावशिष्टं तु भावानां साधनं विदुः ॥ राशीन् हित्वा ततो लिप्ताः खखनेत्रविभाजिताः ॥ ३२ ॥ साधनघ्ना विभक्ताश्च वर्गणाभिः फलाहताः ॥ उच्चादि वृद्धिहानिं च कुर्यात्तत्संख्यका भवेत् ॥ ३३ ॥ इति श्रीबृहत्पाराशरहोरायामुत्तरभागे लोकयात्रावर्णनं नाम पंचमोध्यायः ॥ ५ ॥

## टीका।

लिप्ताभिः १८०० आभिर्विभज्य लब्धं जातं फलं ०।१० एतद्भावफलसंज्ञकं ज्ञेयम् अन्यत्र स्थापिताः पूर्वोक्ताः कलाः३००।३९आसां द्वादशभक्तावशिष्टं फलं ०।३ एतज्जातं भावसाधनसंज्ञकं ज्ञेयम् ॥ ३० ॥ ३१ ॥ अथातिसुलभतया प्रकारांतरेण पूर्वोक्तसंख्यासाधनं स्थूलमानेनाह राशीनित्याद्यध्यायांतम्। राशीन्हित्वा स्पष्टं ततः अवशिष्टस्य लिप्ताः कलाः कार्याः ततः खखनेत्रैः २०० विभाजिताः भक्ताः ततः साधनघ्नाः साधनेन पूर्वसंपादितभावसाधनेन घ्नाः गुणिताः ततः वर्गणाभिः विभक्ताः भाजिताः ते एव फलाहताः पूर्वसंपादितफलेन गुणिताः पश्चादुच्चादिवृद्धिं उच्चत्रिकोणादितारतम्येन वर्धनं हानिं नीचादि तारतम्येन ह्रासं च कुर्यात्। एवं कृते समुच्चयेन पुंस्त्रीसंख्यका भवेदिति। अतिस्थूलमानमितिबोध्यम्॥३२॥३३ अध्यायेऽस्मिन्पंचमे तु कृता टीका यथामति ॥ ज्योतिर्विद्भिः शोधनीया कृपया दीनवत्सलैः ॥ १ ॥ श्रीगणेशप्रेरणयात्वार्षेऽध्याये तु पंचमे ॥ कृतया व्याख्यया देवः स एव प्रीयतां मम ॥ २ ॥ इति श्रीमद्बृ०शास्त्रे श्रीमद्ध्यड्ङन्वयवेदशा०जटाशंकरसूनुज्योतिर्विच्छ्रीधरेण वि०सु०टी०लोकयात्रावर्णनं नाम पंचमोऽध्यायः ॥ ५ ॥

## भाषा।

लेमा जो फल आवे वो भावसाधन फल जानना ॥ ३० ॥ ३१ ॥ अब पूर्वोक्त कहा उसकू सुलभ रीतिसे बताते हैं. राशिकू छोडके अंशादिककी लिप्तिका करके दोसोसे भाग लेना. जो लब्ध है उसकू पूर्वसंपादित भावसाधनसे गुणन करना अपने

भाग्योत्कर्षं भाग्यहानिं कुटुंबं दुःखं हानिं शत्रुमायं व्ययं च ॥ उद्वाहं स्त्रीपुत्रलाभादिकं च ब्रूयादेवं चाब्दचर्याक्रमेण ॥ १ ॥ अब्दमासदिनचर्यविधानं वक्ष्यते खलु मया सुमते ते ॥ वक्ष्यमाणविधिना परमायुः सम्यगेव विदधीत महात्मन् ॥ २ ॥ भावानां साधनं कृत्वा दृष्टिमिश्च

## टीका।

अथो पराशरमुनिः षष्ठाध्याये प्रकीर्णकम् ॥ अब्दचर्यादिकं प्राह मैत्रेयाय सविस्तरम् ॥ १ ॥ अथास्मिन् षष्ठेऽध्याये भाग्याद्युत्कर्षन्हासादिकं प्रकीर्णकमुपदिदेश। तत्र प्रथमे अब्दचर्यया भाग्यादिकं ब्रूयादित्याह भाग्येति। भाग्योत्कर्षं भाग्यवृद्धिं भाग्यहानिं कुटुंबं पोषणीयसमूहं दुःखं कष्टं हानिं न्हासं शत्रुं रिपुं आयं लाभं व्ययं नाशं उद्वाहं विवाहं स्त्रीपुत्रलाभादिकं स्त्रीपुत्रयोः लाभः आदौ यस्मिंस्तत् स्त्रीपुत्रलाभप्रभृति सर्वमित्यर्थः। एवं सर्वं च अब्दचर्याक्रमेण वक्ष्यमाणवर्षगत्यनुक्रमशः ब्रूयात् गणक इत्यध्याहारः ॥ १ ॥ अथ अब्दादिचर्या वक्तुं प्रतिजानीते अब्देति। सुमते! महात्मन्! इति मैत्रेयसंबोधनद्वयं ते अब्दमासदिनचर्यविधानं अब्दानि मासाश्च दिनानि च तेषां च चर्यस्य गतेः विधानं मया वक्ष्यते खलु तदर्थमादौ वक्ष्यमाणविधिना परमायुः सम्यगेव सूक्ष्मतया विदधीत संपादयेत् इति ॥ २ ॥ अथ भावफलज्ञाने चिंत्योयं विषयः कालमाह भावानामितित्रिभिः। भावानां स्था-

## भाषा।

ध्रुवांकमें भाग लेना पूर्वसंपादित फलसे गुणन करना. जो अंक आवे वो कुटुंबपोषणकी संख्या जानना ॥ ३२ ॥ ३३ ॥ इति श्रीबृहत्पाराशरहोरोत्तरभागे ज्योतिर्विच्छ्रीधरेण विरचितसुबोधिनीभाषाटीकायां लोकयात्रावर्णनंनाम पंचमोध्यायः ॥५॥

अब छठे अध्यायमें वर्षचर्याके क्रमसे भाग्यका उत्कर्ष, भाग्यकी हानि, कुटुंबका सुख दुःख, शत्रुचिंता, लाभ, खर्च, विवाह, स्त्रीपुत्रादिकोंका फल कहते हैं॥१॥ हे मैत्रेय। तुमारेकू वर्षचर्या, मासचर्या, दिनचर्याका विधान निश्चय करके कहताहूं और परमायुभी उत्तम रीतिसे निकालना ॥२॥ अब द्वादशभावोक्त फल कब होवेगा, उसका कालप्रमाण कहते हैं. स्पष्ट द्वादश भाव करके उसकूं अपनी अपनी दृष्टिसे यु-

बलेन च ॥ षड्वर्गादिपतीनां च भावे भावे पृथक् पृथक् ॥ ३ ॥ तेषां च दृग्बलानां च संहृत्या भाजयेदथ ॥ स्वामिदृष्टिस्थितानां तु काले भावफलं विदुः ॥ ४ ॥ ज्ञानसंभवकालस्तु जन्मकालाद्बला यदा ॥ लग्नादिव्ययपर्यन्ता भावाः काले तथा विदुः ॥ ५ ॥ लग्नषड्वर्गहोराणां भोक्ता-

## टीका।

दीनां साधनं पूर्वाध्यायाग्रे कथितं दृष्टिभिः तत्तद्भावदृष्टिभिः बलेन तत्तद्भावबलेन च हत्वा गुणयित्वा भावे भावे प्रतिभावमित्यर्थः तेषां तेषां षड्वर्गपतीनां ग्रहहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशपतीनां दृग्बलानां दृष्टयश्च बलानि च तेषां पृथक् पृथक् संहृत्वा भाजयेत् तेन यल्लब्धं तत्काले तत्तत्फलं ज्ञेयम्। अथानंतरं स्वामिदृष्टिस्थितानां स्वाधिपतिपूर्णदृष्टानां तु काले तत्तत्स्वामिदशासमये भावफलं भावोक्तं फलं स्यादिति विदुः आचार्या इति शेषः पूर्वस्वामिदृष्टा न चेत् फलस्य जन्मकालात् सकाशाज्ज्ञानसंभवकालस्तु लग्नादिव्ययपर्यंता भावाः ये विद्यंते तेषां मध्ये ये बलाः बलाधिकास्तेषां पतिदशाकाले क्रमात्तन्न्यूनतन्न्यूनबलानां पतिदशाकाले तथा भावसदृशं फलं विदुरित्यन्वयः ॥ ३ ॥ ४ ॥ ५ ॥ अथ तत्र शुभग्रहपापग्रहभेदेन विशेषमाह लग्नेत्यादिसार्धत्रयेण। लग्नषड्वर्गहोराणां लग्नस्य संबंधिनः ये षड्वर्गाः ग्रहहोराद्रेष्काणसप्तांशनवांशद्वादशांशत्रिंशांशाः तेषां ये होराः राशयः नाम लग्नस्य अमुकराशिः होराया अमुकराशिः द्रेष्काणस्य अमुकराशिः इत्यादयः ये षड्वर्गवर्तमाना राशयः तेषां पतयः अधिपाः क्रमात् भोक्तारः स्व-

## भाषा।

णन करके पीछे अपने भावबलसे गुणन करना, फिर प्रत्येक भावके जो षड्वर्गपति और उन्होंकी दृष्टि और बल इन्होंका योग करके भाग लेना जो लब्ध वर्षादिक आवे तो समयमें स्त्रीपुत्रधनादिकोंका फल जानना ॥ ३ ॥ ४ ॥ ५ ॥ लग्न षड्वर्गका जो फल है वो उसके पतियोंकी दशामें प्राप्त होता है सोभी ३।५।४।१०।७।७।३ यह संख्या अंतमें होवेगी. ग्रह जो हैं उनोंकी दृष्टि शुभग्रहोंकी फल देती है. पापग्रह

रः पतयः स्मृताः ॥ त्रिपंचवेददिक्सप्तमुनिरामांशके फ-
लम् ॥ ६ ॥ शुभग्रहास्तु द्रष्टारः स्थानदाः सकलग्रहाः ॥
युक्ताः सदा तु सद्भावाः संज्ञानुफलदास्तदा ॥ ७ ॥ पापान्
हानिकरान्हित्वा स्वोच्चे कोणसुहृत्स्थितान् ॥ तद्राशिर्यस्य
शत्रुर्वा नीचयोर्वा ग्रहो यदि ॥ ८ ॥ हानिं कुर्यात्तदा तस्य

## टीका ।

दशायां फलदा इत्यर्थः स्मृताः अत्र होराशब्देन राशिर्ग्राह्यः न तु राश्यर्ध-भागः तस्य उक्तषड्वर्गगतत्वादिति ज्ञेयम् । अथ ते भोक्तारः स्वस्य सर्वद-शायां फलदा वा दशांशविशेषफलदा इति चेदाह त्रिपंचवेददिक्सप्तमुनि-रामांशके लग्नादिवर्गपतयः स्वदशायां क्रमात् त्रिपंचादि दशाविभागे फलं ददतीति शेषः । अथ द्रष्टारो ग्रहाः शुभा एव फलदा न पापाः स्थानदास्तु सकलाः शुभाः पापाश्च फलदाः युक्ताः शुभग्रहयुक्ताः सद्भावाः शुभभावा ज्ञेयाः सदा सर्वदा संज्ञानुफलदाः तनुधनसहजादिनामानुसारफलदातारः भवंति तद्वत् पापाः पापग्रहयुक्ताः हानिकराः तन्वादिनामानुसारहानिकर्ता-रो भवंति तथापि स्वोच्चकोणसुहृत्स्थितान्पापान्हित्वा अन्ये पापाः अथ भा-वस्थितग्रहस्य वर्तमानराशिर्यदि शत्रुः यदि वा यो ग्रहो नीचे भवति तदा तत्फलस्य दृष्टियोगानुपाततः दृष्टियोगानुरूपं पूर्णदृष्टेः पूर्णहानिश्चेत् अमुक दृष्टेः कियती हानिरिति त्रैराशिकेन हानिं फलस्येति शेषः कुर्यात् विदधीते-ति ॥६॥७॥ ८ ॥ अथ कारकसंज्ञकान् ग्रहानाह उद्वाहेति । उद्वाहकारकौ उद्वाहं विवाहं कुरुत इति उद्वाहकारकौ विवाहकारकसंज्ञौ चंद्रशुक्रौ ज्ञेयौ वा विकल्पेन ज्ञो बुधः तपो गुरुर्वा ज्ञेयः मृतिकरः मृतिं मरणं करोतीति तथा श-

## भाषा ।

की नहीं और स्थानमें (रेखामें) शुभ पाप दोनों ग्रहोंका शुभाशुभ फल होता है. और जो जो भावमें जो जो ग्रह पाप या शुभ उच्च नीच मूल त्रिकोणादिकके होवे, शत्रुमित्रादिकके होवे, दृष्टियुक्त दृष्टिरहित होवे उस ऊपरसे वे भावोंका शुभा-शुभ फल कहना ॥ ६ ॥ ७ ॥ ८ ॥ अब कारक ग्रह कहते हैं. विवाहका करानेवाला चंद्र शुक्र हैं. वास्ते चंद्र शुक्र विवाहकारक जानना. विकल्प मतांतरसे

दृष्टियोगानुपाततः ॥ उद्वाहकारकौ चंद्रशुक्रौ ज्ञो वा त-
पोऽथ वा ॥ ९ ॥ शनिर्मृतिकरो भौमरवी नीचासतीपती ॥
गुरुः शुभकरः पुत्रे कुजो भ्रातरि शत्रुभे ॥ १० ॥ मंदश्चाये
शुभाः सर्वे स्वोच्चगौ भौमसूर्यजौ ॥ भाग्ये शुभाः शुभाः
पापा अशुभाः स्वपतिं विना ॥ ११ ॥ पूर्वभागे समुद्दिष्ट-
दृग्बलेन फलानि तु ॥ विरुद्धानि परित्यज्य समीचीनानि

## टीका ।

निः ज्ञेयः भौमरवी च नीचासतीपती नीचा कुलटा सती पतिव्रता ते पातः इ-
ति तथा ज्ञेयाविति ॥९॥ अथ भावेषु शुभाशुभग्रहानाह गुरुरितिसार्धेन। पुत्रे
पंचमस्थाने गुरुः शुभकरः शुभावहः पुत्रकारक इत्यर्थः भ्रातरि तृतीयस्थाने
कुजः भौमः शुभकरः शत्रुभे षष्ठस्थाने मंदः शनिः शुभकरः शत्रुरोगादिनाशक
इत्यर्थः आये एकादशस्थाने सर्वे शुभाः पूर्णचंद्रापापबुधगुरुशुक्राः शुभाः
भाग्यकारका इत्यर्थः अथ च भाग्ये पापाः क्षीणचंद्रसपापबुधरविभौमश-
निराहुकेतवः अशुभाः भाग्यनाशकाः किंतु स्वपतिं विना स्वस्य भाग्यभाव-
स्य आधिपत्यातिरेकेण अशुभाः अर्थात् पापोपि भाग्यपतिः सन् भाग्ये स्थि-
तश्चेत् भाग्यकारक एव ज्ञेयः तथा भौमसूर्यजौ कुजशनी स्वोच्चगौ मकरतुला-
वर्तमानौ भाग्ये स्थितौ संतौ शुभकराविति॥१०॥११॥ अथ पूर्वभागोक्तदृग्ब-
लसिद्धफलव्यवस्थामाह पूर्वभागइति । पूर्वभागे पूर्वार्धे समुद्दिष्टदृग्बलेन क-
थितदृष्टिबलेन यानि फलानि संति तन्मध्ये विरुद्धानि अनिष्टानि परित्यज्य

## भाषा ।

विवाहकारक बुध वा गुरु जानना. शनि मरणकारक है. मंगल कुलटाकारक है.
सूर्य पतिव्रताकारक है ॥ ९ ॥ अब भावगत ग्रहोंका शुभाशुभ फल कहते हैं. गुरु ५
शुभ, मंगल ३ शुभ, शनि ६ शुभ, सर्व ग्रह ११ शुभ हैं. मंगल शनि उच्चके
होवे तो उत्तम जानना. नवम स्थानमें शुभ ग्रहोंका फल उत्तम जानना. पापग्र-
होंका फल अशुभ जानना. परंतु नवम स्थानमें भाग्यमें जो पापग्रह अपना पती
होवे बैठा होवे तो भाग्यवृद्धि करनेवाला जानना ॥ १० ॥ ११ ॥ पूर्वभागमें

संग्रहेत् ॥ १२॥ ग्रहराशिस्वभावेन पुंस्त्रियोराशिमेव च ॥ स्वभावं च वदेद्बुद्ध्या देशकालकुलानुगः ॥ १३ ॥ तेषामिष्टफले वृद्धिस्त्वशुभाख्यफलादयः ॥ अन्यथा त्वसदेव

## टीका ।

त्यक्त्वा समीचीनानि शुभानि संग्रहेत् गृण्हीयात् यतः शुभानामेवात्र प्रकरणे उपयोगित्वादितिभावः ॥१२॥ अथ स्त्रीपुंस्वभावविचारमाह ग्रहेति द्वाभ्यां । ग्रहराशिस्वभावेन ग्रहाश्च रव्यादयः राशयः मेषादयश्च एतेषां यथा स्वभावः तेन तथा पुंस्त्रियोः नृनार्योः राशिं लग्नं विचार्य देशकालकुलानुगः देशाश्च कालाश्च कुलानि च अनुगच्छति अनुसरतीति तथा गणक इत्यध्याहारः पुंस्त्रियोः नरनार्योः स्वभावं निसर्गं बुद्ध्याऽतिसूक्ष्मविवेकेनेत्यर्थः विचार्येति शेषः वदेत् कथयेत् एतदुक्तं भवति गुरुर्गौरः कस्य चिल्लग्ने वर्तमानः तदीयोत्पत्तिदेशः बहुशः कृष्णवर्णनरप्रायः तर्हि देशतारतम्येन गौरत्ववैगुण्यम् तथा शनिः कृष्णः कस्य चिल्लग्ने वर्तमानः तदीयोत्पत्तिदेशो बहुशो गौरवर्णनरप्रायः तर्हि देशतारतम्येन कार्ष्ण्यवैगुण्यमिति देशानुसारवर्णविचारः एवमेव स्वभावादिविचारः तद्वदेव कालविचारः लग्ने शुभग्रहोपि जन्मकालो व्यतीपातग्रहणादिदुष्काले चेत्तारतम्येन सौशील्यदुःशीलत्वमिश्रणं वदेत् एवमेव कुलविचारः शुक्रसौम्यादिशुभग्रहयुतेऽपि लग्ने म्लेच्छादिक्रूरस्वभावकुलोत्पन्नस्य सौम्यत्वकौर्यादिमत्वं मिश्रणेन वक्तव्यमिति दिक्॥१३॥अथ तत्तत्स्वभावस्य ह्रासवृद्धी आह तेषामिति । तेषां सुखभावदुःखभावगौरत्वादीनां इष्टफले लग्नवर्तमानग्रहस्य कष्टाधिकेष्टफले वृद्धिः उत्तरोत्तरं वर्धनं अन्यथा एवं न चेदशुभाख्यफलात् कष्टफलाधिक्यात् असदेव स्वभाववर्णादीनामुत्तरोत्तरं

## भाषा ।

दृष्टिबलसे फल कहा है उसमें अनिष्ट फल छोडके शुभ फलका संग्रह करना॥ १२॥ अब मनुष्योंका जो स्वभाव गुण है सो ग्रहोंके और राशियोंके गुणानुसारसे तथा देश काल कुल देखके बहुत सूक्ष्म दृष्टिके विचारसे कहना. जो जो भावके फल सुख दुःखादिक कहे हैं उनोंकी उत्तरोत्तर वृद्धि या हानि कैसी जानना सो कहते हैं. जिस भावका इष्ट बल अधिक होवे तो शुभ फल उत्तरोत्तर ज्यादा होवेगा.

स्यात्तस्य तस्मान्मृतौ फलम् ॥ १४ ॥ रविस्तु पाचको ज्ञेयश्चंद्रमा बोधकः सदा ॥ पाचको बोधकश्चैव कारको वेधकः क्रमात् ॥ १५ ॥ रव्यादीनां च विज्ञेया मंदारेज्यसितास्तथा ॥ शुक्रारमंदरवयो रवीन्दुशनिचंद्रजाः ॥१६ ॥

## टीका ।

हानिरेव स्यात् एवं तस्मादिष्टकष्टादेव मृतौ मृत्युस्थाने फलं स्यात् एतदुक्तं भवति मृत्युस्थानस्थितस्य तदधिपस्य वा कष्टादिष्टफले अधिके सति वक्ष्यमाणप्रकारेण प्राप्तायुषः इष्टफलाधिक्यतारतम्येन वृद्धिः न्यूनत्वतारतम्येन ह्रासः स्यादिति भावः एवं सर्वभावेषु बोध्यम् ॥ १४ ॥ अथ शुभाशुभफलविशेषज्ञानार्थं रव्यादीनां पाचकादिसंज्ञाः स्थानविशेषसंबंधेनाह रविरित्यादित्रयोविंशतिश्लोकपर्यन्तम् । तत्रादौ रविचंद्रयोः पाचकादिसंज्ञा निसर्गत एव रविरिति । रविस्तु पाचकः निसर्गत एव पाचकसंज्ञकः चंद्रमास्तु बोधकः निसर्गत एव बोधकसंज्ञकः सदेति स्वभावत इत्यर्थः क्रमात् क्रमशः पाचकसंज्ञयोक्तो रविः कारकः कारकसंज्ञः बोधकसंज्ञयोक्तश्चंद्रः वेधकसंज्ञक इति तयोरेव निसर्गसिद्धसंज्ञांतरमुक्तमिति ॥ १५ ॥ अथ रव्यादीनां स्थानसंबंधेन पाचकादिग्रहानाह रव्यादीनामित्यादित्रयोविंशतिश्लोकपर्यंतम् । रव्यादीनां सूर्यप्रभृतिसप्तग्रहाणां पीडर्क्षे शत्रुराशौ अपीडर्क्षेमित्रराशौ अपि वर्तमानाः लग्नं विना लग्नव्यतिरेकेण जन्मलग्नात् केन्द्रे चतुर्थसप्तमदशमस्थाने गताः सर्वे ग्रहाः पाचकाद्या बलवंतः स्युः अपि च लग्नादेव सकाशात् षट् ६ सप्त ७ धर्म ९ कर्म १० य ११ मृति८ चतुर्थेषु४स्थानेषु गताः क्रमात् क्रमेण वर्तमानाः पाचकाद्याः सप्त रव्यादयो बलवंतः स्युः अन्यथा पाचकाद्याः

## भाषा ।

कष्टबल अधिक होवे तो अशुभ फल उत्तरोत्तर जादा होवेगा ॥ १४ ॥ सूर्यको पाचक जानना. चंद्र बोधक जानना. और सूर्य जो पाचक है उसकू कारकभी कहना. चंद्रमा बोधक है उसकू वेधक जानना ॥ १५ ॥ अब सूर्यादिकोंका स्थानसंबंधसे पाचकादिक भेद कहते हैं. सूर्यसे छठे सातवें नवमें ग्यारहवें यह स्थानोंमें क्रमसे शनि, मंगल, गुरु, शुक्र, बैठे होवे तो पाचक, बोधक, कारक, वेधक,

चंद्रेज्यसितभौमाश्च मंदारेन्दुदिनेश्वराः ॥ भौमज्ञसूर्यमं-
दाः स्युः सितेन्दुगुरुभूमिजाः ॥ १७ ॥ षट्सप्तनवरुद्रेषु
सप्तनंदभवत्रिषु ॥ द्विषडायव्ययेष्वेवं द्विवेदेंद्रियवन्हिषु
॥ १८ ॥ षट्पंचसप्तरिष्फेषु द्विषड्व्ययचतुर्ष्वपि ॥ त्रिक-

## टीका ।

सामान्याः एव स्युः तत्क्रममाह रवेः मंदारेज्यसिताः रविस्थानात् षट्सप्तन-
वरुद्रेषु ६।७।९।११ क्रमात् स्थानेषु स्थिताः क्रमात् पाचकबोधककारक
वेधकसंज्ञकाश्चत्वारो भवन्ति एवं चंद्रस्य शुक्रारमंदरवयः चंद्रस्था-
नात् सप्तनंदभवत्रिषु ७।९।११।३ स्थानेषु स्थिताः क्रमात् पाचक-
बोधककारकवेधकसंज्ञकाश्चत्वारो भवंति एवं भौमस्य रवींदुशनिचंद्रजाः भौ-
मस्थानात् द्विषडायव्ययेषु २।६।११।१२ स्थानेषु स्थिताः क्रमात् पाचका-
दिसंज्ञकाश्चत्वारो भवंति एवं बुधस्य चंद्रेज्यसितभौमाः बुधस्थानात् द्विवेदे-
न्द्रियवन्हिषु २।४।५।३ स्थानेषु स्थिताः क्रमात्पाचकादिसंज्ञकाश्चत्वारः एवं
गुरोः मंदारेन्दुदिनेश्वराः गुरुस्थानात् षट्पंचसप्तरिःफेषु ६।५।७।१२ स्थानेषु
स्थिताः क्रमात्पाचकादिसंज्ञकाः एवं शुक्रस्य भौमज्ञसूर्यमंदाः शुक्रस्थानात्
द्विषड्व्ययचतुर्षु २।६।१२।४ स्थानेषु स्थिताः क्रमात् पाचकादिसंज्ञकाः एवं

## भाषा ।

जानना. जैसा सूर्यसे ग्यारहवें घरमें शुक्र होवे तो वेधक जानना. उसका फल यह
है कि, जो भावमें बैठा होवेगा वो भावगत कार्यका विघ्न करेगा. ऐसा सब ग्रहोंका

| पाचकादि ग्रह बनानेका चक्र. | | | | | | | | सूर्यादिपाचकादिचक्र. | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. | सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. |
| शु. ६ | शु. ० | सू. २ | चं. २ | श. ६ | भौ. २ | गु. २ | पाचक. | ० | ० | ० | ० | ० | ० | ० | पाचक. |
| भौ. ३ | भौ. ९ | चं. ९ | गु. ४ | भौ. ५ | बु. ६ | चं. ११ | बोधक. | ० | ० | ० | ० | ० | ० | ० | बोधक. |
| गु. २ | श. ११ | श. १२ | शु. ५ | चं. ७ | सू. १२ | बु. ६ | कारक. | ० | ० | श. | ० | ० | सू. | ० | कारक. |
| शु. ११ | सू. ३ | सू. १२ | भौ. ३ | स. १२ | भौ. ४ | भौ. ७ | वेधक. | शु. | स. | ० | मं. | ० | ० | ० | वेधक. |

द्व्यष्टसप्तमेषु स्थिताः स्थानेषु ते ग्रहाः ॥ १९ ॥ पाचका-
द्यास्तु चत्वारः सूर्यादिभ्यः क्रमादिह ॥ पीडर्क्षे वाप्यपी-
डर्क्षे केन्द्रे लग्नं विना तथा ॥ २० ॥ षट्सप्तधर्मकर्मायमृ-
तिष्वेव गताः क्रमात् ॥ पाचकाद्याश्चतुर्थे च बलवंतः
समीरिताः ॥ २१ ॥कारको मंदफलदो वेधको विघ्नकृत्स्मृ-
तः ॥ बोधकः शीघ्रफलदः पाचको विफलप्रदः ॥ २२ ॥
तदंशकालस्यांते वा प्यादावंत्यांशकेऽपि च ॥अंत्यांश-
केऽपि फलदाः पाचकाद्याः क्रमादिह ॥ २३ ॥ आदौ फ-

## टीका ।

शनेः सितेन्दुगुरुभूमिजाः शनिस्थानात् त्रिरुद्रषट्सप्तमेषु ३।११।६।७ स्थानेषु
स्थिताः क्रमात् पाचक बोधककारकवेधकसंज्ञकाश्चत्वारो ज्ञेयाः एते पाचका-
द्यश्चत्वारः लग्नात् लग्नव्यतिरिक्ते केंद्रराशित्रये वर्तमानाश्चेद्बलिनःस्युः तथा
एते पाचकादिसंज्ञासंज्ञिताः रविचंद्रभौमबुधगुरवः क्रमात् लग्नतः६।७।९।१०
।११।८।४ स्थानेषु स्थिताश्चेत्तेऽपि बलिनो ज्ञेया इति । अथैषां फलान्याह ।
कारकः कारकसंज्ञकः स्वसंज्ञाप्रापकग्रहस्य मन्दफलदः न्यूनफलदः स्यात्
तथा वेधकसंज्ञको ग्रहः स्वसंज्ञाप्रापकस्य विघ्नकृत् तदधिकारानुरूपफलविष-
ये विघ्नकर्ता भवेत् तथा बोधकसंज्ञकः स्वसंज्ञाप्रापकस्य तदधिकारानुरूप-
फलविषये शीघ्रफलदः स्यात् तथा पाचकसंज्ञकः स्वसंज्ञाप्रापकस्य ग्रहस्य
विफलप्रदः तदधिकारानुरूपफलविषये वैफल्यकारक इति । अथैतत्फलदान-
कालमाह तदिति । पाचकाद्याः पाचकबोधककारकवेधकाः तदंशकालस्य
तस्य स्वसंज्ञाप्रापकग्रहस्य क्रमात् अंते अंतिमनवमांशकाले आद्ये आद्यन-
वांशे अंत्यांशके अंत्यनवांशके अंत्यनवांशके च अपि फलदाः फलदातारो
ज्ञेयाः अपि शब्देन फलदाने सर्वदा त्वनियमः सूचितः इति ॥ १६ ॥ १७॥
॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अथ रव्यादीनां दशागोचरादि-

## भाषा ।

जानना. यह वार्ता टीकामें स्पष्ट है. यहां चक्रभी स्पष्ट दिखाया है ॥ १६ ॥ १७ ॥
॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ सूर्य मंगल आद्य प्रथम त्रिभागमें

लप्रदौ भौमरवी मध्ये सितार्यकौ॥ सर्वदा ज्ञः शशी मंद-
स्त्ववसाने फलप्रदौ ॥ २४ ॥ इति श्रीमद्बृहत्पाराशरहो-
रोत्तरभागे लोकयात्रावर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

धनहानिभयानां च व्याधीनां दिवसांस्तथा॥ शुभाशु-
भानि कर्माणि यात्रादि विजयादि च ॥१ ॥ मासचर्याविधा-

## टीका ।

फलकालमाह आदाविति । भौमरवी कुजसूर्यौ आदौ आद्यत्रिभागे स्वद-
शागोचरादिफलप्रदौ भवतः सितार्यकौ शुक्रगुरू मध्ये मध्यत्रिभागे फलदौ,
ज्ञो बुधः सर्वदा समग्रदशादौ फलदः स्यात् शशी चंद्रः मंदः शनिश्च एतौ
द्वौ अवसाने अंत्यत्रिभागे फलदौ स्यातामिति ॥ २४॥ एवं पराशरोक्तेऽस्मि-
न् षष्ठाध्याये यथामति ॥ गणेशप्रीतये टीका कृता शोध्या मनीषिभिः ॥ १॥
इति श्रीमत्पराशरहोराशास्त्रे श्रीमद्ध्यङ्ग्न्वयवेदशास्त्राद्यनवद्यविद्याविद्योति-
तदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटी-
कायां षष्ठोऽध्यायः ॥ ६ ॥

नत्वा श्रीमद्गणेशानं सप्तमेऽध्यायके मया ॥ क्रियते विशदा व्याख्या प-
रोपकृतये मुदा ॥ १ ॥ सप्तमेऽध्यायकेऽस्मिंस्तु पराशरमहामुनिः ॥ व्याप्त्यादि-
दिवसानाह रव्यादीनां यथाक्रमम् ॥ २ ॥ अथ भगवान्महर्षिः शिष्याय
मासचर्यया शुभाशुभदिवसज्ञानमाह धनेत्यादिचतुःश्लोक्या । धनहानिभ-
यानां धनं द्रव्यलाभः हानिर्द्रव्यनाशः भयं शत्रुरोगाद्यनिष्टजं तेषां व्याधीनां
शरीरे प्राप्तरोगाणां च दिवसान् वक्ष्यमाणान् जानीयादित्यध्याहारः । अथ

## भाषा ।

फल देते हैं. शुक्र गुरु मध्य त्रिभागमें फल देते हैं. बुध सर्वकाल फल देता है.
चंद्र शनि अंतिम त्रिभागमें फल देते हैं ॥ २४ ॥ ॥ इति श्रीबृहत्पाराशरहो-
राशास्त्रे भाषाटीकायां लोकयात्रावर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

अब फलादेश कहते हैं. धनकी प्राप्ति, धनका नाश, शत्रुभय, रोग, इनोंकी
प्राप्तिके दिन और शुभाशुभ कर्म जय पराजय उत्कर्ष इनोंका निर्णय मासचर्याके
अनुसारसे कहना. और दूसरे जो कार्य हैं वे सब दिनचर्या वर्षचर्यानुसारसे कर्तव

नेन ब्रूयादन्येन चेतरान् ॥ लग्नारिमृतिरिःफेषु वर्गणां च पतींस्तथा ॥ २ ॥ करणेशान्समालोच्य कथयेन्मुनिपुंगव ॥ रसेषवो मुनिःखाष्टौ रविभूपा दिशस्तथा ॥३ ॥ द्विशतं च क्रमात्सूर्याद्दिवसाश्चाष्टमे स्थिताः ॥ द्वितीयेऽर्धं त्वंतरे च त्रैराशिकवशेन तु ॥ ४ ॥ इति बृहत्पाराशरहोरोत्तरभागे मासचर्यादिवसात्फलज्ञानकथनं नाम सप्तमोऽध्यायः॥७॥

## टीका ।

शुभाशुभानि इष्टानिष्टानि कर्माणि व्यापारान् यात्रादि गमनागमनादि विजयादि उत्कर्षादि सर्वं मासचर्याविधानेन ब्रूयात् इतरानन्यान् उक्तावशिष्टान् प्रकारान् अन्येन दिनचर्यावर्षचर्याविधानेन ब्रूयात् तथा लग्नारिमृतिरिःफेषु लग्नषष्ठभावमृत्युभावव्ययभावेषु फलविषये वर्गणां प्रागुक्तान्पतीन् स्वामिनः करणेशान् करणपतींश्च कस्मिन् भावे कः कियान् फलद इति सम्यग्विचार्य हे मुनिपुंगव ! कथयेत्फलमिति शेषः । अथ रव्यादीनां अष्टमभावादिद्वितीयभावांतं द्वितीयभावाद्यष्टमभावपर्यंतं वर्तमानानां रव्यादीनां फलदाने दिवसानाह । अष्टमे भावे रसेषवः ५६ रवेः, मुनिः ७ विधोः, खाष्टौ ८० भौमस्य, रवयः १२ बुधस्य, भूपाः १६ गुरोः, दिशः १० शुक्रस्य, द्विशतं २०० शनेः । एवमष्टमभावे सूर्यात् सकाशात् क्रमाद्दिवसाः द्वितीयभावे तु अर्धभुक्तदिवसार्धं अंतरे अष्टमद्वितीयभावयोर्मध्यभावेषु तु त्रैराशिकवशेन द्वितीयाष्टमयोः अमुकदिवसाश्चेदमुकमध्यभावे कति दिवसा इति त्रैराशिकरीत्या ज्ञेया इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ एवं प्रकारतोऽध्याये सप्तमेऽस्मिन् यथामति ॥ कृता टीका ज्यौतिषिकैः शोधनीया प्रयत्नतः ॥१॥

## भाषा ।

करना. उसमें १।६।८।१२ यह भावोंके पति और बिंदुके अधिपतियोंकू देखके अच्छा विचार करके फल कहना. अब सूर्यादिकोंके फलदायक दिन कहते हैं. सू० ५६ चं० ७ मं० ८० बु० १२ गु० १६ शु० १० श० २०० यह संख्या अष्टम भावकी जाननी. और दूसरे भावमें पूर्वोक्त संख्याकी अर्ध संख्या जाननी. दूसरा

तेषां भंगमथो वक्ष्ये यथाह कमलासनः ॥ गर्गाय भगवान्सोपि ममाहाहं तव द्विज ॥ १ ॥ तथा च रिःफषष्ठाष्टस्थानानां करणाधिपाः॥तत्तद्भावस्य भंगस्य कर्तारः सति संभवे ॥ २ ॥ तत्तद्भावाष्टवर्गोत्थसंख्या तद्वर्गणाहृता ॥ रवि-

## टीका ।

इति श्रीमद्बृहत्पाराशरहो०श्रीधरेण विरचितायां सुबोधिनीटीकायां लोकयात्रावर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

अथ पूर्वोक्तयोगानां भंगमाह पराशरः ॥ अध्यायेस्मिन्नष्टमे च मैत्रेयाय महामुनिः ॥ १ ॥ एवं वर्षमासदिनचर्याभिर्भावफलान्युक्त्वा अथाष्टमाध्याये पूर्वोक्तयोगानां भंगं कथयति तत्र परंपरामाह तेषामिति । हे द्विज मैत्रेय ! तेषां पूर्वोक्तयोगानां भंगं नाशं कमलासनो ब्रह्मा गर्गाय मुनये आह सोपि गर्गोऽपि मम मह्यं भंगमाह अहं तव तं भंगं वक्ष्ये कथयिष्ये ॥ १ ॥ स्थानविशेषकरणाधिपसंभवेन भंगमाह तथेति । लग्नात् रिःफषष्ठाष्टस्थानानां द्वादशषष्ठाष्टसंज्ञकस्थलानां करणाधिपाः करणानां बिंदूनां स्वामिनः करणदातारो ग्रहा इत्यर्थः सति संभवे उक्तस्थानत्रयकरणसंभवे तथा स्थानत्रयकरणसंभवेऽपि स्थानत्रयकरणेशानां संयोगसंभवे दृष्टिसंभवे सति वा तत्तुतद्भावस्य भावफलस्येत्यर्थः भंगकर्तारो नाशकर्तारः स्युः ॥ २ ॥ अथ राश्यानयनेन भंगांतरमाह तत्तदिति । तत्तद्भावाष्टवर्गोत्थसंख्या त-

## भाषा ।

और अष्टम यह भाव छोडके जो अन्य भाव रहैं वहां त्रैराशिकमतसे कहना ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ॥ इति श्रीमद्बृहत्पाराशरहो०भाषाटीकायां लोकयात्रावर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

अब योगभंग कहते हैं. हे मैत्रेय ! पूर्व जो योगभंग ब्रह्माजीनें गर्गकूं कहे, गर्गनें मेरेकूं कहे सो मैं अब तुमारेकूं कहताहूं सो सुनो ॥ १ ॥ लग्नसे १२।६।८ घरोंमें बिंदु देनेवाले ग्रह वहां बैठे होवे या वे स्थानोंके अधिपतिके साथ बिंदु देनेवारे ग्रहोंका संयोग होवे तो वो भावोंका भंग करनेवाले जानना ॥ २ ॥ जो जो भावके अष्टवर्गोंसे संख्या और जो कोई अष्टवर्गसमुत्पन्नक बिंदु संख्याकूं वर्ग-

भक्ता ततः शिष्टा राशिर्मेषादिका भवेत् ॥३॥ षष्ठाष्टरिःफे राशिश्चेद्भंग एष प्रकीर्तितः॥फलं च मुनिसंवृद्धं रविभक्तं तथा भवेत् ॥४॥शिष्टमेवं यदि तदा शत्रुभं वाथ भंगदम् ॥

## टीका ।

न्वाद्यन्यतमविचारणीयभावस्य या अष्टवर्गसमुत्पन्नकरणांकसंख्या तद्वर्गेणाहता तस्यैव भावस्य वर्गणया गुणिता ततः रविभक्ता द्वादशभाजिता सती या शिष्टा स्यात् योऽङ्कः शिष्टः स्यादित्यर्थः सा मेषादिका राशिर्भवेत् एकादिशिष्टांकपरिमितेत्यर्थः ॥ ३ ॥ अथास्या राशेः प्रयोजनमाह षष्ठेत्यर्धेन । एषः पूर्वोक्तप्रकारोत्पन्नो राशिः षष्ठाष्टरिः फश्चेत् भंगः पूर्ववत्तद्भावभंगः प्रकीर्तितोऽवगंतव्य इति । अथ द्वादशभक्तावशिष्टांको राशिर्जातः लब्धांकस्य किं प्रयोजनं तदाह फलमित्यर्धेन । फलं प्रागानीतं द्वादशभागलब्धं यत् मुनिसंवृद्धं मुनिभिः सप्तभिः सम्यक् वृद्धं गुणितमित्यर्थः तथा रविभक्तं द्वादशभिर्भक्तं तथा भवेत् राशिरूपं भवेत् तत्रापि षष्ठाष्टरिष्फान्यतमत्वं चेद्भंगः स्यात् ॥ ४ ॥ ननु एवं मुनिगुणितं रविभागोपलब्ध्यनंतरमपि अवशिष्टं चेत्किंकार्यं तत्राह शिष्टमित्यादिसार्धश्लोकांतम् । एवं नाम पूर्वप्रकारे कृतेऽपि शिष्टं यदि स्यात् शिष्टं अवशिष्टोऽको यदि राशिरूपः शत्रुभं लग्नेशस्य शत्रुराशिः स्यात् वा अथ वा भंगदं सोऽको राशिरूपः लग्नात् भंगदषष्ठाष्टरिःफरूपः स्यात् तदा तद्भावानिष्टफलकं यद्भावस्यायं संस्कारः कृतः तद्भावस्यानिष्टफलको बोध्यः । अथ पुनस्तस्याप्यवशिष्टस्य संस्कारं कथयति तत्

## भाषा ।

भासे गुणकरके बारहसे भाग लेना जो शेषांक आवे वो राशि जानना ॥ ३ ॥ यह पूर्वश्लोकमें कही जो राशि वो ६।८।१२ घरमें आवे तो वो भावका भंग करेगा. अब वो राशि जो शेषांकसे लाये परंतु लब्धांक जो आये उसकू सातसे गुणित करके बारहसे भाग लेना जो शेष रहे वो राशि जानना. वो राशि ६।८।१२ के घरमें आवे तो वो भावका भंग जानना ॥ ४ ॥ अब दूसरी वखत भाग लेनेसे बिशेष रहे तो पुनः संगुणन कहते हैं. पूर्वातीत राशि लग्नेशकी शत्रुराशि होवे अथवा लग्नसे भंगसूचक होवे तो वो भावका अनिष्ट फल कहना. अब जो शेष है,

तद्भावानिष्टफलकं तच्छत्रुफलसंगुणम् ॥ ५ ॥ सप्तात्तं शिष्टमेवात्र पापरश्मिगुणं ततः ॥ अर्कशिष्टं यदि भवेत्षष्ठरिःफाष्टमेऽपि वा ॥ ६ ॥ शत्रुभं वापि भंगर्क्षं हानिस्तस्य प्रकीर्तिता ॥ यथोत्तरमितीवाप्तं क्षयवृद्धिस्ततो भवेत् ॥ ७॥ षष्ट्यंशे च कलांशे च त्वप्रकाशग्रहोदये ॥ राहुका-

## टीका ।

यच्छत्रुभं वा भंगदं भं वावशिष्टं तत् तच्छत्रुफलसंगुणं सचासौ शत्रुश्च तच्छत्रुः तस्य यत्फलं कष्टफलं तेन संगुणं सम्यग्गुणितं सप्ताप्तं सप्तभिर्भक्तमपि अत्रावशिष्टमेवचेत्तदा पापरश्मिगुणं पापस्य शत्रोः ये रश्मयस्तैर्गुणयित्वा अर्कशिष्टम् अर्केर्द्वादशभिः अवशेषितं यद्यपि षष्ठरिः फाष्टमे लग्नात् षष्ठे वा रिःफे वा अष्टमे वा स्थाने तच्छत्रुभं वा भंगदं भं वा भवेच्चेत्तर्हि तस्य भावस्य भंगोऽवगंतव्यः । ननु एकप्रकारेण भंगे सिद्धेऽपि पुनः पुनः भंगप्रकारकथने किं प्रयोजनं तत्राह यथेत्यर्धेन । यथोत्तरं उत्तरोत्तरम् यथास्यात्तथा उक्तप्रकारेषु एवमेव षष्ठरिः फाष्टमराशिः शत्रुराशिर्वा स्याच्चेत्ततः तदनुरूपं क्षयवृद्धिः क्षयस्य भावनाशस्य वृद्धिः वर्धनं एकद्वित्र्यादिप्राप्तप्रकारसंख्याकभंगवृद्धिरित्यर्थः भवेदिति ॥ ५ ॥ ६ ॥ ७ ॥ अथ प्रकारांतरेण भावभंगमाह षष्ट्यंशइति । षष्ट्यंशे यस्य भावस्य भंगविचारस्तस्य षष्ट्यंशे वा कलांशे षोडशांशे अप्रकाशग्रहोदये अप्रकाशग्रहाः धूमपातपरिधिचापध्वजाः तदन्यतमग्रहस्य उदये सति राहुकालसमायोगे च सति तद्भावफलस्य

## भाषा ।

जिस भावका भंग करता है उस भावके कष्टफलसे गुणन करके सात ७ से भाग लेना. यहां अवशेष रहे तो शत्रुकी रश्मिसे गुणना, बारहसे भाग लेना, शेष राशि ६।८।१२ में होवे तो वो भावका भंग जानना. वारंवार भंग कहते हैं, उसका क्या कारण सो कहते हैं. उक्त रीतिसे जो भंग आते हैं, उसकी क्षय वृद्धि एक द्वित्र्यादि आये जो प्रकार उस संख्यासे क्षय वृद्धि कहना ॥ ५ ॥ ६ ॥ ७ ॥ अब प्रकारांतरसे भावभंग कहते हैं. जिस भावका भंगविचार करता होवे उस

लसमायोगे तद्भावफलभंगदः ॥ ८ ॥ अनिष्टाख्यं च र-
श्मिं च तद्भावफलसंगुणम् ॥ द्वादशाप्तावशेषं च पूर्ववत्फ-
लमीरितम् ॥ ९ ॥ यद्यत्फलं प्रोक्तमथोत्तरत्र तत्सर्वमन्यत्र
च योजनीयम् ॥ भंगं च भंगं च मुनिश्च गर्गः प्रोवाच

## टीका ।

भंगदः भंगकारकयोगो ज्ञेयः । अप्रकाशग्रहोदयज्ञानं तु पूर्वार्धेज्ञेयं त-
द्यथा उदयकालीनस्पष्टरवौ राशयः ४ अंशाः १३ कलाः २० संयोज्य
यद्राश्यादिकमुपलभ्यते तद्धूमोदयकालीनमवगंतव्यम् । यतः रविधूमयोस्त-
त्परिमितांशाद्यंतरं पूर्वार्द्धे उक्तमिति । अथ च तदेव राश्यादिकं द्वाद-
शराशितः शोधितं तत् पादोदयकालीनं राश्यादिकं ज्ञेयं तथैव तत्पादो-
दयकालीनराश्यादिकं षड्राशियुक्तं परिध्युदयकालीनं ज्ञेयम् एवं तत्प-
रिध्युदयकालीनराश्यादिकं द्वादशराशिशोधितं चापोदयकालीनं ज्ञेयं त-
च्चापोदयकालीनं अंशाः १६ कलाः ४० एतद्युक्तं ध्वजोदयकालिकं
राश्यादिकं ज्ञेयमिति । अथ राहुकालसमायोगस्तु "मेषाद्युत्क्रमतो राहुर्वेषा-
त्कालः क्रमाचरेत्" इत्यादि अष्टादशाध्याये व्याख्यास्यामि ॥ ८ ॥ अ-
पि च प्रकारांतरमाह अनिष्टाख्यमिति । भंगविचारणीयभावेशस्य अनिष्टा-
ख्यं रश्मिं तद्भावफलं संगुणं तस्यैव भावस्य फलेन कष्टाख्येन संगुणितं
द्वादशाप्तावशेषं द्वादशभागोर्वरितं फलं पूर्ववत् तद्भावभंगदं समीरितं कथितं-
मिति ॥ ९ ॥ अथास्योक्तभंगस्योत्तरत्र सर्वतो योजनामाह यदित्यर्धेन । अत्र
यद्यत्फलं प्रोक्तं तत्तत् अथो अनंतरं उत्तरत्र वक्ष्यमाणभावविचारेऽपि अन्यत्र
क्वापि भावविचारे योजनीयमिति । अथ स्वोक्तं प्रमाणयति भंगमित्यर्धेन ।

## भाषा ।

भावके षष्ट्यंशमें या षोडशांशमें धूम, पात, परिधि, चापध्वज इनोमेंसे कोई एक-
काभी उदय होवे तो वो भावका भंगकारक योग जानना ॥८॥ और प्रकारांतर
कहते हैं. जिस भावका भंग विचारणा है उसकी अरिष्टरश्मिकू ओही भावके
इष्टबलांकसे गुणन करना, बारहसे भाग लेना शेष राशि जानना. राशिसंख्या-
तुल्यभावका भंग जानना ॥९॥ ए जो मैंने भावभंगादिक फलविचार कहा है सो

यद्वन्मुनिपुंगवाहम् ॥ १० षष्ट्यंशे च कलांशे च त्रिष्वे-
कोऽपि यदा न चेत् ॥ अधिमित्रं च मित्रं च भंगभंगः
प्रकीर्तितः ॥ ११ ॥ इति श्रीमद्बृहत्पाराशरहोरायामुत्त-
रभागे लोकयात्रायां भावभंगोपदेशोऽष्टमोऽध्यायः ॥ ८॥

## टीका ।

गर्गो मुनिः यं यं भंगं भंगमिति वीप्सायां द्विरुक्तिः मामिति शेषः प्रोवाच कथितवान् तं तं भंगं हे मुनिपुंगव! मैत्रेय! अहमपि तवोपदिष्टवानित्यन्वयः ॥ १० ॥ षष्ट्यंशइति । षष्ट्यंशे स्पष्टं कलांशे षोडशांशे च त्रिषु शत्रुराशि मास्यप्रकाशग्रहोदयकालराहुसमायोगेषु त्रिष्वपि योगेषु मध्ये यदा एकोपि योगो न चेत् अथ वा तत्राधिमित्रं मित्रं वा लग्नेशस्य अस्ति चेत् भंगभंगः भंगस्य रिपुरिःफषष्ठान्यतमोत्पादितराशिजनितस्य भंगो नाशः अपवाद इ-त्यर्थः प्रकीर्तितः कथितः इति । एवमुक्तं भवति पूर्वप्रकारैरुत्पादितराशिः लग्नात् द्वादशाष्टरिपुस्थानापन्नोऽपि लग्नेशस्य शत्रुषोडशषष्ट्यंशेन तथा तत्र षोडशांशषष्ट्यंशयोः अप्रकाशग्रहोदयोऽपि न तथा तत्र षोडशांशषष्ट्यंशयोः राहुकालसमायोगोपि न तर्हि स भावराशिः लग्नात् षष्ठाष्टमद्वादशतमो भा-वभंगदोपि उक्तयोगत्रयाभावे भावभंगदो नभवेदितिभावः ॥ ११ ॥ एवं प-राशरे होराशास्त्रस्यास्योत्तरार्धके ॥ अध्यायेत्वष्टमे टीका कृतेयं तु यथामति ॥ १ ॥ गणेशप्रीतये धीराः परोपकृतिहेतुना ॥ शोधनीया भवद्भिः सा प्रार्थयेहं पुनः पुनः ॥ २ ॥ मुमुहुः कालशास्त्रेस्मिन् दुर्गमत्वान्मनीषिणः ॥ किमहं मंद-धीस्तत्र गगने मशको यथा ॥ ३ ॥ इति श्रीबृहत्पाराशरहोराशास्त्रे श्रीमद्द-ध्यङ्ङन्वयवेदविद्याविद्योतितदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटीकायामष्टमोऽध्यायः ॥ ८ ॥

## भाषा ।

उत्तरोत्तर आगे जहां जहां उपयोग होवे वहां देखना. जो जो भंग गर्गमुनिने कहैं वो-ही भंगोंका लक्षण मैंने कहा ॥ १० ॥ अब पहिले जो भंग कहे हैं उनोंका भंग-खंडन कहते हैं. जो अभीष्टभावके षष्ट्यंशमें, या षोडशांशमें, शत्रुराशिमें अप्रकाश भूमादिक ग्रहोंका उदयकाल राहुसमायोगे इनोंमेंसे कोईभी एक योग न होवे और

आत्मा शरीरं होरा च कल्पं लग्नं च मूर्तयः॥स्वं कुटुंबं च दुश्चिक्यं विक्रमं सहजं सहः॥ १ ॥ पातालं हिबुकं वेश्म मित्रबंधूदकं सुखम्॥ त्रिकोणं प्रतिभा बुद्धिमात्रवि-द्यासुतास्ततः ॥ २ ॥ व्याधिक्षतारिभंगाश्च क्रोधो लो-

## टीका।

विद्यानिधिं गणेशं च हृदि ध्यात्वा यथामति ॥ नवमाध्यायके टीकां कुर्वेऽज्ञोपकृतावथ ॥ १ ॥ अध्याये नवमेऽस्मिंस्तु मुनिः शिष्यं पराशरः ॥ विचारे भावखेटानां शशास व्यासतो मुदा ॥ २ ॥ अथास्मिन्नध्याये द्वादशभावविचारसिद्धये तत्तद्भावविचारणीयार्थसूचकान्येव तेषां नामानि कथयित्वा गृहस्थानादिविचारः क्रियते आत्मेत्यादियावदध्यायसमापनम् । तत्रादौ आत्मेत्यादिसप्तश्लोकपर्यन्तम् द्वादशभावेषु सप्ततिसंख्या कार्या। विचारभावनामभिः सूचयति। अथ लग्नसंज्ञा—आत्मा, शरीरं, होरा, कल्पं, लग्नं, मूर्तयः, षट् ६ । अत्र मूर्तिशब्दस्य बहुवचनं छंदःसाधकम् । अथ द्वितीयभावसंज्ञे—स्वं, कुटुंबं चेति द्वे २ । अथ तृतीयभावसंज्ञा—दुश्चिक्यं, विक्रमं, सहजं, सहः इति चतस्रः ४ । अथ चतुर्थभावसंज्ञा—पातालं, हिबुकं, वेश्म, मित्रं, बंधुः, उदकं, सुखं, इति सप्त ७ । अथ पंचमभावसंज्ञा—त्रिकोणं, प्रतिमा, बुद्धिः, मात्राभिधं, विद्या, सुतः, इति षट् ६ । अथ षष्ठभावसंज्ञा—व्याधिः, क्षतं, अरिः, भंगः, क्रोधः, लोभः, मत्सरः, इति सप्त ७ । अथ सप्तमभावसंज्ञा—अत्र भावे कामः, विवाहः, स्त्री, रतिः, द्यूनं, मदः, अज्ञता,अ

## भाषा।

अधिमित्र या मित्र होवे, तो लग्नका पूर्वोक्त भंगका परिहार जानना ॥ ११ ॥
इति बृहत्पाराशरहोरा॰ भाषाटीकायां लोकयात्रावर्णनं नामाऽष्टमोऽध्यायः ॥ ८ ॥

अब भावगत फलोंका निर्णय कहनेके लिये प्रथम भावके नाम कहते हैं:—अथ लग्नके नामः—आत्मा, शरीर, होरा, कल्प, लग्न, मूर्ति. अब दूसरे भावके नामः—स्व, कुटुंब. अब तिसरे भावके नामः—दुश्चिक्य, विक्रम, सहज, सह. अब चौथे भावके नामः—पाताल, हिबुक, वेश्म, मित्र, बंधु, उदक, सुख. अथ पंचम भावके नामः—त्रिकोण, प्रतिमा, बुद्धि, मात्राभिद, विद्या, सुत. अष्टम भावके नामः—

भोऽथ मत्सरः ॥ कामो विवाहो यात्रा स्त्री रतिर्द्यूनं मदो-
ज्ञता ॥ ३ ॥ पराभवो मृतिर्बंधो रंध्रायुर्निधनं च्युतिः ॥
शुभं धर्मस्ततो भाग्यं त्रिकोणं च गुरुर्विभुः ॥ ४ ॥ व्या-
पारास्पदमेषूरणमानाज्ञा च कर्म खम् ॥ भावाय लाभाय
तपो रिःफं हानिर्व्ययः स्मृतः ॥ ५ ॥यात्रायां दशमेनैव

## टीका ।

अथाष्टमभावसंज्ञा—पराभवः, मृतिः, बंधः, रंध्रः, आयुः, निधनं, च्युतिः, इति सप्त ७ । अथ नवमभावसंज्ञा—शुभं,धर्मः,भाग्यं, त्रिकोणं,गुरुः, विभुः, इति षट् ६ । अथ दशमभावसंज्ञा—व्यापारः, आस्पदं, मेषूरणं, मानः, आज्ञा, कर्म, खं, इति सप्त ७। अथैकादशभावसंज्ञा—भावः, आयः, लाभः, अयः, तपः, इति पंच ५ । अथ व्ययसंज्ञा—रिःफं, हानिः, व्ययः, इति तिस्रः ३। एवं सप्तषष्टि ६७ संज्ञानुरूपतावत्संख्या कार्या । अपि च दशमेन यात्रायां गमनविषये विचारः १। सप्तमभावेन निवृत्तिः पुनर्निवर्तनविचारः २। चतुर्थ-लग्नेन वृद्धिविचारश्च ३ । एतत्पुनः संप्रकीर्तितं त्रितयं च संयोज्य एवं नामानुरूपं सप्ततिः ७० अर्थाः विचारणीयाः कया रीत्या तदाह स्वोच्चमित्र-स्ववर्गस्थाः स्वानां उच्चानि पूर्वोक्तानि मित्राणि ग्रहमैत्रविचारोक्तानि स्ववर्गाः ग्रहहोराद्रेष्काणादयः तेषु वर्तमानाः संतो यस्मिन् भावे ग्रहा भविष्यंति स भावः पुष्टं उक्तसंज्ञानुरूपं पूर्णं फलं दास्यतीत्यध्याहारः । अथ च येषु भावेषु नीचारिवर्गगाः नीचानि पूर्वोक्तानि अस्य ग्रहमैत्रविचारोक्ताः तेषां

## भाषा ।

व्याधि, क्षत, अरि, भंग, क्रोध, लोभ, मत्सर. सातवे भावके नामः—काम, विवाह, स्त्री, रति, द्यून, मद, अज्ञता. अष्टम भावके नामः—पराभव, मृति, बंध, रंध्र, आयु, निधन, च्युति. नवम भावके नामः—शुभ, धर्म, भाग्य, त्रिकोण, गुरु, विभु. अब दसवें भावके नामः—व्यापार, आस्पद, मेषूरण, मान, आज्ञा, कर्म, ख. अब ग्या-रहवें भावके नामः—भव, आय, लाभ, अय, तप. अब व्यय भावके नामः—रिःफ, हानि, व्यय. ऐसे सडसठ अर्थ भये, और दशम घरसे गमनविचार सप्तम भावसे

निवृत्तिः सप्तमेन तु ॥ वृद्धिश्चतुर्थलग्नेन त्रितयं संप्रकीर्तितम् ॥ ६ ॥ स्वोच्चमित्रस्ववर्गस्था एवमर्थाश्च सप्ततिः ॥ नीचारिवर्गगाश्चान्यत्पुष्टं चापुष्टमेव च ॥ ७ ॥ रविः शरीरे होरायां स्वे च भ्रातरि वेश्मनि ॥ सुते व्याधौ क्षते शत्रौ मृतौ तपसि कर्मणि ॥ ८ ॥ आये व्यये फलं दद्या-

## टीका।

वर्गेषु गच्छंति ते स्वनीचवर्गस्थाः स्वशत्रुवर्गस्थाश्च ग्रहाः वर्तंते स भावः अपुष्टं उक्तसंज्ञानुरूपं फलवैगुण्यं दास्यतीति ॥ १ ॥ २ ॥ ३ ॥ ४॥ ५॥६॥७॥ एवं भावेषु विचारणीयमुक्त्वा सप्तग्रहेष्वेवमेव विचारमाह रविरित्यादिदशश्लोकैः। तत्र रविरितिसपादेन रविविचारमाह। रविः सूर्यः शरीरे देहे होरायां लग्नविचारे स्वे द्वितीयभावे भ्रातरि बंधौ वेश्मनि चतुर्थभावे सुते पुत्रे व्याधौ रोगे क्षते क्षतविचारे शत्रौ अरौ मृतौ मृत्यौ तपसि तपस्यायां कर्मणि कृत्ये आये लाभे व्यये नाशे एवमर्थकभावेषु एवमुक्तफलेषु च फलं दद्यादिति ॥ ८ ॥ अथ चंद्रविचारमाह शीतगुरित्यादिसपादेन। विक्रमे प्रतापे सुखे कुटुंबे पोष्ये भ्रातरि क्रोधे प्रतिभायां बुद्धिविशेषे शुभे मृतौ भाग्ये त्रिकोणे पंचमनवमभावविचारे क्रयविक्रयादिरूपे लाभे रिःफे च इत्युक्तफलविचारे चंद्रात् उक्तफलदभावविचारेऽपि शीतगुश्चन्द्रः फलप्रदः॥९॥

## भाषा।

पीछे फिरतको चौथे घरसे वृद्धि ऐसे ७० अर्थोंका विचार करना ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ जो यह मित्र उच्च स्वक्षेत्रगत या षड्वर्गमें होवे तो पूर्वोक्त फल सर्व उत्तम देता है. शत्रु नीच शत्रुवर्गादिकका होवे तो अनुभवफल देता है ॥ ७ ॥ अब सूर्यका फलविचार कहते हैं. सूर्य शरीरमें लग्नके विचारमें फल देता है. दूसरे भावमें भाईके घरमें चौथे घरमें पुत्रके घरमें रोग होवे क्षय विचार शत्रुका विचार मृत्युका विचार नवम घरमें तपस्याका दसवेमें कृत्यका लाभ खर्चका यह सब फल देता है ॥ ८ ॥ अब चंद्रमा प्रताप कुटुंब पोष्यवर्ग भाई क्रोध बुद्धि विशेष कर्म मृत्यु भाग्य पंचम नवमभावविचार क्रयविक्रयादि लि-

च्छीतगुर्विक्रमे सुखे ॥ कुटुंबे भ्रातरि क्रोधे प्रतिमायां शुभे मृतौ ॥ ९ ॥ भाग्ये त्रिकोणे व्यापारे लाभे रिःफे फलप्रदः ॥ कुजः शरीरे होरायां कल्पविक्रमबंधुषु ॥ १० ॥ सहजे च सहे शत्रौ क्रोधलोभे च रंध्रके ॥ क्रियायामायतौ हानौ जये भंगे फलप्रदः ॥ ११ ॥ बुधो मनसि विद्यायां बुद्धौ हिबुकवेश्मनि ॥ लोभे शिल्पे च गानादि प्रिये स्वे लाभरिःफयोः ॥ १२ ॥ गुरुर्धर्मे च तपसि त्रित्रिकोणे त्रिकोणके ॥ आज्ञायां च सुते हानौ कारागृहनिवेशने ॥ १३ ॥

## टीका ।

अथ भौमविचारमाह कुजइतिसार्धेन । कुजो भौमः शरीरे होरायां लग्ने कल्पे शास्त्रविशेषे विक्रमे प्रतापे बंधौ भ्रातरि ॥ १० ॥ सहजे सहोत्पन्ने सहे तृतीयभावे शत्रौ क्रोधे लोभे रंध्रे अष्टमभावे क्रियायां कर्मणि आयतौ प्रभावे हानौ नाशे जये उत्कर्षे भंगे घाते इत्युक्तफलविचारे तस्मादुक्तफलमात्रविचारे च फलप्रदः ॥ ११ ॥ अथ बुधविचारमाह बुधेति । मनसि विद्यायां बुधौ हिबुके चतुर्थस्थानविचारे वेश्मनि गृहे लाभे शिल्पे गानादिप्रिये स्वे धने लाभे भावे रिःफे च फलदः स्यात् ॥ १२ ॥ अथ गुरुविचारमाह गुरुरितिद्वाभ्यां । धर्मे तपसि त्रित्रिकोणे नवमर्क्षे त्रिकोणे पंचमनवमस्थानयोः आज्ञायां सुते हानौ कारागृहनिवेशने अभिशापे प्रमादे व्याधौ स्वे कल्पे मूर्तौ वेश्मनि गृहे विद्यायां बुद्धौ सुखे भावे चतुर्थभावे शां-

## भाषा ।

चार लाभ व्यय यह पदार्थको फल देता है ॥ ९ ॥ अब मंगल शरीर लग्न शास्त्रविशेष विचार प्रताप भाई तृतीय भाव शत्रु क्रोध लोभ अष्टम भाव कर्म प्रभाव हानि उत्कर्ष घात यह पदार्थको फल देता है ॥ १० ॥ ११ ॥ अब बुध मानसिक विचार विद्या चतुर्थभाव ग्रह लाभ शिल्प गानादिक विचार धन ग्यारहवां भाव व्यय यह पदार्थोंका फल देता है ॥ १२ ॥ अब गुरु धर्म तप नवम भाव पंचम भाव आज्ञा पुत्र हानि कारागृहप्रवेश अभिशाप व्याधि स्वकल्प मूर्ति

अभिशापे तथा व्याधौ स्वे कल्पे मूर्तिवेश्मसु ॥ विद्याबुद्धिसुखे भावे शांत्यादिषु फलप्रदः ॥ १४ ॥ कामान्यस्त्रीविवाहेषु गीतनृत्यप्रियादिषु ॥ सुखे वेश्मनि दुश्चिक्ये स्वे कुटुंबे च वेश्मनि ॥ १५ ॥ आज्ञा क्रिया तपो भाग्ये लाभायव्ययहानिषु ॥ वदान्यत्वे दयायां च भार्गवः फलदः सदा ॥ १६ ॥ शनिर्मृतौ व्यये रिःफे दुश्चिक्ये क्षतचेतसि ॥ सहजे च सहे भावे बंधने फलदो भवेत् ॥ १७ ॥ कालहोराद्दकाणेशाः क्षेत्रार्कनवभागपाः ॥ सप्तांशत्रिंश-

## टीका ।

त्यादिषु शांतिपुष्ट्यादिषु च फलप्रदः ॥ १४ ॥ अथ शुक्रविचारमाह कामेत्यादिद्वाभ्याम् । कामे अन्यस्त्रियां तत्संग इत्यर्थः । विवाहे गीते नृत्ये प्रिये सुखे वेश्मनि गृहे दुश्चिक्ये भावे स्वे धने कुटुंबे भावे वेश्मनि भावे आज्ञायां क्रियायां तपसि तपस्यायां भाग्ये लाभे भावे आये व्यये हानौ नाशे वदान्यत्वे दातृत्वे दयायां भार्गवः शुक्रः सदा फलद इत्यन्वयः ॥ १५ ॥ ॥ १६ ॥ अथ शनिफलमाह शनिरिति । शनिः मृतौ व्यये नाशे रिःफे भावे दुश्चिक्ये भावे क्षते चेतसि चित्ते एकवचनं समाहारद्योतकं सहजे बंधौ सहे तृतीयभावे बंधने च फलदो भवेदिति एवं विचारस्तत्तद्ग्रहैः फलविचारे तथा तत्तद्ग्रहेभ्योपि तत्तद्भावसकाशादवगंतव्यः ॥ १७ ॥ अथोक्तफलविचारः । कालहोरेशाद्यष्टभिर्बलिष्ठपूर्वकैर्ग्रहैः कर्तव्य इत्याह कालेति-

## भाषा ।

गृह विद्या चतुर्थभाव शांति पुष्ट्यादि कर्म यह पदार्थोंका फल देता है ॥ १४ ॥ अब शुक्र काम अन्यस्त्रीसमागम विवाह गायन नृत्य प्रिय सुख गृह तृतीयभाव धन द्वितीयभाव चतुर्थभाव आज्ञा क्रिया तप भाग्य लाभ ग्यारहवां भाव व्यय हानि दातृत्व दया यह पदार्थोंका फल देता है ॥ १५ ॥ १६ ॥ मृत्यु नाश व्ययभाव तृतीयभाव क्षत चित्त सहजभाव बंधु बंधन यह पदार्थोंका फल देता है ॥ १७ ॥ अब यह पूर्वोक्त फलोंका विचार कहते हैं. काल होरेश द्रेष्काणेश क्षेत्राधीश द्वा-

दशेशा होरेशश्चाष्टमो भवेत् ॥ १८ ॥ क्रमादावृत्तितः प्रोक्ता बलिष्ठः पूर्वतो यथा ॥ सूर्योदयो ग्रहा लग्नपतिश्चावृत्तितः क्रमात् ॥ १९ ॥ इति श्रीमद्बृहत्पाराशरहोरायामुत्तरभागे लोकयात्रायां ग्रहभावफलविचारे नवमोऽध्यायः ॥ ९ ॥

## टीका ।

सार्धेन । कालहोरो होरे विषमेऽर्केंद्वोः समे राशौ चंद्रतीक्ष्णांश्वोरित्युक्ता तदीशाः दृकाणेशाः दृकाणाः द्रेष्काणाः प्रथमपंचमनवमपानामित्युक्ताः तदीशाः क्षेत्रेशाः स्थानपतयः " भेशा मंशुबुचंरबूशुमगुशः शोगुः " इत्युक्ताः अनर्कभागपाः स्वतो द्वादशांशा इत्युक्ता द्वादशांशपतयः नवमागपाः अजमकरतुलाकुलीराद्याः इत्युक्ता अधिपाः सप्तांशेशाः सप्तांशपास्त्वोजयुद्दे गणनीया निजेशतः " युग्मराशौ तु विज्ञेयाः सप्तमर्क्षादिनायकाः " इत्युक्ताः त्रिंशांशेशाः कुजयमजीवज्ञसिताः पंचेंद्रियवसुमुनींद्रियांशानां विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशका ज्ञेया इत्युक्ताः होरेशाः होरा लग्नं तस्याधिपाः प्रागुक्ताः एतेषु यो बलिष्ठः फलदः पूर्वं यथाकालहोरादीष्टपतीनां मध्ये बलिष्ठस्य प्रथमावृत्त्या फलं ज्ञेयम् । ततस्तदल्पबलस्य तृतीयावृत्त्या फलं ज्ञेयमित्याद्यष्टावृत्तिभिरष्टानां क्रमात्फलकालो ज्ञेय इति दिक् ॥ १८ ॥ अथ प्रकारांतरेणोक्तग्रहफलविचारमाह सूर्यादयइति । अथ वा अन्यरीतिः यथा सूर्यादयः सप्तग्रहाः लग्नपतिश्चाष्टमः तेषां मध्ये यो बलिष्ठः स पूर्वावृत्त्या फलद इति क्रमादष्टावृत्तितः फलविचारइति ॥ १९ ॥ एवं गणेशसंतुष्ट्यै नवमाध्यायके कृता ॥ टीका शिशूपकृतये शोधनीया मनीषिभिः ॥ १ ॥ ॥ इति बृहत्पाराशरहोराशास्त्रे श्रीमद्ध्यड्कन्वयवे०श्रीधरेण विरचितायां सुबोधिनीटीकायां नवमोऽध्यायः ॥ ९ ॥

## भाषा ।

दशांशेश नवमांशेश सप्तांशेश त्रिंशांशेश होरेश यह क्रमसे गणनाक्रम कहा एकेकसे आगे आगे बलवान् हैं ॥ १८ ॥ सूर्यादि सात ग्रह अष्टम लग्नपति यह

वक्ष्येहमथ दायोत्थं नृणामायुः परं मुने: ॥ पैंड्यो द्वादशधाप्रोक्तो ध्रुवरश्मिसमुद्भवौ ॥ १ ॥ अंशकाष्टकवर्गोत्थौ प्रत्येकं तु चतुर्विधम् ॥ विषयोक्तौ द्विधा प्रोक्तौ नक्षत्रां-

## टीका ।

श्रीगणेशपदे ध्यात्वा दशमाध्यायके मया ॥ विरच्यतेऽथ टीकेयं यथामति सुबोधिनी ॥१॥ अथास्मिन्दशमेऽध्याये त्वायुर्दायं विचार्यते ॥ ग्रहाष्टकाद्यनेकैस्तु प्रकारैः श्रीपराशरः ॥ २ ॥ अथ श्रीमहर्षिः पराशरः भगवान् शिष्याय परमायुः कथयन् पिंडांशकादिद्वात्रिंशद्भेदविचारेणास्मिन् दशमाध्याये उपदेष्टुं प्रतिजानीते तत्र तावदादौ तद्भेदान् प्रकाशयति वक्ष्यइत्यादिसार्धद्वयेन । हे मुने मैत्रेय ! दायोत्थं दायः हरणं रश्मिध्रुवादिना ग्रहेभ्यः उक्तरीत्या यद्धरणं स दायः "दायः सोल्लुंठभाषणे ॥ विभक्तव्यपितृद्रव्ये तथा हरणदानयोः" इतिमेदिनी । दायाडुत्थं उत्पन्नं दायोत्थं नृणां मनुष्याणां परमायुः परमत्यंतमायुः । अथानंतरमहं वक्ष्ये तवेति शेषः तमेव दायं विभजति पैंड्यो द्वादशधा पिंडायुः द्वादशप्रकारकः (१२) प्रोक्तः ध्रुवरश्मिसमुद्भवौ अंशकाष्टकवर्गोत्थौ च प्रत्येकं तु चतुर्विधौ नाम ध्रुवोद्भवः ४ रश्म्युद्भवः ४ अंशोद्भवः ४ अष्टवर्गोद्भवश्च ४ एते चत्वारश्चतुर्विधा इत्यर्थः विषयोक्तौ विषयशब्देन कथितौ नक्षत्रांशकसंभवौ प्रत्येकं द्विधा प्रोक्तौ नक्षत्रसमुद्भावो द्विप्रकारकः (२) अंशसमुद्भवो द्विप्रकारक इ-

## भाषा ।

आठमें जो बलिष्ठ वो प्रथम फल देनेवाला जानना. आठ वखत पुनः पुनः वारंवार फलविचार कहना ॥ १९ ॥ ॥ इति बृ०भाषाटीकायां नवमोऽध्यायः ॥ ९ ॥

अब आयुर्दायविभागका निर्णय कहते हैं. हे मैत्रेय ! अब तुमारेकूं आयुष्यका निर्णय कहता हूं, इसमें प्रथम पैंड्यायुर्दाय कहते हैं. पैंड्यायुर्दाय बारह प्रकारका है और ध्रुवायु इसका नामांतर निसर्गायु कहते हैं. रश्म्यायु १ इसका नामांतर स्वगंशआयु कहते हैं. अंशायु १ अष्टक वर्गायु १ ऐसे चार भेद हैं. चारोंके चार चार भेद हैं. नक्षत्रायु अंशायु १ इसका नामांतर कलाचक्रायु कहते हैं. इनोंके दो

शकसंभवौ ॥२॥ द्वात्रिंशद्भेदभिन्नं स्यात्परमायुर्नृणामिह ॥ अतिधृतिरर्कस्येन्दोस्तत्वानि भूमिसुतस्य पंचदश ॥ ३ ॥ द्वादश बुधस्य च गुरोस्तिथिः कवेर्मूर्छना नखाश्चार्केः ॥ परमोच्चे नीचेऽर्धं परेषु भावेषु वा तथा प्रोक्ताः ॥ ४ ॥ अनुपातः कर्तव्यस्त्वंतःसंस्थेषु खेटेषु ॥ खखभूमेः खयुग्मेंद्वोः स्वांशाः पूर्ववत् कृतौ च विज्ञेयौ ॥ ५ ॥ कृतिरेको

## टीका ।

त्यर्थः एवं प्रकारेण नृणामिह परमायुः द्वात्रिंशद्भेदभिन्नं द्वात्रिंशत्संख्याकैर्भेदैः भिन्नं विभक्तं स्यादिति ॥ १॥२ ॥ अथ पिंडायुर्ध्रुवांकानाह अतिधृतिरित्यादिपंचमश्लोकपर्यन्तम् । अर्कस्य रवेः अतिधृतिः १९ इंदोश्चंद्रस्य तत्वानि २५ भूमिसुतस्य भौमस्य पंचदश १५ बुधस्य च द्वादश १२ गुरोः तिथिः१५ कवेः शुक्रस्य मूर्छनाः २१ आर्केः शनेः नखाः २०, एते ध्रुवांकाः रव्यादीनां परमोच्चे ज्ञेयाः नीचे परमनीचे तु अर्धं उक्तध्रुवांकदलं वा इति निश्चयेन परेषु अन्येषु अंतर संस्थेषु खेटेषु नीचोच्चमध्यस्थेषु ग्रहेषु अनुपातः कर्तव्यः उक्तांकाः त्रैराशिकेन ग्राह्या इत्यर्थः एते पूर्ववत्कृतौ पूर्वोक्तावित्यर्थः खखभूमेः १०० शतवर्षायुर्मानप्रकारस्य खयुग्मेंद्वोः १२० विंशत्यधिकशतवर्षायुर्मानप्रकारस्य च विज्ञेयौ सप्तग्रहाणामपि पूर्वोक्तायुर्ध्रुवांकाः द्विप्रकारस्याप्यायुर्मानस्य ज्ञेया इत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ अथ ध्रुवायुर्दायध्रुवांकानाह कृतिरिति । रवेःकृतिः २०, चंद्रस्य १ एकः, भौमस्य यमौ २, बुधस्य रत्नं ९, गुरोः अष्टादश १८, शुक्रस्य नखाः २०, शनेः सैकतानं ५०, एवं

## भाषा ।

दो भेद हैं यह सब मिलायके ३२ भेद होते हैं ॥ १ ॥ २ ॥ अब पिंडायुके ध्रुवांक कहते हैं. सूर्यके १९, चं. २५, मं. १५, बु. १२, गु. १५, शु. २१, शनिके २०, यह ध्रुवांक परमोच्चके जानना. नीचके अर्ध लेना. और त्रैराशिकके भेदसे लेना. यह भेद शतायुका और एकसौ वीस वर्षका आयुष्यका प्रमाण जानना ॥ ३ ॥ ॥ ४ ॥ ५ ॥ अब ध्रुवायुर्दायके ध्रुवांक कहते हैं. सूर्यके २०, चं. १, मं. २, बु. ९,

यमौ रत्नमष्टादश नखाः क्रमात् ॥ सैकतानमिनादीनां दाये नैसर्गिके स्मृतम् ॥ ६ ॥ षोडश विंशतिरेको नवाष्ट-नवपंचविंशतिः क्रमशः ॥ षड्विंशतिस्तथोच्चे नीचे चार्धं त्विमेऽथ इतरे वा ॥ ७ ॥ कलीकृतं ग्रहं व्योमखाब्धिने-

## टीका ।

इनादीनां रव्यादीनां नैसर्गिके स्वाभाविकायुर्दाये स्मृतं उक्तं अनुक्रमसंबंध-त्वादिदमेव ध्रुवायुर्दाये ग्राह्यमिति ध्वनितोऽर्थः ॥ ६ ॥ अथ रश्म्यायुर्दाय-ध्रुवांकानाह षोडशेति । रवेः षोडश १६, इंदोः २० विंशतिः, भौमस्य एकः १, बुधस्य नव ९, गुरोः ८ अष्ट, शुक्रस्य नव ९, शनेः पंचविंशतिः २५, ष-ड्विंशतिर्वा २६, इमे तु उच्चे ज्ञेयाः नीचे तु अर्धं उक्तांकार्धाः इतरे नीचोच्च-मध्ये तु अनुपातः कर्तव्य इत्यार्थिकं ज्ञेयम् ॥ ७ ॥ एवं ध्रुवांकानुक्त्वा पिंड-ध्रुवरश्मिसंज्ञकानां तेषां वर्षमासाद्यायुरुत्पादनप्रकारमाह कलीकृतमितिसा-र्धेन । ग्रहं रव्यादिं राश्यादिवर्तमानं कलीकृतं कलारूपं कृत्वा खखाब्धिने-त्राऽवशेषितं चतुःशताधिकसहस्रद्वयेन २४०० चतुर्विंशतिसंख्याकांकेनेत्यर्थः अवशेषितं तष्टं शतद्वयेन २०० अभिभजेत् भागं गृहीत्वा शेषादवशिष्टात् सूर्यादिगुणितात् सूर्यादीनां उक्तत्रिप्रकारान्यतमध्रुवांकविवक्षितायुर्विहितसू-र्यादिध्रुवांकैः गुणितात् पुनः शतद्वयेन भागं गृहीत्वा प्रागलब्धभागं वर्धयेत् युंज्यादित्यर्थः तानि अब्दानि भवेयुः पुनः शेषं द्वादशगुणितं द्विशतभक्तं मासाः स्युः पुनः शेषं त्रिंशद्गुणितं द्विशतभक्तं दिनानि स्युः पुनः शेषं षष्टि-गुणितं द्विशतभक्तं घटिकाः पुनः शेषं तथा कृतं पलानि स्युरिति । अथास्यो-

## भाषा ।

गु. १८, शु. २०, शनिके ५०, यह सूर्यादिकोंका निसर्गायुर्दायका स्वाभाविका-युर्दाय कह्या ॥ ६ ॥ अब रश्म्यायुर्दायके ध्रुवांक कहते हैं. सूर्य १६, चं. २०, मं. १, बु. ९, गु. ८, शु. ९, शनि २५, अथवा २६, यह ध्रुवांक उच्च ग्रहके जा-नना. नीच राशिके ग्रह होवे तो अर्ध कहे हैं. दूसरे जो हैं उनोंका अनुपात करना ॥ ७ ॥ अब ऊपर लिखी हुई तीनों आयुर्दायका वर्षादिक लावनेकी रीति कहते हैं. सूर्यको कलात्मक करके उसमें यह अंकका २४०० भाग लेके

त्रावशेषितम् ॥ शतद्वयेनाभिभजेदब्दमासाद्यः क्रमात् ॥८॥ सूर्यादिगुणिताच्छेषाद्दृद्धिं कुर्याद्यथोत्तरम् ॥ स्वोच्च-

## टीका।

दाहरणम्। रविः १०।४।१४।२२ अयं राश्यादिः अस्य कलाः १८।२५४।२२ इमाः चतुर्विंशतिशतैः २४०० तष्टाः १४५४।२२ अवशिष्टाः इमाः शतद्वय २०० विभाजिताः तल्लब्धांकः ७ शिष्टांकः ५४।२२ अयं पिंडायुरुक्तरविध्रुवांकैः १९ गुणितः १०३२।५८ अयं शतद्वयविभाजितः लब्धं ५ एतत् पूर्वलब्धांके नियुक्तं जातं १२ अब्दानि जातानि अवशिष्टांकः ३२।५८ द्वादशांकैर्गुणितो जातः ३९५।३६ शतद्वयविभाजितः लब्धं १ जातोऽयं मासांकः पुनः शेषं १९५।३६ त्रिंशद्गुणिताः ५८६८ शतद्वयविभाजनेन लब्धम् २९ जाता दिवसाः पुनः शेषं ६८ षष्टिघ्नं ४०८० शतद्वयभागलब्धं २० जाता घटिकाः पुनः शेषं ८० षष्टिघ्नं ४८०० शतद्वयभागेन लब्धं २४ पलानि एवं पिंडायुर्दाये जातः सूर्यायुर्दायः १२।१।२९।२०।२४ एवंचंद्रादीनां ज्ञातव्यः एवं प्रकारेणैव ध्रुवान् रश्म्यायुर्दायो बुध्यात् ॥ ८ ॥ अथ नवांशायुर्दायोत्पादनप्रकारमाह स्वोच्चेत्यादिसपादैकादशश्लोकपर्यन्तम्। ग्रहं रव्यादि

## भाषा।

| मध्यमपिंडायुश्चक्रमाह. | | | | | | | | मध्यमध्रुवायुर्नामनिसर्गायुश्चक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. | सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| १३ | १९ | १२ | २ | १७ | ८ | २० | ९३ | १२ | ७ | ११ | १ | २२ | ८ | ३५ | ९९ |
| १ | ३ | ९ | ० | ८ | ७ | ९ | ४ | ५ | ७ | २ | ६ | ६ | ५ | ४ | ३ |
| २९ | १७ | १९ | १७ | ६ | २२ | ० | २३ | ७ | २३ | २६ | १३ | २६ | २० | १५ | ११ |
| २० | ४४ | ४८ | ३८ | ३ | ५५ | ० | ३१ | १२ | २ | ३८ | १३ | ९ | २४ | ० | ३९ |
| २४ | ३६ | ० | २४ | ३६ | १३ | ० | २ | ० | २४ | २४ | ४८ | १८ | ० | ० | ५४ |

दोसोसे भाग लेना. लब्ध जो वर्ष आवे उसकू जूदा मांडके शेषांककू अपने ध्रुवांकसे गुणन करके दोसोसे भाग लेके वर्षादिक फल लेना. पूर्व वर्षमें जोड देना सो मध्यमायु होवे. इसका उदाहरण टीकामें है, और चक्रमें दिखाया है. ये क्रमसे पिंडायु, ध्रुवायु, रश्म्यायु लाना॥८॥

| म०सत्तायुर्नामस्वरांशायुश्चक्रम् | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ११ | १९ | १२ | १ | १५ | ६ | २३ | ९१ |
| ४ | ११ | ५ | ६ | ७ | ६ | ८ | १ |
| ५ | १० | ७ | १३ | १ | २२ | ३ | ६ |
| ४५ | ४८ | ५० | १३ | ४० | ४० | ० | ५९ |
| ३६ | ० | २४ | ४८ | ४८ | ४८ | ० | २४ |

अब नवांशायुर्दाय कहते हैं. स्पष्ट ग्रहकू नीचमें हीन करके उसका भुज करके

हीनं ग्रहं ज्ञात्वा कर्कादि च मृगादि च ॥ ९ ॥ गृहीत्वा तु भुजं कोटिं कृत्वा लिप्तिकृतं तु तम् ॥ हत्वा नवांशदायेन भजेद्भत्रयलिप्तिभिः ॥ १० ॥ वत्सराद्या भवंत्यते वर्ज-

## टीका ।

विवक्षितं स्वोच्चहीनं स्वर्कायोच्चेन हीनं वर्जितं कृत्वा तत्केंद्रं भवति तत्कर्कादि कर्कसिंहकन्यातुलावृश्चिकधनुरन्यतमराशिवर्तमानं मृगादि मकरकुंभमीनमेषवृषमिथुनान्यतमराशिवर्तमानं वा ज्ञात्वा तस्य भुजं गृहीत्वा नाम त्रिभोनं कृत्वेत्यर्थः तस्य कोटिं कृत्वा प्राप्तभुजो राशित्रये वर्जयित्वेत्यर्थः तथाभूतं तं तं कोटिं लिप्तीकृतं गणितरीत्या कलास्थाने संपादितं तं नवांशदायेन नवांशदायस्तु पंचमूर्छेत्यादिना वक्ष्यमाणः तेन हत्वा गुणयित्वा भत्रयलिप्तिभिः टावंतलिप्ताशब्दस्य इकारांतत्वमार्षं छंदोभंगभिया वेति ज्ञेयम् राशित्रयलिप्ताभिः ५४०० आभिः भजेत् तेन लब्धांका वत्सराद्या भवंति।एते वत्सराद्याः प्रागानीतकेन्द्रे मकरादिके मकराद्यन्यतमषड्राशिस्थे सति त्रिघ्ने त्रिगुणिते स्वे स्वकीये नवांशदाये वक्ष्यमाणनवांशध्रुवांके वर्जयेदूनयेत्।अथ तस्मिन्केंद्रकर्कटकादिके कर्काद्यन्यतमराशिस्थे सति तस्मिन् ध्रुवांके अर्धीकृते अर्धावशेषिते युंज्यात् मेलयेत् तेन पृथक्नवांशायुर्दायो भवतीति। अथास्योदाहरणम्। रविः १०।४।१४।२२ अस्योच्चं ०।१० अनेन हीनः ९।२४।१४।२२ जातमेतद्रविकेंद्रं मकरादि अस्य भुजः २।५।४५।३८अस्य कोटिः ०।२४।१४।२२ अस्य कलाः १४५४।२२ एताः नवांशध्रुवांकेन ५ अनेन गुणिताः७२७१।५०एताः भत्रयलिप्ताभिः ५४०० आभिः भाजिताः लब्धं १ एतन्नवांशायुर्वर्षं अवशिष्टम् । १७७१।५० द्वादशगुणितं २१२६२ एतत् ५४०० आभिर्भाजितं लब्धं ३ एते मासाः अवशिष्टं ५०६२ एतत्त्रिंशघ्नम् १५१८६० एतत् उपरिष्टमाजकक्लाभिर्भक्तं लब्धं २८ एते दिवसाः शेषं ६६० षष्टिघ्नं ३९६०० उपरिष्ट-

## भाषा ।

पीछे कोटि करके कला करना पीछे नवांशके ध्रुवांकसे गुणन करके इसका५४०० से भाग लेना. लब्ध आवे वो वर्ष जानना. बाकी जो शेष है उसकू बारासे गुणन करके इस ५४००से भाग लेना. लब्ध मास जानना. ऐसा दिन घटी पल लाना.

येन्मकरादिके ॥ केन्द्रे नवांशदाये स्वे त्रिघ्ने कर्कटकादिके ॥ ११ ॥ युंज्याद्दर्धीकृते तस्मिन् प्रक्रमानुगतो मतः ॥ द्विघ्ने त्वपनयेत्तस्मिन्युज्यादेव दलीकृते ॥ १२ ॥ निक्षिप्याष्टकवर्गं तु राशिचक्रे तु पूर्ववत् ॥ त्रिकोणैकपशुद्धिं

## टीका।

भाजकेन भक्तं लब्धं ७ एता घटिकाः शेषं १८०० एतत्षष्टिघ्नं १०८००० भाजकेन भक्तं लब्धं २० एतानि पलानि एवं संपादितो वर्षादिसमूहांकः ११।२८।७।२० अयं मकरादिकेन्द्रत्वात् मूलध्रुवांकः ५ त्रिगुणितः १५ अस्मिन्वर्जयित्वा १३।८।१५२।४० जातोऽयं स्पष्टरविनवांशायुर्दायः एवं चंद्रादिनवांशायुर्दायो बोध्यः इति ॥ ९ ॥ १० ॥ ११ ॥ अथ प्रक्रमानुगतायुर्दायमुत्पादयति प्रक्रमेत्यादिसपादार्धेन। प्रक्रमानुगतो मतः प्रागुक्तनवांशायुर्दाय एव प्रक्रमानुगतसंज्ञकः तत्र विशेषस्तु मकराद्यन्यतमषड्राशिस्थे केन्द्रे सति मूलध्रुवांको द्विघ्नः कार्यः न त्रिघ्नः कर्कादिकेन्द्रे सति दलीकृते युंज्यादिति प्राग्वत् अन्यत्सर्वं समानमिति ॥ १२ ॥ अथाष्टकवर्गायुर्दायोत्पादनरीतिमाह निक्षिप्येत्यादिपंचदशश्लोकपर्यंतम्। पूर्ववत् पूर्वं पंचमाध्याये उक्तवत् राशिचक्रे राशिकुंडलिन्यां अष्टकवर्गं स्थानकरणरूपं निक्षिप्य उद्धृत्य त्रिकोणैकपशुद्धिं त्रिकोणशोधनं एकाधिपत्यशोधनं च पूर्वोक्तरीत्या कृत्वा

## भाषा।

इसकू मकरादि कर्कादि केंद्र देखके ऋण धन करना. ध्रुवांकोंमें कैसा. जो मकरादि केंद्र होवे तो ध्रुवांककू तीन गुणा करके पूर्व जो लाये वर्षादिक लब्ध उसकूं घटा देना. और कर्कादि केंद्र होवे तो ध्रुवांककू अर्ध करके जोड देना. सो नवमांशमध्यायु भया ॥ ९ ॥ १० ॥ ११ ॥

| मध्यम अंशायुश्चक्रम्. | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | गु. | शु. | श. | यो. |
| ३ | १९ | १८ | ७ | १० | २५ | ११ | ११६ |
| ८ | ३ | ७ | ० | ५ | ६ | ५ | ८ |
| १ | ० | १ | २९ | २३ | ४ | २३ | १६ |
| ५२ | ४४ | ५३ | ९ | ३२ | ७ | २० | ९ |
| ४० | ४८ | ५२ | २४ | ० | ४ | २ | ८ |

अब प्रक्रमानुगतायुर्दाय कहते हैं. पूर्व जो नवांशायुर्दायका प्रकार बताया उसीकू मकरादि छः राशिमें होवे तो मूल ध्रुवांकको दुगुना करके हीन करना. कर्कादि छः—राशिमें होवे तो मूल ध्रुवांकको अर्ध करके जोड देना आयुर्दाय भया ॥ १२ ॥ अब अष्टकवर्गायु कहते हैं. प्रथम अष्टकवर्ग सिद्ध करके उसका त्रिकोण शोधन

च कृत्वा तु गुणयेद्गुणैः ॥ १३ ॥ खवन्हिभक्तमब्दाद्याः क्रमाद्भिन्नाष्टवर्गजाः ॥ एवं कृत्वा तु संयोज्य भाप्तमब्दादयः स्मृताः ॥ १४ ॥ कृत्वा करणदैरेवं स्वोत्पन्नौ दायसंज्ञितौ ॥ प्रत्येकं भिन्नदायोत्था एवं त्रिंशद्भिदा मताः॥१५॥ पंच मूर्च्छा सप्त रत्नं दश षोडश वारिधिः ॥ नवांशा

## टीका ।

तेषां भावानां गुणैः प्रथमाध्यायोक्तवर्गणारूपैः पृथक् गुणयेत् तथा प्रागुक्तसप्तांकगुणकेन च गुणयेत् ततः खवन्हिभक्तं खवन्हिभिः ३०एभिर्भक्तं यत्फलं तत् अब्दरूपं शेषं द्वादशादि गुणितं त्रिंशद्भक्तं मासादि स्यात् एवं क्रमात् भिन्नाष्टकवर्गजाः भिन्नाष्टवर्गसमुद्भूताः अब्दाद्या भवंति एवं प्रकारेण तान् भिन्नान् कृत्वा विधाय ततः संयोज्य एकीकृत्य भाप्तं सप्तविंशतिभागलब्धं फलं अब्दादयः सामुदायिकाष्टकवर्गीयवर्षादयः स्मृताः उक्ता इत्यर्थः । एवं रेषाशोधनायुर्दायवत् करणदैरपि करणत्रिकोणैकाधिपत्यशोधनाद्यायुर्दायं संपादयेदित्यर्थः । एवं स्वोत्पन्नौ स्वयोर्दायसंज्ञितौ भवतः नामरेखोत्पन्नौ रेखाष्टवर्गायुर्दायसंज्ञकः करणोत्पन्नः करणायुर्दायसंज्ञक इत्यर्थः प्रत्येकं प्रतिग्रहम् भिन्नदायेन उत्पन्नाः त्रिंशद्भिदाः त्रिंशत्प्रकारका मताः तदित्थं पिंडायुर्दायः भिन्नसप्तग्रहोत्पन्नः सप्तकारकः ७ ध्रुवायुर्दायः भिन्नसप्तग्रहोत्पन्नः सप्तप्रकारकः ७ रश्म्यायुर्दायः भिन्नसप्तग्रहोत्पन्नः सप्तप्रकारकः ७ अंशायुर्दायः भिन्नसप्तग्रहोत्पन्नः सप्तप्रकारकः ७ रेखाष्टकवर्गोत्थः १ करणाष्टकवर्गोत्थश्चे १ त्येवं त्रिंशद्भेदभिन्न इतितात्पर्यम् ॥ १३ ॥ १४ ॥ १५ ॥ अथ

## भाषा ।

करके एकाधिपत्य शोधन करके वो संख्याकू राशिगुणकसे गुणन करके उसका पिंड लाना पिंडकू ३० तीससे भाग लेना वर्षादिक भिन्नाष्टक वर्गायु भया अब सामुदायाष्टकायुर्दाय कहते हैं. इसआयुर्दायकी रीति ऊपर बताई है या रीतसूँ लाना परंतु विशेष इतना है कि भागके तीसके ठिकाने २७ का देना इसी तरहसे करणायुर्धी जानना इस रीतिसे यह दशामें तीस ३० भेद बताये हैं सो टीकामें स्पष्ट हैं ॥ १३ ॥ १४ ॥ १५ ॥ अब नवांशायुर्दायके ध्रुवांक कहते हैं. इसकू का-

विधितः प्रोक्ता अंत्यात्प्रोक्तास्तु भादितः ॥ १६ ॥ रवींद्वा-
राहिजीवार्किबुधसेतुसिताः क्रमात् ॥ आग्नेयाद्भगणेशाः

## टीका।

नवांशायुर्दायं ध्रुवांककथनसहितमाह पंचेति । अथ नवांशायुर्दाये ध्रु-
वांकाः रवेः पंच ५, इंदोः मूर्छा २१, भौमस्य सप्त ७, बुधस्य रत्नं ९, गुरोः
दश १०, शुक्रस्य षोडश १६, शनेः वारिधिः ४, एते ध्रुवांकाः । नवांशग-
णनाप्रकारमाह । अंत्यात् प्राप्तनवांशतो नवमनवांशमारभ्य विलोमतः आ-
दितः प्राप्तनवांशमारभ्य नवमनवांशांतं अनुलोमतः नवांशविधितः पूर्वावो-
क्तविधिना नरस्य जन्मकाले वा प्रश्नकाले यदंशक इत्यादि एकोनपंचाश-
दध्याये क्रमो ज्ञेयः ॥ १६ ॥ अथ नक्षत्रायुर्दायमाह रवीत्यादिएकोनविंश-
तिश्लोकपर्यन्तम् । आग्नेयात् अग्नेः इदमाग्नेयं अग्निदेवताकं "अग्निकलिभ्यां
ढक्वक्तव्यः" इति ढक् । कृत्तिकाख्यं तस्मात् भगणेशाः भानां नक्षत्राणां
गणः सप्तविंशतिसंख्याकसमुदायः तस्य ईशाः क्रमात्पतयः स्युः के ते "र-
वींद्वाराहिजीवार्किबुधकेतुसिताः" एतदुक्तं भवति रविः कृत्तिकापतिः इंदु
रोहिणीपतिः आरो भौमो मृगपतिरिति क्रमेण पूर्वापर्यन्तम् क्रमात् पतयः ते
एव रव्यादयः पुनर्द्वितीयपर्याये उत्तरादिनवनक्षत्रेषु पतयो गणनीयाः त एव
पुनरुत्तराषाढादिभरण्यंतं नव नक्षत्रपतयो भवंति स्वामिनः जात्येकवचनं
तेषां स्वामिनां क्रमादायुषो वत्सराः वर्षाणि षट् रवेः, आशा दश चंद्रस्य, सप्त
भौमस्य, धृतयोऽष्टादश राहोः, नृपाः षोडश गुरोः, एकोनविंशतिः शनेः, अ-
त्यष्टिः सप्तदश बुधस्य, सप्त केतोः, नखा विंशतिः शुक्रस्येति वर्षाणि । अ-

## भाषा।

ल चक्रमी कहते हैं. सूर्यका ध्रुवांक ५, चंद्रका २१, मं. ७, बु. ९, गु. १०, शुक्र
१६, शनि ४, यह सूर्यादि ग्रहोंके ध्रुवांक हैं ॥ १६ ॥ अब नक्षत्रायुर्दाय कहते हैं.
उसमें ग्रहका क्रम नक्षत्रक्रम वर्षक्रम कहते हैं. कृत्तिका नक्षत्र आदि लेके तीन
वखत भ्रमणसे सूर्यादि वर्षसहितग्रह जानना. सूर्य ६, चंद्र १०, मं. ७, राहु
१८, गुरु १६, शनि १९, बुध १७, केतु ७, शुक्र २०, यह ध्रुव उच्चके कहे
नीचका ग्रह होवे तो पूर्वोक्त ध्रुवोंका अर्ध लेना बाकीकी राशिमें होवे तो अनुपात-

स्युः स्वामिनो वत्सराः क्रमात् ॥ १७ ॥ षडाशाः सप्त शतयो नृपा एकोनविंशतिः ॥ अत्यष्टिः सप्त च नखा उच्चे नीचेऽर्धमुच्यते ॥ १८ ॥ अस्मिंस्तु हरणं तस्मात्पूर्वस्मिंस्तु द्वयं हितम् ॥ अनयोः पापदायादावंते स्युरपमृत्यवः ॥ १९ ॥ द्वात्रिंशद्भेदभिन्नोयमायुषो निर्णयः कृतः ॥ लोकयात्रापरिज्ञानहेतवे दायनिर्णयः ॥ २० ॥ भावानां संप्रवक्ष्यामि शृणुष्व मुनिपुंगव ॥ आयुश्च परमं हृत्वा

## टीका ।

स्मिन्नक्षत्रेशसमूहे उच्चे सति ज्ञेयानि अस्मिन्नक्षत्रेशसमूहे नीचे सति तु तस्मात्पूर्वोक्तांकजातात् अर्धं हरणं नाश उच्यते नाशः कार्य इत्यर्थः । अथोक्तेषु सप्तस्वप्यायुर्दायेषु शुभाशुभत्वं विभजते।पूर्वस्मिन् पैंडयम्रुवरश्म्यंशाष्टकवर्गाणामायुर्दाये द्वयं शुभाशुभग्रहजनितफलद्वयं हितम् शुभं ज्ञेयम् । अनयोः नवांशनक्षत्रायुर्दाययोस्तु पापदायादावंते पापानां रविक्षीणेंदुभौमसपापबुधशनिराहुकेतूनां यो दायः आयुर्दायः तस्य आदौ आयुर्दायारंभे अंते आयुर्दायावसाने अपमृत्यवो ज्ञेयाः अर्थात् पूर्णचंद्रबुधगुरुशुक्रायुर्दायाः शुभे इति विशेषो ज्ञेयः इति ॥ १७ ॥ १८ ॥ १९ ॥ अस्यायुर्दायकथनस्य हेतुमाह द्वात्रिंशदिति । अयं द्वात्रिंशद्भेदभिन्नः आयुषो निर्णयः मया कृतः कुतः यतः अयमिति शेषः दायनिर्णयः लोकयात्रापरिज्ञानहेतवे लोकयात्रायाः परिज्ञानस्य हेतवे हेत्वर्थं भवतीति ॥ २० ॥ एवं सप्तविधमायुर्दायमुक्त्वा अष्टमं भावायुर्दायमाह भावानामिति सार्धेन । हे

## भाषा ।

से लेना उसमें पाप ग्रहोंका जो दाय है उसके आदि अंतमें अपमृत्यु देनेवाला है, और शुभ ग्रहोंका दाय शुभ फल देता है ॥ १७ ॥ १८ ॥ १९ ॥ अब आयुर्दाय कहनेका हेतु कहते हैं. मैंने लोकके सुख दुःख जाननेके हेतुसे यह बत्तीस भेदसे आयुष्यका निर्णय कहा ॥ २० ॥ ऐसा बत्तीस भेदयुक्त जो सात प्रकारका आयुर्दाय सो कहके आगे आठवां भावायुर्दाय कहते हैं. हे मैत्रेय ! भावोंका आयु-

स्वेन स्वेन बलेन च ॥ २१ ॥ विभजेद्बल्ययोगेन भावानां दाय एव सः ॥ अथ वांशर्क्षदायेन वर्गेशानां बलेन तु ॥ २२ ॥ स्थानाद्यैश्च समुद्भूतः षड्विधो दाय उच्यते ॥ २३ ॥ इति श्रीमद्बृहत्पाराशरहोराशास्त्रे आयुर्दायकथने दशमोऽध्यायः ॥ १० ॥

## टीका।

मुनिपुंगव ! मैत्रेय ! भावानामायुर्दायं संप्रवक्ष्यामि कथयिष्यामि तं शृणुष्व परमं आयुः प्रागुक्तसप्तान्यतमविवक्षितं आयुर्गृहीत्वा स्वेन स्वेन विवक्षितभावबलेन हत्वा बल्ययोगेन सर्वभावबलसमूहेन विभजेत् तेन यल्लब्धं वर्षादि स एव भावानां दायो ज्ञेय इति ॥ २१ ॥ अथ प्रकारांतरेण भावायुर्दायमाह अथवेत्यर्धेन । अथवेति प्रकारांतरसूचनम् । नवांशऋक्षदायेन परमायुर्दायं हत्वा वर्गेशानां षड्वर्गपतीनां बलेन भजेत् लब्धं वर्षादि भावायुर्दाय इति ॥ २२ ॥ एवमवांतरभेदेन द्वात्रिंशद्विधोपि मुख्यतया षड्विध एवेत्याह स्थानाद्यैरित्यर्धेन । स्थानाद्यैः स्थानशब्देन भावो गृह्यते भावदायः १, नक्षत्रदायः २, नवांशदायः ३, अष्टकवर्गदायः ४, अंशदायः ५, पैंड्यदायश्चेति षट्प्रकारैः समुद्भूतः दायः अनेकविधोपि षड्विध एव षट्प्रकारांतरगत एवेति उच्यते कथ्यते इति ॥ २३ ॥ एवं दशमकेऽध्याये कृता टीका यथामति ॥ श्रीकृष्णप्रीतये सा तु संशोध्यैव मनीषिभिः ॥ १ ॥ इति श्रीमद्बृ०शास्त्रे श्रीमद्ध्यङ्कन्वयवेदशाखाध्यनवद्यविद्याविद्योतितदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण विरचितसुबो०टी०आयुर्दायकथने दशमोऽध्यायः ॥ १० ॥

## भाषा।

दाय कहता हूं. पूर्वोक्त सात आयुष्यमेंसे कोईभी येक आयुर्दाय लेके अपने अपने भावबलसे गुणन करके सर्व भावबलसमूहसे भाग लेना लब्ध जो वर्षादि आवे वो आयुर्दाय जानना । अब प्रकारांतरसे भावायुर्दाय कहते हैं. नवांशायुर्दायसे परमायुष्यकूं गुणन करके षड्वर्गों पतियोंके बलसे भाग लेना लब्ध वर्षादि भावायु

आरार्की वक्रिणौ मृत्युश्चान्योन्यभवनस्थितौ ॥ वेश्म-षण्मृत्युरिःफस्थाः क्षीणेन्दूत्पत्तिपाष्टपाः ॥ १ ॥ अष्टमस्था ग्रहाः सर्वे पापदृष्टियुतास्तु वा ॥ भौममंदर्क्षगाश्चेत्तु शुभ-दृष्टिविवर्जिताः ॥ २ ॥ केन्द्रत्रिकोणे च शुभाश्च पापाः षष्ठे

## टीका ।

अथैकादशकेऽध्याये ऱ्हासवृद्धिविधिं मुनिः ॥ उक्तायुर्दायविषये तद्योगा-द्याह विस्तरात्॥१॥ अथ भगवान् पराशरः एकादशाऽध्याये प्रागुक्तायुर्हानि-तद्वृद्धिमारकयोगायुर्दायादिविषयानुपदिशति तत्रादौ मारकयोगमाह आरे-त्यादिश्लोकद्वयेन । आरार्की भौमशनी वक्रिणौ संतौ अन्योन्यभवनस्थिताः अन्योन्ययोः परस्परयोः भवनवर्तमानौ चेन्मृत्युः मृत्युकारकयोगो ज्ञेयः । क्षीणेन्दूत्पत्तिपाष्टपाः क्षीणेन्दुः कृष्णदशम्यादिशुक्लपंचम्यंतं वर्तमानश्चंद्रः, उत्पत्तिपः जन्मलग्नस्याधिपतिः, अष्टपो लग्नादष्टमभावेशश्च, एते त्रयः, वेश्मषण्मृत्युरिःफस्थाः लग्नाच्चतुर्थषष्ठाष्टमद्वादशस्थानगताः मृत्युकारकाः । वा अथवा अष्टमस्थाः सर्वेऽपि मृत्युकारकाः । वा सर्वे ग्रहास्तु भौममंदर्क्षगा मेषवृश्चिकमकरकुंभसंस्थाः शुभदृष्टिविवर्जिताः शुभग्रहदृष्टिरहिताः संतः पा-पदृष्टियुताः स्युस्तदाऽपि मारकयोगोज्ञेयः इति ॥ १ ॥ २ ॥ अथायुर्योगमाह केन्द्रेति । शुभाः शुभग्रहाः केन्द्रत्रिकोणे ४।७।१०।५।९ स्थाने वर्तमानाः

## भाषा ।

जानना ॥ २२ ॥ ऐसा स्थानादिक क्रमसे छः प्रकारका आयुर्दायभेद कह्या ॥२३॥ इति श्रीबृ० भाषाटी० दशमोऽध्यायः ॥ १० ॥

अब मृत्युकारक योग कहते हैं- मंगल शनी वक्री होवे, परस्पर स्थानमें बैठे होवे, तो मृत्युकारक योग जानना. क्षीण चंद्र, जन्मलग्नपति, अष्टमभावेश यह तीनों ग्रह लग्न-से ४।६।८।१२ स्थानोंमें होवे तो मृत्युकारक योग जानना अथवा अष्टम घरमें सब मृत्युकारक जानना, अथवा सब ग्रह मेष वृश्चिक मकर कुंभराशियोंमें बैठे होवे और शुभ ग्रहकी दृष्टि न होवे पापदृष्टि होवे तो मारकयोग जानना॥१॥२॥ अब आयु-र्दाय योग कहते हैं. शुभ ग्रह केन्द्रत्रिकोणमें होवे तो १०८ वर्षका आयुष्य, पापग्रह

तृतीये न च मृत्युसंस्थाः ॥ अष्टोत्तरं जीवति वर्षमायुर्नरो गुणाढ्यो नवतिः सुशीलः ॥ ३ ॥ लग्ने गुरौ दैत्यगुरौ चतुर्थे बुधे सुते षष्ठगते च सूर्ये ॥ स्थानं च शत्रोश्च मृतिं च हित्वा त्वन्ये स्थिताश्चेन्नवतिश्च षट् च ॥ ४ ॥ सुखादिकेंद्रेषु गुरुः स्थितश्चेत्तत्पंचमे ज्ञे तु भृगौ तु षष्ठे॥ षडुत्तरा सप्ततिरष्टयुक्ता त्वशीतिरेकोत्तरतः प्रदिष्टा ॥ ५ ॥

## टीका ।

अथवा पापाः पापग्रहा षष्ठे तृतीये भावे स्थिताः तदा मृत्युसंस्थाः अष्टमस्थाः केपि ग्रहा न चेत् नरः सः सुशीलः सुस्वभावः गुणाढ्यः सुगुणसंपन्नः सन् क्रमेण अष्टोत्तरं वर्षम् जात्येकवचनं क्रियाविशेषणं वा प्रथमयोगे नवतिः ९० द्वितीययोगे क्रमाज्जीवति इति ॥ ३ ॥ अथ पुनर्योगांतरमाह लग्नेति । लग्ने गुरौ सति चतुर्थे दैत्यगुरौ सति सुते पंचमभावे बुधे सति षष्ठगते सूर्ये च सति नवतिः नवति ९० वर्षाणि आयुः स्यात् अन्ये गुरुशुक्रबुधरविरहिताः चंद्रभौमशनय इत्यर्थः शत्रोः स्थानं स्वशत्रुक्षेत्रं मृतिमष्टमभावं च हित्वा अन्यस्थानवर्तिनश्चेत् तत् ९६ आयुर्मानंबोध्यम् ॥ ४ ॥ अथ गुरुबुधशुक्रयोगायुर्मानमाह सुखादीति । सुखादिकेन्द्रेषु चतुर्थसप्तमदशमभावेषु लग्नव्यतिरिक्तेष्वित्यर्थः लग्नस्थगुरुयोगफलस्य पूर्वश्लोके कथितत्वादितिभावः गुरुः स्थितश्चेत्तर्हि तस्मात्पंचमगो बुधः तस्माद्गुरोः षष्ठो भृगुश्च यदि स्यात्तर्हि क्रमात् चतुर्थकेन्द्रस्थगुरोः षडुत्तरासप्ततिः षट्सप्ततिः ७६ आयुर्मानं तथा

## भाषा ।

छठे तीसरे होवे आठवेंमें कोई न होवे तो ९० वर्षका आयुष्य जानना. और सुशील सुस्वभाव गुणसंपन्न होवे ॥ ३ ॥ और लग्नमें गुरु, चौथे घरमें शुक्र, पांचवें घरमें बुध, छठे घरमें सूर्य, होवे तो ९० वर्षका आयुर्मान जानना. और चंद्र, मंगल, शनि, यह तीन ग्रह अपनी अपनी शत्रुराशिकू और अष्टम भावकू छोडके बाकीके कोईभी स्थानमें होवे तो ९६ वर्षका आयुष्य जानना ॥ ४ ॥ अथवा लग्नसे चौथे घरमें गुरु होवे, गुरुसे पांचवे घरमें बुध, छठे घरमें शुक्र होवे तो ७६ वर्षका आयुष्य जानना, अथवा लग्नसे सातवें घरमें गुरु होवे, गुरुसे ५ बुध, ६

केन्द्रादिस्थाः शतं दद्युर्नवाष्टादींश्च दिग्गुणान् ॥ मिश्रं संयुज्य दलिता अनुपातेन वत्सराः ॥ ६ ॥ शत्रुनीचसमांशेषु दिग्विधेषु न चेत् स्थिताः ॥ शतायुर्योगहीनास्तु

## टीका।

सप्तमकेन्द्रस्थगुरोः उक्तस्थानगतयोर्बुधशुक्रयोः सतोः अष्टयुक्ता अशीतिः आयुर्मानं तथा दशमकेंद्रस्थगुरोः उक्तस्थानस्थबुधशुक्रयोगे एकोत्तरतः अशीतिः एकाशीति ८१ रित्यर्थः आयुर्माने संख्या मदिष्टेति ॥ ५ ॥ केन्द्रादीतिश्लोकद्वयेन पुनर्योगांतरमाह। केन्द्रादिस्थाः सर्वे ग्रहाः केन्द्रादिस्थाः केंद्राणि आदीनि येषां तानि पणफराणि आपोक्लिमानि च तेषु स्थिताश्चेत् क्रमात् शतं १०० नवदिग्गुणान् ९० अष्टौ दिग्गुणान् ८० आयुर्ददति। ननु स्थानत्रये स्थानद्वये च ग्रहाणां मिश्रीभावे कियत्परिमाणकमायुरितिचेदाह। मिश्रं संयुज्य योगद्वयमिश्रणे दलं अनुपातेन अर्थात् योगत्रयमिश्रणे त्र्यं संयुज्य अनुपातेन तृतीयांशायुर्दायमानं बोध्यं एवं दशयोगजन्यमायुर्मानं कथितं तत्र विशेषविचारमाह शत्र्विति द्वाभ्याम्। दिग्विधेषु दशप्रकारेषु ते दश प्रकारास्तु तृतीयश्लोके १०८।९० द्विविधाः, चतुर्थश्लोके ९०।९६ द्विविधाः, पंचमश्लोके ७६।८८।८१ त्रिविधाः षष्ठश्लोके केन्द्रपणफरापोक्लिमयोगोद्भवाः १००।९०।८० एतेषु दशविधेषु ग्रहाः शत्रुनीचसमांशेषु शत्रुक्षेत्रनीचस्थानोदासीनक्षेत्राणां ये अंशा नवमांशास्तेषु न स्थिता न वर्तमानाश्चेदुक्तदशविधायुर्मानं उक्तत्रयनवांशे वर्तमानाः चेद्भंगो ज्ञातव्य इति। अथ

## भाषा।

शुक्र, होवे तो ८८ वर्षका आयुष्य जानना, अथवा लग्नसे दसवें गुरु होवे, गुरुसे ५ वें बुध और ६ शुक्र होवे तो ८१ वर्षका आयुष्य जानना. ॥ ५ ॥ अब केन्द्रादि आयुष्य कहते हैं. सब ग्रह केंद्रस्थानमें होवे तो सौ वर्ष १००का आयुष्य, सब ग्रह पणफरमें होवे तो ९० वर्षका आयुष्य, सब ग्रह आपोक्लिममें होवे तो ८० वर्षका आयुष्य जानना और दोनों स्थानोंमें ग्रह होवे तो दोनोंका योग करके अर्ध भाग लेना, तीनों स्थानमें ग्रह होवे तो तीनोंका योग करके तृतीयांश आयुर्दाय जानना. और शत्रु नीच तथा नवांशादि सब तरहसे दशविध जो कहा

सर्वे प्रोक्ताः कलौयुगे ॥ ७ ॥ दायानां हरणं वक्ष्ये शृणुष्व मुनिपुंगव ॥ आयुर्दाये तु हरणं षड्विधं संप्रकीर्त्यते ॥८॥ व्ययादिहरणं पूर्वमस्तारिहरणे तथा ॥ क्रूरोदयस्थहरणं चंद्रयुक्तमस्तथा ॥ ९ ॥ पापो व्ययस्थो हरति सर्वदायं

## टीका ।

कलौ आयुरवधिमाह । सर्वे नराः कलौ युगे शतायुर्योगहीनाः शतवर्षपरिमितायुर्योगादल्पायुषो ज्ञेया इति ॥ ६ ॥ ७ ॥ अथोक्तदायहरणं वक्तुं प्रतिजानीते दायानामित्यर्धेन । हे मुनिपुंगव मैत्रेय ! दायानां पूर्वकथितानां षड्विधानामपि हरणं ह्रासं वक्ष्ये तच्छृणुष्वेत्यन्वयः तदेवाह आयुरित्यादिसार्धनवमश्लोकपर्यंतम् । अस्मिन्नायुर्दाये हरणं ह्रासस्तुषड्विधं वक्ष्यमाणं षट्प्रकारकं संप्रकीर्त्यते कथ्यते व्ययादिहरणं व्ययादिसप्तमानं वामचारेण वक्ष्यमाणरीत्या हरणं पूर्वं प्रथमम् १ अस्तारिहरणे अस्तगतग्रहहरणं २ अरिक्षेत्रस्थग्रहहरणं ३ क्रूरोदयस्थहरणं लग्नगतपापहरणमित्यर्थः ४ चंद्रयुक्तमोग्रहहरणं सचंद्राहुहरणं ५ व्ययस्थः पापस्तु हे द्विजोत्तम ! सर्वदायं हरति ६ एवं षड्विधं भवति ॥८॥९॥ अथ प्रथमप्रकारोक्तव्ययादिहरणप्रकारमाह पापो व्ययस्थ इत्यादिपादोनैकादशश्लोकपर्यंतम् । पापः पापग्रहः व्ययस्थः द्वादशस्थः सर्वदायं हे द्विजोत्तम ! हरति नाशयति अथेति येऽवशिष्टा लाभादयः पंच तत्र कर्तव्यविशेषसूचना तदेवाह लाभादिसंस्थिताः एकादशभावादिपंचभावपर्यन्तं वर्तमानाः ग्रहाः वामतः विलोमतः क्रमेण द्वित्रिचतुःपंचषडंशोनं आयुः कुर्वन्तिः एतदुक्तं भवति लाभस्थो ग्रहः द्व्यंशोनमायुर्हरति

## भाषा ।

योगायु नहीं बनै तब गुणितायु जानना ॥ ६ ॥७॥ अब पूर्वोक्त जो आयुष्य दिखाया है उसमें हानि कितनी करना सो कहते हैं. उसके छ भेद हैं. उसमें पहिला हानिका पहिला भेद बारहवें घरसे सातवे घरतक वाम मार्गसे १ अस्तंगत ग्रहका हरण २ शत्रुक्षेत्रगत ग्रहका हरण ३ क्रूरोदयस्थ ग्रहका हरण ४ चंद्रसहित राहुका हरण ५ बारहवें घरका पापग्रहका हरण ६ ऐसे छ भेद हैं ॥८॥९॥ अब आयुष्य कितना हरण करता है सो कहते हैं. बारहवें घरमें पापग्रह होवे तो संपूर्ण आ-

द्विजोत्तम ॥ अथ द्वित्रिचतुःपंचषडंशोनं क्रमादमी॥१०॥
लाभादिसंस्थिताः खेटा वामतः प्रक्रियां शृणु ॥ हरंति

## टीका ।

अर्थात् अर्धमवशेषयतीत्यर्थः तथा दशमस्थो ग्रहः तृतीयांशोनमायुः करोति तथा नवमस्थो ग्रहः चतुर्थांशोनमवशेषयति तथाष्टमभावस्थः पंचमांशोनमवशेषयति तथा सप्तमभावस्थः षडंशोनमवशेषयति इति बोध्यम् । एवं वामतः विलोमतः लाभभावात् उक्तां प्रक्रियां शृणु जानीहीत्यर्थः । इयं प्रक्रिया पापग्रहविषय एव । शुभग्रहविषये तु सौम्या शुभग्रहास्तु भोक्तार्धं उक्तार्धं मितसंख्यांशमायुर्हरन्ति । अथायुर्दायहान्युदाहरणम् । अंशायुश्चकार्धहानिः रविः एकादशस्थाने वर्तमानः अत एव प्राप्तमायुः १३।८।१।५२।४० अर्धहानिः ६।१०।०।५६।२०पुनः भौमो व्ययस्थाने स्थितः अतः स सर्वायुर्हानिकरः अत एव भौमस्यायुः १८।७।१।५३।५२ अत्र च भौमस्यायुरभावः ०।०।०।०।० शनिर्दशमस्थानस्थः अतस्तस्यायुः ११।५।२३।२० तस्य तृतीयांशश्च ३।९।२७।४७ अयं यथागतायुष ऊनीकृतश्चेत् ७।७।२५।३३ एवं जातम् परं गुरुबुधभृग्वादीनां अशुभग्रहाः संयुक्ताः अतोऽर्धहानिसंस्कारः चंद्रो नवमस्थः अतस्तस्य प्राप्तमायुः १९।३।०।४।४८ अस्याष्टमांशः २।४।२६।२०। ३६ अयं यथागतायुषो हीनः कृतश्चेदुर्वरितं १६।१०।४।२४।१२ इदं चंद्रायुः स्पष्टं एवं पिंडाद्यायुर्हानिसंस्कारो बोद्धव्यः ॥१०॥ अथ भावसंधिगतग्रहायुर्ह-

## भाषा ।

युष्यका हरण करता है, ग्यारहवें घरमें ग्रह होवे तो अर्ध आयुष्य हरण करता है दशवें घरमें ग्रह होवे तो आयुष्यका तृतीय भाग हरण करता है. नव घरमें ग्रह होवे वो आयुष्यका चतुर्थांश हरण करता है. आठवें घरमें ग्रह होवे वो आयुष्यका पांचवां भाग हरण करता है, ७ वें घरमें ग्रह होवे तो आयुष्यका छठा अंश हरण करता है यह पापग्रहकी रीति कही शुभग्रह होवे तो उक्त संख्या आयुष्यका अर्ध भाग हरण करते हैं और उनका आयुष्य ल्यानेकी रीति आगे अठरहवे श्लोकमे कहेंगे ॥ १० ॥ अब संधि-

स्पष्टांशायुश्चक्रम्.

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ल. | यो. |
|---|---|---|---|---|---|---|---|---|
| ६ | १६ | ० | ३ | ५ | १७ | ७ | १ | ५९ |
| १० | १० | ० | ६ | २ | ९ | ७ | ९ | ८ |
| ० | ४ | ० | १४ | २६ | २ | २५ | २४ | ८ |
| ५६ | २४ | ० | ३४ | ४६ | ३ | ३३ | १९ | ३७ |
| २० | १२ | ० | ४२ | ० | ३२ | ० | ३६ | ३३ |

सौम्याः प्रोक्तार्धं लग्नद्वादशसंधिषु ॥ ११ ॥ पापश्चेत्सकलं हंति शुभो दलमथोत्तरम् ॥ लग्नाद्वादशसंधौ च ग्रहान् पापान्विवर्जयेत् ॥ १२ ॥ राश्यभावे तु भागादीन् दायघ्नान् षष्टिभाजितान् ॥ दाये द्विघ्ने तु सौम्यस्य राशिरेको दलं यदि ॥ १३ ॥ अधिकेनापहृत्तत्तु क्रमाद्राशिं विना

## टीका ।

रणमाह लग्नेतिसपादार्धेन । अथेति विषयांतरं उत्तरो अनंतरोक्तायुर्विषयेऽग्रे पापः पापग्रहश्चेत्सकलं वक्ष्यमाणपरिमितं हरति शुभश्चेद्दलमर्धं हरतीति ज्ञेयम् ॥ ११ ॥ अथास्य प्रक्रियामाह लग्नादित्यादिचतुर्दशश्लोकपर्यंतम् । लग्नादारभ्य द्वादशसंधौ जात्येकवचनं संधिषु पापान्वर्तमानपापग्रहान् विवर्जयेत् त्यजेत् सौम्यग्रहेष्वप्येवमेव कुर्यात् शेषान् षष्टिभाजितान् कृत्वा लब्धं० हरसंज्ञं फलं ज्ञेयं अयं विचारो राशिसत्त्वे एव, राश्यभावे तु पापशुभयोः कृतिभेदः तादित्थं पापस्य राश्यभावे भागान् अंशादीन् दायघ्नांस्तत्तद्ग्रहोक्तदायगुणितान् कृत्वा षष्टिभाजितांश्च कृत्वा लब्धमंशादि यत् तत्संधौ विवर्जयेत् ततोऽवशिष्टं आयुर्हरणफलं स्यात् शुभग्रहस्य राश्यभावे तु दाये द्विनिघ्ने दायं द्विगुणितं कृत्वा तेन दायान् भागान् भागकलाविकलाः संगुण्य षष्ट्या विभज्य लब्धमंशादि संधौ विवर्जयेत् शिष्टं आयुर्हरणफलं स्यात् तत्रैकत्रराशिर्वा एकत्र दलं वा संधौ आनीतफले वा स्याद्यदि तर्हि अधिके न्यूनमपहृत् वर्जितं कृतं आयुर्हरणफलं भवति एवं क्रमात् राशिं विना कृतं राशिव्यतिरिक्तविषये कृतं केवलदायगुणनेन पापस्य दायद्विगुणया सौम्यस्य च ये लब्धांकाः ते अपचये आयुर्हरणे समाः वर्षाणि बोध्यानि ॥ १२ ॥

## भाषा ।

गत ग्रहोंका अयुर्हरण भेद कहते हैं. पापग्रह होवे तो जो मान लिखा है उतना हरण करते हैं शुभग्रह होवे तो अर्ध हानि करते हैं ॥ ११ ॥ लग्नसे लेके बारह संधितक पापग्रह या शुभग्रह होवे उनोंके अंशादिकोंकू अपने अपने दाय वर्षसे गुणन करके साठसे भाग लेके जो लब्ध अंशादिक आवे वो संधिमें कमी करके जो शेष रहे सो आयुष्यका हरण फल भया इसमें जो और विशेष कृती है सो टी-

कृतम् ॥ दायद्विगुणया सौम्यो लब्धा वाऽपचये समाः ॥ १४ ॥ बहवश्चेद्बली हंति समाश्चेत्प्रथमो मतः ॥ अंशकं ग्रहयोगे च द्वयोः पापे हरत्युत ॥ १५ ॥ सौम्योपि पापवर्गे च स्थितो रिःफादिषट्सु चेत् ॥ त्रिषु भावगतानां च पापानां करणं स्मृतम् ॥ १६ ॥ कुटुंबभरणं चापि दुश्चित्तं

## टीका ।

१३ ॥ १४ ॥ अथात्रानेकग्रहयोगे किं कार्यमित्यत्राह बहव इत्यर्धेन । एतदुक्तभावसंधिषु एकग्रहयोगे उक्तं अथात्र बहवो ग्रहाश्चेत्तर्हि बली अधिकबलवान् ग्रहः हंति आयुर्हारको भवति अथात्र समाः सर्वे समबलिनश्चेत्तत्र प्रथमो रव्याद्यन्यतमः क्रमप्राप्तः प्रथमगणनीयो ग्रहो हरति हारकः स्यादिति । अथ ग्रहद्वययोगे विशेषमाह अंशकमित्यर्धेन । अंशकं एतत् उक्तायुर्हरणं अंशकायुर्दायविषयकं अथ प्राग्बहुयोगे व्यवस्थामुक्त्वा अत्र द्विग्रहयोगे तत्राह द्वयोः शुभाशुभयोः योगे समागमे तत्रस्थः पाप एव आयुर्हरति न शुभ इति ज्ञेयं उत अपि इति शुभहरणं क्वचिद्वक्ष्यमाणस्थले स्यादिति ध्वनिः ॥ १५ ॥ अथ शुभद्वययोगे विशेषमाह सौम्य इति । सौम्योऽपि शुभग्रहद्वययोगे सौम्यः शुभः सन्नपि पापवर्गे स्थितश्चेत् रिःफादिषट्सु व्ययादिषट्स्थानेषु आयुर्हारको भवति एवं भावगतानां व्ययादिषड्भाववर्तमानानां पापानां रविक्षीणेन्दुभौमसपापबुधशनीनां पंचानां मध्ये त्रिषु रविभौमशनिष्वेव हरणं स्मृतं उक्तं सर्वेष्विति भावः । अथात्र व्ययादिषड्भावेषु पापानां करणं वक्ष्यमाणफलानां उत्पादनमपि स्मृतमिति ॥ १६ ॥ तदेवाह कुटुंबेति । तथा ना-

## भाषा ।

कामें स्पष्ट है ॥ १२ ॥ १३ ॥ १४ ॥ यह संधिगत ग्रह एकका विधि पहिले कहा अब जो संधिमें बहुत ग्रहोंका समागम होवे तो जो बलवान् होवे वो हरण करे और दो ग्रह होवे तो पापग्रह आयुष्य हरण करे. शुभग्रह नहीं करे ॥ १५॥ शुभग्रह दोका योग होवे तो जो पापवर्गमें होवे बारहवें घर आदि छः घरमें होवे तो आयुष्यका हारक होता है और पूर्वोक्त १२।११।१०।९।८।७। घरमें रवि मंगल शनिका हरण कहा है ॥ १६ ॥ अब पूर्व जैसी आयुष्यहरणकी बात कही वैसी

लाभमेव च ॥ मेधां च प्रतिभां शांतिं मंदक्रोधं करिष्यति ॥१७॥ अस्तंगतानां सर्वेषां दलं दायः स्मृतस्तदा॥ राशिसंख्यासमाश्चाब्दा लग्नेऽब्जे बलवत्तरम् ॥ १८ ॥ अंशान् लिप्ताहतान् कृत्वा खखाक्षिभ्यां समाहृताः ॥ शे-

## टीका ।

म व्ययादिवर्तमानः पापो भवेचेत् यथा आयुर्हरणमुक्तं तथैव कुटुंबभरणादीनां षण्णां करणं स्यात् तदित्थं पापो व्ययस्थश्चेत् कुटुंबभरणं करणं नाम कुटुंबभरणकर्तास्यादित्यर्थः । एवमग्रे सर्वत्र पापो लाभस्थश्चेद्दुश्चित्तं तथा सः दशमस्थश्चेत् लाभं करिष्यति तथा नवमस्थः मेधां धारणावतीं बुद्धिं प्रतिभां प्रत्यक्षज्ञानजनकबुद्धिं करिष्यति तथा सः अष्टमस्थः शांतिं तथा सः सप्तमस्थः मंदक्रोधं अल्पक्रोधं करिष्यतीति करणं बोध्यम् ॥ १७ ॥ अथास्तंगतग्रहाणां दायहरणमाह अस्तमित्यर्धेन । सर्वेषां चंद्रादिशुभपापानां अस्तंगतानां सतां तदा दायः प्राप्तायुर्भोगः दलं अर्धं अवशिष्टः स्मृत उक्त इति । अथ लग्नायुर्दायमाह राशीत्यादिसार्धेन । लग्नायुर्दायेऽस्मिन् लग्ने लग्नस्थाने अब्जे चंद्रे बलवत्तरे सति राशिसंख्यासमाः राश्यंकपरिमितवर्षाणि ग्राह्याणि यदि च लग्ने बलहीनचंद्रः स्यात् वा लग्ने चंद्रो न स्याचेत्तदा तु अंशान् लग्नराश्यंकं त्यक्त्वा अंशांकान् लिप्ताहतान् लिप्ताभिः षष्टिपरिमितांकैः हतान् गुणितान् कृत्वा खखाक्षिभ्यां शतद्वयेन समाहृताः भाजिताः संतः लब्धाः वर्तमानाब्दयोजने राश्यंकमेलने सति समाः स्युः । एवं बलवत्तरचंद्रयुतलग्ने निर्बलचंद्रयुतलग्ने चंद्ररहितलग्ने च सति लग्नायुर्वर्षाणि कथयित्वा प्रकारत्रयेऽपि मासाद्यानयनमाह। शेषाः अब्दानयनानंतरमवशिष्टांकान् द्वादशगुणितान् द्विश-

## भाषा ।

करणकी बात कहते हैं. पापग्रह १२ घरमें होवे तो कुटुंबका पोषण कर्ता होवे. पापग्रह ११ घरमें होवे तो दुश्चित्त करे. पापग्रह १० वे घरमें होवे तो लाभ करेगा. पापग्रह ९ वें घरमें होवे तो धारणावती बुद्धि ज्ञानबुद्धिकूं देवे. पापग्रह ८ वें घरमें होवे तो शांति देवे. ७ वें घरमें होवे तो थोडा क्रोध करे ॥ १७ ॥ अब लग्नायुर्दाय कहते हैं. लग्नस्थ चंद्र बलवान् होवे तो वो राशिसमान वर्ष लेना. अथवा

या मासाद्यः प्रोक्ता वर्तमानाब्दयोजने ॥ १९ ॥ क्रूरेक्रूरोदयघ्नं तमष्टोत्तरशतैर्हृतम् ॥ लब्धं चापनयेद्दाये स्वे तथा परमायुषि ॥ २० ॥ स्वोच्चे मूलत्रिकोणे च लब्धस्यार्धं विवर्जयेत् ॥ मित्रेऽधिसुहृदि प्रोक्तं पादोनेनापनायनम् ॥ २१ ॥ भावेष्वेवं विधिः प्रोक्तो वर्गाणामधिपेषु च ॥

## टीका ।

तभक्तान् कृत्वा लब्धफलं मासाः एवं शेषं त्रिंशद्गुणनेन षष्टिगुणनेन च द्विशतभागलब्धं क्रमाद्दिनघटीपलादिरूपं स्यात् । अथ लग्नायुरुदाहरणम् । लग्नम् ०।६।३।४२ अत्र राशिं विहायांशान् कलीकृत्य जातम् ३६३।४२ इदं शतद्वयम् २०० विभाजितं सल्लब्धं वर्ष १ शेषं १६३।४२ इदं द्वादशभिर्गुणितं सञ्जातं १९६४।२४ इदं शतद्वय २०० विभाजितं सल्लब्धं ९ मासाः शेषं १६४।२४ इदं त्रिंशद्भिर्गुणितं सल्लब्धं ४९३२ इदं शतद्वय २०० विभाजितं सल्लब्धं २४ दिवसाः शेषं १३२ इदं षष्टि ६० घ्नं सत् ७९२० जातं तच्छतद्वयविभाजितं विधाय लब्धं ३९ एता घट्यः शेषम् १२० इदं षष्टि ६० घ्नं कृत्वा जातं ७२०० एतच्छतद्वय २०० विभाजितं कृत्वा लब्धं ३६ एतानि पलानि स्युः एवं च लग्नायुर्वर्षादि १।९।२४।१९।३६ एतद्वर्षादिमध्ये लग्नराश्यंकसंख्यां योजयेत् । अत्र तु लग्नराश्यंकसंख्यां योज्य जातं १।९।२४।१९।३६ एवं जातमिति सुधीभिरधिगंतव्यम् ॥ १८ ॥ १९ ॥ अथ लग्ने क्रूरग्रहसमागमे उक्तायुर्हानिसंस्कारमाह क्रूरे इत्यादिद्वाविंशतिश्लोकपर्यंतम् । क्रूरे पापग्रहे लग्नस्थे सति तमंशादिरूपं भावं क्रूरोदयघ्नम् क्रूरोदयेन क्रूरोदयवर्तमाननवांशराशिपरिमितेनांकेन घ्नं गुणितं कृत्वा अष्टोत्तरशतैः हृतं १०८ एतैः विभाजितं तेन यल्लब्धं वर्षादि तत् स्वे दाये लग्नदाये तथा

## भाषा ।

लग्नमें चंद्र बलहीन होवे या चंद्र न होवे तो लग्नके अंशोंकूं षष्टिगुणित करके दो सौ २०० से भाग लेके लब्ध वर्षादिक जानना ॥ १८ ॥ १९ ॥ लग्नमें पापग्रह होवे तो लग्नके अंशादिरूप भावकूं पापग्रहके वर्तमान नवांशराशितुल्य अंकसे गुणन करके १०८ से भाग लेना, जो वर्षादि लब्ध आवे वो लग्नदायमेंसे निकालना, वो

तिष्ठंतौ शुभपापौ चेत्पापोदयविधिः स्मृतः ॥ २२ ॥ क्रू-
रेऽष्टमेऽष्टमांशेन भावस्याप्यनुपाततः॥ लग्नाधिपेतराष्टांशं
पापो हरति मृत्युगः ॥ २३ ॥ बहवश्चेद्बली सौम्यपापेष्वेव

## टीका ।

परमायुषि परमायुर्दाये च अपनयेत् वर्जयेत्। एवं कृते स्पष्टदायः स्यात्।
अथ च स्वोच्चे क्रूरे स्वोच्चभूतलग्ने वर्तमाने सति स्वमूलत्रिकोणभूतलग्ने च
वर्तमाने सति तु लब्धस्यार्धं प्रागुक्तरीत्या नयनेन यल्लब्धं तस्यार्धं स्वे तथा
परमायुषि च वर्जयेत्। तथा क्रूरे मित्रे मित्रक्षेत्रे भूतलग्ने वा अधिसुहृदि अधि-
सुहृत्क्षेत्रभूतलग्ने वर्तमाने सति तु पादोनेन प्रागुक्तरीत्या लब्धं चतुर्थांश-
न्यूनं कृत्वा शेषेण अपनायनं वर्जनं कुर्यादिति प्रोक्तं आचार्यैरितिशेषः।
एवं विधिः हरणप्रकारः भावेषु लग्नेषु वर्तमानक्रूरहरणप्रकारः तथा वर्गाणां
षण्णामपि क्रूरेषु आधिपेषु सत्सु लग्ने क्रूराभावेऽपि अयं हरणसंस्कारः कथितः।
ननु शुभपापग्रहद्वययुतलग्ने किमिति चेदाह शुभपापौ च लग्ने तिष्ठंतौ व-
र्तमानौ चेत् पापोदयविधिरेव कर्तव्यः न शुभस्येति। ननु लग्नस्थक्रूराधिक्ये
सति चेद्बहवश्चेद्बली हंतीति अनुवृत्तो न्यायो ग्राह्य इति ॥ २० ॥ २१ ॥
॥ २२ ॥ अथाष्टमभावे केंद्रभावेषु वा पापयोगे तथा शुभपापमिश्रयोगे च
हरणविधिमाह क्रूर इत्यादिचतुर्विंशतिश्लोकपर्यंतम्। अष्टमेऽष्टमभावे प्राग्वल्ल-
ब्धस्याभावस्य भावायुषोऽनुपाततः त्रैराशिकेन संपादिताष्टमांशेन हरणं
कुर्यात्। तत्र विशेषस्तु मृत्युगोऽष्टमस्थः पापः लग्नाधिपेतराष्टांशम् लग्नेशायु-

## भाषा ।

स्पष्ट आयुर्दाय होवे. लग्नमें पापग्रह अपने उच्चराशिका होवे तो या मूलत्रिकोणका
होवे तो पूर्वोक्त रीतिसे जो लब्धांक है उसका अर्ध करके परमायुष्यमें कमी करना
और जो वो पापग्रह मित्रराशिका अधिमित्रका होवे तो पूर्वोक्त रीतिप्रमाणसे लब्ध
चतुर्थांश न्यून करके शेष आयुष्य जानना. यह पापग्रहोंका हरणप्रकार कहा
अब पापग्रह शुभग्रहयुक्त लग्न होवे तो पापग्रहका विधि करना. पापग्रह बहुत
होवे तो बलवान् ग्रहसे पूर्वोक्त विधि करना ॥ २० ॥ २१ ॥ २२ ॥ आठवें भा-
वमें पापग्रह होवे तो लग्नपतिविना दूसरेका आयुष्यका अष्टमांश हरण करना है

विधिः स्मृतः ॥ तयोर्दायांतरं दायः केन्द्रस्य च विधीयते ॥ २४ ॥ सेन्दौ राहौ दशा राहोरानीता मूलदायवत् ॥ चंद्रायुः पिंडतः शोध्या तद्राहुकरणं स्मृतम् ॥२५॥ अंशदायक्रमेणैव तमसोऽब्दाः समीरिताः ॥ तस्मिन्सचंद्रे त-

## टीका।

दायव्यतिरिक्तायुर्दायाष्टमांशं हरतीति ॥ २३ ॥ तत्र बहवः पापाश्चेद्बली बलाधिको हंति । अथ च तत्र सौम्यपापेषु सत्सु तयोर्दायांतरं सौम्यपापयोः दायद्वयस्यांतरं विवरं कृत्वा दायः स्यात् एवं विधिः स्मृतः एवमेव केंद्रस्य पापसहितस्य पापसौम्ययुतस्य च प्रकारो विधीयते संपाद्यत इति ॥ २४ ॥ अथ सचंद्रराव्हायुर्दायमाह सेन्दावित्यादिसार्धेन । सेन्दौ चंद्रयुते राहौ सति मूलदायवत् प्रागुक्तायुर्दायवत् दशा आनीता सा पिंडीकृता चंद्रायुःपिंडतः चंद्रायुषः पिंडं गृहीत्वा तस्माच्छोध्या वर्जनीया अवशिष्टं राहुकरणं स्मृतं तेन करणेन अंशदायक्रमेणैव प्रागुक्तांशायुर्दायरीत्या एव तमसो राहोरब्दाः आयुर्वर्षाणि समीरिताः कथिताः ॥ २५ ॥ अथ लग्नगतसचंद्रराव्हायुर्दायमाह तस्मिन्निति सार्धेन । तस्मिंल्लग्ने सचंद्रे चंद्रयुते राहौ सति तल्लग्नभावसाधनतः तच्च तल्लग्नं च तस्य भावायुर्दायवत् साधनं कृत्वा तत्तद्दृष्टिहतं तस्य तस्य राहोश्चंद्रस्य च दृष्ट्या गुणयित्वा षष्ट्याप्तं षष्टि ६० भागलब्धं धनशोधने धनऋणे प्रागुक्तवत् मकरादौ कर्कादौ कल्पनीयमिति ।

## भाषा।

॥ २३ ॥ वहां बहुत पापी होवे तो जो बलवान् पापी होवे वो आयुष्य हरण करे अथवा पाप शुभ दोनों होवे तो दोनों ग्रहोंका आयुष्यका अंतर करके जो रहे वो आयुष्य जानना. ऐसा केन्द्रस्थानमेंभी शुभ पापाधिक ग्रहोंका पूर्वोक्तवत् फल जानना ॥ २४ ॥ अब सचंद्र राहुका आयुर्दायविचार कहते हैं. चंद्रयुक्त राहु होवे तो पहिले सरीखी दशा लायके चंद्रायुष्यका पिंड करके उसमें शोधन करके जो शेष सो राहुका करण कहा वो करणसे अंशायुक्रमसे राहुके वर्षादि कहा ॥२५॥ अब लग्नगत सचंद्र राहुका आयुर्दाय कहते हैं. लग्नमें सचंद्रराहु होवे तो लग्नभावसरीखा आयुर्दाय साधन करके राहुदृष्टीसे और चंद्रदृष्टीसे गुणन करके साठसे

क्षमभावसाधनतस्ततः ॥२६॥ तत्तद्दृष्टिहृतं कृत्वा पष्ठ्याप्तं धनशोधने ॥ सोदये च सराव्हिंदावेवं न्यायः समीरितः ॥ २७ ॥ स्थानवृद्धिः क्षयः कार्यो द्रेष्काणर्क्षे सराशिकम्॥ अस्तंगतानामर्धं स्याद्विना भृगुसुतं शनिम् ॥ २८ ॥ तयोर्वेदांशहीनं स्यात्त्र्यंशोनं शत्रुगस्य तु ॥ अंगारकं वर्जयित्वा शत्रुक्षेत्रगतैर्ग्रहैः ॥ २९ ॥ सुहृद्वर्गगतानां तु तद्दलं

## टीका ।

एवं करणं कदा सराव्हिंदौ राहुयुतचंद्रे सोदये जन्मलग्नसहिते सति न्यायो रितिः समीरितः कथित इति ॥ २६ ॥ २७ ॥ अथ द्रेष्काणवशात्स्थानवृद्धिक्षयावाह स्थानेतिअर्धेन । द्रेष्काणर्क्षे सराशिकं राशिना समानं सराशिकं एकराशिकमित्यर्थः । एवं भूतं द्रेष्काणर्क्षे द्रेष्काणराशिश्चेदेतदुक्तं भवति लग्नं स्वद्रेष्काणे वर्तमानं चेत् भावस्थानफलस्य वृद्धिः स्थानवृद्धिः कार्या। अर्थात् लग्नं स्वातिरिक्तान्यद्रेष्काणवर्ति चेत् स्थानस्य क्षयः कार्यः अत्र स्थानवृद्धिक्षयौ आयुर्विषयकौ ज्ञेयौ ॥ २८ ॥ अथास्तंगतग्रहायुर्दायहानिमाह ॥ अस्तमिति सपादार्धेन। अस्तंगतानां ग्रहाणां प्रागीनीतायुर्दायस्य अर्धं स्यादर्धं ग्राह्यम् तत्र विशेषस्तु विना भृगुसुतं शनिं शुक्रशनिव्यतिरेकेण अथतयोरस्तंगतयोः सतोः वेदांशहीनं चतुर्थांशोनं स्यादिति ॥ २९ ॥ अथ श-

## भाषा ।

भाग लेना लब्ध आवे सो मकरादि होवे तो धन करना कर्कादि होवे तो ऋण करना ॥ २६ ॥ २७ ॥ अब द्रेष्काणयोगसे वृद्धि क्षय कहते हैं. स्थानकी और द्रेष्काणकी राशि एक होवे तो भावस्थानफलकी वृद्धि जाननी भिन्न होवे तो क्षय जानना. अस्तंगत ग्रहोंका जो आयुर्दाय होवे उसका अर्ध लेना परंतु शुक्र शनी जो अस्तंगत होवे तो चतुर्थांश न्यून करना ॥ २८ ॥ शत्रुक्षेत्रगत जो ग्रह हैं उसमें मंगलविना दूसरे ग्रहोंका आयुर्दायका तीसरा अंश न्यून करता है. शत्रुक्षेत्रगत ग्रहोंका तृतीयांश कमी करना ऐसा कहा है, परंतु मित्रवर्गका ग्रह होवे तो तृतीयांशका अर्ध कमी करना ॥ २९ ॥ ऐसा इ प्रकारसे आयुष्यका हरण विधि कहा सो

हरति स्वकमाएवं भावेषु सर्वेषु षड्विधं हरणं नहि॥३०॥
हरणं नैव कर्तव्यमंशदायेऽष्टवर्गजे ॥ स्वोच्चे च त्रिगुणं
प्रोक्तं स्ववर्गे द्विगुणं तथा ॥ ३१ ॥ अधिमित्रगृहे सार्धं
त्र्यंशं मित्रगृहे युतम् ॥ अरावध्यारिभावे च त्र्यंशं शखंड-

## टीका।

त्रुक्षेत्रगतग्रहायुर्हानिमाह त्र्यंशेति पादद्वयेन । शत्रुगस्य शत्रुक्षेत्रवर्तिनः अंगारकं भौमं वर्जयित्वा भौमव्यतिरेकेणेत्यर्थः। अन्यो ग्रहः स्वायुर्दायं त्र्यंशोनं कुर्यात् । अथ शत्रुक्षेत्रगतानामपि सुहृद्वर्गगतानां सतां विशेषमाह शाश्विति सपादार्धेन। शत्रुक्षेत्रगतैर्ग्रहैः यत्प्राग्युक्तं त्र्यंशोनमिति स्वकमायुः तद्दलं त्र्यंशार्धमित्यर्थः तेषांसुहृद्वर्गगतानां शत्रुक्षेत्रगतत्वेऽपि मित्रवर्गसंबंधेनेत्यर्थः त्र्यंशार्धं हरति नश्यतीत्यर्थः न त्र्यंशमिति। एवं षट्प्रकारकं ग्रहायुर्हरणमुक्त्वैतद्भावेषु नेत्याह एवमित्यर्धेन । एवमुक्तषट्प्रकारकं हरणं भावेषु लग्नादिषु नहि नास्तीत्यर्थः। किंतु ग्रहाणामेवेति भावः ॥ ३० ॥ एवमेव अष्टवर्गजेंऽशायुषि मित्रादीनां वृद्धिः शत्र्वादीनां हरणं चाह हरणमित्यादित्रयस्त्रिंशच्छ्लोकपर्यन्तम्। अष्टकवर्गजे अष्टवर्गसमुद्भवे अंशदाये हरणं ह्रासो न कर्तव्यं न कार्यं तत्र तु योग एव कार्यः तदेवाह । स्वोच्चे उच्चस्थे ग्रहे त्रिगुणं प्रोक्तं प्राप्तदायः त्रिगुणः कर्तव्यः स्ववर्गे स्वकीयवर्गस्थे सति स्वराशिस्थे सति द्विगुणं कार्यं तथा अधिमित्रगृहे वर्तमानस्य ग्रहस्यायुः सार्धं अर्धेन सहितं कार्यं तथा मित्रगृहे स्थितस्य त्र्यंशयुतम् प्राक्तनदाये त्र्यंशयुक्तं कार्यम्। एवं योगमुक्त्वाऽत्रापि हरणमाह अरौ अरिक्षेत्रगे अध्यरिभावे अधिशत्रुगृहे च स्थितस्य प्राप्तायुस्त्र्यंशखंडविवर्जितम् स्वतृतीयांशोनं कर्तव्यम्

## भाषा।

ग्रहोंका जानना भावोंका नहीं ॥ ३० ॥ अष्टकवर्गोत्पन्न जो अंशदाय है उसका हरण नहीं करना, योग करना, उच्चका ग्रह होवे तो प्राप्त आयुष्यकूं त्रिगुणित करना, स्वराशिका होवे तो द्विगुणित करना, अधिमित्रका होवे तो अर्ध अधिक करना, मित्रक्षेत्रका होवे तो तृतीयांशयुक्त करना, शत्रुक्षेत्रका होवे वा अधिशत्रुका होवे तो

विवर्जितम् ॥ ३२ ॥ अष्टवर्गोत्थदायेषु प्रोक्तोऽयं विधिरं-
जसा ॥ भावदायेषु सर्वेषु प्रोक्तोयं विधिरुत्तमः ॥ ३३ ॥
दायगस्य तु सर्वस्य सहगस्य दलं भवेत् ॥ सुतधर्मगयो-
स्त्र्यंशं पादं मृतिसुखस्थयोः ॥ ३४ ॥ सप्तांशं सप्तमस्थस्य
प्रक्रिया प्रोच्यतेऽधुना ॥ अंशान्परस्परहताञ्छेदेनैव वि-

## टीका ।

अयं विधिः अंजसा उत्तमप्रकारेणेत्यर्थः अष्टवर्गोत्थदायेषु अष्टवर्गसमुद्भ-
वायुर्दायेषु प्रोक्तः अयमेव विधिः सर्वेष्वपि भावदायेषु उत्तमः प्रोक्तः इति
॥ ३१ ॥ ३२ ॥ ३३ ॥ अथ मुक्तदाय एव दशासंज्ञको ज्ञेयस्तत्रांतर्दशाभा-
गमाह दायगस्येत्यादिसपादचतुस्त्रिंशच्छ्लोकपर्यंतम् । सर्वस्य दायगस्य दायं
गमयतीति तस्य दायपतेरित्यर्थः सर्वदायसंबंधि दलं अर्धं सहगस्य स-
हवर्तमानस्य भवेत् सहगोऽर्धविभागी भवतीत्यर्थः । तथा दायपतेः सुतधर्म-
गयोः पंचमनवमस्थयोः ग्रहयोः सर्वदायसंबंधकं त्र्यंशं तृतीयांशमितो भागो
भवति एवं मृतिसुखस्थयोः अष्टमचतुर्थस्थयोः सर्वदायसंबंधि पादं चतुर्था-
शदशाभागो भवति तथा सप्तमस्थस्य सर्वदायसंबंधि सप्तांशं सप्तमांशोऽन्तर्द-
शाभवतीति ॥ ३४ ॥ अथोक्तांतर्दशानयनप्रकारमाह । प्रक्रियासाधनरीतिः
प्रोच्यते कथ्यते अंशान् तत्तत्स्थानोक्तान् परस्परहतान् कृत्वा वामतो गुणने-
न अग्रिमांकः सर्वांशभागग्रहणे सामुदायिकः सिध्यति तं तेन तेनांशांकेन

## भाषा ।

तृतीयांश कमी करना. यहविधी अष्टकवर्गोत्पन्न आयुर्दायमें जानना और सर्वभा-
वायुर्दायमेंभी जानना ॥ ३१ ॥ ३२ ॥ ३३ ॥ अब अंतर्दशा भाव कहते हैं. आ-
युर्दायका जो अधिपति हैं उसका जो दाय है उसका अर्ध भाग दायपतिके साथ
जो रहनेवाला ग्रह है वो लेता है और दायपतिसे पांचवे नवमें जो ग्रह हैं वे सर्व
दायका तृतीयांश लेते हैं और सप्तमस्थ जो ग्रह हैं वो सर्व दायका सातवा अंश
लेता है ॥ ३४ ॥ अब अंतर्दशा लानेका प्रकार कहते हैं. यहां अंश परस्पर और

भाजितम् ॥ ३५ ॥ तत्तदंशविभक्तं च स्वस्य स्वस्य समं भवेत् ॥ नीचार्धपक्षे सर्वत्र विधिरेष विधीयते ॥ ३६ ॥

## टीका।

विभज्याप्तं तत्तदंशस्य पृथग्गुणकच्छेदो भवति सर्वांशभागहरणे मूलदायस्य गुणकः तथा सर्वांशच्छेदसमूहे सर्वेषामप्यंशानां भाजको ज्ञेयः एवं तत्तदंशगुणकेन संगुण्य सर्वांशगुणकसमुदायेन विभज्याप्तं तदंशदायफलमुत्पद्यते इतितात्पर्यम् । एष एव विधिः सर्वत्र नीचार्धपक्षे नीचाद्यर्धानयनविषये विधीयत इति । अथांतरदशोदाहरणम्।अथ दशापतिश्चंद्रः ततः सकाशाल्लग्नस्य त्रिकोणस्थितत्वात्पंचमस्थानस्थितत्वेन तृतीयांशभोक्तृत्वं लग्नस्य सुस्पष्टतरं जातं शुक्रभौमयोश्चंद्रात्सुखस्थानस्थितत्वाच्चतुर्थांशभोक्तृत्वं अथोपरिष्टादुक्तग्रहाणां स्थितिप्रकारं तावद्दिशदयामः । एते ग्रहाः परस्परं छेदहताः कृताश्चेज्जायमाना अंशसंख्या ४८।१६।१२।१२ इति एते मूलदायस्य गुणकांकाः संजाताः एते एकीकृताः संतः जायमानसंख्या ८८ इति एषा संख्या मूलदशांकभागहरा भवति मूलदशांकाश्च १६।१०।४।२४।१२ स्वांशसंख्यया ४८ इत्यनेन गुणयित्वा समुदिता संख्या च ८०८।७।११।२१। ३६ इयं संख्या भागहरेण ८८ इत्यनेन विभाज्य जाता ९।२।७।५१।२३ इदं चंद्रमध्ये चन्द्रान्तरम् । मूलदशा १६।१०।४।२४।१२ लग्नांशेन १६ गुणिता जायमानसंख्या २६९।६।१०।२७।१२ इमां संख्यां भागहरेण ८८ संख्यांकेन विभज्य लब्धं ३।०।२२।३७।१ इदं चंद्रमध्ये लग्नांतरम् । मूलदशा १६।१०।४।२४।१२ इयं भृग्वंशेन १२ इत्यनेन भौमांशेन १२ इत्यनेन च गुणिता सती जाता संख्या २०२।१।२२।५०।२४ इयं भागहरेण ८८ संख्यांकेन विभाजिता सती जातं २।३।१६।५७।५४ इदं चंद्रमध्ये भृगोरंतरम्। भौमस्य चांतरं जातम् एवंसर्वे-

## भाषा।

समच्छेद करके अंशादिक समूलदशाकूं गुणन करना और उसका इकट्ठा पिंड करके भाग देना तो अंतर्दशा आवेगी. इसका उदाहरण टीकामें बताया है, और यहां

नीचाभावेष्टवर्गोत्थं भावदायेंऽशकक्रमे॥ नायं विधिः स्मृ-

## टीका।

षामंतरं बोद्धव्यम् ॥ ३५ ॥ ३६ ॥ एवमुक्तसमच्छेदाभावस्थानान्याह नी-

अथ दशाक्रमचक्रमाह.

| श. | श. | गु. | मं. | ल. | सू. | बु. | चं. | योग. |
|---|---|---|---|---|---|---|---|---|
| १७ | ७ | ५ | ० | १ | ६ | ३ | ६ | ५२ |
| ९ | ७ | २ | ० | ९ | १० | ६ | १० | ८ |
| २ | २५ | २६ | ० | २४ | ० | १४ | ४ | ७ |
| ३ | ३३ | ४६ | ० | १९ | ५६ | ३४ | २४ | ३४ |
| ३२ | ० | ० | ० | ३६ | २० | ४२ | १२ | २२ |
| १९०० | १९१८ | १९२६ | १९३१ | १९३१ | १९३३ | १९४० | १९४३ | १९६० |
| १० | ७ | ३ | ५ | ५ | ३ | १ | ८ | ६ |
| ४ | ६ | १ | २८ | २८ | २२ | २३ | ८ | १२ |
| १४ | १७ | ५० | ३६ | ३६ | ५६ | ५२ | २७ | ५३ |
| २२ | ५४ | ५४ | ५४ | ५४ | ३० | ५० | ३२ | ४४ |

अंशाच्छेदचक्रम्.

| चं. | ल. | शु. | भौ. |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ३ | ४ | ४ |

समच्छेदचक्रमाह.

| चं. | ल. | शु. | भौ. |
|---|---|---|---|
| ४८ | १६ | १२ | १२ |
| ४८ | ४८ | ४८ | ४८ |

चंद्रान्तरदशाचक्रम्.

| चं. | ल. | शु. | भौ. | योग. |
|---|---|---|---|---|
| ९ | ३ | २ | २ | १६ |
| उ | ० | ३ | ३ | १० |
|  | २२ | १६ | १६ | ४ |
| ५१ | ३७ | ५७ | ५७ | २४ |
| २३ | १ | ५४ | ५४ | १२ |
| १९४३ | १९५२ | १९५५ | १९५८ | १९६० |
| ८ | १० | ११ | २ | ६ |
| ८ | १६ | ८ | २५ | १२ |
| २७ | १८ | ५५ | ५३ | ५१ |
| ३२ | ५५ | ५६ | ५० | ४४ |

चेत्यादिअष्टत्रिंशच्छ्लोकपर्यंतम् । अयं पूर्वोक्तः हरणविधिः नीचाभावे नीचर-
हिते तथा अष्टवर्गोत्थदायभावे अष्टवर्गायुर्दायप्रक्रियां तथा अंशकक्रमे अं-
शायुर्दायविषये च न स्मृतः नोक्तः अतः तत्र विषयत्रये बहवोऽनेके ग्रहाश्चेत्

## भाषा।

चक्रभी दिखाया है ॥ ३५ ॥ ३६ ॥ अब समच्छेद जहां नहीं होता वो स्थान क-
हते हैं. यह हरणविधि नीच स्थानका जहां न होवे अष्टवर्गायुर्दायविषयमें अंशायु-
र्दायविषयमें नहीं कहा वास्ते यह तीन ठिकानेपर बहुत ग्रह होवे तो संपूर्ण आयु-

तस्तत्र बहवश्चेत्तु तेऽखिलम् ॥ ३७ ॥ केन्द्रादिगा ग्रहाः सर्वे ददत्येवापहृत्य च ॥ अर्धंत्र्यंशं च पादं च हरणाभावसम्मतौ॥३८॥ सर्वद्वित्रित्रिवेदाश्च त्रिषट्सप्ताष्टपाणयः॥ स्वर्क्षहोराद्दकाणेशास्त्रिंशांशेशाद्रिभागपाः ॥ ३९ ॥ नवार्ककालहोरेशाः षष्ट्यंशेशकलांशपौ ॥ भुंजते च क्रमा-

## टीका ।

ते तु अखिलं सर्वमायुर्ददति ॥ ३७ ॥ अथ केन्द्रादिस्थानेषु विशेषमाह । सर्वेऽपि ग्रहाः केन्द्रादिगाः केन्द्रपणफरापोक्लिमस्थाः क्रमादर्धं त्र्यंशं पादं चापहृत्य अत्र हरणाभावसंमतौ हरणराहित्यस्य संमतिः प्रमाणं यस्य तस्मिन्नुक्तविषयत्रयेऽपि शेषं ददतीति तावत्यायुर्दायं एवांतराणि भवंतीत्यर्थः ॥ ३८ ॥ अथोक्तांतर्दायेऽन्तर्दायोपभोक्तृक्रममाह सर्वेत्यादिचत्वारिंशच्छ्लोकपर्यंतम् । अंतर्दायेशः स्वर्क्षे स्वराशौ वर्तमानः सर्वं प्राप्तांतर्दायं भुंक्ते स च होरेशश्चेद्द्वितीयांशं प्राप्तांतर्दशार्धं भुंक्ते एवं सद्दकाणेशः द्रेष्काणपतिश्चेत्तृतीयभागं त्रिंशांशश्चेदपि तृतीयांशं अद्रिभागपः सप्तांशपतिश्चेद्वेदांशं प्राप्तांतर्दायं चतुर्थांशं नवांशेशश्चेत्त्र्यंशम् अर्कांशेशो द्वादशांशपतिश्चेत्षष्ठांशं कालहोरेशश्चेत्प्राप्तांतर्दायसप्तमांशं षष्ट्यंशश्चेदष्टमांशं कलांशपः षोडशांशपतिश्चेत्पाणी द्वितीयांशमित्यर्थः एवं क्रमात् सर्वे अंतर्दायपतयो ग्रहाः अंतर्दायविधौ अंतर्दशाविधाने स्वस्वांशं भुंजते इति अंतर्द-

## भाषा ।

ष्य देते हैं ॥ ३७ ॥ सब ग्रह केन्द्र पणफर आपोक्लिममें होवे वहां क्रमसे अर्ध, तृतीयांश, चतुर्थांश, कमी करके शेष आयुष्य देते हैं ॥ ३८ ॥ अंतर्दशाका अधिपति स्वराशिमें होवे तो सर्वायुर्दाय भोगते हैं, वा ग्रह होरापति होवे तो दूसरा भाग भोगता है, द्रेष्काणपति होवे तो तीसरा भाग भोगता है, त्रिंशांश स्वामी होवे तो तीसरा भाग भोगता है, सप्तांशक स्वामी होवे तो चतुर्थांश भोगते हैं, नवमांशेश होवे तो तृतीयांश भोगता है, द्वादशांशेश होवे तो छठा अंश भोगते हैं, कालहोराधिपति होवे तो सातवां भाग भोगता है, षष्ट्यंशका स्वामी होवे तो आठवां भाग भोगता है, षोडशांशका स्वामी होवे तो दूसरा भाग भोगता है. यह रीतिसे सब ग्रह

स्सर्वे त्वंतर्दायविधौ तथा ॥ ४० ॥ ग्रहाद्भावात्ततस्तस्मा-
त्स्थितानां द्वादशस्वपि ॥ भावानां च क्रमात्प्रोक्ता भागां-
शाश्च स्वयंभुवा ॥ ४१ ॥ सर्वद्विवेदसप्ताष्टषट्त्रिरत्नादि-
शोऽद्रयः ॥ वेदांगा हारका एव ग्रहाणां समुदीरिताः
॥ ४२ ॥ हत्वा दायं बलैः स्वैस्तु बलं योगेन भाजयेत् ॥

## टीका।

शापाचक्रक्रमः प्राप्तांतर्दशाहरणकर्म चोपदिदेशति ॥ ३९ ॥ ४० ॥ अथ ग्रहेभ्यो भावेभ्यश्च द्वादशस्थानेषु भागांशानाह ग्रहादितिद्वाभ्याम् । ततः अंतर्दायानयनानंतरं तस्माद् ग्रहात् तस्माद्भावाद्वा स्थितानां भावानां उत्तरश्लोकस्था भागांशाः क्रमाद्द्वादशस्वपि स्थानेषु स्वयंभुवा ब्रह्मणा प्रोक्ताः ॥ ४१ ॥ तानेव भागांशानाह । प्राप्तसर्वः प्रथमभावे द्वितीयांशः प्राप्तार्धमित्यर्थः द्वितीयभावे वेदश्चतुर्थांशस्तृतीयभावे सप्तांशश्चतुर्थभावे अष्टांशः पंचमभावे षष्ठांशः षष्ठभावे त्रिः तृतीयांशः सप्तमभावे रत्नं नवांशोऽष्टमभावे दिशो दशांशो नवमभावे अद्रयः सप्तमांशो दशमभावे वेदश्चतुर्थांशः एकादशस्थाने अंगः षष्ठांशो द्वादशस्थाने एते भागांशाः ग्रहाणां हारकाः एव समुदीरिता इति एतैर्हरणं कार्यमितिभावः ॥४२॥ अथावशिष्टस्य व्यवस्थामाह हत्वेतिद्वयेन। तत्र आयव्यये स्थानद्वये तु हरणावशिष्टदायं स्वैर्बलैर्हत्वा सर्वबलयोगेन भाजयेत् लब्धम् आयव्ययस्यांतर्दशास्वरूपं ज्ञेयम् तथा विपदादिषु

## भाषा।

अपने अपने अंतर्दशामें अपना अपना अंश भुक्तमान करते हैं. ऐसा अंतर्दशाका प्रचकक्रम कहा ॥ ३९ ॥ ४० ॥ अब ग्रहोंसे और भावोंसे बारह स्थानोंके भागांश जो ब्रह्मदेवने कहे हैं सो आगेके श्लोकमें कहते हैं ॥ ४१ ॥ प्रथमभावका सर्वदाय, दूसरे भावका अर्ध दाय, तीसरे भावका चतुर्थांश, चौथे भावका सप्तांश, पंचम भावका अष्टमांश, छठे भावका षष्ठांश, सातवें भावका तृतीयांश, आठवें भावका नवांश, नवम भावका दशांश, दशम भावका सप्तांश, ग्यारहवें भावका चतुर्थांश, और बारहवें भावका षष्ठांश, यह ग्रहोंके हारक भागांश जानना ॥ ४२ ॥ अब भावके भागांश कहते हैं. बारहवें ग्यारहवें भावका विशेष ऐसा है कि, हरण करके

आयव्यये तु भावानां ग्रहाणां वियदादिषु ॥ ४३ ॥ सर्वद्वित्रिषु वेदत्रिपंच सप्त ततः क्रमात् ॥ स्थानांतरे तु भागांशाः सर्वभावेषु कीर्तिताः ॥ ४४ ॥ सर्वत्रिसप्तरामेषुषट्त्र्यग्निद्वियमाः क्रमात् ॥ कालांशा अर्धहोरांशाः पतयोऽथ हरान्यथा ॥ ४५ ॥ इति श्रीमद्बृहत्पाराशरहोरोत्तरभागे दायवर्णने एकादशोऽध्यायः ॥ ११ ॥

## टीका ।

तृतीयादिदशममर्यादेष्वष्टसु सर्वः सर्वांशः द्विः द्वितीयांशः त्रिः तृतीयांशः इषुः पंचमांशः वेदश्चतुर्थांशः त्रिः तृतीयांशः पंच पंचमांशः सप्त सप्तमांऽशः एतान्संयोजयेदितिध्वनिः । स्थानांतरेऽवशेषस्थानद्वये प्रथमे द्वितीये च भागांशाः ये प्रथमं भागांशाः कथिताः ते एवांतर्दशारूपा ज्ञेयाः एवं सर्वभावेषु कीर्तिताइति ॥ ४३ ॥ ४४ ॥ अथ कालांशपत्यर्धहोरांशपतिहरानाह सर्वेति । अथानंतरं कालांशाः कालाख्या अंशा येषां ते अर्धहोरांशाः अर्धहोराख्या अंशा येषां ते च ये पतयः अधिपाः तेषामिति शेषः हरान् यथाक्रमाज्ज्ञेया इति अन्वयः ते च सर्वः, तृतीयांशः, सप्तांशः, रामः त्रयः इषवः पंच, षट् त्र्यंशः, अग्नयस्त्र्यंशः, द्वौ यमौ, द्वौ, इति॥४५॥ एवमेकादशेऽध्याये गणेशप्रीतये मुदा ॥ यथामति कृता टीका संशोध्येयं मनीषिभिः॥१॥इति श्रीमद्बृहत्पाराशरहोरोत्तरभागे श्रीमद्दध्यङ्ङन्वयवेदशास्त्राद्यनवद्यविद्योतितदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेणवि०सु०टी०एकादशोऽध्यायः ॥११॥

## भाषा ।

बाकी रहा जो दाय उसकू अपने अपने बलसे गुणन करके सर्वबलयोगसे भाग लेना, लब्ध जो हैं सो ग्यारहवें बारहवें भावका अंतर्दशास्वरूप जानना. तीसरे भावका सर्वांश, चौथे भावका दूसरा अंश, पांचवें भावका तीसरा भाग, छट्ठे भावका पांचवा भाग, सातवें भावका चतुर्थांश, आठवें भावका तीसरा भाग, नववें भावका पंचमांश, दसवें भावका सप्तमांश, प्रथम भावका सर्व दाय दूसरे भावका अर्ध दाय, यह भावके भागांश कहे॥४३॥४४॥ अब कलांशपति अर्धहोरांशपति कहते हैं. सर्वतृतीयांश, सप्तांश, तृतीयांश, पंचमांश, षष्ठांश, तृतीयांश, द्वितीयांश, द्वितीयांश, यह अधिपति और हारक जानना॥४५॥इति बृ० भाषाटीकायांएकादशो०॥११

ग्रहेषु सर्वेषु बलोत्तरेषु स्वोच्चांशगेषु प्रबलस्य वर्गे ॥ दिग्वीर्यचेष्टाबलपूर्तियुक्ते पैंडयेषु नीचार्धकृतापहाराः॥१॥ अष्टत्रिंशद्भिदाः संति ताः स्वोच्चादिसुसंस्कृताः ॥ लग्नादिभावगानां च ग्रहाणां स्थितिभेदतः ॥ २ ॥ द्विघ्नाश्चतुरशीतिश्च भिदाः संति द्विजोत्तम ॥ स्वोच्चादिस्थितिभेदेन भिन्नाः सूर्येषु भूमयः ॥ ३ ॥ सलग्नानां बलैः सर्वैरविका-

## टीका ।

द्वादशेऽस्मिन्नथाऽध्याये टीकायां धिषणाप्रदः ॥ सिद्धिबुद्धिपतिः श्रीमान् गणेशः पातु सर्वदा ॥ १ ॥ पूर्वोक्तदायग्रहणं खेटरश्मिबलादिना ॥ विचार्यतेऽथ मुनिना द्वादशेत्र सविस्तरम् ॥ २ ॥ अथ श्रीमत्पराशरो द्वादशाऽध्याये रश्मिबलादितारतम्येनायुर्दायमुपदिशति तत्रादौ पैंडयायुषि भेदान् गणयति ग्रहेष्वित्यादित्रिभिः । पैंडयेषु "पैंडयो द्वादशधा प्रोक्तः" इति प्रागुक्तेषु पिंडायुर्दायेषु नीचार्धकृतापहाराः नीचार्धेन कृतः अपहारो यासां ताः अष्टत्रिंशत् ३८ संख्याका भिदा भेदाः संति कस्य ग्रहस्य तदाह सर्वेषु ग्रहेषु बलोत्तरेषु सत्सु अथवा सर्वेषु स्वोच्चांशगेषु सत्सु प्रबलस्याधिकबलस्य दिग्वीर्यचेष्टाबलपूर्तियुक्ते पूर्णदिग्बलपूर्णचेष्टाबलसहिते वर्गे वर्तमानस्य ग्रहस्येति । अथ ताः अष्टत्रिंशद्भिदाः स्वोच्चादिसुसंस्कृताः स्वकीयोच्चादिभिः सुसंस्कृताः सत्यः द्विघ्ना द्विगुणितसंख्याका ७६ भवंति । अथ लग्नादिभावगानां लग्नादिद्वादशभाववर्तिनां ग्रहाणां स्थितिभेदतः स्थितिभेदेन चतुरशीतिभेदा ८४ भवंति हे द्विज ! स्वोच्चादिस्थितिभेदेन स्वकीयोच्चमूलत्रिकोणादिस्थितिवशाद्भिन्नाः सूर्येषुभूमयः १५१२ द्वादशाधिकपंचदशशतभेदा भवंति इति ॥ १ ॥ २ ॥ ३ ॥ अथ लग्नग्रहबलतारतम्येन अंशायन्यतमा-

## भाषा ।

अब पिंडायुर्दायके भेद कहते हैं. पहिले पिंडायुर्दायके बारह भेद कहते हैं. पीछे नीचमें अर्धहानि करनेसे ३८ भेद हैं. अब यह ३८ भेदमें अपने उच्चादिक संस्कृत होवे तो द्विगुणित ७६ भेद होते हैं. बारह भावके अनुवर्ति ग्रहोंके स्थितिके योगसे चौराशी भेद होते हैं. और हे मैत्रेय ! अपने स्वराशि उच्च मूल त्रिकोणा-

नां क्रमा द्विज ॥ अंशोद्भवस्तथा पैंड्यो निसर्गोत्थाभिधः परः ॥ ४ ॥ शतस्वरांशो भौमाच्च नक्षत्रांशकसंज्ञकौ ॥ स्वरांशश्चेतरो दायः करदायस्तथेतरः ॥ ५ ॥ स्वोच्चनीचसुहृच्छत्रुवर्गगैश्च चतुर्विधः ॥ अतिनीचातिशत्रोश्च

## टीका।

युर्दायग्रहणमाह सलग्नानामित्यादिपंचश्लोकपर्यन्तम् । सलग्नानां लग्नसहितानां रव्यादिग्रहाणामित्यर्थः एतेषामष्टानां मध्ये बलैरधिकानां बलाधिक्यानां अधिकबलतारतम्येन इत्यर्थः हे द्विज मैत्रेय ! क्रमात् क्रमशः आयुर्दायो ग्राह्य इति भावः । कोसौ क्रमस्तदाह लग्ने बलवति अंशोद्भवः अंशोत्पन्नः तथा रवौ बलवति पैंड्यः चंद्रे बलवति निसर्गोत्थाभिधः निसर्गोत्थः निसर्गोत्पन्न इत्यभिधा नाम यस्य सः तथा भौमान् नाम भौमे बलवति शतः स्वरांशः शतस्वरांशसंज्ञकः तथा बुधे बलवति नक्षत्रसंज्ञकः तथा गुरौ बलवति अंशसंज्ञकः नवांशनामक इत्यर्थः तथा शुक्रे बलवति स्वरांशसंज्ञकः तथा शनौ बलवति करदायः एतत्संज्ञकः दायो ग्राह्य इति ॥ ४ ॥ ५ ॥ अथ स्वोच्चाद्यधिकारतारतम्येन आयुर्ग्रहणे विशेषमाह स्वोच्चेतिसार्धेन । स्वोच्चनीचसुहृच्छत्रुवर्गगैः चतुर्विधो ग्राह्यः तथा षड्वर्गांतर्गतस्वोच्चवर्गवर्तमानस्य पैंड्यो ग्राह्यः तथा स्वनीचवर्गवर्तमानस्य निसर्गः एतत्संज्ञकः दायः तथा सुहृद्वर्गवर्तमानस्य शतस्वरांशः तथा शत्रुवर्गगतस्य नक्षत्रसंज्ञकः

## भाषा।

दि स्थान स्थिति निमित्तसे १५१२ भेद होते हैं ॥ १ ॥ २ ॥ ३ ॥ अब कौनके बलसे कौनका आयुर्दाय लेना सो कहते हैं. हे मैत्रेय ! लग्न बलवान् होवे तो अंशायुर्दाय लेना. सूर्य बलवान् होवे तो पैंड्यायुष्य लेना. चंद्र बलवान् होवे तो निसर्गायु लेना. मंगल बलवान् होवे तो शतस्वरांशायुर्दाय लेना. बुध बलवान् होवे तो नक्षत्रायुष्य लेना. गुरु बलवान् होवे तो नवांशायुर्दाय लेना. शुक्र बलवान् होवे तो स्वरांशायुर्दाय लेना. शनि बलवान् होवे तो करदाय नामक आयुष्य लेना ॥ ४ ॥ ५ ॥ उच्चादिकके बलसे विशेष कहते हैं. स्वोच्चवर्गमें होवे तो पैंड्यायुष्य लेना. स्वनीचवर्गमें होवे तो निसर्गायुष्य लेना. मित्रवर्गमें होवे तो स्वरांशायु लेना.

भागराशिगतस्य च ॥ ६ ॥ समुदायाष्टवर्गश्च भिन्नाष्टक उदीरितः ॥ तत्र मूलत्रिकोणे च भिन्नवर्गे च वृद्धिकृत् ॥ ७ ॥ तथा समारिवर्गे च न वृद्धिहरणे तथा ॥ सूर्योदयः क्रमाल्लग्नगताश्चेद्बलवत्तराः ॥ ८ ॥ पैंड्यो ध्रुवोऽष्टवर्गोत्थः प्रक्रमानुगतोंऽशकः ॥ करदायः क्रमाल्लग्ने रव्यादौ तु

## टीका ।

तथा अतिनीचनवांशराशिवर्तमानस्य समुदायाष्टवर्गसंज्ञकः तथाऽतिशत्रुनवांशराशिवर्तमानस्य भिन्नाष्टकसंज्ञकः उदीरितः कथित इति ॥ ६ ॥ तत्र हानिवृद्धी आह अत्रेतिअर्धद्वयेन । तत्र तस्मिन्नायुर्दाये मूलत्रिकोणे मित्रवर्गे च वर्तमानस्य ग्रहस्य वृद्धिकृत् प्रागुक्तरीत्या वृद्धिः कार्येत्यर्थः अर्थात् नीचातिशत्रुवर्गे प्रागुक्ता हानिरिति भावः तथा तेन प्रकारेण समारिवर्गे उदासीनशत्रुवर्गे वर्तमानस्य न वृद्धिहरणे प्रागुक्तवृद्धिहरणे नस्त इति ॥ ७ ॥ अथ लग्नगतबलवद्ग्रहतारतम्येन आयुराह सूर्योदयइतिसपदार्धकद्वयेन।सूर्योदयः क्रमात्सप्त ग्रहाः बलवत्तराः बलानि संति येषां ते बलवंतः अतिशयेन बलवंतो बलवत्तराः अतिबलिन इत्यर्थः एवं भूतः लग्नगताः लग्ने वर्तमानाश्चेत्पैंड्यः ध्रुवः समुदायाष्टवर्गः भिन्नाष्टवर्गः प्रक्रमानुगतः अंशकः करदायः ग्राह्य इति ॥ ८ ॥ अथ उच्चाद्यधिकारवशाल्लग्नगतानामायुःक्र-

## भाषा ।

शत्रुवर्गमें होवे तो नक्षत्रायु लेना. अति नीच नवांशमें होवे तो समुदायाष्टकवर्गायुष्य लेना अति शत्रु नवांश राशिमें होवे तो भिन्नाष्टक वर्गायु लेना ॥ ६ ॥ जो ग्रह मूलत्रिकोणमें त्रिवर्गमें होवे तो पूर्वोक्त रीतिसे वृद्धि करना नीचशत्रुवर्गमें होवे तो हानि करना समशत्रुवर्गके ग्रहका आयुष्यमें वृद्धि हानि नहीं करना ॥ ७ ॥ सूर्योदय इस विषयमें और विशेष कहते हैं. सूर्यादि ग्रह बलवान् होयके लग्नमें बैठे होवे तो क्रमसे आयुर्दाय लेना. सूर्यसे पैंड्य १ चंद्रसे ध्रुव २ मंगलसे समुदायाष्टवर्ग ३ बुधसे भिन्नाष्टवर्ग ४ गुरुसे प्रक्रमानुगत ५ शुक्रसे अंशकायु ६ शनिसे करदाय ७ यह क्रमसे लेना ॥ ८ ॥ जन्मलग्नमें उच्चादिस्थित सूर्यादिग्रहोंसे आयुष्यका भेद कहते हैं. लग्नमें उच्चराशिका सूर्यादिक

स्थिते सति ॥ ९ ॥ पैंड्यः स्वरांशो ध्रुवदाय एव तत्प्रक्र-
मांशश्च तथांशकोत्थः ॥ भिन्नाष्टवर्गः समुदायसंज्ञः क-
रोत्थ उच्चादिषु योजनीयः ॥१०॥ ध्रुवः सुखस्थस्य तु स-
प्तमस्य पैंड्यः स्वरांशः खलु कर्मगस्य ॥ द्वितीयसंस्थस्य

## टीका ।

ममाह क्रमादित्याद्यर्धसहितदशमश्लोकेन । लग्ने जन्मलग्ने क्रमात् क्रमशः रव्यादौ सूर्यप्रभृतिग्रहे उच्चादिषु उच्चमूलत्रिकोणादिसंबंधेन स्थिते वर्तमाने एते आयुर्दायाः योजनीयाः इत्यन्वयः तानेवाह पैंड्यः पिंडायुर्दायः लग्नस्थाने रव्यादौ उच्चस्थे सति ग्राह्याः एवं त्रिकोणस्थे सति स्वरांशो ग्राह्यः तथा स्वक्षेस्थे सति ध्रुवो ग्राह्यः अधिमित्रस्थानस्थे प्रक्रमांशः तथा मित्रक्षेत्रस्थेऽंशायुर्दायः तथा शत्रुक्षेत्रस्थे सति भिन्नाष्टवर्गः तथा अधिशत्रुक्षेत्रस्थे सति समुदायाष्टवर्गः स्वनीचस्थे सति करः अंशायुर्दायः । ननु समक्षेत्रलग्नगश्चेत् किमित्याकांक्षायां तत्राभाव एव बोध्यः एवं यवनाचार्यादीनामपिमतमिति ॥ १० ॥ अथ प्रकारांतरेणायुर्दायग्रहणमाह ध्रुव इतिद्वयेन । सुखस्थस्य लग्नाच्चतुर्थभावगतस्य ध्रुवः आयुर्दायो ग्राह्यः सप्तमस्थस्य पैंड्यः तथा कर्मगस्य दशमस्थस्य द्वितीयसंस्थस्य च स्वरांशो ग्राह्यः तथा तृतीयधीधर्मगतस्य लग्नात् तृतीयपंचमनवमस्थस्य पैंड्यो ग्राह्यः षष्ठस्थस्य तु भिन्नवर्गायुः तथा मृत्युगतस्य अष्टमस्थस्य तथेतरः समुदायाष्टवर्गायुर्ग्राह्यः आये वर्तमानस्य पैंड्यः वरांशध्रुवदायान्यतमः तथा आद्यगतस्य

## भाषा ।

ग्रह होवे तो पिंडायुर्दाय लेना. त्रिकोणका होवे तो स्वरांशायु लेना. स्वराशिका होवे तो ध्रुवायुष्य लेना. अधिमित्रका होवे तो प्रक्रमांश लेना. मित्रक्षेत्रका होवे तो अंशायुर्दाय लेना. शत्रुक्षेत्रका होवे तो भिन्नाष्टकवर्ग लेना. अधिशत्रुक्षेत्रका होवे तो समुदायाष्टवर्ग लेना. स्वनीचका होवे तो अंशायुर्दाय लेना. समका होवे तो अभाव जानना ॥ १० ॥ मतांतर कहते हैं. लग्नसे चौथे घरमें ग्रह होवे तो ध्रुवायुष्य लेना. सातवें होवे तो पैंड्य लेना. दसवें घरमें और दूसरे घरमें होवे तो स्वरांशायु लेना. तीसरे पांचवें नवम घरमें होवे तो पैंड्य लेना. छट्ठे घरमें होवे

च पैंड्य उक्तस्तृतीयधीधर्मगतस्य चैव ॥ ११ ॥ षष्ठ-व्ययस्थस्य तु भिन्नसंज्ञस्तथेतरो मृत्युगतस्य चैवम् ॥ पैंड्यः स्वरांशो ध्रुव आय उक्तः पैंड्यो भवेदाद्यगतस्य चैव ॥ १२ ॥ लाभे रवींद्वारबुधेज्यशुक्रमंदाः स्थिताः प्रक्रमदाय एव ॥ लग्नार्यभौमज्ञरवीन्दुमंदशुक्रास्तृतीये सुतभे

## टीका ।

लग्नस्थस्य पैंड्य उक्त इति ॥ ११ ॥ १२ ॥ अथ द्वादशभावेषु ग्रहाणां मिश्रायुर्दायग्रहणक्रममाह लाभे इत्यादिपंचदशश्लोकपर्यंतम् । लाभे एकादशस्थाने मिश्रायुर्विषये प्रक्रमदाय एव ग्राह्यः तत्र क्रमः रवींद्वारबुधेज्यशुक्रमंदाः क्रमणायुर्दाये स्थिता ज्ञेयाः लग्ने अत्र सप्तमीविभक्तिलोप आर्षः लग्नस्थाने तथा तृतीये सुतभे पंचमे धर्मे नवमे च एतेषु भावेषु आर्यभौमज्ञरवीन्दुमंदशुक्राः क्रमेणायुर्दायस्थिताः ज्ञेयाः स्वे द्वितीयभावे क्रमेण शुक्रमंदार्यबुधार्कभौमचंद्रा आयुर्दातारः तथा सुखे चतुर्थभावे बुधात् पूर्वोक्तक्रमे बुधसकाशाद् ग्रहक्रमो ग्राह्यः ४।१।३।२।६।७।५ एते ग्राह्या इत्यर्थः अस्ते चंद्राद्बक्रमतः नाम प्रथमोक्तः क्रमः विलोमतो ग्राह्यः २।३।१।४।५।७।६। एवं क्रमादित्यर्थः निधनेष्टमभावे भौमार्कमंदार्यसितज्ञचंद्राः क्रमादायुर्दातारो ग्राह्याः षष्ठे रवींदुशुक्रार्किकुजार्यसौम्याः क्रमाद्ग्राह्याः व्यये द्वादशभावे सौम्यात् बुधात् प्रथमोक्तक्रमो ग्राह्यः ४।१।२।६।७।३।५ एते इत्यर्थः कर्मणि दशमभावे कुजात् प्रथमोक्तप्रकारो ग्राह्यः ३।५।४।१।२।६।७ एवमित्यर्थः

## भाषा ।

तो भिन्नाष्टकवर्ग लेना. आठवे घरमें होवे तो समुदायाष्टक वर्ग लेना. ग्यारहवे घरमें होवे तो पैंड्य स्वरांश ध्रुव यह तीनोंमेसे एक लेना. लग्नमें होवे तो पैंड्य लेना ॥ ११ ॥ १२ ॥ द्वादश भावोंमें ग्रहोंका मिश्रायुर्दाय लेनेका क्रम कहते हैं. ग्यारहवें घरमें मिश्रायु लेनेके वास्ते सू. चं. मं. बु. गु. शु. शनी यह आयुर्दायस्थित जानना. लग्नमें तथा ३।५।९। में घरमें क्रम करके गु. मं. बु. सू. चं. श. शुक्र यह आयुर्दाय होनेवाले जानना. दूसरे घरमें क्रमसे शु. श. गु. बु. सू. मं. चं. आयुर्दाय देनेवाले जानना. चौथे घरमें क्रमसे बु. सू. मं. चं. शु. श. गु. आयुर्दाय देनेवाले

च धर्मे ॥ १३ ॥ स्वे शुक्रमंदार्यबुधार्कभौमचंद्राः सुखेस्ते निधनेऽपि चैव ॥ बुधार्कमाद्ग्युक्रमतश्च चंद्राद्भौमार्कमंदार्यसितज्ञचंद्राः ॥ १४ ॥ षष्ठे व्यये कर्माणि लाभगा वा रवीन्दुशुक्रार्किकुजार्यसौम्याः ॥ सौम्यात्कुजाद्भार्गवतः क्रमात्स्युर्मिश्रे तु दाये क्रमशः प्रदिष्टम् ॥ १५ ॥ नक्षत्रदायोंऽशकपिंडदायो भिन्नाष्टवर्गः समुदायसंज्ञः ॥ स्वरांशदायो क्रमशः प्रदिष्टो विशेषतस्तत्र वदामि यस्मात् ॥१६॥ अष्टत्रिंशदमिश्रे तु अंकसूर्यकलांशकैः ॥ मूर्छाक्षिणी भि-

## टीका ।

लाभे वा प्रथमतः अन्यः क्रम उक्त एव तत्र विकल्पेन भार्गवतः पूर्वक्रमे शुक्रादितः क्रमो गाह्याः ६।७।३।५।४।१।२ एवं मिश्रायुर्दाये क्रमशः सर्वभावेषु ग्रहणं प्रदिष्टं कथितमिति ॥ १३ ॥ १४ ॥ १५ ॥ अथोक्तायुर्दायान् गणयति नक्षत्रेति । नक्षत्रदायः, अंशदायः, पिंडदायः, भिन्नाष्टवर्गायुर्दायः, समुदायसंज्ञकाष्टवर्गायुर्दायः, शतस्वरांशः, स्वरांशायुर्दायः, नवमांशायुर्दायश्चेति मिश्रायुषि उक्ताः । तत्र यस्मादायुर्दायात् यावंतो भेदाः उत्पद्यंते तद्विशेषतो वदामि कथयामि ॥ १६ ॥ अथाऽमिश्रायुर्दाय भेदानाह अष्टत्रिंशदिति । अमि आयुर्दायेऽष्टत्रिंशद्भेदाः मुख्याः तत्रापि अंकसूर्यकला-

## भाषा ।

जानना. ७ वें घरमें चं. मं. सू. बु. गु. श. शु. यह आयुर्दाय देनेवाले जानना. ८ वें घरमें मं. सू. श. गु. शु. बु. चं. यह क्रमसे आयुर्दायक जानना. ६ वें घरमें सू. चं. शु. श. मं. गु. बु. क्रमसे लेना. १२ वें घरमें ब. सू. चं. शु. श. मं. गु. यह क्रमसे लेना १० वें घरमें मं. गु. बु. सू. चं. शु. श. यह क्रमसे लेना. ग्यारहवें घरमें शु. श. मं. गु. बु. सू. चं. यह क्रमसे आयुर्दाय देनेवाले कहे हैं ॥१३॥१४॥ ॥१५॥अब आयुर्दायकी गणना कहते हैं. नक्षत्रायु, अंशायु, पिंडायु, भिन्नाष्टकवर्गायु, समुदायाष्टकवर्गायु, शतस्वरांशायु, स्वरांशायु, नवमांशायु, यह आयुर्ओंसे आगे जो भेद उत्पन्न होते हैं सो कहते हैं ॥१६॥ अब अमिश्रायुर्दायके भेद कहते

दाः संति रश्मिजास्त्रिंशदेव हि ॥ १७ ॥ एकस्य विषये द्वौ चेदाययोगदलं भवेत् ॥ त्र्यादयश्चेद्युताख्यादिसंख्याप्ताश्च दशा भवेत् ॥ १८ ॥ रवावुच्चगते चान्ये बलिष्ठा मूलकोणगाः ॥ स्वोच्चस्थेषु बलिष्ठेषु सर्वेषु शशहंसके ॥ १९ ॥ एवं चिरायुषां योगेष्वन्येषु गणितेषु च ॥ चंद्रयोगेषु त्रिषु

## टीका ।

शकैः नवांशद्वादशांशषोडशांशैः मूर्छाक्षिणीभिदाः २२१ एकविंशत्यधिकद्विशतभेदाः अवांतराः सन्ति तथा तत्रैव रश्मिजाः रश्मिसमुद्भवाः त्रिंशदेव ३० हीति प्रसिद्धम् ॥ १७ ॥ अथ मिश्रायुर्दायदशाग्रहणरीतिमाह एकस्येति।एकस्य ग्रहस्य विषये सहवर्तमानौ द्वौ आयुर्दातारौ प्राप्तौ चेत् दाययोगदलं भवेत् दायद्वयस्य योगं कृत्वाऽर्धावशेषेण दशा भवति तथा एकस्य ग्रहस्य विषये त्र्यादयः त्रिप्रभृतयः ग्रहाः सहवर्तमानाश्चेत्तदा त्र्यादिसंख्याप्ता प्राप्तत्र्याद्यायुर्दाययोगं कृत्वा त्र्यादिमिश्रणसंख्याकांकैः भागं गृहीत्वा तत्तद्दशा ज्ञेयेति ॥ १८ ॥ अथोक्तेषु नक्षत्राद्यायुर्दायेषु पिंडायुर्दायग्रहणस्थलान्याह रवावित्यादिसार्धविंशतिश्लोकपर्यन्तम् । रवौ सूर्ये उच्चगते उच्चस्थिते सति अन्ये ग्रहा बलिष्ठाः मूलत्रिकोणगा वा स्युः तथा सर्वेषु ग्रहेषु बलिष्ठेषु उच्चस्थेषु सत्सु वा तथा शशयोगे हंसयोगे वा एवं प्रकारेण अन्येषु गणितेषु उक्तान्यचिरायुर्दायकारकगणनांतर्गतेषु योगेषु सुनफाअनफादुर्धरासंज्ञकेषु त्रिषु चंद्रयोगेषु चंद्रसमुद्भवेषु योगेषु चंद्रे बलवत्तरे सति तथा स-

## भाषा ।

हैं अमिश्रायुके ३८ भेद हैं. उसमेंभी नवांश, द्वादशांश, षोडशांशके भेदसे २२१ भेद होते हैं. और रश्मिआयुष्यके तीस भेद है ॥ १७ एक घरमें दो आयुष्य देनेवाले होवे तो दोनोंका योग करके उसका अर्ध लेना. तीन आदि लेके ग्रहोंका योग होवे तो जितने होवे उनोंका आयुर्योग करके वो संख्यासे भाग लेना. सो आयुष्यदशा जानना ॥ १८ पिंडायुर्दाय लेनेका भेद कहते हैं. सूर्य उच्चका होवे, दूसरे ग्रह बलिष्ठ होवे, शशयोग, हंसयोग, और दीर्घायुयोग, सुनफा, अनफा, दुरुधरायोग, चन्द्रयोग, और राजयोग, यह योग होवे, चंद्र बलवान् होवे तो.

च चंद्रे तु बलवत्तरे ॥ २० ॥ राजयोगेषु सर्वेषु पैंड्यमाह पराशरः ॥ लग्ने गुरौ कर्मगते च भानौ चंद्रे सुखे वाऽस्तगते बलिष्ठे ॥ पूर्णे त्रिकोणोपचये शुभेषु पापेष्वथात्रोक्तमसंस्थितेषु ॥ २१ ॥ शुभाश्च केंद्रे त्रिषडायभेऽन्ये विपर्यये पैंड्यमतः प्रदिष्टम् ॥ रिःफाष्टषष्ठेषु सहस्ररश्मौ भौमे क्रमाच्छीतकरे तु पैंड्यः ॥ २२ ॥ पापाल्लग्ने चाष्टमे सप्तमे

## टीका ।

र्वेषु पूर्वोक्तेषु राजयोगेषु सत्सु पराशरः पैंड्यं पिंडायुर्दायग्रहणमाहेति१९॥२० अथ प्रकारांतरेण पड्यायुर्ग्रहणमाह लग्ने इत्यादिपादोनत्रयोविंशतिपर्यन्तम् । लग्ने गुरौ सति कर्मगते दशमस्थे भानौ सति सुखे चतुर्थस्थाने वाऽस्तंगते सप्तभावस्थे बलिष्ठे बलवति पूर्णे चंद्रे सति तथा त्रिकोणोपचये त्रिकोणं च उपचयं चानयोः समाहारस्तस्मिन् समाहारैकवचनं "सनपुंसकम्" इति नपुंसकत्वम् पंचमनवमतृतीयषष्ठदशमैकादशभावेष्वित्यर्थः शुभे शुभग्रहे सति तथाऽत्रोक्तं स्थानं प्रति असंस्थितेषु अवर्तमानेषु पूर्वोक्तान्यस्थानस्थितेषु द्वादशभावलग्नधनसप्तमाष्टमभावे स्थितेषु सत्सु तथा केन्द्रत्रिषडायभे च शुभाश्चेत् लग्नचतुर्थसप्तमदशमतृतीयषष्ठैकादशेषु शुभेष्वित्यर्थः तथाऽन्ये नाम पापाः विपर्यये उक्तान्यस्थाने वर्तमानाश्चेत् पैण्ड्यं पिंडायुः प्रदिष्टं कथितं तथा रिःफाष्टषष्ठेषु १२।८।६ सहस्ररश्मौ रवौ भौमे शीतकरे च क्रमात् स्थितेषु सत्सु पैंड्यः ग्राह्यः तथा लग्नेऽष्टमे सप्तमे वा पापाः अथ वा षष्ठे कर्मभे दशमे रिःफभे द्वादशभावे च सौम्याश्चेत् नीचाभावे नीचराशिरहिते सति पैंड्यदायः प्रदिष्ट इति ॥ २१ ॥ २२ ॥ अथ ध्रुवाद्यन्यायुर्दायग्रहणं वक्तुं

## भाषा ।

पिंडायुर्दाय ग्रहण करना ऐसा पराशर कहते हैं ॥ १९ ॥ २० ॥ अब प्रकारांतरसे पिंडायुष्यका ग्रहण कहते हैं. गुरु लग्नमें, सूर्य १० वा, ४ चंद्र ७, शुभग्रह ५।९।३।६।११, पापग्रह १२।१।२।७।८, शुभग्रह १।४।७।१०।३।६।११, सूर्य १२ मंगल ८, चंद्र ६, ऐसे यह पूर्वोक्त योग होवे तौ पिंडायुष्य लेना. अथवा पापग्रह १।८।७ शुभग्रह६।१०।१२ नीचवर्जित होवे तो पिंडायुष्य लेना॥२१॥२२॥ ध्रु-

वा सौम्याः षष्ठे कर्मभे रिःफभे वा ॥ नीचाभावे पैंडथदायः प्रदिष्टो मंदे लग्ने स्वोच्चगे च ध्रुवाख्यः ॥ २३ ॥ वीणायां कार्मुके चक्रे गदायामर्धचन्द्रके ॥ रवौ पैंडयोऽशको लग्ने ध्रुवश्चंद्रे च भूमिजे ॥ २४ ॥ भिन्नाष्टवर्गः सौम्ये तु नक्षत्रांशसमुद्भवः ॥ गुरौ नक्षत्रदायः स्यात्प्रक्रमानुगतः सिते ॥ २५ ॥ समुदायाष्टवर्गस्तु मंदे तु बलवत्तरे ॥ वाप्यां पाशे

## टीका ।

मंदेत्यादि तत्रादौ ध्रुवायुर्ग्रहणमाह मंद इतिपादेन । लग्ने स्वोच्चे तुलास्थे इत्यर्थः मंदे शनैश्चरे सति ध्रुवाख्यः आयुर्दायो ग्राह्य इति ॥ २३ ॥ अथ योगविशेषेण बलवत्तरलग्नसप्तमग्रहेषु पृथक् दायविशेषग्रहणमाह वीणायामित्यादिसार्धपंचविंशतिश्लोकपर्यन्तम् । वीणायां पूर्वाधोक्तवीणायोगे कार्मुके योगे चक्रे योगे गदाख्ययोगेऽर्धचंद्रके योगे वा सति रवौ बलवत्तरे सति पैंडयो ग्राह्यः लग्ने बलवत्तरेंऽशकः चन्द्रे बलवत्तरे ध्रुवः भूमिजे-भौमे बलवत्तरे भिन्नाष्टवर्गः सौम्ये बुधे बलवत्तरे नक्षत्रांशसमुद्भवः गुरौ नक्षत्रदायः सिते बलवति प्रक्रमानुगतः मंदे बलवत्तरे तु समुदायाष्टवर्गः आयुर्दायो ग्राह्यइति ॥ २४ ॥ २५ ॥ पुनः प्रकारांतरमाह वाप्यामित्यादि-सप्तविंशतिश्लोकपर्यन्तम् । वापीपाशशरपद्मसमुद्राख्यपंचयोगेषु सत्सु उक्ता-

## भाषा ।

वायुष्य ग्रहण करनेका नियम कहते हैं. जन्मलग्नमें तुलाराशिका होके शनि बैठा होवे तो ध्रुवायुष्य लेना ॥ २३ ॥ अब योगविशेषसे आयुर्दायका ग्रहण कहते हैं. विणायोग, कार्मुकयोग, चक्रयोग, गदायोग, अर्धचंद्रयोग, होवे, सूर्य बलवान् होवे तो पिंडायुष्य लेना. लग्न बलवान् होवे तो पिंडायुष्यलेना. लग्न बलवान् होवे तो अंशकायु लेना. चंद्र बलवान् होवे तो ध्रुवायु लेना. मंगल बलवान् होवे तो भिन्नाष्टक वर्गायु लेना. बुध बलवान् होवे तो नक्षत्रांशायु लेना. गुरु बलवान् होवे तो नक्षत्रायु लेना. शुक्र बलवान् होवे तो प्रक्रमानुगतायु लेना. शनि बलवान् होवे तो समुदायाष्टकवर्गायु लेना ॥ २४ ॥ २५ ॥ और प्रकारांतर कहते हैं. वापी, पाश, शर, पद्म, समुद्र यह पांच योगोंमेंसे कोईभी एक आदि योग होवे,

शरे पद्मे समुद्रार्कादिषु क्रमात् ॥ २६ ॥ बलिष्ठेषु नवांशोत्थो ध्रुवः पैंड्यः स्वरांशकः ॥ भिन्नाष्टवर्गे अंशोत्थो नक्षत्रांशक ईरितः ॥ २७ ॥ रज्जौ विहंगे मालायां नले च मुसले क्रमात् ॥ पैंड्यो ध्रुवः क्रमात्प्रोक्तो रव्यादौ तु बलोत्तरे ॥ २८ ॥ गंडे शक्तौ च शकटे यूपे केदारशूलयोः ॥ प्रक्रमानुगतश्चाथ रश्मिजो ध्रुवसंज्ञितो ॥ २९ ॥ अष्टवर्गसमुद्भूतो क्रमादेवं बलोत्तरे ॥ नौछत्रवज्रदामाख्ये स्वर-

## टीका ।

न्यतमेके इत्यर्थः अर्कादिषु सप्तसु बलिष्ठेषु सत्सु क्रमात् अर्के नवांशः चंद्रे ध्रुवः भौमे पैंड्यः बुधे स्वरांशः गुरौ भिन्नाष्टवर्गः शुक्रेऽशोत्थः शनौ नक्षत्रांशकश्च ईरितः कथितः ॥ २६ ॥ २७ ॥ पुनः प्रकारांतरमाह रज्जाविति रज्जुविहंगमालानलमुसलेषु पूर्वार्धोक्तेषु पंचसु पंचान्यतमे एकस्मिन्रव्यादौ बलोत्तरे सति क्रमात् पैंड्यो ध्रुवश्च ग्राह्यः यथा रज्जौ पैंड्यः विहंगे ध्रुवः मालायां पैंड्यः नले ध्रुवः मुसले पैंड्य इति ॥ २८ ॥ पुनः प्रकारांतरमाह गंडेइतिसार्धेन । गंडशक्तिशकटयूपकेदारशूलाख्यषड्योगान्यतमे योगे सति क्रमाद्रव्यादौ बलवत्तरे प्रक्रमानुगतः रश्मिजः ध्रुवसंज्ञितः अष्टवर्गसमुद्भूत आयुर्दायश्च क्रमाद्ग्राह्याइति॥२९॥पुनर्योगांतरमाह नावित्यर्धेन । नौयोगे छत्रयोगे वज्रयोगे दामाख्य योगे च अतिनीचगे रव्यादौ सति स्वरदायः स्व-

## भाषा ।

सूर्यादि सात ग्रहोंमेंसे जो बलवान् होवे तो क्रमसे आयुष्य लेना. सूर्य बलवान् होवे तो नवांशायु चन्द्र ध्रुवायु, मं. पैंड्यायु, बु. स्वरांशकायु, गु भिन्नाष्टकवर्गायु शु. अंशायु श. नक्षत्रांशायु कहा है ॥ २६ ॥ २७ ॥ प्रकारांत कहते हैं. जन्मकुंडलीमें रज्जुयोग होवे तो पैंड्यायु लेना. विहंग होवे तो ध्रुव, माला होवे तो पैंड्य, नल होवे तो ध्रुव, मूसल होवे तो पैंड्य, लेना ॥ २८ ॥ गंड होवे तो प्रक्रमायु, शक्ति होवे तो रश्म्यायु, शकट होवे तो ध्रुवायु, यूप, होवे तो अंशायु, केदार होवे तो भिन्नाष्टकवर्गायु, शूल होवे तो समुदायाष्टकवर्गायु सूर्यादि बलवान् ग्रह होवे तो लेना ॥ २९ ॥ नौकायोग, छत्र, वज्र, दाम, यह, योग होवे. सूर्यादि अति

दायोतिनीचगे ॥ ३० ॥ कूटे गंडे शरे नागे गोले शृंगाट-
के पुनः ॥ कालकूटे क्रमात्प्रोक्ताः पैंड्याद्याः सप्त वै द्विज
॥ ३१ ॥ पैंड्याद्यास्त्रयो ध्रुवाश्चांशदायाश्चाष्टकवर्गकौ ॥ द्रे-
ष्काणेषु नवांशेषु द्वादशांशेषु च क्रमात् ॥ ३२ ॥ कलांशे-
षु नव प्रोक्ता दायाश्चैव पुनः पुनः ॥ त्रिंशत्सवेदाः स्वर-

## टीका ।

रांशायुर्दायो ग्राह्यः॥३०॥पुनर्योगांतरमाह कूटेति। कूटे गंडे शरे नागे गोले शृं-
गाटके कालकूटे च क्रमात्पैंड्याद्याः पैंड्यध्रुवाष्टवर्गोत्थप्रक्रमानुगतांशायुः
स्वरांशरश्म्याख्याः सप्तैव ग्राह्याः हे द्विज मैत्रेयेति॥३१॥ पुनः प्रकारांतरमाह
पैंड्या इतिसार्धेन । द्रेष्काणेषु त्रिषु पैंडकाद्यास्त्रयः पैंड्यध्रुवस्वरांशाः क्रमा-
द्ग्राह्याः नवांशेषु ध्रुवाख्या नवग्राह्याः द्वादशांशेषु अंशदायाः द्वादशभेदाभि-
न्नाः क्रमाद्ग्राह्याः कलांशेषु उच्चादिनवस्थानगतेषु ग्रहेषु अष्टकवर्गसंज्ञकौ
द्विविधौ पुनः पुनर्ग्राह्याः तद्यथा कलांशेन उच्चे वर्तमानस्य ग्रहस्य भिन्ना-
ष्टवर्गसमुदायाष्टवर्गसंज्ञकाः षोडश क्रमाद्ग्राह्याः एवं त्रिकोणादिषु
वर्तमानेषु ग्रहेषु ते एव समुदायाष्टकभिन्नाष्टकायुर्दायाः षोडशैव पुनः
पुनः प्रोक्ता इति ॥ ३२ ॥ अथ रश्मिवशादायुर्ग्रहणमाह त्रिंशदित्याद्येको-
नचत्वारिंशच्छ्लोकपर्यन्तम् । त्रिंशत् ३० सवेदास्त्रिंशत् ३४ स्वरपावकाः ३७

## भाषा ।

नीचके होवे तो स्वरांशायु लेना ॥ ३० ॥ हे मैत्रेय ! कूट योग होवे तो पैंड्य लेना,
गंड होवे तो ध्रुवायु, शर होवे तो अष्टवर्गायु, नाग होवे तो प्रक्रमायु लेना, गोल
होवे तो अंशायु, शृंगाटक होवे तो स्वरांशायु, कालकूट होवे तो रश्म्यायु लेना
॥ ३१ ॥ प्रकारांतर कहते हैं. प्रथम द्रेष्काणमें लग्न होवे तो पैंड्य लेना, दूसरे
द्रेष्काणमें ध्रुव लेना, तीसरे द्रेष्काणमें स्वरांश लेना नवांशमें ध्रुवादि नव आयुष्य
क्रमसे लेना द्वादशांशमें अंशादि लेना उच्चादिक नव स्थानोंमें जो ग्रह होवे तो
भिन्नाष्टक समुदायाष्टक वर्गायुष्य क्रमसे लेना. वारंवार संख्यापूर्तिपर्यंत गणना
॥ ३२ ॥ अथ रश्मिके मतसे आयुष्य लेनेका भेद बताते हैं. जन्मकालमें रश्मि
३०।३४।३७।३३।३२।३१।३६।३५।२७।२८।२१।२४ इसमेंसे कोईभी संख्या

पाचकाश्च सुराश्च दंताः क्षितिपावकाश्च ॥ षट्त्रिंशदिष्व-
ग्नय एव भानि छंदांसिमूर्च्छाश्च जिनाः कराश्चेत् ॥ ३३ ॥
पैंडयस्तथा द्वादशधा प्रभिन्नः क्रमेणदायो नियतः प्रदि-
ष्टः ॥ तत्वाग्निनंदाग्नय एवरत्नदस्राश्विदस्रा ध्रुवदायभेदाः
॥ ३४ ॥ एकात्त्रयश्चेत्समुदायसंज्ञतस्ततस्तु वेदा इतरोऽ
ष्टवर्गः ॥ पंचादिकेष्वंशकदाय उक्तो रुद्राश्च सूर्या यदिपैं-
ड्यआद्यः ॥ ३५ ॥ विश्वे मनुश्चेत्स्वरभागदायो नक्षत्रदा-

## टीका ।

सुराः ३३ दंताः ३२ क्षितिपावकाः ३१ षट्त्रिंशत् ३६ इष्वग्नयः ३५ भा-
नि २७ छंदांसि २६ मूर्छा २१ जिनाः २४ एतत्संख्याकाः कराः रश्मयः
संतिचेद्द्वादशधाप्रभिन्नः द्वादशप्रकारः पैंड्यः पिंडायुर्दायः क्रमेण क्रमशः
नियतो निश्चितः प्रदिष्ट उक्तः तथा तत्वानि २५ नंदाग्नयः ३९ रत्न-
दस्राः २९ त्रिदस्राः २३ एतत्संख्यांकेषु रश्मिषु ध्रुवायुर्दायभेदाश्चत्वारः
क्रमशो ग्राह्याः तथा एकात्त्रयः एकरश्मिमारभ्य रश्मित्रयपर्यंतम् १।२।३
एतत्संख्याकेषु रश्मिष्वित्यर्थः समुदायसंज्ञः समुदायाष्टवर्गदायोग्राह्यः। ततः
तदनंतरं वेदाः ४ चत्वारो रश्मयश्चेदितरोऽष्टवर्गः भिन्नाष्टवर्ग इत्यर्थः ग्रा-
ह्याः तथा पंचादिकेषु अग्रिमोक्तरुद्रसंख्याप्राग्वर्तमानेषु ५।६।७।८।९।१०
एष्वित्यर्थः रश्मिषु अंशदाय उक्तः तथा रुद्राः ११ सूर्याः १२ यदि एतत्सं-
ख्याका रश्मयः तर्हि आद्यः पैंड्यदायो ग्राह्यः तथा विश्वे १३ मनुः १४
एवं रश्मिषु स्वरभागदायः स्वरांशायुर्दायो ग्राह्यः तिथिसंख्याकः १५ र-
श्मिश्चेत् नक्षत्रदायः ग्राह्यः नृपे १६ षोडशसंख्याके रश्मौ अत्यष्टित्रये १७।

## भाषा ।

रश्म्योंकी होवे तो पिंडायुर्दाय लेना तथा २५।३९।२९।२३। रश्मि होवे तो ध्रु-
वायुष्य लेना, तथा १।२।३ रश्मि होवे तो समुदायाष्टवर्गायु लेना तथा ४ रश्मी
होवे तो भिन्नाष्टवर्ग लेना. तथा ५।६।७।८।९।१० रश्मी होवे तो अंशायु लेना,
तथा ११।१२ रश्मी होवे तो पहिला पिंडायु लेना, १३।१४ रश्मी होवे तो स्व-
रांशायु लेना, १५ रश्मि होवे तो नक्षत्रायु लेना. १६।१७।१८।१९। रश्मि होवे तो

यस्तिथिसंज्ञकश्चेत् ॥ ३६ ॥ नृपेत्यष्टित्रये प्रोक्ता आद्यपैं-
ड्यभिदास्तथा ॥ प्रक्रमानुगतो विंशत्यष्टत्रिंशेऽष्टवर्गजः
॥ ३७ ॥ चत्वारिंशत्त्रये पैंड्यो नक्षत्रांशस्त्रये ततः ॥ शेषेषु
षट्सु पैंड्यः स्यादाद्यो गर्गोयमाह च ॥ ३८ ॥ इष्टरश्म्य-
धिकप्रोक्तक्रम एव कराधिके ॥ केंद्रादिषु ग्रहाणां च बलो-
त्तरवशाक्रमः ॥ ३९ ॥ बलोत्तरवशादवे स्थानेतरवशात्त-

## टीका।

१८।१९ एतेषु रश्मिष्वित्यर्थः आद्यपैंड्यभिदाः पिंडायुर्दायादिमभेदाः ग्रा-
ह्याः तथा विंशे २० रश्मौ प्रक्रमानुगतः ग्राह्यः अष्टत्रिंशे ३८ रश्मौ अष्ट-
वर्गजः अष्टवर्गसंज्ञको ग्राह्यः चत्वारिंशत्त्रये चत्वारिंशत्संख्याकरश्मयः यत्र
यस्मिन् ४०।४१।४२ एतेष्वित्यर्थः पैंड्यो ग्राह्यः तथाऽग्रिमत्रये ४३।४४।
४५ एतेषु नक्षत्रांशः ग्राह्यः शेषेषु २१।२८।४६।४७।४८।४९ एतेष्ववशिष्टेषु
पैंड्यो दायः स्यात् आद्याः आद्यषट्भेदा इत्यर्थः अयं रश्म्यायुर्दायः मां प्र-
ति गर्ग आहेति अयं इष्टरश्म्यधिकप्रोक्तः क्रमः बलवत्तरवशात् पूर्वं यः के-
न्द्रादिषु स्थानेषु उक्तः तदतिरिक्तस्थानेषु कराधिके रश्म्यधिके सति अय-
मुक्तक्रमः रश्म्यायुर्दायक्रम एव प्रोक्तः॥३३॥३४॥३५॥३६॥३७॥३८॥३९॥
अथ उक्तमनुवदति बलोत्तरवशादिति। बलोत्तरवशात् बलाधिक्यतारतम्येन
स्थानांतरवशात् स्थानांतराणि स्वमित्रशत्रुक्षेत्रादीनि तद्वशात् इष्टफलक्रमा-
त् इष्टकष्टफलवशात् तथा रश्म्युक्तविधिना एवं क्रमादायुर्दायो मयोक्त इति

## भाषा।

पहिला पिंडायुष्य लेना, २० रश्मि होवे तो प्रक्रमायु लेना. ३८ रश्मि होवे तो
अष्टवर्गायु लेना, ४०।४१।४२ रश्मि होवे तो पिंडायु लेना, ४३।४४।४५। र-
श्मि होवे तो नक्षत्रायु लेना, २२।२८।४६।४७।४८।४९ रश्मि होवे तो पैंड्या-
यु लेना, यह रश्म्यायुर्दाय गर्ग ऋषीनें मेरेकू कहा है ॥३३॥३४॥३५॥३६
॥३७॥३८॥३९॥ यह आयुर्दायके भेद वे बलकी तारतम्यतासे मित्रादि
स्थानबलकी तारतम्यतासे इष्टकष्ट फलयोगसे रश्मीके निमित्तसे मैंने आयुर्दाय-

था ॥ इष्टात्फलक्रमादेव रश्म्युक्तविधिना क्रमात् ॥ ४० ॥ कल्पादौ भगवान् गार्ग्यः प्रादुर्भूय महामुनिः ॥ ऋषिभ्यो जातकं सर्वमुवाच कलिमाश्रितः ॥४१॥ अस्मिन्नुत्तरभागे तु मयानुक्तं च यद्भवेत् ॥ तत्सर्वं गर्गहोरायां मैत्रेय त्वं विलोकय ॥ ४२ ॥ इति श्रीबृहत्पाराशरहोरोत्तरभागे दायप्रकरणं नाम द्वादशोऽध्यायः ॥ १२ ॥

## टीका ।

॥ ४० ॥ अत्र पुनर्गर्गं प्रमाणयति कल्पादाविति । भगवान् गार्ग्यः कल्पादौ प्रादुर्भूतः महामुनिः महामननशीलः भूतभविष्यद्वर्तमानकालज्ञः कलिमाश्रितः कलिकालीनफलाश्रयेण सर्वं जातकं ऋषिभ्यः शिष्यभूतेभ्यः उवाच कथितवान् 'वक्षत्येव कलिं श्रितः' इति पाठे कल्पादौ प्रादुर्भूय यद्युक्तवान् तत कालबाहुल्यात् अज्ञपरंपरया मलिनत्वभिया पुनः कलिं श्रितः कलौ प्रादुर्भूतः वक्ष्यति कथयिष्यतीत्यन्वयः अन्यत्समानम् ॥ ४१ ॥ अथ स्वोक्तशेषं गर्गशास्त्रेण पूरयति अस्मिन्निति । अस्मिन् उत्तरभागे मया विस्तरभिया यदनुक्तं अकथितं भवेत्स्यात् तत्सर्वं गर्गहोरायां गर्गहोराशास्त्रे सविस्तरं हे मैत्रेय ! त्वं विलोकय पश्य इति ॥ ४२ ॥ एवं यथामति व्याख्या गणेशप्रीतये कृता ॥ मयेयं शोधनीयैव कृपया प्राज्ञसत्तमैः ॥ १ ॥ इति श्रीबृहत्पाराशरहोरोत्तरभागे श्रीमदृष्यङ्गन्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदशदिङ्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण वि० सु० टीकायां द्वादशोऽध्यायः ॥ १२ ॥

## भाषा ।

के भेद बताये हैं ॥ ४० ॥ ऐसा यह जातक शास्त्र कलियुगके प्रारंभमें गर्गमुनि अपना प्रागट्य करके अपने शिष्योंकू कहते भये अथवा कहेंगे ॥ ४१ ॥ यह उत्तर भागमें जो मैंने न कहे हैं यह सब गर्गहोरामें, हे मैत्रेय ऋषे ! तुम देखलेव ॥ ४२ ॥ इति बृ. भाषाटीकायां द्वादशोऽध्यायः ॥ १२ ॥

भाग्यंकर्म च वक्ष्यामि मैत्रेय शृणु सुव्रत ॥ भाग्यादेव नृणां सिद्धिर्भाग्यादेव धनायती ॥ १ ॥ यशांसि भाग्यतो भाग्यविपर्यासाद्विपर्ययः ॥ करिष्यमाणकर्माणि ज्ञातव्यानि प्रयत्नतः ॥ २ ॥ लग्नादिंदोश्च नवमं भाग्यं बलवशा-

## टीका।

अथ त्रयोदशाध्यायः सम्यग्व्याख्यायते मया ॥ श्रीगणेशप्रेरणया यावद्बुद्धिबलोदयम् ॥ १ ॥ अस्मिंस्त्रयोदशाऽध्याये भाग्यं कलांशजादिकम् ॥ फलं विस्तरशः प्राह मैत्रेयाय महामुनिः ॥ २ ॥ अथ भगवान् पराशरऋषिः सकलव्यवहारसुखसाधनीभूतभाग्यादिविचारं अस्मिंस्त्रयोदशाध्याये वक्तुं प्रतिजानीते भाग्यमितिद्वयेन। हे सुव्रत मैत्रेय! भाग्यं वैभवं कर्म साध्वसाधु व्यापारं च ते वक्ष्यामि अस्मिन्नध्याये कथयिष्यामि शृण्वाकर्णयेत्यभिमुखीकरणं यतो नृणां जनानां भाग्यादेव सिद्धिः सकलकार्यसाधनं यतो भाग्यादेव धनायती धनं द्रव्यं आयतिः प्रभावः ते यतो भाग्यत एव यशांसि कीर्तयः भाग्यविपर्ययात् अभाग्यात् उक्तानां सर्वेषां विपर्ययः नाश इत्यर्थः अतः करिष्यमाणकर्माणि भाग्यसूचकान्यभाग्यकारकाणि वेति प्रयत्नतो ज्ञातव्यानि इति तज्ज्ञानं वक्ष्यामीति प्रतिजानीते ॥ १ ॥ २ ॥ अथ भाग्यविचाररीतिमाह लग्नादित्यादिसार्धचतुःश्लोकपर्यंतम्। भाग्यं भाग्यस्थानं तु लग्नात् इंदोश्च सकाशान्नवमं ज्ञेयम् तच्च बलवशात् बलतारतम्येन अल्पाधिकभाग्यकारकं भवेत् एवमेव शुभपापारिमित्राख्यैः शुभाः सौम्याः पापाः क्रूराः अरयः शत्रवः मित्राणि इष्टाः इति आख्या येषां तैर्ग्रहैश्च भाग्यस्य वृद्धिहानी भवतः एवं भाग्ये उच्चापि पंचकात् उच्चत्रिकोणस्वर्क्षमित्रा-

## भाषा।

हे मैत्रेय! अब वैभव और शुभाशुभ व्यापार कहता हूं और धनप्राप्ति यशकी प्राप्ति यह सब भाग्योदयसे होती हैं वास्ते भाग्योदयका लक्षण कहता हूं ॥ १ ॥ २ ॥ भाग्यस्थान लग्नसे और चंद्रसे नवम घर जानना, परंतु उसमेंभी बलाबल देखके भाग्यकी वृद्धि या हानि कहना. जैसा उच्च, स्वगृही, मित्रक्षेत्री, अधिमित्रक्षेत्री, मूलत्रिकोणी, होके जो ग्रह भाग्यमें होवे तो भाग्यवृद्धि जानना. नीच, श-

द्भवेत् ॥ शुभपापारिमित्राख्यैर्ग्रहैरेवं शुभाशुभैः ॥ ३ ॥ उच्चादिपंचकाद्वृद्धिरन्यस्माद्धानिरिष्यते ॥ स्वस्मिन्नन्यत्र विषये स्वदेशेतरदेशयोः ॥ ४ ॥ स्वेष्वन्येषु तु वर्गेषु ज्योतिर्विद्दशसुस्थितैः ॥ अव्द्यंशो राशिलिप्तायाः सप्तांशः

## टीका ।

धिमित्रस्थानसंबंधेन भाग्ये स्थितैः भाग्यदर्शकैश्च शुभपापग्रहैः शुभैः पापैश्च सर्वैरपि ग्रहैरित्यर्थः वृद्धिः भाग्यवर्धनं तथाऽन्यस्मात् समशत्र्वधिशत्रुनीचस्थानसंबंधेन भाग्ये स्थितैः सर्वग्रहैः हानिः भाग्यनाशः इष्यते कथ्यते इत्यर्थः तथा स्वस्मिन् स्वीये विषये स्थाने भाग्यपतिश्चेत्स्वदेशेऽन्यत्र विषयेऽन्यक्षेत्रे भाग्येशश्चेदितरदेशे वा भाग्याप्तिः अथ वा हे ज्योतिर्विन्मैत्रेय! भाग्यगतैर्ग्रहैः स्वेषु दशसु वर्गेषु स्थितैः दशवर्गगणनया स्ववर्गस्थितैः स्वदेशे भाग्याप्तिः तैश्चान्येषु स्वेतरेषु दशसु वर्गेषु स्थितैः परदेशे भाग्यं ज्ञेयमिति ॥ ३ ॥ ४ ॥ अथोक्तं दशवर्गरीत्या स्वदेशपरदेशभाग्यं तद्वदेव सप्तांशषोडशांशषष्ट्यंशरीत्यापि स्वदेशपरदेशभाग्यज्ञानं भवति अतस्तानंशानाह अव्द्यंश इत्यादिसप्तमांतम् । सप्तांशमाह राशिलिप्तायाः राश्यंकस्य लिप्ताः कृत्वा ताभ्यः अव्द्यंशः सप्तभिर्भागः सप्तांश इति संप्रकीर्तितः षोडशांशमाह अष्टादशर्क्षकांशस्तु अष्टादशैर्यै ऋक्षांशः राश्यंशः सकलांशः षोडशांश इति कीर्तितः षष्ट्यंशमाह राशिकलाभ्यः षष्टिभिर्यो भागः स एव षष्ट्यंशः एवं क्रमेण सप्तांशादीनानीय पतयः स्मृताः तत्तत्पतयो ग्राह्या इत्यर्थः । अथ प्रकारांतरेण षोडशांशमाह सावने दिवसे चक्रनक्षत्रांशः राशिचक्रस्य सप्तविं-

## भाषा ।

त्रुक्षेत्री, अधिशत्रुक्षेत्री, समका होके भाग्यमें बैठा होवे तो भाग्यकी हानि जानना. और भाग्यपति स्ववर्गमें होवे तो स्वदेशमें भाग्योदय परवर्गमें होवे तो परदेशमें भाग्योदय जानना ॥ ३ ॥ ४ ॥ अब सप्तांश, षोडशांश, षष्ट्यंश कहते हैं. राशि अंशकी कला करके सातसे भाग लेना. जो भाग आवे वो सप्तांश जानना. अठरासे बाराका जो भाग लेना उसकूं षोडशांश कहते हैं. राशि अंशकी कला करके साठसे भाग लेना. उसकूं षष्ट्यंश कहते हैं, सावन दिवसकूं राशिचक्रको सत्ता-

संप्रकीर्तितः ॥ ५ ॥ अष्टादशर्क्षकांशस्तु कलांश इति कीर्तितः ॥ षष्ट्यंश एव षष्ट्यंशः क्रमेण पतयः स्मृताः ॥ ६ ॥ भाग्यात्त्रिकोणोपगतैः शुभं स्याद्भाग्यं तु केन्द्रोपगतैः शुभैश्च॥७॥ पापैस्तथा स्यादशुभं च भाग्यं मित्रादिभिः स्यान्नियमो विशिष्टात् ॥ ८ ॥ एवं भाग्यविपर्यासौ भावानां च वदेत्तथा ॥ भावग्रहांतरकला द्विशत्याप्ताः स-

## टीका।

शतिभिर्भागः कलांशकः षोडशांशः। मतांतरमाह। इतरैरन्यैराचार्यैः राशिषु यः षष्ट्यंशः सोऽपि कलांशकः षोडशांशः स्मृतः कथित इति ॥ ५ ॥६॥७॥ फलितमाह भाग्यादितिसार्धेन। भाग्यात् लग्नचंद्राभ्यां नवमभावात् त्रिकोणोपगतैः पंचमनवमस्थानस्थैः केंद्रोपगतैः प्रथमचतुर्थसप्तमदशमस्थानस्थैश्च शुभैः ग्रहैः शुभं भाग्यं स्यात् भाग्यवृद्धिरित्यर्थः तथा लग्नचंद्राभ्यां नवमात् त्रिकोणकेंद्रगतैः पापैस्तु अशुभं भाग्यं भाग्यहानिरित्यर्थः तत्र मित्रादिभिः मित्रस्वक्षेत्रोच्चादिसंबंधेन तु विशिष्टात् पूर्वोक्तविशेषानियमः तत्रतत्रस्थे पापेऽपि भाग्यवृद्धिः मित्रादिक्षेत्रस्थत्वादिति भावः एवं प्रकारेण भावानां संबंधिनौ भाग्यविपर्यासौ भाग्यवृद्धी भाग्यहानी तथा उक्तप्रकारेण वदेत्कथयेदिति ॥ ८ ॥ अथ भावफलसमान्याह भावेतिसार्धश्लोकेन। भावग्रहांतरकलाः भावग्रहयोः अंतरं विवरं कृत्वा तस्य कलाः कृत्वा ताः द्विशत्याप्ताः

## भाषा।

बीससे भाग लेना उसकू षोडशांश कहते हैं ॥ ५ ॥ ६ ॥ ७ ॥ अब भाग्यस्थानका विशेष फल कहते हैं. लग्नचंद्रसे जो नवम घरमें वहांसे ५।९।१।४।७।१० घरमें शुभग्रह होवे तो भाग्योदय उत्तम जानना. और जो ऊपर लिखे हुवे घरोंमें पापग्रह होवे तो भाग्यकी हानि जानना. परंतु वहां विशेष ग्रह हैं कि पूर्वोक्त घरोंमें बैठे हुये ग्रह स्वराशीके मित्रराशीके उच्चके होवे तो अति उत्तम फल देवेंगे. नीचादिकके होवे तो नष्ट फल देवेंगे ॥ ८ ॥ अब भाग्योदयादिक भावफल कौनसे वर्षमें होवेगा उसका निर्णय कहते हैं. भावका और ग्रहोंका अंतर करके उसकी

मादयः ॥ ९ ॥ द्विघ्नादिघ्नाः करघ्नाश्च षष्ट्याप्ताश्च समादयः ॥ अथेष्टादिफलघ्नं च समयो भाग्यभावयोः ॥ १० ॥ फलेन च दशघ्नेन रश्मिना च हृतास्तथा ॥ भावाष्टवर्गोत्थसमा- हितत्तद्ग्रहांतरोत्थास्तु समादयः स्युः ॥ ११ ॥ तत्तद्ग्रह- होत्थाब्दहृतास्तथा स्युरेवं तथा भाग्यफलानि तत्र ॥ स्थानानि नव वर्गाश्च तेषां भाग्यफलं शृणु ॥ १२ ॥

## टीका ।

अलद्वयेन भक्ताः फलं समादयः वर्षमासदिनादि स्यात् ते समादयः द्विधा स्थाप्याः एकत्र द्विघ्ना द्विगुणिताः षष्ट्याप्ताः फलं समादयः तत्समादिकं इ- ष्टादिफलघ्नं कृत्वा भाग्यभावयोः समयः भवति ॥९॥१०॥ अथ प्रकारांतरेण [illegible]नयनमाह फलेनेति । दशघ्नेन दशगुणितेन फलेन भावग्रहांतरफलेन [illegible] गुणिताः ततः रश्मिना तत्तद्ग्रहरश्मिना च हृताः भावाष्टवर्गोत्थसमाः तत्तद्ग्रहांतरोत्था तत्तद्ग्रहभावांतसमुत्पन्नाः स्पष्टतराः समादयः स्युरिति॥११॥ [illegible]येनाह तत्तदिति । एवं सर्वेषां भावानां अब्दादयः तत्तद्ग्रहोत्थाब्दहृ- ताः यथा स्युः स्पष्टा स्युरिति । अथ तत्र फलानि तु कथं ज्ञेयानि ग्रहाणां स्थानानि नववर्गाश्च संति तेषां संबंधि भाग्यं फलं शृणु कथयामीत्यध्याहा- रः ॥ १२ ॥ अथोच्चादिस्थानविशेषेण फलविशेषं क्रमाद्व्यादीनामाह तत्रा-

## भाषा ।

कला करके २०० से भाग लेना. लब्ध वर्षमासदिनादिक जानना. पीछे ग्रहवर्षा- दिकोंकू द्विगुणित करके दो ठिकाने लिखना. पीछे एक ठिकानेकेवर्षादिकोंको द्विगुणित करके ६० से भाग लेना लब्ध जो वर्षादिक फल उसका और पूर्व जो स्थापित अंक हैं उसमें अंतर करना जो शेष वो भाग्यभावका समय जानना ॥ ९ ॥ १० ॥ अब प्रकारांतर कहते हैं. ग्रहभावका अंतर करके जो शेष फल उसकूं द- शगुणित करके फेर उसकूं वो ग्रहकी रश्मीसे भाग लेना. शेष वर्षादिक भाग्यस- मय जानना. अथवा अष्टवर्गोत्थ वर्षोंसे भाग्योदयका फल कहना ॥ ११ ॥ इस रीतिसे सर्वभावका फलप्राप्तिसमय वे वे भावाधिपतिके संबंधसे ऊपर लिखी हुई रीतिसे कहना. और भाग्यफलका विशेष निर्णय नववर्गसे कहना ॥ १२ ॥ अब

रव्यादीनां क्रमाच्छृंगचामरादेश्च विक्रये ॥ कृषिकर्मणि सेवायां पैशुन्ये लिपिकर्मणि ॥ १३ ॥ धनार्जने व्यये व्याधौ गमनागमविक्रये ॥ विवादे प्रेतकार्ये च भ्रातृणां कलहे तथा ॥ १४ ॥ धनार्जने सुते दारग्रहणे लिपिकर्मणि ॥ उच्चादिस्थानवर्गेषु लाभदश्च रविः क्रमात् ॥ १५ ॥शृंग-

## टीका।

दौ रविफलमाह रव्यादीनामित्यादिपंचदशश्लोकपर्यंतम् । रविः सूर्यः उच्चादिस्थानवर्गेषु उच्चादीनि उच्चत्रिकोणस्वर्क्षमित्रर्क्षादीनि स्थानानि राशय इत्यर्थः तथा तेषां वर्गाः ग्रहादयः षट् उच्चवर्गस्वत्रिकोणवर्गस्वराशिवर्गस्वमित्रराशिवर्गादयः तेषु वर्तमानः एवं फलदो भवति तान्येव फलान्याह शृंगविक्रये लाभद एवं पदं सर्वत्र १ चामरादि राजचिन्हविक्रये, २ कृषिकर्मणि स्पष्टम् , ३ सेवायां, ४ पैशुन्ये, "पिशुनो दुर्जनः खलः" इत्यमरः। पिशुनस्य दुर्जनस्य कर्म पैशुन्यं तस्मिन् , ५ लिपिकर्मणि, लेखनक्रियायां, ६ धनार्जने द्रव्यसंपादने, ७ व्यये द्रव्यवितरणे, ८ व्याधौ रोगे, लाभदत्वं रोगनाशनेत्यर्थः, ९ गमनागमविक्रये, गमनागमनाभ्यां यो विक्रयः तेन, नत्वेकस्थानस्थित्येत्यर्थः, १० विवादे, ११ प्रेतकार्ये, १२ भ्रातृणां संबंधि कलहे, १३ धनार्जने, १४ सुते, संततावित्यर्थः, १५ दारग्रहणे विवाहे, १६ लिपिकर्मणि, १७ इति रविफलानि ॥ १३ ॥ १४ ॥ १५ ॥ अथ कलांशार्धहोराभ्यां स्वरा-

## भाषा।

सूर्यादि ग्रहोंका उच्चादिकके अनुसारसे फलविशेष कहते हैं. उसमें प्रथम सूर्यका कहते हैं. सूर्य उच्च, त्रिकोण, स्वराशी, मित्रराशी, अधिमित्रराशीका होवे या उच्चादिक राशीके वर्गमें होवे तो क्रमसे नीचे लिखे हुवे पदार्थोंका विक्रय करनेमें लाभ होवेगा. शृंग १, चामरादि राजचिन्ह २, कृषिकर्म ३, सेवा ४, दुर्जनकर्म ५, लिपिकर्म ६, धनसंपादन ७, रोगनाशनकर्म ८, द्रव्यवितरण ९, गांवगांव फिरके माल बेचना १०, विवाद ११, प्रेतकार्य १२, भ्रातृकलह १३, पुत्रसे १४, धनार्जन १५, विवाह १६, लेखनकर्म १७, यह १७ कर्मकरनेमें द्रव्यलाभ होवेगा. इतिसूर्यफलम् ॥ १३॥ १४॥ १५॥ अब चंद्र उच्चादि राशीका होवे वा उच्चादिराशी-

माणिक्यमुक्तानां लाभे तत्क्रयविक्रये ॥ सुरते स्त्रीषु मैत्रे च राज्ञः पुरुषमित्रता ॥ १६ ॥ धनायतिस्तथा तत्र मैत्रं च कृषिकर्मणि ॥ वस्त्रादिधनसिद्धिश्च ब्राह्मणेन विरोधता ॥ १७ ॥ धननाशो भवेद्युद्धे पराजयपराभवौ ॥ कलांशा द्यर्धहोरांशफलानि क्रमशः स्थिते ॥ १८ ॥ स्वर्णसिद्धिर्जयो वस्त्रलाभो मित्रसमागमः ॥ विवादो भ्रातृभिः शत्रु-

## टीका ।

शिस्ववर्गस्वचंद्रस्य फलान्याह शंखेत्यादिअष्टादशश्लोकपर्यंतम् । कलांशाद्यर्धहोरांशफलानि एवं वक्ष्यमाणानि ज्ञेयानि कदा कलांशादिषु स्थिते वर्तमाने चंद्रे इति प्रकरणक्रमप्राप्तोर्थः शंखादीनां लाभे १, तत्क्रयविक्रये तेषां शंखमाणिक्यमुक्तानां क्रयविक्रयकर्मणि २, सुरते मैथुने ३, स्त्रीषु रामासु मैत्रे स्नेहे लाभद इत्यर्थः ४, तथा राज्ञः पुरुषमित्रता समासाभाव आर्षः राजपुरुषमित्रतेत्यर्थः ५, धनायतिः धनलाभः ६, तथा तत्र लाभे कृषिकर्मणि च मैत्रं स्नेहः स्यात् ७, वस्त्रादिधनसिद्धिः ८, ब्राह्मणेन विरोधता द्विजजातिविरोधः ९, युद्धे धननाशः तथा पराजयपराभवौ पराजयः स्वोत्कर्षहानिः पराभवः स्वदेशद्रव्यबलादिहानिः १०, इति फलं भवेत् इति चंद्रफलानि ॥ १६ ॥ १७ ॥ १८ ॥ अथ भौमफलानि स्वर्णसिद्धिरित्यादिसार्धद्वाविंशतिश्लोकपर्यंतम् । स्वर्णसिद्धिः १, जयः २, वस्त्रलाभः ३, मित्रसमागमः ४, भ्रातृभिर्विवादः ५, शत्रुकर्म शत्रुकृत्यं ६, स्त्रीचंचलाक्षकः स्त्रीषु चंचलने-

## भाषा ।

के वर्गमें होवे तो क्रमसे नीचे लिखे हुवे पदार्थोंमें लाभ होवेगा. शंखादिक्रयविक्रय १, मैथुन २, स्त्रीमैत्री ३, राजपुरुषमित्रता ४, धनलाभ ५, कृषिकर्म ६, वस्त्रादिव्यापार ७, ब्राह्मणविरोध ८, स्वोत्कर्षहानि ९, स्वदेशद्रव्यबलादिहानि १०, यह फल होवे. इतिचंद्रफलम् ॥१६॥१७॥१८॥ अब मंगलका फल कहते हैं. मंगल उच्चादि राशिका होवे अगर उच्चादि वर्गका होवे तो क्रमसे नीचे लिखा हुवा फल जानना. सुवर्णसिद्धि १, जय २, वस्त्रलाभ ३, मित्रसमागम ४, बंधुविवाद ५, शत्रुकर्म ६,

कर्म स्त्रीचंचलाक्षकः ॥ १९ ॥ स्त्रीलाभो दासलाभश्च कृत्स्नेहा च बलक्षयः ॥ बलेर्धनायतिः स्वोच्चे क्षेत्राद्यैर्न्यायतो भवेत् ॥ २० ॥ मूलत्रिकोणे क्षेत्रेण राज्ञो वाथ धनायतिः ॥ स्वर्क्षे वस्त्रं कांचनादिसिद्धिश्चाथ सुहृत्फलम् ॥ २१ ॥ धान्यायतिश्च मैत्री च क्रूरकर्मप्रवर्तनम् ॥ कुष्ठं चाप्यग्निभीतिश्च गृहदाहोऽतिशत्रुभे ॥ २२ ॥ ग्रहणी

## टीका।

त्रः ७, स्त्रीलाभः ८, दासलाभः ९, कृत्स्नेहा सर्वेच्छा १०, बलक्षयः ११, बलेः धनायतिः धनप्राप्तिः १२, एवं फलानि भाग्यगे स्वोच्चस्थे स्वक्षेत्राद्यैर्युते वा भौमे न्यायतः न्यायेन स्युः तत्रस्थे मूलत्रिकोणगे भौमे क्षेत्रेण कृषिणा राज्ञः सकाशाद्वा धनायतिः धनप्राप्तिः स्यात्। भाग्यगे स्वर्क्षे वर्तमाने तु वस्त्रकांचनादिसिद्धिः। अथ सुहृत्फलं भाग्यस्थसुहृत्क्षेत्रवर्तमानभौमस्य फलं तु धान्यायतिः धान्यानां प्राप्तिः मैत्री इति अथ भाग्यस्थाऽतिशत्रुभे भौमे सति क्रूरकर्मप्रवर्तनं कुष्ठं अग्निभीतिः गृहदाहः ग्रहणी संग्रहणी गुल्मरोगश्चेति व्याधयः स्युः धननाशश्च स्यात् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अथ भाग्यगतबुधफलान्याह विद्येत्यादिपदाधिकसार्धाष्टाविंशतिश्लोकपर्यंतम्। विद्यार्जने विद्यासंपादने १, सुखे सुखप्राप्तौ २, इष्टफलद इत्यर्थः

## भाषा।

स्त्रीविषयमें चंचलनेत्र ७, स्त्रीलाभ ८, दासलाभ ९, सर्वइच्छा १०, बलक्षय ११, बलकरके धनप्राप्ति १२, इतना फल मंगल उच्चस्वक्षेत्रका होवे तो जानना. और जो मंगल भाग्यमें मूलत्रिकोणराशिका होके बैठा होवे तो कृषिकर्मसे वा राजाके निमित्तसे धन मिले. जो मंगल स्वराशिका होके भाग्यमें होवे तो वस्त्रसुवर्णादिकका लाभ जानना. जो मंगल मित्रराशिका होके भाग्यमें बैठा होवे तो धान्यप्राप्ति बहुत होवे. जो मंगल अधिशत्रु राशिका होके भाग्यमें बैठे तो क्रूरकर्ममें प्रवृत्त करे. अग्निभय, कुष्ठ, संग्रहणी, गुल्म आदि रोग होवे धननाश होवे ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अब भाग्यस्थानगत बुधका फल कहते हैं. बुध उच्चराशिका होयके भाग्यके घरमें होवे तो विद्यासंपादन करनेमें और सुखप्राप्ति करनेमें फलप्राप्ति होवे.

गुल्मरोगश्च धननाशश्च तत्र तु ॥ विद्यार्जने सुखे स्त्रीभिः कलहश्च धनायतिः ॥ २३ ॥ क्षेत्रदासादिलाभं च कृषिकृत्यं धनायतिः ॥ विवादो बंधुभिर्युद्धे जयश्चैव पराजयः ॥ २४ ॥ विद्याबुद्धिधनक्षेत्रयशांसि च फलंति च ॥ राज्ञस्तत्पुरुषेणैव स्वर्णक्षेत्रायतिस्तथा ॥ २५ ॥ स्वर्क्षे ध-

टीका।

शत्रुराशिगतभाग्यस्थे बुधे स्त्रीभिः कलहः ३, मित्रराशिगतभाग्यस्थे बुधे तु धनायतिः धनलाभः ४, क्षेत्रदासादिलाभः ५, कृषिकृत्यं ६, धनायतिः ७, नीचादिस्थे बंधुभिर्विवादः ८, युद्धेऽजयः जयाभावः ९, पराजयः पराभवः १०, उच्चादौ विद्याबुद्धिधनयशांसि, फलंति ११, राज्ञः नृपात्तथातत्पुरुषेण राजपुरुषयोगेन स्वर्णक्षेत्रायतिः स्वर्णभूमिलाभः १२, स्वर्क्षे सति लिपिना लिपिकर्मणा शिल्पकर्मणा शिल्पकृत्येन च धनायतिः द्रव्यलाभः १३, वस्त्रस्वर्णादिलाभः१४, राजस्त्रीभिः धनायतिः राजस्त्रीयोगेन धनागमः १५, उदासीनक्षेत्रस्थे तु कायस्य कर्मणा साक्षाच्छारीरकृत्येन आयः धनप्राप्तिः १६, अतिशत्रुस्थो विद्यानाशः १७, स्वकर्मणा निजव्यापारेण धननाशः १८, अश्मरी रोगविशेषः १९, कुष्ठं २०, कलांशादि फलं स्वषोडशांशादिवर्तमानफलं तु बंधुभिर्विवादात् दायः स्वभागप्राप्तिः २१, देशपर्यटनात् धनं लभेत् २२, क्षेत्रसिद्धिः २३, जयः २४, विद्यालाभः २५, धान्यविवर्धनं २६, कृषिकर्मसमुद्योगः २७, सेवाकरण-

भाषा।

शत्रुराशिका होके बैठे तो स्त्रियोंसें कलह. मित्रराशिका होवे तो धनलाभ. क्षेत्रदासादिकका लाभ. खेतीमें लाभ. नीचराशिका होवे तो बंधुविरोध, युद्धमें हानि, पराभव होवे. उच्चादिकका होके बैठे तो विद्या बुद्धि धन यश स्वर्ण भूमि राजपुरुष इनोंसें लाभ होवे. स्वराशिका होवे तो लेखनकर्मसे, शिल्पकर्मसे, राजस्त्रीयोगसे, वस्त्र स्वर्णादिकसे, धनप्राप्ति होवे. समराशिका होके बैठे तो शरीरकृत्यसे धनप्राप्ति. अधिशत्रुका होवे तो विद्यानाश. व्यापारमें नाश. अश्मरीरोग. कुष्टरोग होवे. अपने षोडशांशमें होवे तो बंधुविवादमें धनप्राप्ति, और देशांतर फिरनेसे धन प्राप्त होवे. क्षेत्र-

नायतिः प्रोक्ता लिपिना शिल्पकर्मणा ॥ वस्त्रस्वर्णादिसि-
द्धिश्च राजस्त्रीभिर्धनायतिः ॥ २६ ॥ कायस्य कर्मणा लाभो
विद्यानाशः स्वकर्मणा ॥ धननाशोऽश्मरी कुष्ठं कलांशा-
दिफलं ततः ॥ २७ ॥ विवादाद्बंधुभिर्द्रोयो देशपर्यटनाद्ध-
नम् ॥ क्षेत्रसिद्धिर्जयो विद्यालाभो धान्यविवर्धनम् ॥२८॥
कृषिकर्मसमुद्योगः सेवाकरणकौशलम् ॥ विद्यार्जनमथ

## टीका ।

कौशलं सेवाकृत्यकुशलत्वं २८, विद्यार्जनं विद्यासंपादनं चेति बुधफलानि ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अथ भाग्यगतगुरुफलमाह अथेत्यादिसार्धैकत्रिंशच्छ्लोकपर्यंतम् । अथानंतरं गुरोः फलं प्रोक्तं भाग्यस्थस्येति शेषः श्रीमान् लक्ष्मीवान् १, सुखी २, गुणी गुणाः दयादाक्षिण्यादयः संति यस्येति तथा ३, बव्हापतिः बहुप्राप्तिः भवेदित्यर्थः ४, अमात्यत्वं प्रधानत्वं ५, सर्वसंपत्समन्वितः स्पष्टं ६, अत्र शत्रुक्षेत्रगतस्य फलं धननाशः द्रव्यनाशः ७, प्रमोहेण प्रमादेनेत्यर्थः क्षेत्रनाशः ८, पराभवः पराजयः ९,अथ मित्रक्षेत्रस्थभाग्यगतगुरुफलं विद्यार्जनं विद्यासंपादनं १०, तथा सेवाकरणं दास्याचरणं ११, अथाधिमित्रक्षेत्रस्थस्य फलं संपदः ऐश्वर्याणि १२, पुत्रैः मित्रैश्च धनायतिः द्रव्यागमः १३, स्त्रीभिः तथा कृतकर्मणा आचरितव्यापारेण च धनप्राप्तिः १४, विवाहः १५, धनलाभः १६, क्रमात् एवमुक्तम-

## भाषा ।

सिद्धि होवे. जय होवे. विद्यालाभ. धान्यवृद्धि, खेतीका उद्योग, सेवकीका कर्ममें कुशलता. विद्यासंपादनमें कुशलता होवे इतिबुधफलम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥ गुरु भाग्यमें होवे तो लक्ष्मीवान् १, सुखी २, गुणवान् ३, बहुतप्राप्ति ४, प्रधानपना ५, सर्वसंपत्तिवान् ६, होवे. शत्रुराशिका होवे तो द्रव्यनाश ७, क्षेत्रनाश ८, पराजय ९, होवे. मित्रराशिका होवे तो विद्यासंपादन करना १०, सेवा करना. अधिमित्रका होवे तो ऐश्वर्यप्राप्ति पुत्रमित्रादिकनसे धनप्राप्ति. स्त्रीनिमित्तसे धनप्राप्ति. विवाह इत्यादि मार्गोंसे धन मिले. इतिगुरुफलम्

प्रोक्ते गुरोः श्रीमान् सुखी गुणी ॥ २९ ॥ बव्हायतिरमात्यत्वं सर्वसंपत्समन्वितः॥ धननाशः प्रमोहेण क्षेत्रनाशः पराभवः ॥ ३० ॥ विद्यार्जनं तथा सेवाकरणं संपदस्तथा॥ पुत्रैर्धनायतिर्मित्रैः स्त्रीभिश्च कृतकर्मणा ॥ ३१ ॥ विवाहो धनलाभश्च क्रमादेवं फलं वदेत् ॥ राज्ञां कृत्यकरः श्रीमान्पुत्रबंधुसमन्वितः ॥ ३२ ॥सेनानाथस्तथामात्यो विद्या-

## टीका।

कारेण फलं वदेत् कथयेदिति ॥ २९ ॥ ३० ॥ ३१ ॥ अथ भाग्यगतशुक्रफलमाह राज्ञामित्यादिपंचत्रिंशच्छ्लोकपर्यंतम्। राज्ञां नृपाणां कृत्यकरः कर्मकर्ता १, श्रीमान् २, पुत्रबंधुसमन्वितः स्पष्टं ३, सेनानाथः सेनापतिः ४, तथाऽमात्यः प्रधानः ५, विद्यार्जनपरः विद्यासंपादनोत्सुकः ६, धनी द्रव्यवान् ७, पाठकः अध्यापकः ८, याजकः, ऋत्विक् ९, बहुस्त्रीकः बव्ह्यः स्त्रियो यस्य सः तथा १०, अतिशत्रुमेऽतिशत्रुक्षेत्रस्थे सति फलमाह। स्त्रीसक्तः स्त्रीलालसः ११, निर्धनः दरिद्रः १२, मूर्खः बुद्धिशून्यः १३, पातकी दोषी १४, भारकः भारवाहक इत्यर्थः भवेत् १५, स्वक्षेत्रस्थफलमाह राज्ञः भूपस्य सेनाधिकारी सैन्याधिकारवान् १६, प्रियैः इष्टैः बंधुभिः बांधवैश्च आयतिः इष्टप्राप्तिः १७, सेवावृत्त्याऽन्यसेवाचरणेन तथा कृष्या कृषिकर्मणा विद्यया वेदशास्त्रप्रभृत्या पूर्तकर्मणा खातादिकृत्येन च सर्वसंपद्युतः अखिलसंपत्तिसहितः स्यात् १८, श्रीमांश्च १९, एवं प्रकारेण शुक्रस्य फलंभवेदिति ॥ ३२ ॥ ३३ ॥

## भाषा।

॥२९॥ ३० ॥३१॥ अब शुक्रका फल कहते हैं:—शुक्र उच्चादिकका होके भाग्यमें होवे तो क्रमसे राज्यकार्य करनेवाला १, लक्ष्मीवान् २, पुत्रसे भाइयोंसे सुखी ३, सेनापति ४, प्रधान ५, विद्यासंपादन करनेमें बहुत सुखी ६, धनवान् ७, अध्यापक ८, ऋत्विक् ९, बहुत स्त्रियोंसे युक्त १०, होवे. अधिशत्रुराशिका होके बैठे तो स्त्रीलालसी ११, दरिद्री १२, बुद्धिहीन १३, पातकी १४, भारवाहक १५, होवे. स्वक्षेत्रका होवे तो सेनाधिकारी १६, प्रियबांधवोंसे इष्टप्राप्ति १७, दूसरेकी सेवा करनेसे १८, कृषिकर्मसे १९, विद्यासे २०, इष्ट, पूर्त बावी कूप तला-

अनपरो धनी ॥ पाठको याजकश्चाथ बहुस्त्रीकोऽतिशत्रुभे ॥ ३३ ॥ कांसको निर्धनो मूर्खः पातकी मारको भवेत् ॥ सेनाधिकारी राज्ञश्च प्रियैर्बन्धुभिरायतिः ॥ ३४ ॥ सेवाह-स्या च कृष्या च विद्यायाः पूर्तकर्मणा ॥ सर्वसंपद्युतः श्रीमान् शुक्रस्यैवं फलं लभेत् ॥ ३५ ॥ कुजोच्चादि फलं चार्केः कलांशादिफलं भवेत् ॥ कलांशादिषु यत्प्रोक्तं कलांशादि फलंत्विदम् ॥ ३६ ॥ उच्चादिषु तथा प्रोक्तं फलमेवं

## टीका ।

॥ ३४ ॥ ३५ ॥ अथ शनिफलमाह कुजेतिसार्धेन । कुजोच्चादिफलं यत्कुजस्य उच्चादिवर्तमानस्य शुभफलमुक्तं तदेव आर्केः शनैश्चरस्य कलांशादिफलं षोडशांशादिवर्तमानफले भवेज्जानीयादित्यर्थः कुजस्य कलांशादिषु षोडशांशादिषु यत्फलं प्रोक्तं तदेव शनेः कलांशादिवर्तमानस्य फलं भवेत् तथा कुजस्य उच्चादिषु यत्प्रोक्तं तदेव उच्चादिवर्तमानस्य शनेः एवं फलं विचिंतयेदिति ॥ ३६ ॥ एवं भाग्यस्थानगतग्रहवशात्फलान्युक्त्वाऽथ तत्तत्फलागमकालं नवांशतारतम्येनाह स्वभाग्येत्यादिसार्धत्रिचत्वारिंशच्छ्लोकपर्यंतम् । स्वभाग्यर्क्षगतान् स्वस्य यत् भाग्यर्क्षं भाग्यराशिः तत्र गतान् वर्तमानान् ऋक्षान् नवांशराशीन् ततः न्यूनान् अधिकान्वापि वर्तमानान् स्वरश्मिघ्नान् स्वकीयरश्मिगुणितान् कृत्वा भाग्यर्क्षे ग्रहयुक्ते सति तथा तद्रश्मिघ्नान् तस्य ग्रहस्य रश्मिभिर्गुणितान् कृत्वा उत्तरमनंतरं त्रिभिर्विभज्य त्रिसंख्यया भागमाहृत्य

## भाषा ।

वादिकर्मसे२ १, सर्वसंपत्तिवान् होवे श्रीमान् होवे इति शुक्रफलम्॥३२॥३३॥३४ ॥ ३५ ॥ अब शनिका फल कहते हैं. शनिका फल पहिले जो मंगलके विषयमें लिखा है वोई जानना ॥ ३६ ॥ पूर्व जो भाग्यस्थानका फल कहा है उस फलकी प्राप्ति कोन समयमें होवेगी वा समयका ज्ञान अब कहते हैं. भाग्यस्थानकी नवांश राशिको भाग्यभावकी रश्मिसे गुणन करके और वहां जो ग्रह बैठा होवे वो ग्रहकी रश्मिसे गुणन करना पीछे तीनसे भाग लेना. शून्य शेष रहे ताका फल

विचिंतयेत् ॥ स्वभाग्यर्क्षगतान्लक्षान्यूनांश्चाप्यधिकांस्ततः ॥ ३७ ॥ स्वरश्मिघ्नान् ग्रहे युक्तेस्तद्रश्मिघ्नांस्तथोत्तरम् ॥ त्रिभिर्विभज्य निःशेषे त्वोजराशौ नवांशके ॥ ३८ ॥ आदिमध्यावसाने स्याद्युग्मे तत्र नवांशके ॥ आदौ मध्येवसाने स्याद्युग्मे चौजे नवांशके ॥ ३९ ॥ मध्येवसाने चाद्ये च युग्मे मध्यांतिमादिमे ॥ आदौ मध्येवसाने स्यादेवं चेद्भाग्यलक्षणम् ॥ ४० ॥ ओजराशौ नवांशे चेद्युग्मे मध्यांतिमादिमे ॥ युग्मे राशौ नवांशे चेदोजे मध्येऽन्तिमेऽपि

## टीका।

निःशेषे शेषरहिते सति ओजराशौ विषमराशौ आदिमध्यावसाने युग्मे नवांशे सति आदौ मध्येऽवसाने वा यथाक्रमं भाग्यफलं ज्ञेयम् तथा युग्मे राशौ ओजनवांशके मध्येऽवसाने आद्ये सति मध्यमांत्यप्रथमे सति अथवा युग्मे राशौ मध्यांतिमादिमे मध्यमांतिमे प्रथमे युग्मे नवांशके सति च आदौ मध्येवसाने वा चेत् क्रमात् भाग्यलक्षणं एवं स्यात् एवमेव ओजराशौ मध्यांतिमादिमे मध्यमांतिमप्रथमे युग्मे नवांशे सति अथ वा युग्मे समे राशौ मध्ये मध्यमेऽतिमे प्रथमे वा ओजे विषमे नवांशे सति तथा युग्मे राशौ मध्यांतिमादिमे नवांशे सति च एवं पूर्वोक्तकाले फलं ज्ञेयम् एतत् त्रिभागे गृहीते शून्यावशेषे सति ज्ञेयं अथ च त्रिभागग्रहणानंतरं एकं द्वयं वा शेषं स्याचेद्व्यत्यासतः वैपरीत्येनेत्यर्थः कालः भाग्यसमयः भवेत्स्यात् अथ चरमे भाग्यगतचरलग्ने कलाभ्यां भाग्यकलासंयुक्तग्रहकलाभ्यां हते गुणिते तद्व्लागवत् त्रिभिर्विभज्येत्यर्थः चरार्द्धंशे चरस्थिराद्विःस्वभावसंज्ञके प्राप्तेऽर्थादादौ मध्येऽवसाने फलं स्यात्तथा स्थिरे स्थिरलग्नेऽन्ते मध्यमादिमेऽवसाने मध्ये आ-

## भाषा।

कहते हैं. भाग्यस्थानकी विषमराशि होवे तो आद्य मध्य अवसानमें चरादिक क्रमसे फल जानना और युग्म नवमांश होवे तो आद्य मध्य अवसानमें फल जानना. तथा भाग्यराशी युग्म होय और नवमांश विषम होवे तो मध्य अंत आद्यमें फल जानना. और युग्मराशि युग्मनवमांश होवे तो मध्य अंत आदिमें और आदि म-

च ॥ ४१ ॥ प्रथमेपि वयस्येवं युग्मे मध्येऽतिमादिमे ॥ शेषं द्वयं चेदेकं स्यात्कालो व्यत्यासतो भवेत् ॥ ४२ ॥ कलाभ्यां च हते तद्वत्चराद्यंशे चरे च भे ॥ आदौ मध्येवसाने स्यात्स्थिरेऽन्ते मध्यमादिमे ॥ ४३ ॥ उभये मध्यमेऽन्ते च आदावेवं प्रकीर्तिताः ॥ भावानां चैव सर्वेषां चंद्रलः । तु लग्नतः ॥ ४४ ॥ अंशदायोक्तवत्कृत्वा शुभपापदृगाहतम् ॥ षष्ट्याप्तं तद्वलासंस्याद् भ्रात्रादीनां च संस्यका ॥ ४५ ॥ रश्मिघ्नं च बलाप्तं च त्वनिष्टमपवादकम् ॥ ४६ ॥

## टीका ।

दौ चेत्यर्थः फलं बोध्यम् तथा उभये द्विःस्वभावलग्ने मध्यमेऽन्ते आदौ च फलं स्यात् एवं प्रकीर्तिताः अंशा इत्यर्थः इति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ अथ भ्रात्रादिसंख्यामाह भावानामित्यादियावदध्यायसमाप्ति अथ सर्वेषां भावानां चंद्रलग्नाचंद्रराशेः तथा लग्नतःजन्मलग्नाच्च विचारः कर्तव्यः स तु अंशदायोक्तवत्कृत्वा प्रागुक्तांशायुर्दायवत् गणितं विधाय ततः शुभपापदृगाहतं एकत्र शुभदृष्टिहतं एकत्र पापदृष्टिहतं च कृत्वा तत्क्रमात्षष्ट्याप्तं तथा तद्वलाप्तं भावबलाप्तमित्यर्थः प्राप्तफलं भ्रात्रादीनां शेषसंख्या नष्टसंख्या च ज्ञेया अथ च तदेव अंशदायोक्तवत्कृतमेव रश्मिघ्नं रश्मिगुणितं ततः बलाप्तं बलभाजितं फलं अनिष्टं अपवादकं शुभं च ज्ञेयमिति ॥ ४४ ॥ ४५ ॥ ४६ ॥ एवं त्रयोदशाऽध्याये कृता टीका यथामति ॥ गणे-

## भाषा ।

ध्य अंत्य क्रमसे भाग्यफल जानना. यह विषय टीकामें स्पष्ट किया है ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अब द्वादश भावोंका विचार कहते हैं. चंद्रलग्नसे करना, और जन्मलग्नसेभी करना. पहिले जैसा अंशायुर्दाय लाते हैं, वैसा गणित करके दो ठिकानें लिखके एक ठिकानें शुभदृष्टियोगसे गुणना, अन्यत्र पापदृष्टियोगसे गुणना. पीछे दोनों ठिकानें ६० से भाग लेना. वैसा भावबलसे भागलेना. शेष रहे सो भावबंधकी संख्या जाननी. अन्यप्रकार पूर्वोक्त

इति श्रीबृहत्पाराशरहोरायामुत्तरभागे कलांशादिफले त्र-
योदशोऽध्यायः ॥ १३ ॥

नाडीद्वयं मुहूर्तः स्याद्विनाडीद्वयमेव च ॥ रवेरुदयतो
मेषात्सर्वजितः क्रमात्स्मृतः ॥ १ ॥ आर्द्राश्लेषानुराधाश्च

## टीका।

शप्रीतये सा च शोधनीया बुधैर्मुदा ॥ १ ॥ इति बृ०उत्तरभागे श्रीमद्व्यङ्क-
चयवेदशाज्ज्योतिर्विच्छ्रीधरेण वि०सु०टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

अथो चतुर्दशाऽध्याये गणेशप्रेरितो ह्यहम्॥कुर्वे यथामति व्याख्यां विद्वां-
सः शोधयंत्विमाम् ॥ १ ॥ अथ भगवान् पराशरो महर्षिः चतुर्दशेऽस्मिन्नध्या-
ये वर्षचर्यामुपादिदेश। तत्रादौ मुहूर्तलक्षणमाह नाडीत्यर्द्धेन । नाडीद्वयं
घटिकाद्वयं मुहूर्तः स्यान्मुहूर्तो भवति एतत्सामान्यमानं त्रिंशद्घटिकात्मक-
दिनमानविषयं ज्ञेयम् । न्यूनातिरिक्तदिनमाने तु विनाडीद्वयं तद्यथा त्रिंश-
द्घट्यूनदिनमाने कतिचिद्विगतपलनाडीद्वयं तथा त्रिंशद्घट्यधिकदिनमाने
तु तत्तारतम्येन विशेषपलसहितनाडीद्वयं मुहूर्तो भवतीति भावः एवमेव रा-
त्रिमानतारतम्येन मुहूर्तलक्षणं ज्ञेयमिति । अथ लग्नान्याह रवेरितिपादेन ।
रवेः सूर्यस्य उदयतः औदयिकलग्नमारभ्य इत्यर्थः मेषात्सकाशान्मीनपर्यंतं
क्रमेण द्वादशलग्नानि पुनरुदयपर्यंतं भवंतीति भावः अथोक्तनाडीद्वयमुहूर्तेषु
प्रत्यहं दिवा पंचदशरात्रौ पंचदशेति त्रिंशन्नक्षत्रसंज्ञा आह सर्वजितइत्यादि-

## भाषा।

गणितकूं रश्मिगुणित करके भावबलसे भाग लेना. शेष शुभाशुभ फल जानना
॥ ४४ ॥ ४५ ॥ ४६ ॥ इति बृ० त्रयोदशोध्यायः ॥ १३ ॥

अब मुहूर्तलक्षण कहते हैं. दो घडीका एक मुहूर्त होता है. सर्व दिनके मुहूर्त
१५ रात्रिके मुहूर्त १५ कम जास्त नहीं होते. इसवास्ते दो घडीका मुहूर्तप्रमाण
लिखा, परंतु दिनमानकी वृद्धि होनेसे मुहूर्तके दोघडीमें जास्त कम होताहै. अब
लग्नमान कहते हैं. सूर्य जिस राशिका होता है ओई लग्नका प्रथम उदय होता है.
पीछे अपने अपने क्रमसे दूसरे दिनके प्रातःकालपर्यंत बारह लग्न मुक्त होजाते हैं
॥ १ ॥ अब दिनरात्रिके मुहूर्त ३० हैं उसके नाम कहते हैं. दिनके जो पंधरा १५

मघाश्चाथ धनिष्ठिकाः ॥ उत्तराषाढसंज्ञश्च सर्वजिद्रोहिणी तथा ॥ विशाखाश्च ततो ज्येष्ठा मूलं च शततारकम् ॥ भरणीपूर्वफाल्गुन्यौ विश्वजिच्च ततो भवेत् ॥ ३ ॥ उत्तराप्रोष्ठपाच्चैव रेवती च ततः परम् ॥ अभिजिच्चोत्तरा चाथ कृत्तिका रोहिणी ततः ॥ ४ ॥ मूलं च रोहिणी चाथ मृगशीर्षं च हस्तकम् ॥ पुष्यं च श्रवणो हस्तचित्रास्वातीः क्रमात्स्मृताः ॥ ५ ॥ नाडीद्वयमुहूर्तानां संज्ञा एताः क्रमाद्द्विज ॥

## टीका ।

सार्धपंचश्लोकपर्यंतम् । अथ सर्वजितः सर्वाणि दिननक्षत्राणि तत्तन्मुहूर्ते स्वसदृशफलदानेन जयंति ताः सर्वजितः संज्ञाः प्रत्यहं सूर्योदयमारभ्य क्रमेण नाडीद्वयमुहूर्तानां त्रिंशन्मितानां स्मृता उक्ताः ताश्च आर्द्रा १, आश्लेषा २, अनुराधा ३, मघा ४, धनिष्ठा ५, उत्तराषाढा ६, सर्वजित् नाम अभिजित् ७, रोहिणी ८, विशाखा ९, ज्येष्ठा १०, मूलम् ११, शततारका १२, भरणी १३, पूर्वाफाल्गुनी १४, विश्वजित् अभिजित् १५ एता दिनमुहूर्तसंज्ञाः सर्वजित्संज्ञकाः पंचदश । अथ उत्तराप्रोष्ठपात् उत्तराभाद्रपदा १, रेवती २, अभिजित् ३, उत्तरा ४, कृत्तिका ५, रोहिणी ६, मूलं ७, रोहिणी ८, मृगशीर्षं ९, हस्तकं १०, पुष्यः ११, श्रवणः १२, हस्तं १३, चित्रा १४, स्वाती १५, एता रात्रिमुहूर्तसंज्ञाः पंचदश १५ विश्वजित्संज्ञकाः हे द्विज ! हे मैत्रेय ! नाडीद्वयमुहूर्तानां एताः संज्ञाः विश्वजित्संज्ञका ज्ञेया इति ॥ २ ॥ ३॥ ॥ ४ ॥५॥ अथ विनाडीद्वयमुहूर्तसंज्ञा द्वात्रिंशदाह सर्वजिदित्यादिसार्धनव-

## भाषा ।

मुहूर्त हैं वे सर्वजित् नामक हैं. आर्द्रा १, आश्लेषा २, अनुराधा ३, मघा ४, धनिष्ठा ५, उत्तराषाढा ६, सर्वजित् नाम अभिजित् ७, रोहिणी ८, विशाखा ९, ज्येष्ठा १०, मूल ११, शततारका १२, भरणी १३, पूर्वाफाल्गुनी १४, अभिजित् १५, यह दिनमुहूर्त जानना. अब रात्रिके मुहूर्त कहते हैं. उत्तराभाद्रपदा १, रेवती २, अभिजित् ३, उत्तरा ४, कृत्तिका ५, रोहिणी ६, मूल ७, रोहिणी ८, मृगशीर्ष ९, हस्त १०, पुष्य ११, श्रवण १२, हस्त १३, चित्रा १४, स्वाती १५,

सर्वजिद्भरणीहस्तविश्वजिद्रोहिणी तथा ॥६॥ दस्रश्च मृगशीर्षश्च शर्वः पुष्योऽथ रुद्रभम्॥उत्तरा विश्वजिच्छ्रोणी चित्रा पुष्यश्च वायुभम् ॥७॥ अभिजिद्वसुभं पौष्णं कृत्तिका च पुनर्वसु॥पूर्वोत्तरप्रोष्ठपदौ शततारा च विश्वभम् ॥८॥ ज्येष्ठा सूर्यं च मूलं च भाग्यश्च क्रमशः स्मृताः॥ज्येष्ठा चाथ विशाखा च मूलं च शततारका॥९॥ नामानि च मुहूर्तानां विनाडीद्वयरूपिणाम् ॥ आवृत्त्या षष्टि ताः प्रोक्ताः कालां-

## टीका।

श्लोकपर्यंतम् । अथ सर्वजित्संज्ञकाः विनाडीसंज्ञका यथा भरणी १, हस्त २, विश्वजित् पूर्वाषाढा ३, रोहिणी ४, दस्रः अश्विनी ५, मृगशीर्ष ६, शर्व आर्द्रा ७, पुष्य ८, रुद्रभम् आर्द्रा ९, उत्तरा १०, विश्वजित्पूर्वाषाढा ११, श्रोणी श्रवणं १२, चित्रा १३, पुष्यः १४, वायुभं स्वाती १५, अभिजित् १६, वसुभं धनिष्ठा १७, पौष्णं रेवती १८, कृत्तिका १९, पुनर्वसु २०, पूर्वाप्रोष्ठपत् पूर्वाभाद्रपदा २१, उत्तराप्रोष्ठपत् उत्तराभाद्रपदा २२, शततारका २३, विश्वभं स्वाती २४, ज्येष्ठा २५ सूर्य हस्तः २६, मूलं २७, भाग्यः पूर्वाफाल्गुनी २८, ज्येष्ठा २९, विशाखा ३०, मूलं ३१, शततारका ३२, एवं क्रमशः विनाडीद्वयरूपाणां मुहूर्तानां सर्वजित्संज्ञानामानि ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ एवं नाडीद्वयमुहूर्तसंज्ञाः विनाडीद्वमसुहूर्तसंज्ञाश्चोक्त्वा षष्टिनाडीसंज्ञा आह आवृत्त्या इत्यर्धेन।याः द्विनाडीरूपिण्यः त्रिंशत्संज्ञाः प्रागुक्ताः ता एव पुनरावृत्त्या षष्टि इति विभक्तिलोप आर्षः षष्टिसंख्याकाः नाडीरूपिणः एकघटिका-

## भाषा।

यह पंधरा रात्रिके विश्वजित् नामक मुहूर्त जानने ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अब विनाडी संख्यात्मक बत्तीस मुहूर्त कहते हैं. उनके नाम भरणी आदि लेके शततारकापर्यंत नाम टीकामें स्पष्ट हैं ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अब षष्टिनाडी मुहूर्त कहते हैं. जो पहिले दो घटिकात्मक रात्रिदिनके ३० मुहूर्त कहे हैं, उसकूं द्विरावृत्तिसे घडी घडीका माने तो साठ घडीके साठ मुहूर्त कलांशनामक होते हैं ॥ १० ॥

शा नाडिरूपिणः ॥ १० ॥ नक्षत्रसंज्ञया प्रोक्ताः षष्ट्यावृत्त्या कलांशकाः ॥ मेषो यमो वृषः कुंभो झषो जूकश्च कर्कटः ॥ ११ ॥ सिंहोथवृश्चिकश्चापो मृगः कन्या क्रमाद्भवेत् ॥ राशिचक्रकलांशे तु क्रमादेवं प्रकीर्तिताः ॥ १२ ॥ मेषोगौर्यमकर्कीचलेयकन्यातुलालयः ॥ धनुर्मृगघटो मी-

## टीका ।

स्वरूपाः ते एव कलांशसंज्ञका इति ॥ १०॥ अथ कलांशानाह नक्षत्रेत्यर्धेन। या विनाडीसंज्ञाः द्वात्रिंशत् प्रागुक्ताः ता एव पुनरावृत्त्या दिनरात्रिषष्टिभागात्मकनाडीरूपिण्यः पुनरावृत्त्या नक्षत्रसंज्ञया कलांशकाः षष्ट्या षष्टिसंख्यया ज्ञेया इति । अथ राशिचक्रकलांशसंज्ञाः पंचघटिकात्मिका उदयात् द्वादशाह मेष इति द्वादशश्लोकांतम् । उदयात् पंच घटिकाः मेषः १, ततः पंचमो मिथुनः २, ततः पंच वृषः ३, ततः पंच कुंभः ४, ततः पंच झषो मीनः ५, ततः पंच जूकः तुला ६, ततः पंच कर्कटकः ७, ततः पंच सिंहः८, ततः पंच वृश्चिकः ९, ततः पंच चापः धनुः १०, ततः पंच मृगो मकरः ११, ततः पंच कन्या १२, एवं क्रमात् राशिचक्रकलांशे संज्ञाः प्रकीर्तिताः कथिताः इति ॥ ११ ॥ १२ ॥ अथ नित्योदयक्रममाह मेषेइति । मेषः १, गौर्वृषः २, यमो मिथुनः ३, कर्किः ४, लेयः सिंहः ५, कन्या ६, तुला ७, अलिः वृश्चिकः ८, धनुः ९, मृगो मकरः १०, घटः कुंभः ११, मीनः १२, एवं क्रमेण उदयादुदयकालीनलग्नात् घटिकासु ग्रंथांतरोक्तासु नित्योदयसंज्ञा ज्ञेयाः ताश्च "मीने मेषे चतुर्नाड्यः सार्धाश्च वृषकुंभयोः ॥ मकरे मि-

## भाषा ।

अब कलांशमुहूर्त कहते हैं. जो पहिले बत्तीस मुहूर्त नाडीनामक कहे हैं उसकू पुनरावृत्तिसे घटिकात्मक लेके गिनना. वे नक्षत्रकलांश मुहूर्त होते हैं. अब राशिचक्रकलांश मुहूर्त कहते हैं. सूर्योदयसे लेके पांचपांच घटिकाका मेषादिराशिकलांश जानना. मेष १, मिथुन २, वृषभ ३, कुंभ ४, मीन ५, तुला ६, कर्क ७, सिंह ८, वृश्चिक ९, धन १०, मकर ११, कन्या १२, यह क्रमसे राशिकलांशक हैं ॥ ११ ॥ १२ ॥ अब नित्योदयलग्नक्रम टीकामें स्पष्ट है. अब तात्कालिक बारह

नमुदयाद्धटिकासु च ॥ १३ ॥ सिंहान्मेषाच्च चापाच्च नक्षत्रक्रम ईरितः ॥ चंद्रज्ञशुक्रधूमार्कपरिवेषारकार्मुकाः॥१४॥

## टीका।

थुने पंच शेषाः सार्धाः प्रकीर्तिताः" एवमिति ॥ १३ ॥ अथ नक्षत्रक्रमग्रहणप्रकारभेदानाह सिंहादित्यर्धेन। सिंहात् सिंहराश्यारंभनक्षत्रात् मघासकाशादित्यर्थः आश्लेषांतमिति भावः इत्येकः प्रकारः चापात् धनूराश्यारंभनक्षत्रात् मूलसकाशादित्यर्थः ज्येष्ठांतमिति भावः इतिद्वितीयः प्रकारः मेषात् मेषराश्यारंभनक्षत्रात् अश्विनीनक्षत्रसकाशादित्यर्थः रेवत्यंतमिति भावः इति तृतीयः प्रकारः एवं प्रकारत्रयेण नक्षत्राणां परिगणनक्रमः ईरितः कथितः। अथ प्रकारत्रयेण प्रत्यहं रात्रिं दिनकाले द्वादशग्रहक्रममाह। चंद्रः १, ज्ञो बुधः २, शुक्रः ३, धूमः पूर्वार्धोक्तो ग्रहः ४, अर्कः ५, परिवेषः पूर्वार्धोक्तः ६, आरो भौमः ७, कार्मुकः पूर्वार्धोक्तः ८, गुरुः ९, पातः पूर्वार्धोक्तः १०, शनिः ११, केतुः १२, एते द्वादश ग्रहाः क्रमात् उक्तक्रमेण चक्रलिप्तांशके विषये सिंहात् सिंहलग्नोदयात् सकाशात् द्वादशलग्नेषु भवंति तत्तल्लग्नकाले उदयंते इत्यर्थः एवं तारकांशके विषये मेषात् मेषलग्नात् सकाशात् केत्वादिः केतुरादिर्यस्येति सः प्रागुक्तः क्रमः विलोमतः चित्रांतं ग्राह्य इत्यर्थः तथा घटिकांशके विषये अर्कादिधूमपर्यंताः प्रथमोक्तक्रमांत-

## भाषा।

ग्रह लानेका क्रम कहते हैं. जन्मलग्न जो होवे उसकूं पहिले देखना, कि सिंहादि है, या चापादि है, या मेषादि है. वो देखके तीन क्रममेंसे जिस क्रममें आया होवे वो क्रम मुख्य गिनके वहांसे अनुक्रमसे चंद्र १, बुध २, शुक्र ३, धूम ४, सूर्य ५, परिवेष ६, मंगळ ७, कार्मुक ८, गुरु ९, पात १०, शनि ११, केतु १२, पर्यंत जो राशि आवे वो राशि लेके उस राशिके ग्रह मांडना. जैसा वृश्चिक लग्न जन्मका है तो सिंहादि है वास्ते तात्कालमें सिंहराशिका चंद्र, कन्या का बुध, तुलाका शुक्र, वृश्चिकका धूम इत्यादिककर्कका केतु इत्यंत जानना. नक्षत्र क्रममें मेषके क्रमसे ग्रह केतु आदि चंद्रांत गिन जहांतक पूर्वराशिके अनुसारसे नक्षत्र आवे वो नक्षत्रका ग्रह जानना. जैसा अश्विनीका केतु, यहांसे गिनना. तो उत्तराफाल्गुनीके चतुर्थ

गुरुः पात शनिः केतुर्ग्रहाः स्युर्द्वादश क्रमात् ॥ चक्रलि-प्तांशके चैवं केत्वादिस्तारकांशके ॥ १५ ॥ अर्कादिवृमप-र्यंताः क्रमात्स्युर्घटिकांशके ॥ सत्र्यंशा घटिकास्तिस्रो मे-षानिमिषयोर्द्विज ॥ १६ ॥ चतस्रः कुंभवृषयोस्तथा मकर-युग्मयोः ॥ वित्र्यंशाः पंच सत्र्यंशास्ताः कर्किधनुषोः

## टीका ।

गेतरविसकाशात् धूमांतं चापात् धनोदयात् द्वादश उदयविषये ग्राह्या इ-त्यर्थः ॥ १४ ॥ १५ ॥ अथ प्रागुक्तमेषादिनित्योदयानां प्रत्यहं भोगकाल-मानघटिकामाह सत्र्यंशा इत्यादिअष्टादशश्लोकपर्यंतम् ॥ हे द्विज मैत्रेय ! मे-षानिमिषयोः मेषमीनयोः लग्नयोः नित्यं मानं सत्र्यंशाः तिस्रो घटिकाः विंशतिपलाधिकघटिकाद्वयमित्यर्थः कुंभवृषयोः नित्यभोगमानं चतस्रः घ-टिकाचतुष्टयात्मकं तथा तेन प्रकारेण मकरयुग्मयोः मकरमिथुनयोः वि-त्र्यंशाः पंच तृतीयांशोनाः पंचचत्वारिंशत्पलाधिकघटिकाचतुष्टयात्मकमि-त्यर्थः नित्यमानं ज्ञेयं ताः पंच सत्र्यंशाः तृतीयांशसहिताः पंच नाम विंश-तिपलाधिकपंचघटिकाः नित्यमानं कर्किधनुषोः स्पष्टं स्मृताः तथा सिंहवृ-श्चिकयोः षट् घटिका नित्यमानं चपरं शेषयोः उक्तावशिष्टयोः कन्यातुल-योरित्यर्थः अंशोनाः सप्त अत्र अंशशब्देन घटिकातृतीयांशो ग्राह्यः चत्वा-रिंशत्पलाधिकषट्घटिका इत्यर्थः एवं इदं उक्तप्रकारकं मेषलग्नात् सका-शात् उदयराशिजं लग्नविहितमित्यर्थः नित्यं मानं प्रोक्तं कथितमिति

## भाषा ।

चरणका चंद्र आया, वैसे सब लायके पूर्वाभाद्रपदाका तीसरी वखत गिननेसे केतु, पुनः आया तो केतु पूर्वाभाद्रपदाके चौथे चरण मीनराशिका केतु है इत्यादि. विशेष टीकामें स्पष्ट है ॥ १४ ॥ १५ ॥ अब नित्य लग्नकी घटिपलात्मक मान कहते हैं. हे मैत्रेय ! मेषमीनका प्रमाण घटी २ पल २०, वृषकुंभका प्रमाण घ० ४ पल० मिथुनमकरका प्रमाण घ० ४ प० ४०, कर्कधनका प्रमाण घ० ५ प० २०, सिं-हवृश्चिकका प्रमाण घ० ६ प० ०, कन्यातुलाका प्रमाण घ० ६ प० ४०, अह

स्मृताः ॥ १७॥ सिंहवृश्चिकयोः षट् च अंशोनाः सप्त शे-
षयोः ॥ नित्यं मानमिदं प्रोक्तं मेषादुदयराशिजम् ॥१८॥
रव्याक्रांतात्तथा प्रोक्ता एकद्वित्रिचतुर्घटी ॥ मानानि मेष-
तः सिंहाच्चापादर्कोदयात्ततः ॥ १९ ॥ दशवर्गाधिपाश्चिं-
त्याः प्रोक्ताश्चेंदुनवांशकाः ॥ अन्यत्र कीर्तिताः प्रश्ने नष्ट-
द्रव्यविनिश्चये ॥ २० ॥ श्रीमान् रिक्तश्च मूर्खश्च कुशलो

## टीका ।

॥ १६ ॥ १७ ॥१८॥ अथ प्रकारांतरमाह रव्याक्रांतादितिद्वाभ्याम् । रव्याक्रांतात् अर्कोदयात् रविसहितात् उदयलग्नादित्यर्थः लग्नमानानि मेषात् चतुर्णां सिंहाच्चतुर्णां चापाच्चतुर्णां क्रमात् एकद्वित्रिचतुर्घटिमानं प्रकारांतरेण बोध्यम् तत्र दशवर्गाधिपाः तत्तल्लग्नोक्तमानेषु विभाजनीयाः तथा इंदुनवांशकाः चंद्रराशिनवांशकाश्च विभाजनीयाः तत्प्रयोजनमाह नष्टद्रव्यविनिश्चये नष्टद्रव्यस्य विनिश्चयः निर्णयः यस्मिन् तथाभूते प्रश्ने प्रश्नविचारे एते इंदुनवांशकाः अन्यत्र कीर्तिताः अन्यमतोक्ता इति ॥ १९ ॥ २० ॥ अथ दशवर्गादिषु फलान्याह श्रीमानित्यादिसार्धचत्वारिंशच्छ्लोकपर्यंतम् । श्रीमान् १, रिक्तः २, मूर्खः ३, कुशलः ४, वंचनः ५, पटुः ६, स्त्रीसक्तः ७, वेदवित् ८, धीरः ९, मंदाग्निः १०, तीव्ररोषणः अतिकोपी ११, मूलरोगी मूले मूलस्थाने यो रोगः सोऽस्यास्तीति तथा १२, पिशुनः दुर्जनः १३, सदाऽटनपरः सर्वकाले भ्रमणशीलः १४, शुचिः १५, सेवाकरः दासः १६, सुभाषी पटुवाक् १७, धनवान् १८, लोभसंयुतः १९, विद्यया प्रख्यातः प्रसिद्धः २०, भीरुः २१, बुद्धिश्रीमान् बुद्ध्या श्रीमान् २२, श्रीमान् २३, सुशीलकः २४, परदाररतः २५, श्रीमान् २६, सुशीलः २७, बलवान् २८, गुणी २९, अध्व-

## भाषा ।

लग्नमान कह्या ॥ १६ ॥ १७ ॥ १८ ॥ अब प्रकारांतर कहते हैं. उदयलग्नसे मेषसे ४, सिंहसे ४, धनसे ४, यह बारह राशिमें एक दोन तीन चार घटिका क्रमसे कालप्रमाण जानना. दशवर्गका और चंद्रनवांशका चिंतवन करना. नष्टद्रव्यप्रश्नादिकोंमेंभी इसका प्रयोजन है ॥ १९ ॥ २० ॥ अब दशवर्ग उपरसे योगफल

## टीका।

न्यः मार्गस्थः ३०, निगमव्यग्रः वेदाभ्यासे निमग्नः ३१, पातकी ३२, तपोयुतः ३३, परदाररतः ३४, वेश्यासक्तः ३५, असत्फलवासनः मिथ्याफलाभिकांक्षी ३६, सिंहासनस्थः ३७, रिक्तः निरुद्योगी ३८, जटिलः जटाधारी ३९, कुलपांसनः नीचः ४०, योगी ४१, बुद्धः ज्ञाता ४२, संन्यासी ४३, सेनानी सेनापतिः ४४, बुद्धिमान् सूक्ष्मधीः ४५, सुखी ४६ कुष्ठी कुष्ठरोगी ४७, द्यूतकरः ४८, श्रीमान् ४९, एकपुत्रसमन्वितः ५०, शास्त्रज्ञः ५१, दासकृत्यः ५२, चंडरोषसमन्वितः तीव्रकोपी ५३, स्त्रीसक्तः ५४, परदारोक्तः परदारैः उक्तः भाषितः लोभित इत्यर्थः ५५, भृत्यः ५६, पटुः ५७, अरोगवान् रोगरहितः ५८, कुरूपः ५९, कुशलः ६०, जितारिः जितशत्रुः ६१, पुत्रवर्जितः ६२, शूरः ६३, वीरः ६४, चंडोऽतिकोपी ६५, कुशलः ६६, कुक्षिरोगवान् जठररोगी ६७, ग्रामणीः ग्रामपतिः ६८, विटपः क्षेणपालकः ६९, धूर्तो वंचकः ७०, सतीपतिः ७१, अरिंदमः शत्रुहा ७२, वंध्यापतिः ७३, सुपापी ७४, रितसाध्यपतिः रंकप्राप्यस्त्रीसेवी ७५, सुखी ७६, विजयी ७७, युद्धभीरुः ७८, चोरः ७९, अमर्षी क्रोधी ८०, धनार्जकः द्रव्यसंपादकः ८१, धनार्जनाय द्रव्यसंपादनाय सततं निरंतरं अकृत्यानां शतानि करोतीति तथा ८२, वृषलीपतिः शूद्रस्त्रीनिषेवी ८३, इंद्रः ८४, सेनानीः ८५, सत्यवाक् ८६, शुचिः ८७, शिरोरोगी ८८, कुष्ठी ८९, मेही मेहरोगवान् ९०, पिशुनः दुर्जनः ९१, सुखी ९२, जलवद्रोगसहितः जलोदरादियुक्तः ९३, कृतज्ञः उपकारज्ञः ९४, निर्घृणो निर्दयः ९५, घृणी दयावान् ९६, विवादशीलो वादस्वभावः ९७, सुमुखः सुंदराननः ९८, क्रोधनः ९९, कामुकः १००, पटुः कुशलः १०१, चरचित्तः २, धनी ३, वाग्मी वक्ता ४, विद्यार्जनपरः ५, सुखी ६, अपुत्रः ७, कृषिकृद्वीरः कृषीवलश्रेष्ठः ८, परदाररतः ९, शुचिः ११०, विद्याहीनः ११, मूर्खः १२, बुद्धिमान् १३, शास्त्रपारगः शास्त्रांतज्ञः १४, सदाभीरुः १५, जडः १६, वाग्मी १७, कृत्येषु कुशलः कार्यपटुः १८, सुखी १९, नीतिज्ञः न्यायज्ञः १२०, लेखकः २१, नीचजातीकृत्यरतः अन्येभ्यो नीचजातिकारयिता २२, पटुः २३, प्रेष्यदूतः २४, गोमयविक्रेता २५, वदान्यो दाता २६, धनवंचको धनप्रतारकः २७, सेनानीः

वंचनः पटुः ॥ स्त्रीसक्तो वेदविद्वीरो मंदाग्निस्तीव्ररोषणः ॥ २१ ॥ मूलरोगी च पिशुनः सदाऽटनपरोऽशुचिः ॥ सेवाकरः सुभाषी च धनवाँल्लोभसंयुतः ॥ २२ ॥ प्रख्यातो विद्यया भीरुर्बुद्धिश्रीमान्सुशीलकः ॥ परदाररतः श्रीमान् सुशीलो बलवान् गणी ॥२३॥अध्वन्यो निगमव्यग्रः पातकी च तपोयुतः ॥ परदाररतो वेश्यासक्तः सत्कलत्रवासनः ॥ ॥ २४ ॥ सिंहासनस्थो रिक्तश्च जटिलः कुलपांसनः ॥ योगी वृद्धश्च संन्यासी सेनानीर्बुद्धिमान् सुखी ॥ २५ ॥ कुष्ठी

## टीका ।

२८, क्षेत्रवान् २९, वीरः १३०, लेखवृत्त्या च जीवति लेखनक्रियया निर्वाहकः ३१, मूर्खः ३२, जितेंद्रियः शमदमसंपन्नः ३३, वाग्मी ३४, सदाकृत्यपरः सदोद्योगी ३५, सुखी ३६, अन्नदाता ३७, मृष्टाशी मधुरभुक् ३८, शिवभक्तः ३९, जितेंद्रियः १४०, कुब्जः बुद्धिशरीराभ्यां वक्रः ४१, वक्रशरीरः शरीरेणैव वक्रः ४२, जात्यंधो जन्मांधः ४३, बधिरः श्रवणहीनः ४४, शठो धूर्तः ४५, अमर्षी क्रोधी ४६, नर्तको नटः ४७, क्रुद्धः संजातकोपः ४८, दुर्जनो दुष्टः ४९, वेदपारगः वेदानां पारं समाप्तिं गच्छतीति तथा१५०, वक्ता ५१, गायकः ५२, सर्वदा जनार्जकः, जनमनःसंपादकः ५३, तालज्ञः गानसाधनविशेषज्ञः ५४, विद्यया युक्तो विद्वान् १५५, एवं पंचपंचाशदुत्तरं एकयोगावसानकं एकयोगोऽवसाने यस्य तत् शतं पंचपंचाशदुत्तरगुणाः श्रीयोगा ज्ञेयाः इति ओजे ओजराशौ पूर्वे पूर्वयुताः पूर्वनवांशे प्रथमसंहिताः क्रमाद्योगाः ज्ञेयाः युग्मे समे राशौ तु वामतः वैपरीत्येन प्रथमनवांशे अवसानीययोगमारभ्य क्रमो ज्ञेयः चरे चरराशौ उक्तक्रमः स्थिरे राशौ तु वामं विलोमतो यथा स्यात् तथा उभये द्विःस्वभावे राशौ अर्धपदादितः तथा आदौ राश्यारंभे त्रिंशद्गणा योगाः आरंभतः अंते राश्यंते वामतः विलोमतः त्रिंशदेवहि षष्ट्यंशे तु भार्गवपूर्वोक्तरीत्यैव ओजचरादिकाः विषमसमचरस्थिरादिकाः गुणा बोद्धव्या इति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

## भाषा ।

कहते हैं. सो योगके नाम टीकामें स्पष्ट लिखा है, वास्ते भाषामें फिर लिखे नहीं है.

भूतकरः श्रीमानेकपुत्रसमन्वितः ॥ शास्त्रज्ञो दासकृत्यश्च चंडरोषसमन्वितः ॥ २६ ॥ स्त्रीसक्तः परदारोक्तो भृत्यः पटुररोगवान् ॥ कुरूपश्चापि कुशलो जितारिः पुत्रवर्जितः ॥ २७ ॥ शूरो वीरश्च चंडश्च कुशलः कुक्षिरोगवान् ॥ ग्रामणीर्विटपो धूर्तः सतीपतिररिंदमः ॥ २८ ॥ वंध्यापतिः सुरापी च रिक्तसाध्यापतिः सुखी ॥ विजयी शुद्धभीरुश्च चारोऽमर्षी धनार्जकः ॥ २९ ॥ धनार्जनाय सततमकृत्यशतकारकः ॥ वृषलीपतिरिंद्रश्च सेनानीः सत्यवाक्छुचिः ॥ ३० ॥ शिरोरोगी च कुष्ठी च मेही च पिशुनः सुखी ॥ जलवद्रोगसंयुक्तः कृतज्ञो निर्घृणो घृणी ॥ ३१ ॥ विवादशीलः सुमुखः क्रोधनः कामुकः पटुः ॥ चलचित्तो धनी वाग्मी विद्यार्जनपरः सुखी ॥ ३२ ॥ अपुत्रः कृषिकृद्वीरः परदाररतः शुचिः ॥ विद्याहीनश्च मूर्खश्च बुद्धिमाञ्छास्त्रपारगः ॥ ३३ ॥ सदाभीरुर्जडो वाग्मी कृत्येषु कुशलः सुखी ॥ नीतिज्ञो लेखको नीचजातिकृत्यरतः पटुः ॥ ३४ ॥ प्रेष्यो गोमयविक्रेता वदान्यो धनवंचकः ॥ सेनानी क्षेत्रवान्वीरो लेखवृत्त्या च जीवति ॥ ३५ ॥ मूर्खो जितेंद्रियो वाग्मी सदाकृत्यपरः सुखी ॥ अन्नदाता च मृष्टाशी शिवभक्तो जितेंद्रियः ॥ ३६ ॥ कुब्जो वक्रशरीरश्च जात्यंधो बधिरः शठः ॥ अमर्षी नर्तकः क्रुद्धो दुर्जनो वेदपारगः

## टीका ।

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

## भाषा ।

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३७ ॥ वक्ता च गायकः श्रीमान्सर्ववेदा च जनार्जकः ॥ तालज्ञो विद्यया युक्तः पंचपंचाशदुत्तरम् ॥ ३८ ॥ शतं गुणाश्च श्रीयोगा एकयोगावसानकम् ॥ पूर्वपूर्वयुता ओजे युग्मे राशौ तु वामतः ॥ ३९ ॥ चरे क्रमः स्थिरे वाममुभयोर्धपदादितः ॥ आदौ त्रिंशद्गुणा अंते वामतास्त्रिंशदेव हि ॥ ४० ॥ षष्ट्यंशे तु गुणाः प्रोक्ताः प्राग्वदोजचरादिकाः ॥ मेषादुत्क्रमते राहुः केतुर्याति वृषात्क्रमात् ॥ ४१ ॥ ऋक्षसंध्यंतरे जातः प्रष्टासौ म्रियते भृशम् ॥ केतुराहुस्थिते राशौ भसंधौ मरणं भवेत् ॥ ४२ ॥ इतरेषां त्रयाणां च

## टीका ।

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ अथ राहुकेतुगतिमाह मेषादित्यर्धेन । राहुः मेषात् मेषराशिसकाशात् उत्क्रमते विपरीतगतिक्रमेण क्रमशो याति तथा केतुः वृषाद्वृषराशेः सकाशात् क्रमात् अनुलोमगतिक्रमेण याति ॥ ४१ ॥ उक्तस्य प्रयोजनमाह ऋक्षेति । ऋक्षसंध्यंतरे ऋक्षस्य यद्राहुकेत्वोः प्रवेशसंध्यंतरं तस्मिन्नसौ प्रष्टा प्रश्नकर्ता जातश्चेत् भृशमिति निश्चयेन म्रियते नश्यति तथा केतुराहुस्थिते केतुराहुसंयुक्ते राशौ यः भसंधिः राशिसंधिः तस्मिन् प्रष्टुः मरणं भवेत् एवं राहुकेतुवत् इतरेषां त्रयाणां धूमकार्मुकपरिवेषा-

## भाषा ।

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ यह श्रीमान् आदि लेके विद्वान्पर्यंत एकसो पंचावन १५५ योग कहे. वे विषम राशिके नवांशमें श्रीमान् योगसे गिनती करना, समराशिका नवांश होवे तो विद्वान् योगसे आरंभ करके श्रीमान् योगपर्यंत क्रम जानना. चर राशिमें क्रमसे स्थिर राशिमें विलोमसे द्विःस्वभावराशिमें अर्धभागसे क्रम लेना ॥ ३९ ॥ ४० ॥ अब राहुकेतुकी गति कहते हैं. राहु मेषसे विपरीत क्रमसे जाताहै केतु वृषभसे क्रमसे जाता है ॥ ४१ ॥ अब राहुकेतुगतिका फल कहते हैं. राहुकेतुका एकराशिमें संयोग होवे तो प्रश्न करनेवालेका मरण जानना. धूम कार्मुक परिवेषकाभी फल ऐसा जानना ॥ ४२ ॥ ४३ ॥

प्रकाशे व्याधिपीडितः ॥ दुर्बलो बुद्धिहीनश्च जायते न मृतो यदि ॥ ४३ ॥ कलांशराशितोऽरिष्टे नक्षत्रारिष्टसंभवे ॥ पित्रादीनां सुतस्यापि तद्वशाच्चिंतयेत्सुधीः ॥ ४४ ॥ पापशत्रुग्रहक्रांता भावास्तद्दृष्टिसंयुताः ॥ सौम्यपापादयश्चैवं शुभाशुभफलप्रदाः ॥ ४५ ॥ एकद्वित्रिचतुःपंचषट्स-

## टीका।

णां प्रकाशे उदयराशौ प्रष्टा व्याधिपीडितो भवति कदा यदि न मृतश्चेत् दुर्बलो बुद्धिहीनश्च जायते इति ॥ ४२ ॥ ४३ ॥ अथ पित्राद्यरिष्टमाह कलांशेत्यादिएकोनपंचाशच्छ्लोकपर्यंतम्। कलांशराशितः षोडशांशराशिसकाशात् अरिष्टे प्राप्ते सति तथा नक्षत्रारिष्टसंभवे नक्षत्रतः अरिष्टजनिते अरिष्टे सति पित्रादीनां सुतस्यापि तद्वशात्कलांशनक्षत्रांशशुभाशुभवशात्सुधीः शुभाशुभं चिंतयेत् तद्रीतिमाह। पापशत्रुग्रहाक्रांताः पापग्रहैः शत्रुग्रहैर्वा सहिताः तद्दृष्टिसंयुता वा भावाः यदि भवेयुः तदा सौम्यपापादयः यथाक्रमं शुभाशुभफलप्रदा इष्टानिष्टफलदा ज्ञातव्याः तत्रांशानाह। एक १ द्वि २ त्रि ३ चतुः ४ पंच ५ षट् ६ सप्त ७ अष्ट ८ अंक ९ दिक् १० धरा १ सूर्यः १२ इंदुः १ नृपः १६ मूर्च्छा २१ इंद्रः १४ नृपाः १६ मानि २७ अर्कः १२ नृपाः १६ जिनाः २४ पंच ५ अष्ट ८ वसुः ८ भूतानि ५ इषु ५ सुर ५ दंत ३२ जिन २४ अद्रि ७ नखाः २० त्रिंशत् ३० खवेदाः ४० षट्सप्ततिः ७६ षष्टिः आदियुक् ६७ नवतिः ९० शतं १०० मूर्च्छा २१ जिनाः २४ दंताः ३२ जिनाः २४ दिशः १० एवं प्रकारेण नवशतं ९०० उक्तयोगाः अनुलोमविलोमक्रमेण ज्ञेयाः। तत्र तु पूर्वपूर्वयुता संख्या अनुक्रमोक्तांशसंख्या लक्ष्मीयोगफलप्रदा सौम्ययोगे भवति सैव पापयोगे तन्नाशकेति इयं संख्या नक्षत्रचक्रे राशिचक्रे च ज्ञेया दिवसचक्रे तु वामतः विलोमतः स्मृता ॥४५॥

## भाषा।

अब पितृभ्रातृपुत्रादिकोंका अरिष्ट कहते हैं. षोडशांशरीतिसे अरिष्ट आवे नक्षत्रसे अरिष्ट आवे और वे वे भावके ऊपर पापग्रहोंकी दृष्टि होवे या पापग्रह बैठे होवे तो पित्रादिकोंका अशुभफल जानना. शुभदृष्टियोगोंसे शुभ जानना. कलांशके नवसो ९०० योग जो हैं उसका विचार पूर्वापर निर्णय करके देखना. तो स्पष्ट

म्राष्टांकदिग्धराः ॥ सूर्येंद्रनृपमूर्छेन्द्रनृपभार्कनृपाजिनाः ॥ ४६ ॥ पंचाष्टवसुभूतेषु सुरदंतजिनाद्रयः ॥ नखास्त्रिंशत्खवेदाः षट्सप्ततिः षष्टिरद्रियुक् ॥ ४७ ॥ नवतिश्च शतं मूर्च्छा जिना दंता जिना दिशः ॥ एवं नवशतं प्रोक्ताः क्रमादेवं तु तत्र तु ॥ ४८ ॥ पूर्वपूर्वयुता संख्या लक्ष्मीयोगफलप्रदा ॥ नक्षत्रे राशिचक्रे तु दिवसे वामतः स्मृता ॥ ४९ ॥ शुभमित्रग्रहाक्रांता भावास्तद्दृष्टिसंयुताः ॥ द्वित्रिपंचचषट्सप्तवसुनंददिशोऽद्रयः ॥ ५० ॥ त्रिंशद्दिशो नखाः षष्टिः सूर्यमूर्छाजिनाजिनाः ॥ आकृतिर्भानि भार्काग्निनखाश्छंदः शतं नखाः ॥५१॥ त्रिंशत्खवेदा दिग्विश्वे शतं षष्टिः शतं जिनाः ॥ वेदाः खवेदाः पूर्वार्द्धे

## टीका ।

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अथ सुगतिदुर्गतिप्रदानंशानाह शुभमित्रेत्यादिसार्धद्विपंचाशच्छ्लोकपर्यन्तम् । शुभमित्रग्रहाक्रांताः शुभग्रहैर्मित्रैर्वा युताः तद्दृष्टिसंयुता वा भावाश्चेत् द्वि २ त्रि ३ पंच ५ षट् ६ सप्त ७ वसुः ८ नंदाः ९ दिशः १० अद्रयः ७ त्रिंशत् ३० दिशः १० नखाः २० षष्टिः ६० सूर्यः १२ मूर्च्छा २१ जिनाः २४ आकृतिः २१ भानि २७ अर्काः १२ अग्नयः ३ नखाः २० छंदः २६ शतं १०० नखाः २० त्रिंशत् ३० खवेदाः ४० दिक् १० विश्वे १३ शतं १०० षष्टिः ६० शतं १०० जिनाः २४ वेदाः ४ खवेदाः ४० एते राशिपूर्वार्द्धे शुभाः परार्धे तु प्राग्वत् विलोमतः केवलं दुर्गतिप्रदा भवंति ॥ ५० ॥

## भाषा ।

मालूम होवेगा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अब सुगतिदुर्गतिका ज्ञान कहते हैं. भाव शुभमित्रग्रहोंसे युक्त होवे या उनोंकी दृष्टि होवे तो वह योग २।३।५।६।७।८।९।१०।७।३०।१०।२०।६०।१२।२१।२४।२४।२१।२७।१२।३।२०।२६।१००।२०।३०।४०।१०।१३।१००।६०।१००।२४।४।४०। राशिके पूर्वार्द्धमें जानना. परार्द्धमें विलोमक्रमसे लेना. केवल दुर्गति

श्रीयोगसंयुक्तः पंचमे दुःखभाग्धनी ॥ पुत्रादिसंपत्संयुक्त एवं पंचदशे भवेत् ॥ १२ ॥ अस्मिन्षष्ठे धनी प्राज्ञो विद्यया सद्यशो भवेत्॥एवं च षोडशेचांशे त्वतीव धनवान्भवेत्॥१३॥ स्वबंधुभ्योऽधिकोऽन्येंऽशे विद्ययाऽथ धनेन वा ॥ पुत्रादिसंयुतः श्रीमांस्त्र्यंशे स्यात्स्वजनेश्वरः ॥ १४ ॥ इष्टापूर्तेन संयुक्तस्त्वष्टादशोनविंशके ॥ पूर्ववद्विंशरश्मौ तु लब्धधामपरायणः ॥ १५॥ वदान्यः पूर्वधर्माणां मनुवद्बहुपु-

## टीका ।

गसंयुक्तः सद्भार्यालक्ष्मीसमन्वितः षष्ठे दुःखभाक् धनी पुत्रादिसंपत्संयुक्तश्च पंचदशे रश्मौ एवमेव फलानि पंचांशपर्यन्तं अस्मिन्षष्ठे तु धनी प्राज्ञः विद्यया सद्यशश्च भवेत् एवमेव षोडशे रश्मौ चकारात्सप्तदशे तु आद्यंशे अतीव धनवान् स्वबंधुभ्योऽधिकः द्वितीयेंशे भवति विद्यया धनेन च युक्तः पुत्रादिसंयुतः श्रीमांश्च त्र्यंशे स्यात् स्वजनेश्वरः चतुर्थेंशे स्यात् । इष्टापूर्तेन संयुक्तः पंचषष्ठांशे स्यात् अष्टादशोनविंशके रश्मौ तु पूर्ववत्सप्तदशरश्म्युक्तफलं ज्ञेयं विंशतिरश्मौ तु लब्धधामपरायणः लब्धस्थानतत्परः वदान्यो दाता मनुवद्बहुपुत्रकः इति एकविंशे रश्मौ तु धनैर्युक्तः आद्येंशेऽनंतभागके द्विती-

## भाषा ।

धनी, भूमियुक्त, विद्यासे पोषण करनेवाला, उत्तम भार्यायुक्त होवे. छट्ठे अंशमें दुःखी, धनपुत्रसे सुखी होवे. पंधरावे रश्मिका अंशफल पांच रश्मि अंशपर्यंत ऊपर लिखे सरिखा फल जानना. छट्ठे अंशमें बुद्धिमान् धनवान् होवे. सोलहवीं रश्मिके और सतरावी रश्मिके प्रथम अंशमें बहुत धनी होवे दूसरे अंशमें अपने बंधुसे प्रतापी ज्यादा होवे. तीसरे अंशमें विद्या तथा धन पुत्रादिकसे सुखी होवे. चौथे अंशमें अपने लोकोंमें अधिकारपदवी पावे. पांचवें छट्ठे अंशमें यज्ञ याग करे बावडी, कूवा, तलाव, बगीचा बनावे. अठारावी और उगनीसवी रश्मिका फल सतरावी रश्मि सरीखा जानना. वीसवी रश्मिमें मिले हुई जगामें लुब्ध रहे. दानशील, बहुपुत्रवान् होवे.एकवीस रश्मिके प्रथम अंशमें व दूसरे अंशमें धनी होवे.

ष्टकः ॥ एकविंशे धनैर्युक्तमाद्येऽनंतरभागके ॥ १६ ॥ तृतीये तु भुवि ख्यातो दानेन च धनेन च ॥ द्विनामत्वं तु वा यज्वा यानवाहनसंयुतः ॥ १७ ॥ श्रीमान्बहुधनानां च साधकश्च चतुर्थके ॥ अग्निमांद्येन रोगार्तश्चतुर्थे धनवान्सुखी ॥ १८ ॥ पंचमे देशयोर्विद्वान्वदान्यो दंतुरोऽथवा ॥ सप्तमे धनहानिः स्याद्राजयोगैश्च मृत्युयुक्॥१९॥ अष्टमे निर्धनस्थानां जनानां पोषणे रतः॥ द्वाविंशे प्रथमेंऽशे तु पितुः पुत्रो धनस्य तु ॥ २० ॥ द्वितीये धनहीनश्च किंचित्कृषिकरः सुखी ॥ तृतीये राजकार्यार्थी तत्कर्मार्जितवि-

## टीका ।

येंऽशेपि तथैव तृतीये तु भुवि ख्यातः दानेन धनेन भवति द्विनामत्वं च स्यात् द्विनामा भवतीत्यर्थः यज्वा यानवाहनसंयुतः श्रीमान्बहुधनानां साधकश्च चतुर्थे अग्निमांद्येन रोगार्तः धनवान् सुखी पंचमेंशे भवति देशयोः स्वदेशे परदेशे च विद्वान् वदान्यः दंतुरः षष्ठे भवति सप्तमे तु धनहानिः राजयोगैः नृपसमागमैः मृत्युयुक् च अष्टमे तु निर्धनस्थानां दरिद्राणां जनानां पोषणे रतः । अथ द्वाविंशे रश्मौ प्रथमांशे पितुः धनस्य पोषकः पुत्रो भवति ॥ १८ ॥ १९ ॥ २० ॥ अग्रिमाणांचाह द्वितीयइत्यादिद्वाविंशतिश्लोकपर्यंतम् । द्वाविंशे रश्मौ प्रथमांशफलं पूर्वमुक्तं द्वितीये तु धनहीनः किंचित्कृषिकरः सुखी च तृतीयेंऽशे राजकार्यार्थी तत्कर्मार्जितवित्तकः तत्सेवासंपादितद्रव्य-

## भाषा ।

तीसरे अंशमें दानधर्मसे विख्यात होवे. वाहन मिले. यज्ञ करे. श्रीमान् बहुधनवान् सुखी होवे. चौथे अंशमें अग्निमांद्यसे रोगी होवे. धनी, सुखी, पांचवें अंशमें होवे. वदान्य, दंतुर, छठे अंशमें होवे. सातवें अंशमें धनहीन होवे. राजनिमित्तसे मृत्यु होवे. आठवें अंशमें निर्धन, दरिद्रीका पोषण करे. बावीसवें अंशके प्रथम अंशमें पितृधनका पोषण करे ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ बावीसवी रश्मिके दूसरे अंशमें धनहीन, थोडी खेती करे. सुखी होवे. तीसरे अंशमें राजकर्मसे धन मिलावे. चौथे अंशमें

तकः ॥ २१ ॥ चतुर्थे तु प्रभुश्चान्यनामभाग्दृढबंधनात् ॥ पंचमे तद्वदेवस्यात्षष्ठे कार्यस्य हानिकः ॥ २२ ॥ सर्वव्ययश्च रिक्तश्च सप्तमे रोगयुग्धनी ॥ त्रयोविंशे तु जनकलालितश्च सुखी भवेत् ॥ २३ ॥ तृतीये मूर्खकत्येन पराभवसमन्वितः ॥ चतुर्थे चोरकृत्येन पंचमे व्याधिसंभवः॥२४॥ षष्ठे दरिद्रः पुरुषो व्याधिना पीडितो भवेत् ॥ श्रीमान्पुत्रश्चतुर्विंशे प्रथमे लालितो भृशम् ॥ २५ ॥ स्वजात्यनुगुणो विद्वान्प्रथमे च द्वितीयके ॥ तेन ख्यातस्तृतीये स्यात्स्वतंत्रः सर्वसंमतः ॥ २६ ॥ क्षेत्रदारसुहृत्पुत्रकलत्रैर्बहुभिर्वृतः॥

## टीका ।

अथ चतुर्थे तु प्रभुः अन्यनामभाक् परनामधारी अत्र हेतुः दृढबंधनादिति पंचमे तद्वदेव प्राग्वदेव फलं षष्ठे कार्यस्य हानिकः सर्वव्ययः रिक्तश्च सप्तमे रोगयुग्धनीच ॥ २१ ॥ २२ ॥ अथ त्रयोविंशादिरश्मिषु फल माह त्रयोविंशद्द्यादिसप्तविंशतिपर्यंतम् । त्रयोविंशे रश्मौ तु जनकलालितः प्रथमेऽशे द्वितीये तु सुखी भवेत् तृतीये मूर्खकृत्येन पराभवसमन्वितः चतुर्थे चोरकृत्येन युक्तः पंचमे व्याधिसंभवः षष्ठे दरिद्रः व्याधिना पीडितश्च पुरुषो भवेत् । अथ चतुर्विंशे रश्मौ श्रीमान्पुत्रः पित्रा भृशं लालितः स्वजात्यनुगुणः विद्वांश्च प्रथमांशे भवति द्वितीये तेन गुणेन ख्यातः प्रसिद्धः तृतीये स्वतंत्रः सर्वसंमतश्च चतुर्थे क्षेत्रदारसुहृत्पुत्रैर्बहुभिर्वृतो भवति पंचमे व्याधितः षष्ठे बहुव्य-

## भाषा ।

समर्थ होवे. दूसरेका नाम धारण करे. पांचवें अंशमें चौथे सरीखा फल. छठे अंशमें कार्यकी हानि करनेवाला होवे. सातवें अंशमें रोगी और धनी होवे ॥ २१ ॥ ॥ २२ ॥ तेवीस रश्मिके प्रथमांशमें पितासे सुखी. दूसरे अंशमें सुखी होवे. तीसरे अंशमें मूर्खताके कामसे हार जावे. चौथे अंशमें चोर होवे. पांचवें अंशमें रोगकी उत्पत्ति होवे. छठे अंशमें दरिद्री, रोगपीडित होवे. चोवीसवी रश्मिके प्रथमांशमें लक्ष्मीवान् पितासे सुखी विद्वान् स्वजातिके गुणसे युक्त होवे. दूसरे अंशमें प्रथमांशका फल जानना. तीसरे अंशमें स्वतंत्र सर्व संमत होवे. चौथे अंशमें

पंचमे व्याधितः षष्ठे बहुव्ययपरायणः ॥ २७ ॥ पंचविंशे-तु षष्ठांशे फलहीनस्तु जीवति ॥ षड्विंशे प्रथमांशे तु द-रिद्रः स्यात्सुतोऽपि सन् ॥ २८ ॥ पितुः कार्ये तु वृद्धिः स्याद्द्वितीये पितृवेश्मतः ॥ अन्यत्र गत्वा तत्रैव स्वयोग्येन च कर्मणा ॥ २९ ॥ स्वदेहपोषकोन्येंशे धनी च कृत्यवित्-स्थितः ॥ चतुर्थे पंचमे चैव पट्टबंधादिसंयुतः ॥ ३० ॥ अ-तीव धनवान्सः स्यात्षष्ठे त्वंशे स्वदेवभाक् ॥ क्षेत्रदारादि-वृद्ध्या तु व्यथाव्याधिसमान्वितः ॥ ३१ ॥ नवमे धनहा-

## टीका ।

यपरायणः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अथ पंचविंशादिरश्मिफलान्याह पंचविंश इत्यादिसार्धद्वात्रिंशच्छ्लोकपर्यंतम् । पंचविंशे रश्मौ षष्ठांशे फलहीनः फलरहितः सन् जीवति अथ षड्विंशे रश्मौ प्रथमांशे दरिद्रः सुतः पितुः कार्ये भवति वृद्धिश्च स्यात् द्वितीये पितृगृहादन्यत्र गत्वा स्वयोग्यकर्मणा स्वदेह-पोषको भवति अन्ये तृतीयेंशे धनी कृत्यविच्च स्थितः चतुर्थे पंचमे च पट्टबं-धादिसंयुतः दीक्षितः पुरग्रामपट्टनपट्टबंधाग्रहारसंयुतो वेत्यर्थः षष्ठे अतीव धनवान् सप्तमेंशे स्वदेहभाक् अष्टमेंशे क्षेत्रदारादिवृद्ध्या जीवति व्यथाव्या-धिसमन्वितः नवमे भवति दशमे धनहानिः पुत्रदारादिवर्जितः यावन्नवांश-

## भाषा ।

घर स्त्री पुत्र सगे संबंधीसे भरपूर रहै. पांचवें अंशमें रोगी होवे. छट्ठे अंशमें बहुत खर्च करे ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ पचीसवीं रश्मिके छट्ठे अंशमें निष्फल जीना होवे. छब्बीसवी रश्मिके प्रथमांशमें दरिद्री पिताका काम करने-वाला होवे. दूसरे अंशमें अपने घरकूं छोडके दूसरे ठिकाने जायके उत्तम कर्मसे देहपोषण करे. तीसरे अंशमें धनवान् कामकूं जाननेवाला होवे. चौथे पांचवे अं-शमें पट्टबंधनादिकसे युक्त दीक्षित होवे. छट्ठे अंशमें धनवान् होवे. सातवें अंशमें देह पोषण होवे. आठवें अंशमें खेतरसे स्त्रियादिककी वृद्धि करे जीवन करे, नवमें अंशमें मानस दुःखी रोगी होवे. दशवें अंशमें धनहीन स्त्रीपुत्ररहित होवे. सचा-

निः स्यात्पुत्रदारविवर्जितः ॥ यावद्दशनवांशाश्च सप्तविंश-त्कद्वयद्वये ॥ ३२ ॥ राजप्रियस्ततश्चंडः शुद्धः स्याद्रश्मके ततः ॥ एकोनत्रिंशे रश्मौ तु सुखी स्याच्च द्वितीयके॥३३॥ राजसेवी तृतीयेंशे कृत्याकृत्यविदीश्वरः ॥ बहुबंधुयुतः श्रीमान्मानवाहनसंयुतः ॥ ३४ ॥ देशग्रामाधिकारी च त्रिंशेत्वेतैः समन्वितः ॥ सेनानीर्नीतिमाञ्छूरः पंचमांशे भवेदिदम् ॥ ३५ ॥ षष्ठे तु विजयो युद्धे सप्तमेऽपि रुजा युतः ॥ न्यूनायतिस्तु वस्वंशे नवांशे त्वधिकायतिः ॥३६॥

## टीका ।

दशांशफलान्युक्तानि तान्येव अथ द्वये सप्तविंशतिरश्मौ अष्टाविंशतिरश्मौ च ज्ञेयानि विशेषस्तु राजप्रियः चंडः शुद्धः इति तत्र ज्ञेयः ॥ २८ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ अथैकोनत्रिंशादिरश्मीनां फलान्याह एकोनत्रिंश इत्यादित्रिचत्वारिंशत्पर्यंतम् ! एकोनत्रिंशे रश्मौ प्रथमांशे सुखी स्यात् द्वि-तीये राजसेवी स्यात् तृतीयेंऽशे कृत्याकृत्यवित् कार्याकार्यज्ञः ईश्वरोधिपतिः बहुबंधुयुतः श्रीमान्मानवाहनसंयुतः देशग्रामाधिकारी च चतुर्थादिनवांश-पर्यंतं क्रमात्स्यात् त्रिंशे रश्मौ एतैरुक्तफलैः समन्वितः एकत्रिंशे रश्मौ तु सेनानीः नीतिमान् शूरः इदं पंचमांशे फलं भवति षष्ठे तु युद्धे विजयः सप्तमे रुजा युतः न्यूनायतिः वस्वंशेऽष्टमेंशे भवति नवांशे तु अधिकायतिः एवमेव

## भाषा ।

वीस अठ्ठावीस रश्मिके अंशोंमें पूर्वोक्त फल जानना ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ओगनतीसवी रश्मिके प्रथमांशमें सुखी होवे. दूसरे अंशमें राजसेवी होवे. तीसरे अंशमें सत्कर्मकूं जाने चौथे अंशमें अधिपति होवे. पांचवें अंशमें बहु-त बंधुसमागममें रहै. छठे अंशमें श्रीमान् होवे. सातवें अंशमें सन्मान पावे. वाहन मिले. आठवें अंशमें देशाधिपति होवे. नवम अंशमें ग्रामाधिकारी होवे. तीस र-श्मिके अंशफलविचारमें पूर्वोक्त फल जानना. एकतीसवी रश्मिके पांचवें अंशमें सेनाधीश, नीतिमान्, शूर होवे. छठे अंशमें युद्धमें जय पावे. सातवें अंशमें रो-गयुक्त होवे. आठवें अंशमें लाभ थोडा होता रहे. नवम अंशमें बहुत लाभ होवे.

त्रयस्त्रिंशे तु राजानः षष्ठांशे वा तृतीयके ॥ अभिषिक्तो भवेद्वा पट्टबंधस्तु योगतः ॥ ३७ ॥ रश्मौ तथा चतुस्त्रिंशे चतुर्थांशे पराजयः ॥ तृतीये पंचमे षष्ठे युद्धे तु विजयी भवेत् ॥ ३८ ॥ अष्टमे नवमेंऽशे तु वृद्धिः स्याद्दशमे न हि ॥ षडंशविषये भस्माच्चत्वारिंशत्ततः परे ॥ ३९ ॥ द्वितीये च तृतीये च चतुर्थे चाद्यके तथा ॥ राजा स्यात्पंचमे षष्ठे सप्ताष्टनवमे ततः ॥ ४० ॥ दशमे च क्रमाद्युद्धव्याधिर्वाऽथ पराजयः ॥ इतरांशेषु संख्यातः सर्वसंपत्समन्वितः ॥ ४१ ॥ ततः परं च सम्राट् स्याच्चतुर्थे पंचमे जयी ॥ अंशास्तुल्यास्तु तेष्वेवं विपरीतफलं विदुः ॥ ४२ ॥

## टीका।

द्वात्रिंशद्रश्मौ ज्ञेयं तत्रविशेषानुक्तत्वात् त्रयस्त्रिंशे रश्मौ षष्ठांशे तृतीये वा राजानो भवंति यद्वा योगतः योगवशात्पट्टबंधः स्यात् अथ वा राज्याभिषिक्तो भवति चतुस्त्रिंशे रश्मौ चतुर्थांशे पराजयः तृतीयपंचमषष्ठेषु तु युद्धे विजयी भवेत् अष्टमे नवमेंऽशे तु वृद्धिः स्यात् दशमे षडंशविषये न हि फलाभावः तस्माच्चतुस्त्रिंशद्रश्मेः सकाशात् यावच्चत्वारिंशद्रश्मिपर्यंतं येऽपरेऽन्ये रश्मयः संति तेषामेकमेव फलमुच्यते तदेव द्वितीयतृतीयचतुर्थाद्येषु राजा स्यात् सप्ताष्टनवमदशमेषु क्रमात् युद्धं व्याधिः पराजयः इति फलानि ज्ञेयानि इतरांशेषु सर्वसंपत्समन्वितः संख्यातः कथितः ततः परं चतुस्त्रिंशद्रश्म्यनंतरं रश्मिषु सत्सु सम्राट् चक्रवर्ती स्यात्तत्र पंचमचतुर्थांशयोः जयी जेता सम्राट् भवति एवमुक्तसंख्यया तुल्या अंशा नैवचेन्नामैतदवशिष्टांशे इत्यर्थः

## भाषा।

बत्तीस रश्मिके अंशमें पूर्वसरिखा फल जानना. तेहतीस रश्मिके छट्ठे तीसरे अंशमें राजा होते हैं. चौतीस रश्मिके चौथे अंशमें पराजय हार होवे. तीसरे, पांचवें, छट्ठे अंशमें जीत होवे. आठवें नवम अंशमें वृद्धि होवे. चौतीस रश्मिसे लेके चालीस रश्मितक जो रश्मिहैं उसके प्रथम, द्वितीय, तृतीय, चतुर्थ यह अंशोंमें राजा

व्याधिरुक्तवदेवस्यायावद्विंशतिरश्मयः ॥ यद्यप्यंशाः परं नाऽत्र अधिकारं भजन्ति ते ॥ ४३ ॥ अथ स्थानगतानां तु रव्यादीनां क्रमात्फलम् ॥ ततो रविः शिरोरोगं बंधूनां च विरोधताम् ॥ ४४ ॥ द्वितीये धनहानिश्च तृतीये मित्र-वर्धनम् ॥ धनलाभं सुखे सौख्यं शत्रुभिश्च समागमम् ॥ ४५ ॥ पंचमे पुत्रलाभं च बुद्धिमुद्यमसिद्धिकृत् ॥ षष्ठे धनं जयं कुर्यात्सप्तमे स्त्रीविरोधनम् ॥ ४६ ॥ अष्टमे व्याधिहानिं च

## टीका।

विपरीतफलं विदुः उक्तविपर्यासः स्यात्तत्र प्रथमादि यावद्विंशतिरश्मिपर्यंतं उक्तवत्तुल्यरश्मिराहित्ये व्याधिः स्यात् अथात्र यद्यपि परं अंशा नोक्तास्तथापि तेषु स्वाधिकारफलं भजंतीति ज्ञेयम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अथ रव्यादीनां स्थानवशात्फलान्याह तत्रादौ रविस्थानफलान्याह अथेत्यादिअष्टचत्वारिंशच्छ्लोकपर्यंतम् अथाऽनंतरं स्थानगतानां तन्वादिस्थानस्थितानां रव्यादीनां ग्रहाणां क्रमाद्भावक्रमेण प्रथमादिद्वादशांतमित्यर्थः तदेवाह रविः सूर्यः तनुगतः शिरोरोगं शिरःशूलं बंधूनां विरोधतां बांधवविरोधमिति द्वितीयभावे धनहानिं करोति तृतीये भावे मित्रवर्धनं धनलाभं करोति सुखे चतुर्थभावे सौख्यं तथा शत्रुभिः समागमं करोति पंचमे भावे पुत्रलाभं बुद्धिं उद्यमे सिद्धिकृद्भवति षष्ठे भावे धनं जयं च कुर्यात् सप्तमे भावे स्त्रीविरोधनं कुर्यात् अष्टमे भावे

## भाषा।

होवे. सातवें अंशमें युद्ध, आठवें अंशमें व्याधि, नवम अंशमें व्याधि, दशम अंशमें पराजय, होवे. बाकीके अंशोंमें सर्व संपत्ति प्राप्त होवे ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अब सूर्यादिग्रहोंका बारह भावोंका फल कहते हैं. सूर्य तनु भावमें होवे तो शिरोरोग बंधुविरोध करे. १ धनहानि करे. २ मित्रकी वृद्धि धनलाभ करे. ३ सुख करे. शत्रुसमागम करे. ४ पुत्रलाभ, बुद्धिवृद्धि, उद्योगकी सिद्धि करे. ५ धनप्राप्ति जयप्राप्ति करे. ६ स्त्रीविरोध करे. ७ व्याधि और हानि करे. ८ मित्रका बंधन

नवमे मित्रबंधनम् ॥ भाग्यहानिं च दशमे धनलाभं सुखं जयम् ॥४७॥ एकादशे धनानां च सिद्धिं मित्रसमागमम् ॥ द्वादशे धनहानिं च जयं वा कुक्षिरुक्क्रमात् ॥४८॥ चंद्रे लग्ने च कलहं द्वितीये धनयोजनम् ॥ तृतीये भ्रातृभिर्लाभं धनवस्त्रादिसंग्रहम् ॥ ४९ ॥ चतुर्थे धनवस्त्रादिवाहनादिसुसंयुतम् ॥ तीक्ष्णे धनी सुतयुतः परिपूर्णसंपत्षष्ठे तु रोगसहितं कुमतिं च कामे ॥ ५० ॥ विद्याधनक्षेत्रसुखादियुक्तो मृत्यौ च मृत्युविषयः खलु कुक्षिरोगी ॥ स्त्रीस्वर्ण-

## टीका।

व्याधिं हानिं च कुर्यात् नवमे भावे मित्रबंधनं भाग्यहानिं च कुर्यात् दशमे भावे धनलाभं सुखं जयं च कुर्यात् एकादशे भावे धनानां सिद्धिं मित्रसमागमं च कुर्यात् द्वादशे भावे धनहानिं व्ययं कुक्षिरुजं च क्रमाद्वा कुर्यादिति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अथ भावेषु चंद्रफलमाह चंद्रइत्यादिसार्धैकपंचाशच्छ्लोकपर्यंतम्। चंद्रः लग्ने वर्तमानः कलहं करोति द्वितीये धनयोजनं करोति तृतीये भ्रातृलाभं धनवस्त्रादिसंग्रहं च करोति चतुर्थभावे धनवस्त्रादिसंयुतं वाहनादिसंयुतं च करोति तीक्ष्णे पंचमे सुतयुतः धनी परिपूर्णसंपद्युतः स्यात्षष्ठे तु रोगसहितं कुमतिं च करोति कामे सप्तमभावे विद्याधनक्षेत्रसुखादियुक्तः भवेत् मृत्यौ अष्टमभावे मृत्युविषयः कुक्षिरोगी च भवति धर्मे नवमभावे स्त्रीस्वर्णदासानामायतिर्भवेत् माने दशमभावे सुचा-

## भाषा।

भाग्यकी हानि करे. ९ धनलाभ, सुख, जयप्राप्ति करे. १० धनसिद्धि, मित्रसमागम करे. ११ धनहानि, खर्च, कुक्षिरोग करे १२ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ॥ ४७॥ ४८ ॥ अब चंद्रका द्वादशभावका फल कहते हैं. चंद्र कलह करे. १ धनप्राप्ति करे. २ भाईसे लाभ वस्त्रादिकका संग्रह करे. ३ धनवस्त्रवाहनप्राप्ति करे. ४ धनपुत्रसर्वसंपत्तिकी प्राप्ति करे. ५ रोग कुबुद्धि करे. ६ विद्याधन भूमीसुखकी प्राप्ति करे. ७ मृत्यु दुःख कुक्षिरोग होवे. ८ स्त्रीसुवर्णदासोंकी प्राप्ति करे. ९ आयन

दासायतिरेव धर्मे भावे सुचारित्रगुणं धनं च ॥ ८१ ॥ लाभेतु चैतत्सकलं व्यये तु धनस्य रिःफं कुरुते शशी तु ॥ कुजे लग्ने तु चापल्यात्क्षतं स्वे धननाशनम् ॥ ८२ ॥ विक्रमे भ्रातृमरणं धनलाभः सुखं यशः ॥ चतुर्थे बंधुमरणं शत्रुवृद्धिर्धनव्ययम् ॥ ८३ ॥ पंचमे पितृहानिं च धनायतिसुतो यशः ॥ षष्ठे रिपुसमृद्धिं च जयं बंधुसमागमम् ॥ ॥ ८४ ॥ अर्थवृद्धिं स्त्रियां दारमरणं नीचसेवनम् ॥ नीचस्त्रीसंगमो मृत्यौ धननाशं पराभवम् ॥ ८५ ॥ पराभवमनर्थं च धर्मे पापरुचिक्रिया ॥ धनव्ययं च दशमे ध-

## टीका ।

रित्रं गुणं धनं च करोति लाभे एकादशभावे एतत्सकलं पूर्वोक्तं फलं व्यये द्वादशभावे तु शशी धनस्य रिःफं द्रव्यनाशं करोति ॥ ४९ ॥ ५० ॥ ५१ ॥ अथ भावेषु भौमफलान्याह कुजे इत्यादिसप्तपंचाशच्छ्लोकपर्यंतम् । लग्नस्थाने कुजे भौमे सति चापल्याच्चपलत्वात् क्षतव्याधिः स्यात् स्वे द्वितीये भावे धननाशं विक्रमे तृतीयभावे भ्रातृमरणं धनलाभः सुखं यशश्च चतुर्थभावे बंधुमरणं शत्रुवृद्धिः धनव्ययश्च पंचमे पितृहानिः धनायतिः पुत्रलाभः यशश्च षष्ठे भावे रिपुसमृद्धिः जयो बंधुसमागमोऽर्थवृद्धिश्च स्त्रियां सप्तमभावे दारमरणं नीचसेवनं नीचस्त्रीसंगमश्च मृतौ अष्टमभावे धननाशः पराभवः अनर्थश्च धर्मे नवमभावे पापरुचिक्रिया धनव्ययश्च दशमे भावे धनलाभः कुक-

## भाषा ।

गुणकी और धनकी प्राप्ति करे. १० ग्यारहवेमें दशवेका फल जानना. ११ द्रव्यनाश होवे. १२ ॥ ४९ ॥ ५० ॥ ५१ ॥ अब मंगलका द्वादशभावफल कहते हैं. मंगल १ होवे तो चपलस्वभावके लिये छिद्रका व्याधि होवे. धननाश करे. २ भाईका नाश, धनलाभ, सुख, यशप्राप्ति करे. ३ बंधुमरण, शत्रुवृद्धि, धनप्राप्ति खर्च करे. ४ पिताकी हानि, धनप्राप्ति, पुत्रलाभ, यशप्राप्ति करे. ५ शत्रुवृद्धि, जय, बंधुसमागम, अर्थवृद्धि करे. ६ स्त्रीमरण, नीचसेवन, नीचस्त्रीसंगम करे. ७ धननाश, पराभव, अनर्थ करे. ८ पापकर्ममें रुचि, धन खर्च करे. ९ धनलाभ, कुकर्म करे.

नलाभं कुकर्म च ॥ ५६॥ लाभे धनं सुखं वस्त्रं स्वर्णक्षेत्रा-
दिसंग्रहम् ॥ व्यये नेत्ररुजं भ्रातृनाशं च कुरुते कुजः
॥ ५७ ॥ बुधः षष्ठेऽरिवृद्धिं च युद्धे सति पराजयम् ॥ मृतौ
बंधुविहीनत्वं बंधनं व्ययभे व्ययम्॥५८॥ भावोक्तफलवृद्धिं
तु परे तु कुरुते तथा॥गुरुशुक्रौ तृतीये तु शत्रुवृद्धिं धनक्ष-
यम् ॥५९॥ षष्ठे पराजयं व्याधिमष्टमे बंधनं तथा॥ रिःफे
चोरहृतस्वं तु नेत्ररोगपराजयम्॥६०॥सप्तमे च चतुर्थे च

## टीका ।

र्मं च लाभे एकादशभावे धनं सुखं वस्त्रं स्वर्णक्षेत्रादिसंग्रहश्च व्यये भावे नेत्र-
रुजं भ्रातृनाशः एवं कुजः फलं कुरुते ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥
॥ ५७ ॥ अथ भावेषु बुधफलान्याह बुधइतिसार्धेन । बुधः षष्ठे भावेऽरिवृद्धिं
युद्धे सति पराजयं च मृतौ अष्टमस्थाने बंधुहीनत्वं बंधनं च व्ययभे द्वादश-
भावे व्ययं नाशं परेषु शेषेषु भावेषु भावोक्तफलवृद्धिं तत्तद्भावविहितफलाधि-
क्यं कुरुते । इति ॥ ५८ ॥ अथ भावेषु गुरुशुक्रफलम् गुर्वित्यादिसार्धैकषष्टि-
श्लोकपर्यंतम् अथ गुरुशुक्रौ तृतीयभावे धनवृद्धिं धनक्षयं च कुरुतः षष्ठे परा-
जयं व्याधिं च कुरुतः अष्टमे बंधनं कुरुतः रिःफे द्वादशभावे चोरहृतस्वं चोरैः
हृतं स्वं द्रव्यं यस्य तथा तं कुरुतः अपि च नेत्ररोगं पराजयं चेति सप्तमे चतु-

## भाषा ।

१० धनसुख, वस्त्र, सुवर्ण, भूमीका लाभ करे. ११ नेत्ररोग, भाईका नाश करे.
१२ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ अब बुधका द्वादशभावका
फल कहते हैं. बुध शरीरमें सुख करे. १ धनवृद्धि करे. २ बंधुवृद्धि करे, ३ भूमि
घरका सुख करे. ४ पुत्रवृद्धि, विद्याप्राप्ति करे. ५ शत्रुकी वृद्धि करे, युद्धमें परा-
जय करे. ६ स्त्रीसुख करे. ७ बंधुहीन बंधनफल करे. ८ भाग्यवृद्धि करे. ९ व्या-
पारवृद्धि करे. १० लाभ करे. ११ खर्च करावे. १२ ॥ ५८ ॥ अब गुरु
और शुक्रका द्वादशभावका फल कहते हैं. गुरु, शुक्र घरमें शरीरसुख
करे. १ धनवृद्धि करे. २ धनवृद्धि, धनखर्चभी करे. ३ घर भूमिका सुख करे. ४
विद्याप्राप्ति पुत्रसुख करे. ५ पराजय और व्याधि करे. ६ स्त्रीसुख करे. ७ बंधन

सैनापत्यधनायतिः ॥ सर्वसंपत्समृद्धिं च नवमे राजसंप-
दम् ॥ ६१ ॥ पूर्वोक्तफलसंयोगमन्येष्वपि समं भवेत् ॥
कुजवद्रविवन्मंदः पादत्र्यंशं दलं गतः ॥ ६२ ॥ पादोनमे-
कं मित्राधिमित्रस्वर्क्षे च कोणभे ॥ उच्चे तु नीचे त्रिगुण-
मध्यरौ द्विगुणं ततः ॥ ६३ ॥ अरौ सार्धं क्रमात्कालफल-
जस्त्वेव निर्णयः ॥ शुभैर्दृष्टो रवी राजसेवाफलधनायतिः

## टीका।

र्थे च भावे सैनापत्यधनायतिः सर्वसंपत्समृद्धिश्च नवमे राजसंपत्पूर्वोक्तफल-
संयोगं पूर्वोक्तफलप्राप्तिं च कुरुतः अन्येष्ववशिष्टेषु भावेषु समं तत्तद्भावतुल्यं
फलं भवेदिति ॥ ५९ ॥ ६० ॥ ६१ ॥ अथमंदफलमाह कुजेतिपादेन। मंदः
शनिः कुजरव्युक्तद्वादशभावफलदो भवति। अथाधिमित्रादिस्थानस्थितानां
भावोक्तफलह्रासवृद्धी आह पादमित्यादिसार्धत्रिषष्टिश्लोकपर्यंतम्। मित्राऽ-
धिमित्रस्वक्षेत्रिकोणोच्चेषु वर्तमानेषु ग्रहेषु पूर्वोक्तभावफलं क्रमात्पादत्र्यंशद-
लपादोनैकांशफलदा ग्रहाः स्युः नीचे वर्तमानेषु त्रिगुणं अध्यरौ अधिशत्रु-
स्थाने द्विगुणं अरौ शत्रुक्षेत्रे वर्तमानेषु ग्रहेषु सार्धं क्रमात्कालफलजो निर्ण-
यः ॥ ६२ ॥ ६३ ॥ अथ रव्यादीनां दृष्टिवशात्फलं कथयन्नादौ रविफल-
माह शुभैरिति पंचषष्टिश्लोकपर्यंतम्। अथ रविः शुभैः शुभग्रहैः दृष्टः विलो-
कितश्चेत्तस्य फलं राजसेवा धनायतिश्च, एवं शत्रुभिः दृष्टो रविश्चेत्फलं

## भाषा।

करे. ८ भाग्योदय करे. ९ व्यापार राजसन्मान करे. १० लाभ करे. ११ द्रव्य
चोरीमें जाता रहे १२.॥ ५९ ॥ ६० ॥ ६१ ॥ अब शनिका जो फल है, सो सूर्य,
मंगल यह दोनोंके भावमें जो फल कहा है वो जानना. अब भावोक्त फलकी ह्रास
वृद्धि कहते हैं. जो ग्रह मित्रक्षेत्री होवे तो पादमात्र भावफल जानना. अधिमित्रका
होवे तो तृतीयांश भावफल जानना. स्वक्षेत्रका होवे तो अर्धभावफल जानना. त्रि-
कोणका होवे तो तीनभाग फल जानना. उच्चराशिका होवे तो संपूर्ण फल जानना.
नीचराशिका होवे तो त्रिगुणहीन फल जानना. अधिशत्रुका होवे तो द्विगुणहीन
फल जानना. शत्रुक्षेत्रका होवे तो अर्धहीन फल जानना ॥ ६२ ॥ ६३ ॥ अब सूर्यके

॥ ६४ ॥ शत्रुभिः कलहं दुःखं रुजं जठरनेत्रयोः ॥ मित्र-
दृष्टौ जयं बंधुलाभं पापैश्च रोगिताम् ॥ ६५ ॥ धनहानिं
शशी पापैः शिरोनेत्ररुजं तथा ॥ शत्रुभिः पापकरणं धन-
नाशं गमागमौ ॥ ६६ ॥ शुभैररोगतां सौख्यं धनलाभं
च बंधुभिः ॥ मित्रलाभं जयं क्षेत्रदेशलाभं करोति हि
॥ ६७ ॥ पापैर्दृष्टः कुजः क्षेत्रधनधान्यादिनाशनम् ॥ श-
त्रुभिर्बंधनं रोगं चाहवं दूरवासनम् ॥ ६८ ॥ शुभैस्तु वि-

## टीका ।

दुःखं जठरनेत्रयोः रुजं चेति फलानि, मित्रदृष्टौ रविश्चेज्जयः बंधुलाभश्चेति,
पापैः पापग्रहैः दृष्टो रविश्चेद्रोगितां रुग्णत्वमिति रविफलानि दृष्टिवशात्स्यु-
रिति ॥ ६४ ॥ ६५ ॥ अथ दृष्टिवशाच्चंद्रफलान्याह धनेत्यादिसार्धषष्टिश्लो-
कपर्यंतम् । शशी चंद्रः पापैर्दृष्टश्चेच्छिरोनेत्ररुजं व्यथां धनहानिं च करोति
शत्रुभिः दृष्टश्चेत्पापकरणं पापाचरणं धननाशं गमागमौ भ्रमणमित्यर्थः तथा
शुभैर्दृष्टश्चेदरोगतां सौख्यं बंधुभिः धनलाभं मित्रलाभं जयं क्षेत्रदेशलाभं च
करोतीति ॥ ६६ ॥ ६७ ॥ अथ दृष्टिवशाद्भौमफलमाह पापैरित्यादिएकोन-
सप्ततिश्लोकपर्यंतम् । अथ कुजो भौमः पापैर्ग्रहैर्दृष्टो विलोकितः क्षेत्रधनधा-
न्यादिनाशं करोति शत्रुभिर्विलोकितः बंधनं रोगं आहवं युद्धं दूरवासनं प-

## भाषा ।

दृष्टिका फल कहते हैं. सूर्य शुभग्रहकी दृष्टिसे युक्त होवे तो राजसेवा धनप्राप्ति करे.
शत्रुग्रहोंकी दृष्टि होवे तो कलह, दुःख नेत्ररोग होवे. मित्रग्रहोंकी दृष्टि होवे तो जय,
बंधुलाभ होवे. पापग्रहोंकी दृष्टि होवे तो रोगी होवे ॥६४॥६५॥ अब चंद्रका फल
कहते हैं. चंद्रके ऊपर पापग्रहोंकी दृष्टि होवे तो शिरोरोग, नेत्ररोग, पीडा धनहानि
करे. शत्रुग्रहोंकी दृष्टि होवे तो पापकर्म करे. धननाश होवे. नित्य भ्रमण करे. शुभ-
ग्रहोंकी दृष्टि होवे तो नीरोगीपना, सुख, बंधुसमागम, धनलाभ, मित्रलाभ, जय,
क्षेत्र, देशलाभ करे ॥ ६६ ॥ ६७ ॥ अब मंगलका फल कहते हैं. मंगलके ऊपर
पापग्रहोंकी दृष्टि होवे तो भूमिधनधान्यादिकका नाश करे. शत्रुग्रहोंकी दृष्टि होवे
तो बंधन, रोग, युद्ध, प्रवास करे. शुभग्रहोंकी दृष्टि होवे तो विजय, पराक्रम, क्षेत्र,

अथ देशक्षेत्रलाभं सुहृच्छुभम् ॥ मित्रैश्च धनसंसिद्धिं करोति हि न संशयः ॥ ६९ ॥ शुभैर्बुधो लिपिज्ञानं विद्यालाभं च कौशलम् ॥ मित्रैर्भूषा धनक्षौमरत्नलाभं च शत्रुभिः ॥ ७० ॥ अतिसारं च दुर्बुद्धिं प्रतीकेषु सदोद्यमम् ॥ पापैर्महाविषादं च कुक्षौ शूलं च वर्द्धते ॥ ७१ ॥ गुरुः शुभैस्तु संदृष्टो धर्मकार्योद्यमं सुखम् ॥ जयं धनायतिर्मित्रैर्दारक्षेत्रादिसंग्रहम् ॥ ७२ ॥ शत्रुभिः कुष्ठरोगं च त्वग्दोषकलहं

## टीका ।

वासं च करोति शुभैर्दृष्टो भौमः विजयं पराक्रमं देशक्षेत्रलाभं सुहृच्छुभं सुहृद्भ्यः कल्याणं करोति मित्रैर्दृष्टश्चेद्धनसंसिद्धिं धनप्राप्तिमित्यर्थः हि निश्चयेन करोति न संशय इति ॥ ६८ ॥ ६९ ॥ अथ दृष्टिवशाद्बुधग्रहफलान्याह शुभैरित्यादिश्लोकद्वयेन । बुधः शुभैर्दृष्टः लिपिविज्ञानं विद्यालाभं कौशलं च करोति मित्रैर्दृष्टो बुधः भूषाधनक्षौमरत्नलाभं करोति शत्रुभिर्दृष्टः अतिसारं रोगं दुर्बुद्धिं प्रतीकेषु गात्रेषु विषये सदा उद्यमं उद्योगं करोति पापैर्दृष्टश्चेन्महाविषादं अतिखेदं कुक्षौ शूलं च वर्धते ॥ ७० ॥ ७१ ॥ अथ दृष्टिवशाद्गुरुफलमाह गुरुरित्यादित्रिसप्ततिश्लोकपर्यंतम् । शुभैः संदृष्टो गुरुः धर्मकार्योद्यमं विहिताचरणोद्योगं सुखं जयं धनायतिं च करोति मित्रैर्दृष्टः दारक्षेत्रादिसंग्रहं करोति शत्रुभिर्दृष्टः कुष्ठरोगं त्वग्दोषं कलहं रणं च करोति पा-

## भाषा ।

भूमि मित्रवर्गसे सुखकरे. मित्रग्रहोंकी दृष्टि होवे तो धनप्राप्ति होवे ॥ ६८ ॥ ६९ ॥ अब बुधकी दृष्टिका फल कहते हैं. बुधके ऊपर शुभग्रहोंकी दृष्टि होवे तो लिपिज्ञान, विद्यालाभ, कुशलता प्राप्त करे. मित्रग्रहोंकी दृष्टि होवे तो वस्त्रालंकार, रत्नलाभ करे. शत्रुग्रहोंकी दृष्टि होवे तो अतिसाररोग, दुर्बुद्धि, सदा उद्योग करे. पापग्रहोंकी दृष्टि होवे तो बहुत खेद, कुक्षिमें शूलवृद्धि होवे ॥ ७० ॥ ७१ ॥ अब गुरुकी दृष्टिका फल कहते हैं. गुरुके ऊपर शुभग्रहोंकी दृष्टि होवे तो धर्मकामका उद्योग, सुख, जय, धनप्राप्ति करे. मित्रग्रहोंकी दृष्टि होवे तो स्त्री भूमि आदि पदार्थोंका संग्रह करे. शत्रुग्रहोंकी दृष्टि होवे तो कुष्ठरोग, त्वचारोग, कलह, संग्राम करे ॥ ७२ ॥

रणम् ॥ पापैः पराजयं युद्धे: केदारादिवियोजनम् ॥ ७३ ॥ शुभैः शुक्रः सुखं योषालाभं भूषाधनायतिः ॥ मित्रैस्तु पट्टबंधादि देशलाभादि चाखिलम् ॥ ७४ ॥ पापैः पराजयं योषावियोगं धननाशनम् ॥ शत्रुभिर्याप्यरोगं च मूत्रकृच्छ्रादिकं तथा ॥ ७५ ॥ मंदः पापैस्तथाकुक्षिरोगं बंधधनशयम् ॥ शत्रुभिः शत्रुबाधा च पराभवमथामयम् ॥७६॥ शुभैररोगतां मित्रैर्दृष्टो बंधुसमागमम् ॥ रवौ स्थानबले

## टीका।

पैर्दृष्टः युद्धे पराजयं केदारादिवियोजनं करोति ॥ ७२ ॥ ७३ ॥ अथ दृष्टिवशाच्छुक्रफलान्याह शुभैरित्यादिपंचसप्ततिश्लोकपर्यंतम् शुभैर्दृष्टः शुक्रः सुखं योषालाभं स्त्रीलाभं भूषाधनायतिं भूषणधनप्राप्तिं करोति मित्रैर्दृष्टः पट्टबंधादि देशलाभादि चाखिलेष्टं करोति पापैर्दृष्टः पराजयं योषावियोगं धननाशं च शत्रुभिर्दृष्टः याप्यरोगं कष्टसाध्यरोगं मूत्रकृच्छ्रादिकं च करोति ॥ ७४ ॥ ७५ ॥ अथ दृष्टिवशाच्छनिफलान्याह मंदइतिसार्द्धेन । पापैर्दृष्टो मंदः शनिः कुक्षिरोगं बंधनं क्षयं च करोति तथा शत्रुभिर्दृष्टः शत्रुबाधां पराभवं आमयं च करोति शुभैर्दृष्टः अरोगतां मित्रैर्दृष्टः बंधुसमागमं च करोति ॥ ७६ ॥ अथ स्थानबलवशाद्रव्यादीनां फलान्याह रवावित्याद्येकाशी-

## भाषा।

॥ ७३ ॥ अब शुक्रकी दृष्टिका फल कहते हैं. शुक्रके ऊपर शुभग्रहोंकी दृष्टि होवे तो सुख, स्त्रीलाभ करे. अलंकारकी, धनकी प्राप्ति करे, मित्रग्रहोंकी दृष्टि होवे तो पट्टबंधादि देशलाभ, इष्टप्राप्ति करे. पापग्रहोंकी दृष्टि होवे तो पराजय, स्त्रीवियोग धननाश करे. शत्रुग्रहोंकी दृष्टि होवे तो याप्य कहिये कष्टसाध्य रोग, मूत्रकृच्छ्र रोग करे ॥ ७४ ॥ ७५॥ अब शनिकी दृष्टिका फल कहते हैं. शनिके ऊपर पापग्रहोंकी दृष्टि होवे तो कुक्षिरोग बंधन क्षय करे. शत्रुग्रहोंकी दृष्टि होवे तो शत्रुकी बाधा, पराभव, रोग करे. शुभग्रहोंकी दृष्टि होवे तो रोगरहित करे. मित्रग्रहोंकी दृष्टि होवे तो बंधुसमाग मकरे ॥ ७६ ॥ अब सूर्यादिकोंका स्थानादिक बलसे

पूर्णे स्वदेशे विद्यया बली ॥ ७७ ॥ चंद्रे प्रभुतया भौमे ग्रामण्येन बुधे सति ॥ श्रौतया विद्यया वाऽऽर्यालिपिलेख-नकर्मणा ॥७८॥ जनैर्धनैरमात्येषु बुद्ध्या च बलवान्गुरौ ॥ यद्वा स्वदेशराजस्तु कार्येणैव बली मतः ॥ ७९ ॥ शुक्रे स्वदेशमुख्यो वा त्वाधिपत्येन योषिताम् ॥ मंदे भृतकदा-सानां मुख्यः स्याद्बलवानपि ॥ ८० ॥ उक्तैस्तु पीडितः प्रेष्यः स्थानवीर्योनितेषु तु ॥ समन्यूनाधिकाद्वीर्याद्दृष्टोत्क-

## टीका ।

तिश्लोकपर्यंतम् । रवौ स्थानबले पूर्णे सति स्वदेशे । विद्यया बली भवति चंद्रे स्थानबले पूर्णे प्रभुतया प्रभुत्वेन बली भवति भौमे स्थानबले पूर्णे ग्राम-ण्येन ग्रामे मुख्यत्वेन बली भवति तथा बुधे सति श्रौतया वा ऽ थ वा आ-र्येलिपिलेखनकर्मणा जनैः धर्मैः अमात्येषु च बुद्ध्या बलवान् भवेत् एवं स्थानबले पूर्णे गुरौ सति स्वदेशराजः स्वदेशेऽभिमानः कार्येण कृत्येनैव बली बलवान्मतः तथा भूते शुक्रेतु स्वदेशमुख्यः वा योषितामाधिपत्येन बली भवति तथा बालिनि मंदे सति भृतकदासानां वेतनोपजीविकानां मुख्यः स्यात् तथा शरीरेणापि बलवान्भवति एवं फलानि स्थानबलपूर्णे उक्तानि स्थान-वीर्योनितेषु स्थानबलहीनेषु उक्तैः पीडितः उक्तफलवशात्पीडायुक्तः प्रेष्यो दासश्च भवेत् अतः समन्यूनाधिकाद्वीर्यान्न्यूनातिरिक्तबलात् यः दृष्टो वि-

## भाषा ।

फलादेश कहते हैं. सूर्य स्थानबलमें पूर्ण होवे तो अपने देशमें विद्यासे बलवान् होवे. चंद्र स्थानबलमें पूर्ण होवे तो प्रभुताईकी पदवी पावे. मंगल स्थानबलमें पूर्ण होवे तो गांवमें प्रभुताईकी पदवीसे बली होवे. बुध स्थानबलमें पूर्ण होवे तो श्रौतविद्या-से, लेखनकर्मसे, बुद्धिके बलसे बलवान् होवे. गुरु स्थानबलमें पूर्ण होवे तो अपने देशमें शोभायमान होवे, कर्म करनेसे बलवान् होवे. शुक्र स्थानबलमें पूर्ण होवे तो अपने देशमें मुख्य होवे, स्त्रियोंके आधिपत्यतासे बलवान् होवे. शनि स्थानबलमें पूर्ण होवे तो दासदासीमें और वेतनजीविका करनेवालेमें मुख्य होवे, शरीरसे बल-

र्षात्फलं वदेत् ॥ ८१॥ दिग्बलेनाधिके सूर्ये वाणिज्येन ध-
नायतिः ॥ यशश्च धनवृद्धिश्च चंद्रे तु राजसेवया॥ ८२ ॥
भौमे तु सेवया ख्यातिर्वेदाभ्यासेन सर्वदा ॥ बुधे धना-
यतिः कृष्या यशः स्याद्बुद्धिमत्तया ॥ ८३ ॥ गुरौ धनाय-
तिस्तेन वीर्येण धनशुभ्रता ॥ राजकार्येण शुक्रे च वदान्य-

## टीका ।

लोकितः उत्कर्षः तस्मान्न्यूनातिरिक्तं फलं वदेदितिपूर्णस्थानबलविचारः ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ अथ कालायने चेष्टाबलेष्वन्यतमाधिके ग्रहाणां फलान्याह दिग्बलेनेत्यादिनवाशीतिश्लोकपर्यन्तम् अथ सूर्ये दिग्बलेन अधिके इतरबलाधिक्ये सति वाणिज्येन वणिक्कर्मणा धनायतिः यशः धनवृद्धिश्चेति फलानि चंद्रे तथा भूते सति राजसेवया धनवृद्धिः भौमे दिग्बलाधिक्ये सति सेवया ख्यातिः प्रसिद्धिः सर्वदा वेदाभ्यासेन च प्रसिद्धिः वदान्यत्वेन सर्वदेत्यपिपाठः तत्पक्षे दातृत्वेनेत्यर्थः बुधे तथा भूते कृष्या कृषिकर्मणा धनायतिः बुद्धिमत्तया बुद्धिमतो भावः बुद्धिमत्ता तया यशः कीर्तिः स्यात् गुरौ दिग्बलाधिक्ये धनायतिः तेन वीर्येण द्रव्यबलेन राजकार्येण धनशुभ्रता संपत्प्रकाश इत्यर्थः शुक्रे दिग्बलाधिक्ये वदान्यत्वेन दातृतया यशः कीर्तिः मंदे तथाभूते सति दासाधिपत्येन दासश्रेष्ठतयाऽरिद-

## भाषा ।

वान् होवे. स्थानबलमें हीनबली ग्रह होवे तो पीडायुक्त दास्यत्व करे. इतिस्थानबलविचारः ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ अब सूर्यादिकोंका दिग्बलाधिकादिकोंका फल कहते हैं. सूर्य दिग्बलमें अधिक होवे तो वणिक्व्यापारसे धनप्राप्ति, यशप्राप्ति, धनकी वृद्धि होवे. चंद्र दिग्बलमें अधिक होवे तो राजसेवासे वृद्धि होवे. मंगल दिग्बलमें अधिक होवे तो सेवासे, वेदाभ्याससे प्रसिद्ध होवे. बुध दिग्बलमें अधिक होवे तो बुद्धिसे यश कीर्ति होवे. गुरु दिग्बलमें अधिक होवे तो धनप्राप्तिसे प्रकाशितयश होवे. शुक्र दिग्बलमें अधिक होवे तो दानशीलतासे यश कीर्ति मिले. शनि दिग्बलमें अधिक होवे तो श्रेष्ठतासे, शूरतासे धनप्राप्ति होवे.

त्वेन वा यशः ॥ ८४ ॥ मंदे दासाधिपत्येन धनायतिररि-
दमात् ॥ कालायनबलाधिक्ये रवौ भौमे शनैश्चरे ॥ ८५ ॥
मंत्रोपदेशविधिना पाखंडिपदसंश्रयात् ॥ दासभावेन छ-
ष्णेंदौ कृषितो विद्ययान्यथा ॥ ८६ ॥ गुरौ शुक्रे बुधे पाथो-
निधिजे चात्रिसंभवे ॥ विद्याया वाधने संख्याबलदिग्बल-
वृद्धितः ॥ ८७ ॥ नानाविधायतिः प्रोक्ता इतिचेष्टाधिकेषु
तु ॥ कविद्गुर्वोर्यथा पूर्वं विशेषादेव निर्णयः ॥ ८८ ॥ बलि-
ष्ठो दायरश्म्युक्तफलं सर्वं करोति वै ॥ न्यूनाधिकेनुपातेन

## टीका।

माच्छूद्राद्धनायतिः एवं सप्तग्रहाणां दिग्बलाधिक्यफलमुक्त्वा कालबला-
धिक्येऽयनबलाधिक्ये च फलांतरमाह रवौ भौमे शनैश्चरे च मंत्रोपदेशवि-
धिना तथा पाखंडिपदसंश्रयाद्दासभावेन च यथासंख्यं वर्तनं कृष्णेंदौ कृष्ण-
चंद्रे कालायनबलाऽधिक्ये सति कृषितः कृषिकर्मणाऽन्यथा विद्यया वा व-
र्तनं गुरौ शुक्रे बुधे च तथा पाथोनिधिजे शुक्लचंद्रे अत्रिसंभवे इति तस्यैव
विशेषणं विद्यायाः वा धने धनविषये च संख्याबलदिग्बलयोः वृद्ध्या आ-
धिक्येन लक्षणं ज्ञेयं एवं चेष्टादिकेषु चेष्टाबलाधिक्येषु सूर्यादिग्रहेषु सत्सु
नानाविधायतिः प्रोक्ता कथिता कविद्गुः शुक्रबुधगुरवः यथापूर्वं पूर्वोक्तं फलं
विशेषदृष्ट्या निर्णयेदित्यर्थः तदेव विशदयति कविद्गुः शुक्रबुधगुरवः ब-
लिष्ठाश्चेत् दायोक्तं रश्म्युक्तं च फलं सर्वं करोति कुर्वंतीत्यर्थः वेति निश्चयेन
न्यूनाधिके बले तु अनुपातेन एवं फलं विचिंत्यतां विचार्यतामिति ॥ ८२ ॥

## भाषा।

अब कालबलाधिक्य और अयनबलाधिक्यका फल कहते हैं. सू० मं० श० काल
और अयनबलमें अधिक होवे तो मंत्रोपदेशसे पाखंड करनेसे दास्यत्व करके नि-
र्वाह होवे, कृष्णपक्षका चंद्र काल अयन बलमें अधिक होवे तो खेतीसे विद्यासे
निर्वाह होवे. गुरु, शुक्र, बुध, शुक्लपक्षका चंद्र काल अयनबलमें अधिक होवे तो
विद्यासे, धनसे निर्वाह होवे. अब चेष्टाबलाधिक्यका फल कहते हैं. सूर्यादिग्रह चेष्टा-
बलमें अधिक होवे तो नानाप्रकारकी विद्यासे धनप्राप्ति होवे. ऐसा निश्चय करके

फलमेवं विचिंत्यताम् ॥ ८९ ॥ सौम्येष्विष्टफलाधिकेषु निरतां श्रीमान्सुशीलो गुणी मित्रेष्वेवमतीव धर्मनिरतो दाता सुखी सत्त्ववान् ॥ पापेष्वेवमथापि पापनिरतः शत्रुष्वथो शत्रुभिर्वीर्येणाथ पराजयो जय इमान्पर्यायतः प्राप्नुयात् ॥ ९० ॥ अधिकेष्वशुभेष्वेवमनिष्टाख्यफलानि तु

## टीका ।

॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७॥८८॥८९॥ अथेष्टबलाधिक्यवशात्फलान्याह सौम्येति । इष्टफलाधिकेषु सौम्येषु ग्रहेषु सत्सु निरतां श्रीमान् मित्रेषु सुशीलः अतीव धर्मनिरतः एवं दाता सुखी सत्ववांश्च भवेत् एवं पापेषु कष्टफलाधिक्येषु सत्सु शत्रुषु पापनिरतो भवेत् अथो शत्रुभिः वीर्येण पराजयः अथ वा जयः इमान् श्रीमत्त्वादिफलप्रकारान्पर्यायतः ग्रहस्थित्यनुसारेण प्राप्नुयात् ॥ ९० ॥ अथ फलांतराण्याह अधिकेष्वितिषण्णवतिश्लोकपर्यंतम् । अशुभेषु पापग्रहेषु सत्सु अनिष्टाख्यफलानिभवंति तानि तु व्याधिभिः ज्वरादिभिः कलहैः मित्रैः पीड्यते एवं पापेषु ग्रहेषु दुश्चेष्टः दुष्टा चेष्टा यस्य सः पातकी ध्रुवं भवति एवं शत्रुषु शत्रुग्रहेषु सदा रोगी बंधुभिः मित्रैश्चवर्जितो रहितः स्यात् सर्वद्रेष्टुबलाधिक्ये सति स ग्रहः सर्वत्र अफलदः शुभेषु अधिकेषु फलदेषु सत्सु स्पष्टं फलप्रदो भवति तथा अत्यनिष्टफलः खेटः शुभेषु ग्रहेषु अफलप्रदः फलदो न भवति अन्येषु पापेषु अनिष्टफलदो भवति एवं सर्वत्र सर्वदा फलविचारः कर्तव्यः अथ स्वोच्चादिस्थानषट्स्थाः स्वोच्चस्वत्रिकोणस्वमित्रस्वाधिमित्रस्वोदासीनक्षेत्रस्थाः तथा स्वदिग्वर्गगाः स्वकी-

## भाषा ।

जानना ॥८२॥८३॥८४॥८५॥८६॥८७॥८८॥ ८९॥ अब इष्टकष्टबलाधिक्यका फल कहते हैं· शुभग्रह बुध, गुरु, शुक्र, चंद्र इष्टबलमें अधिक होवे तो अत्यंत लक्ष्मीवान् होवे. मित्रोंके ऊपर सुशीलता, धर्मरत, दानशील सुखी बलवान् होवे. पापग्रह सूर्य, मंगल, शनि, इष्टबलमें अधिक होवे तो शत्रुवोंके ऊपर पापबुद्धि होवे. पराजय होवे॥९०॥अब फलांतर कहते हैं. पापग्रह बलाधिक्यमें होवे तो ज्वरपीडित. दुश्चेष्ट, पातकी होवे. शत्रुग्रहमें होवे तो सदा रोगी, मित्रवर्ग बंधुवर्गरहित होवे.

॥ ९१ ॥ व्याधिभिः कलहैर्मित्रैः पीड्यते नात्र संशयः ॥ एवं पापेषु दुश्चेष्टः पातकी भवति ध्रुवम् ॥ ९२ ॥ शत्रुश्च-वं सदा रोगी मित्रैर्बन्धुविवर्जितः ॥ सर्वद्वेष्टृबलाधिक्ये सर्वत्राफलदो ग्रहः ॥ ९३ ॥ शुभेषु च फलेष्वेव स्पष्टमेव फलप्रदः॥अत्यनिष्टफलः खेटः शुभेष्वल्पफलप्रदः॥९४॥ अनिष्टफलदोऽन्येषु खेटः सर्वत्र सर्वदा ॥ स्वोच्चादिस्थानषट्स्थाः स्युस्तथादिग्वर्गगा अपि ॥ ९५ ॥ क्षेत्रपुत्रकलत्रादिधनधान्यसमृद्धिदाः॥ यदि मित्रादिवर्गस्था धनधान्यविवर्द्धनाः ॥ ९६ ॥ व्याधिदुर्गतिदा प्रोक्ता दशारंभे

## टीका ।

यदशवर्गस्थाः अपि क्षेत्रपुत्रकलत्रादिदातारः धनधान्यसमृद्धिदाश्च भवंति यदि मित्रादिवर्गस्थाः तर्ह्यपि धनधान्यविवर्धनाः भवंति इति ॥ ९१ ॥ ९२॥ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ अथ दशाविचारः व्याधीत्यादिशतश्लोकपर्यंतम् । शीतगोश्चंद्रस्य दशा आरंभे व्याधिदुर्गतिदा प्रोक्ता स्वोच्चादिसंस्थितानां ग्रहाणां दशाप्रारंभे शुभदा भवंति अन्यथा स्वोच्चाद्यन्यस्थानस्थानां ज्योतिषां ग्रहाणां दशाप्रारंभेऽशुभदा अनिष्टा ज्ञेया । केंद्रधूम्रगताः केंद्रधूम्रस्थानस्थिताः दशायां सदा संपूर्णदशायां शुभदा भवंति अथ ग्रहाणां द्रव्याणि कर्माणि गुणाश्च यस्य यः स्वभावः स च एते विषयाः पुरा पूर्वार्द्धे

## भाषा ।

सर्वद्वेषी ग्रहबलाधिक्य होवे तो वो ग्रह निष्फल जानना. और स्वोच्च, मूल, त्रिकोण, स्वक्षेत्र, मित्रक्षेत्र, अधिमित्रक्षेत्र, उदासीन, क्षेत्रस्थ ग्रह अथवा अपने दशवर्गमें जो ग्रह हैं वे सब क्षेत्र, स्त्री, पुत्र, धन, धान्यकी समृद्धि करनेवाले होतेहैं॥९१॥ ॥९२॥९३॥९४॥९५॥९६॥ अब दशाका फल कहते हैं. चंद्रकी दशा प्रारंभमें व्याधि और दुर्गतिकू देनेवाली है. उच्चादि छः स्थानोंमें बैठे हुवे जो ग्रह हैं उनोंकी दशा प्रारंभमें शुभफल देनेवाली है. उच्चादि छः स्थानविना जो अन्य स्थानमें बैठे हुवे जो ग्रह हैं उनोंकी दशा प्रारंभमें अनिष्ट फल देनेवाली है. केंद्रधूम्रस्था-

तु शीतगोः ॥ स्वोच्चादिसंस्थिता दायप्रारंभे शुभदा दशा ॥ ९७ ॥ अन्यथाऽशुभदा प्रोक्ता प्रारंभे ज्योतिषां दश ॥ केंद्रधूम्रगताः खेटा दशायां शुभदाः सदाः ॥ ९८ ॥ द्रव्यकर्मगुणा यस्य स्वभावाः कथिताः पुरा ॥ ते सर्वे स्वदशाकाले योज्या भावदृगादिषु ॥ ९९ ॥ भावदृष्टिबलेष्टानि फलानि कथितानि च ॥ भावाध्यायोक्तरव्यादिफलान्यत्रैव योजयेत् ॥ १०० ॥ आदौ बलफलं प्रोक्तं ततो दृष्टिफलं स्मृतम् ॥ ततो भावफलं प्रोक्तमिष्टानिष्टफलावहम् ॥१०१॥ चेष्टाबलफलं चादौ स्थानवीर्यं ततो भवेत् ॥ दिग्बले च ततः प्रोक्तं कालायनबले ततः ॥ १०२ ॥ इति श्रीबृहत्पा-

## टीका ।

कथिताः उक्ताः ते सर्वे स्वस्वदशाकाले योज्याः तथा भावदृष्ट्यादिविषयफलेष्वपि योज्याः तथा भावफलानि दृष्टिफलानि षड्बलफलानि इष्टकष्टफलानि यानि पुरा कथितानि भावाध्यायोक्तरव्यादिफलान्यपि अत्रैव दशाकाले एवं योजयेदिति ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ अथ मुख्यत्वेन बलग्रहाणामनुक्रममाह आदावितिद्वाभ्याम् । बलविचारे आदौ प्रथमतः बलफलं निसर्गबलफलं प्रोक्तं कथितं एतन्मुख्यं ततः दृष्टिफलं स्मृतं ततो भावफलं ततः इष्टानिष्टफलं ततः चेष्टाबलफलं ततः स्थानबलं ततः कालबलं ततः अयनबलं चेति क्रमेण बलविचारः कर्तव्य इति ॥ १०१ ॥ १०२ ॥ पा-

## भाषा ।

नगत जो ग्रह हैं उनोंकी दशा संपूर्ण कालमें फल देनेवाली है. और ग्रहोंके द्रव्य, कर्म, गुण, स्वभाव यह सब पूर्वार्धमें कहे हैं वे सबोंकी अपनी अपनी दशाके कालमें फलकी योजना करनी. और भावदृष्टि षड्बल इष्टकष्टबल जो पहिले कहे हैं उनोंकाभी फल दशाकालमें जानना ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ अब बलोंका मुख्यत्वसे क्रम कहते हैं. पहिले निसर्गबल मुख्य कहा है, तदनंतर दृष्टिफल, नंतर भावफल, मुख्य. उससे इष्टानिष्टफल मुख्य. उससे चेष्टाबल मुख्य. उससे

राशरहोरायामुत्तरभागे अब्दचर्यादिफलवर्णनं नाम पंच-
दशोऽध्यायः ॥ १५ ॥ ॥ छ ॥

भावांशैः समतां गतः खलु ग्रहः पूर्णं विधत्ते फलं सं-
धिस्थो न फलप्रदोऽतरगतैस्त्रैराशिकेनैव च ॥ भावन्यून-
मथ ग्रहस्य गुणयेदंशादिकं चार्णवैर्हित्वा चास्यथ सांव-

## टीका ।

राशरागाधवारिनिधिनिर्मथनं मया ॥ कृत्वा यथामति कृता टीका पंचद-
शाह्वये ॥ १ ॥ इति श्रीबृहत्पाराशरहोरायामुत्तरार्द्धे श्रीमद्ध्यङ्गन्वयवदशा-
ध्यायनवद्यविद्याविद्योतितदिग्दिग्मंडलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण वि-
रचितायां सुबोधिनीटीकायामब्दचर्याफलवर्णनं नाम पंचदशोऽध्यायः॥१५॥

गणेशः पातु मां देवो यथार्थज्ञानकारकैः ॥ करफूत्कारसंभूतैः शीकरै-
स्तापहारकैः ॥ १ ॥ अध्याये षोडशेऽस्मिंस्तु भावसंस्थग्रहोद्भवम् ॥ संध्या-
दितारतम्येन फलमाह पराशरः ॥ २ ॥ अथ परमऋषिः पराशरः संध्यादि-
विचारेण भावगतफलान्याह भावांशैरिति । भावांशैः भावस्था ये वर्तमानां-
शास्तैः समतां गतः तुल्यतां प्राप्तः ग्रहः पूर्णफलं विधत्ते खलु यथोक्तमिति
शेषः संधिस्थः भावसंधिवर्तमानः ग्रहः फलप्रदो न भवति विफल इत्यर्थः अं-
तरगतैः भावमध्यवर्तमानैः ग्रहैः त्रैराशिकेन अनुपातेन फलं ज्ञेयं अथ ग्र-
हस्य अंशादिकं यदि भावन्यूनं भावांशाल्पं तर्हि तदर्णवैः चतुर्भिर्गुणयेत्
यदि अस्य ग्रहस्य भावांशादंशादिकं अधिकं भवेत्तर्हि भावसंधितः हित्वा

## भाषा ।

स्थानबल मुख्य. उससे कालबल मुख्य. उससे अयनबल मुख्य. ऐसा यह क्रमसे
बलविचार जानना ॥ १०१ ॥ १०२ ॥ इतिबृ० पंचदशोध्यायः ॥ १५ ॥

अब भावफल कहते हैं. जो ग्रह जिस भावमें बैठा है वो भावके जो अंश हैं वो
अंशके तुल्य ग्रहका अंश होवे तो वो ग्रह उक्तप्रमाणसे संपूर्ण फल देताहै और
जो संधिस्थ ग्रह है वो फल देता नहीं है विफल हैं. भावके मध्यमें ग्रह होवे तो
अनुपातसे फल जानना. भावांशसे ग्रहांश कमी होवे तो ४ से गुणन करना. वो

तोऽधिकमथो प्रोक्तं फलं भावजम् ॥ १ ॥ ऊर्ध्वमुखो रवि-
युक्तो राशियुक्तस्त्वधोमुखो ज्ञेयः ॥ तिर्यङ्मुखोऽखिलयु-
तो राशिर्भावाः परेऽप्येवम् ॥ २ ॥ अन्यजातीययोगे तु त-
त्तद्भावफलं वदेत् ॥ स्वजातीयेषु योगेषु त्रिंशाद्यंशा भवं-
त्युत ॥ ३ ॥ तत्त्वमाकृतिरेकाक्षिच्छंदस्तत्त्वं चतुस्त्रयः ॥

## टीका ।

वर्जयित्वा शेषं भावजं फलं प्रोक्तं कथितमिति ॥ १ ॥ अथ ग्रहयोगेन भाव-
लक्षणमाह ऊर्ध्वमुखइति । रवियुक्तो राशिः ऊर्ध्वमुखः राशियुक्तः ग्रहरहितः
अधोमुखो ज्ञेयः अखिलयुतः चंद्रादियुक्तः तिर्यङ्मुखो राशिर्भवति एवं परे
सर्वे भावाः ज्ञेया इति ॥ २ ॥ अथैषां तिर्यङ्मुखादीनां भावानां फलकथन-
रीतिमाह अन्येति । अन्यजातीययोगे भावेषु ग्रहादिसंभूतान्यजातीययोगेऽ-
मुकभावेऽमुकग्रहादिसंभूतो योगः अतः अस्य भावस्यामुकं सदसत्फलमिति
भावदृष्ट्यैव फलं कथयेत् स्वजातीययोगेषु तु नाम अन्यजातीयरोगरहितेषु
केवलं स्वजातीयाः भावजातीया एव योगाश्चेत्तत्र फलं त्रिंशाद्या येंऽशास्ते
एव फलं फलभूता भवंतीति ॥ ३ ॥ अथ भावस्थानांकसंख्या आह तत्त्वेति
सार्धेन । तनुभावे स्थानसंख्यातत्त्व२५,धनभावे आकृतिः२२, सहजे एकाक्षि
२१, सुहृदि छंदः २६, सुते तत्त्वं २५, रिपौ चतुस्त्रयः ३४, जायाभावे
एकोनविंशतिः१९,मृत्यौ छंदः२६, धर्मे नवाक्षी२९,कर्मणि षट्त्रयः३६,आये

## भाषा ।

भावफल आवै और जो कभी ग्रहके अंश भवांशसे अधिक होवे तो भावसंधिमेंसे
हीन करके शेष भावफल जानना ॥ १ ॥ अब भावका विशेष फल कहते हैं. जो
भाव सूर्ययुक्त होवे वो ऊर्ध्वमुख जानना. ग्रहरहित, होवे वो वो भाव अधोमुख
जानना. चंद्रादिग्रहसे युक्त होवे तो तिर्यङ्मुख स्वभाव जानना ॥ २ ॥ अब ति-
र्यङ्मुखादिभावका फल कहते हैं. यह भावका यह शुभाऽशुभ फल है सो भावदृष्टि-
से कहना. और जो भावके स्वजातीय शुभाशुभ योग है, उनका फल तीस अंश-
रूप है ॥ ३ ॥ अब भावके स्थानांक कहते हैं. तनुभावके ३१, धनभावके २२,

एकोनविंशतिच्छन्दो नवाक्षी षट्त्रयस्तथा ॥ ४ ॥ वेदेषवो नृपाः स्थाने भावसंख्याः प्रकीर्तिताः ॥ एकत्रिंशत्त्रयस्त्रिंशद्भानि त्रिंशत्तथैव च ॥ ५ ॥ एकत्रिंशद्द्विनेत्रे च मुनिरामाः खपावकाः ॥ भानि त्रिंशतिरेकद्वौ खवेदाः करणस्य तु ॥ ६ ॥ विषमायां क्रमादोजे युग्मे स्यातां शुभाऽशुभे ॥

## टीका ।

वेदेषवः ५४, व्यये नृपाः १६, एताः स्थाने स्थानविषये भावानां संख्याः क्रमात्प्रकीर्तिता इति ॥ ४ ॥ अथ भावेषु करणांकसंख्या आह एकत्रिंशादिति अर्धसहितेन । तनौ करणांकसंख्या एकत्रिंशत् ३१, धने त्रयस्त्रिंशत् ३३, सहजे भानि नक्षत्राणि २७, सुहृदि त्रिंशत् ३०, सुते एकत्रिंशत् ३१, रिपौ द्विनेत्रे २२, जायायां मुनिरामाः ३७, मृत्यौ खपावकाः ३०, धर्मे भानि २७, कर्मणि विंशतिः २०, आये एकद्वौ २१, व्यये खवेदाः ४०, एवं भावकरणस्य संख्या ज्ञेया इति ॥ ५ ॥ ६ ॥ अथोक्तस्थानकरणानां विषमसमसंख्यया क्रमाच्छुभाऽशुभे आह विषमायामिति । ओजे राशौ विषमायां स्थानविषमसंख्यायां तथा करणसमसंख्यायां क्रमाच्छुभाशुभे फले ज्ञेये एवं युग्मे समे राशौ समायां स्थानसमसंख्यायां अर्थाद्युग्मराशौ करण-

## भाषा ।

सहजके २१, सुखभावके २६, सुतभावके २५, शत्रुभावके ३४, स्त्रीभावके १९, मृत्युभावके २६, धर्मभावके २९, दशमभावके ३६, ग्यारहवें भावके ६४, बारहवें भावके १६, यह क्रमसे जानना ॥ ४ ॥ अब भावके करणांक कहते हैं. तनुभावके ३१, धनभावके ३३, सहजभावके २७, सुखभावके ३०, सुतभावके ३१, शत्रुभावके २२, स्त्रीभावके ३७, मृत्युभावके ३०, धर्मभावके २७, दशमभावके २०, ग्यारहवें भावके २१, व्ययभावके ४०, यह १२ बारह भावोंके करणांक जानना ॥ ५ ॥ ६ ॥ अब स्थानकरणके समविषम संख्याके क्रमसे शुभाशुभ फल कहते है. विषमराशिमें स्थानसंख्या विषम होवे तो शुभफलदायक है. और समराशिमें स्थानसंख्या सम होवे तो अशुभफलदायक है. और विषम राशिमें करणसंख्या सम होवे तो अशुभफलदायक है. विषम करणसंख्या होवे तो शुभफलदायक है

समायां भवतस्तद्वत्पापसौम्यफले क्रमात् ॥ ७ ॥ ओजे व्याधिः समे हानिर्यावत्तु दशकं भवेत् ॥ परतः पंचकं चौजे समे व्याधिरथान्यथा ॥ ८ ॥ यावत्तु दशकं प्राग्वत्त-तस्तद्वत्फलं वदेत् ॥ शिरोरोगाक्षिरोगाश्च रक्तासृक्कामला-ज्वरः ॥ ग्रहणी शीतको मेहप्लीहौ गुल्मलतः क्रमात् ॥९॥ रत्नैर्धान्यैश्च हेमैश्च गोभिः क्षेत्रैश्च राजभिः ॥ दासैश्च

## टीका ।

विषमसंख्यायां च क्रमात्पापसौम्यफले अशुभशुभफले ज्ञेये इति ॥ ७ ॥ अथ विषमसमराशिषु स्थानकरणसंख्यया व्याधिहानी आह ओजे इति सार्धे-न । ओजे विषमराशौ यावत्तु दशकं भवेत् स्थानकरणानां दशसंख्यापर्यंतं व्याधिर्नाशः फलं समे राशौ दशसंख्यापर्यंतं हानिः फलं ज्ञेयं ततः परतः दशसंख्योर्ध्वं पंचसंख्यापर्यंतं ओजे समे च राशौ व्याधिफलं अथ परतः पंचदशसंख्यामारभ्य यावद्दशकं भवेत्पंचविंशतिसंख्यापर्यंतमित्यर्थः प्राग्व-द्व्याधिहानी ओजसमे ज्ञेये ततः परतस्तद्वदेव फलं वदेदिति ॥ ८ ॥ अथ पंचविंशतिमारभ्य दशपर्यंतं फलान्योजे आह शिर इति । शिरोरोगः १ अ-क्षिरोगः २ रक्तासृक् ३ कामला ४ ज्वरः ५ ग्रहणी ६ शीतकः ७ मेहः ८ प्लीहः ९ गुल्मलतः १० एते क्रमाज्ज्ञेयाः एषां स्वरूपाणि वैद्यके इति ॥ ९ ॥ अथ पंचविंशतिमारभ्य दशपर्यंतं समराशौ फलान्याह रत्नैरिति । रत्नैः १

## भाषा ।

॥ ७ ॥ विषमराशिमें दशमसंख्यापर्यंत स्थानकरण संख्या होवे तो व्याधीका नाश-होवे. यह फल जानना. समराशिमें स्थानकरणकी दश संख्यापर्यंत हानिफल जान-ना. उस दसके आगे पांच संख्यापर्यंत व्याधि होवे, पंधराके उपर पचीसतक सम-राशिमें व्याधिफल, विषमराशिमें हानिफल जाना ॥ ८ ॥ अब विषमराशिमें छब्बी-स स्थानकरणसंख्या होवे तो शिरोरोग, सत्तावीस संख्या होवे तो नेत्ररोग, अट्ठा-बीस संख्या होवे तो रक्तविकार, उगणतीस संख्या होवे तो कामला हलीमक रोग होवे, तीस संख्या होवे तो ज्वररोग, एकतीस संख्या होवे तो संग्रहणी रोग, बत्ती-स संख्या होवे तो शीतरोग, तेहतीस संख्या होवे तो प्रमेह रोग, चौतीस संख्या

महिषैरुष्ट्रैर्गजाश्वैर्वृद्धयः स्मृताः ॥ १० ॥ जात्या देशस्य कालस्य स्वानुरूपं फलं वदेत् ॥ तत्तद्भावानुसंज्ञश्च ग्रहा-द्भावात्फलं वदेत् ॥ ११ ॥ उच्चादिषु नवस्वेव कलांशादिषु यत्फलम् ॥भाग्याध्यायोक्तमप्यत्र योजयेत्तु विशेषतः॥१२॥ इति श्रीबृहत्पाराशरहोरायामुत्तरभागे मासचर्याफलव-र्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

## टीका ।

धान्यैः २ हेमैः हेमभिः सुवर्णैरित्यर्थः ३ गोभिः ४ क्षेत्रैः ५ राजभिः ६ दासैः ७ महिषैः ८ उष्ट्रैः९ गजाश्वैः १० वृद्धयः स्मृताः भवंतीति॥१०॥ अथ फलानि वक्तुं जात्यादितारतम्येन फलान्याह जात्येति । यानि अस्मिञ्छास्त्रे फलान्युक्तानि तानि जातिदेशकालतारतम्येन जात्यादिस्वानुरूपं यथा भवति तथा फलं वदेदिति ॥ ११ ॥ पुनश्च फलविचारमाह उच्चेति । अथ उच्चा-दिषु उच्चत्रिकोणादिस्थानस्थितेषु ग्रहेषु तथा कलांशादिषु स्थितेषु ग्रहेषु यदुक्तं फलं तथा भाग्याध्यायोक्तमपि तत्सर्वमत्र मासचर्याफलविचारे विशे-षतः योजयेदिति ॥ १२ ॥ एवं षोडशकेऽध्याय गणेशप्रीतये मया ॥ यथा-मति कृता टीका संशोध्या विबुधैर्मुदा ॥ १ ॥ इति बृ०उत्तरभागे जटाशंकर-

## भाषा ।

होवे तो प्लीह रोग, पयँतीस संख्या होवे तो गुल्मलतरोग होवे ॥ ९ ॥ अब सम-राशिमें स्थानकरणसंख्या छत्तीस होवे तो रत्नवृद्धि जानना. सैंयतीस संख्या होवे तो धान्यवृद्धि जानना. अडतीस संख्या होवे तो सुवर्णवृद्धि. ओगणचालीस संख्या होवे तो गोपशुकी वृद्धि जानना. चालीस संख्या होवे तो क्षेत्रभूमिवृद्धि जानना. एकचालीस संख्या होवे तो राजसे वृद्धि जानना. बयांलीस संख्या होवे तो दाससे वृद्धि जानना. तियांलीस संख्या होवे तो महिष्यादि वृद्धि जानना. चौवालीस संख्या होवे तो उष्ट्रादिक वृद्धि जानना. पँयतालीस संख्या होवे तो गजाश्ववृद्धि जानना ॥ १० ॥ यह स्थानकरणसंख्याका फल जो कहा सो सब जाति, देश, कालतारतम्यतासे अपने स्वरूपसदृश फल जानना ॥ ११ ॥ पूर्वो जो उच्चादिस्था-नगत फल और कलांशादिस्थित ग्रहफल और भाग्याध्यायोक्त सर्व फल यह सब

अर्केन्दुगुरवः शुक्रः क्रमादन्ये बलक्रमात् ॥ भवंति स्थानदाः खेटाश्चत्वारश्च यदैकदा ॥ १ ॥ धनादीनां यथा लब्धिः पंच चेत्पूज्यतायुतः ॥ आरोग्यं वस्त्रलाभश्च षट्सु पट्टस्य बंधनम् ॥ २ ॥ सप्त चेद्राज्यलाभः स्यादेवं करणदा यदि ॥ धनहानिस्ततो व्याधिस्ततस्तु विपदादयः ॥ ३ ॥ सप्तभिर्मरणं प्रोक्तमक्षाभावे मृतिर्भवेत् ॥ तत्र तिष्ठति चे-

## टीका ।

सूनुज्योतिर्विच्छ्रीधरेण विरचिता० सु० टीकायां मासचर्याफलवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

ध्यात्वा गणेशपादाब्जे व्याख्येयं क्रियते मया ॥ अध्याये सप्तदशके यथामति सुबोधिनी ॥ १ ॥ अथ स्थानदखेटानां नैकत्र सहवासतः ॥ फलानि तु विचित्राणि ऋषिः पाराशरोऽब्रवीत् ॥ २ ॥ अथ भगवान्महर्षिः पराशरः ग्रहयोगफलानि कथयन्स्वशास्त्रमुपसंहरति । तत्र स्थानदग्रहवशात्फलान्याह अर्कमित्यादिपंचाभिः । अथार्केन्दुगुरवः शुक्रः रविचंद्रगुरुशुक्राः क्रमादथ वाऽन्ये भौमबुधशनयः एते बलक्रमात् निसर्गबलक्रमतः चत्वारोपि यदा एकदैव स्थानदाः स्थानप्रदा भवंति तदा धनादीनां यथावल्लब्धिः प्राप्तिः स्यात् पंचमे स्थानदे सति पूज्यतायुतः तथाऽऽरोग्यं वस्त्रलाभश्च स्यात् षट्सु स्थानदेषु ग्रहेषु सत्सु पट्टस्य बंधनं पट्टाभिषेकः स्यात् सप्त ग्रहाः स्थानदाश्चेत् राज्यलाभः स्यादिति स्थानफलानि । अथ एवं प्रकारेण यदि करणदातारः तर्हि चतुर्षु धनहानिः पंचसु व्याधिः षट्सु विपदादयः सप्तभिः

## भाषा ।

स्थानकरणफलविचारमें योजना करना ॥ १२ ॥ इति बृ० उत्तरभागे भाषाटीकायां षोडशोऽध्यायः ॥ १६ ॥

अब स्थानादिबलसे ग्रहोंका फल कहते हैं. सू० चं० गु० शु० और मं० बु० श० यह स्थानप्रद एकही बखत होवें तो धनप्राप्ति होवे. पांचवें स्थानद होवे तो पूज्य होवे, आरोग्य वस्त्रलाभ होवे. स्थानद छः ग्रह होवें तो पट्टाभिषेक होवे. स्थानद सात ग्रह होवें तो राज्यलाभ होवे, अब करणफल कहते हैं. करणद ग्रह चार

त्खेटे स्वन्यस्मिन्यादि वा मतः ॥ ४ ॥ उच्चसंख्याधिका अं-
शाश्चंद्रस्य स्थानदाः परे ॥ शुभाख्याः शुभदाः प्रोक्ता रा-
शिनात्र क्रमात्फलम् ॥ ५ ॥ होराशास्त्रमिदं सर्वं भाषितं
तव सुव्रत॥ पुण्यं यशस्यं धन्यं च त्रिकालज्ञानकारणम् ६
विना मनुतपस्यैव शास्त्रज्ञानेन केवलम् ॥ हस्तामलकव-
त्सर्वं जगतां लोकयेत्फलम् ॥ ७ ॥ पुत्राय शिष्याय
च धीमते च तपस्विने मंत्रविदे च दात्रे ॥ दद्यादिमं

## टीका।

करणदैः मरणं प्रोक्तं तथा अक्षाभावे केवलं करणाभावे मृतिर्भवेत् तत्र क-
रणाभावस्थाने यदि वामतः अन्यस्मिन्खेटे तिष्ठति न मृतिः । अथ चंद्रस्य
उच्चसंख्याधिका अंशाः ०।३। एतदधिकाः चेद्ग्रहाः स्थानदाः स्थानफ-
लदाः भवंति परेऽन्ये शुभाख्याः शुभसंज्ञकाः एते सर्वे शुभदाः प्रोक्ताः अत्र
क्रमाद्राशीनां फलं प्रोक्तं भाववदितिध्वनिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अ-
थोक्तशास्त्रस्य फलानि कथयन्नुपसंहरति होरेति पंचभिः । हे सुव्रत ! मैत्रेय !
इदं सर्वं होराशास्त्रं तव मया भाषितं कथितं एतत्पुण्यं पुण्यकारकं यशस्यं
यशस्करं धन्यं धन्यत्वसंपादकं त्रिकालज्ञानकरणं भूतभविष्यद्वर्तमानज्ञान-
कारकं विना मनुतपस्या मंत्रजपव्यतिरेकेणापि केवलमेतच्छास्त्रज्ञानेनैव
सर्वं जगद्धस्तामलकवत्करगृहीतामलकवत्सर्वं फलं लोकयेद्विलोकयेत् एता
दृशमिदं शास्त्रं पुत्राय शिष्याय धीमते बुद्धिमते तपस्विने मंत्रविदे दात्रे वा

## भाषा।

होवे तो धनहानि. पांच होवे तो व्याधि. छः होवे तो विपत्ति. सात होवे तो मरण-
फल जानना. करणका अभाव होवे तोभी मृत्यु होवे. अन्य ग्रह होवे तो मृत्यु न
होवे. चंद्रका उच्चांश ०।३ हैं. इससे ग्रह अधिक होवे तो स्थानफलदायक ग्रह
जानना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अब शास्त्रका फल और उपसंहार समाप्ति-
विषय कहते हैं. हे मैत्रेय ! यह सब होराशास्त्र तुमकू मैंने कहा. यह पुण्यकारक,
यशकारक, धनधान्यसंपादक, भूतभविष्यद्वर्तमानकालका शुभाऽशुभसूचक शास्त्र
है. इस शास्त्रका उत्तम ज्ञान करनेसे मंत्राराधन, देवताराधन, करे बिना इसमें

शास्त्रमहासमुद्रं यथैव शंभुः शिशवे पयोधिम् ॥ ८ ॥ बुद्धिहीनाय दांभाय दांभिकाय त्वमर्षिणे ॥ न दद्याद्यदि दद्याच्चेद्विद्या स्वस्यविनश्यति ॥ ९ ॥ एवं ते कथितं शास्त्रं त्वयि स्नेहाद्द्विजोत्तम ॥ जातकांशं विद्यांशं किं भूयस्त्वं श्रोतुमिच्छसि ॥ १० ॥ इति बृ० उ० भागे दिनचर्यादि फलवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

## टीका।

दद्यात् इमं शास्त्ररूपं महासमुद्रं अगाधमित्यर्थः बुद्धिहीनाय दंभवते दंभकराय वाऽमर्षिणे क्रोधशालिने च न दद्यात् एतद्दोषरहिताय शिशवेऽपि दद्यात्। अत्र दृष्टांतमाह। यथा शंभुः तपस्विने शिशवे उपमन्यवे पयोधिमदात् एवं यदि दुष्टाय दद्याचेदियं विद्या स्वस्य वक्तुः विनश्यति हीयते हे द्विजोत्तम! ब्राह्मणश्रेष्ठ! त्वयि स्नेहादेवं शास्त्रं ते कथितं अनंतरं जातकांशं विद्यांशं जातकांशभूतांशं भूयः किं वा त्वं श्रोतुमिच्छसि ॥६॥७॥८॥९॥१०॥ इति सप्तदशेऽध्याये व्याख्येयं तु यथामति ॥ कृता गणपतिप्रीत्यै परोपकृतयेऽपि च ॥ १ ॥ इति श्रीबृहत्पाराशरहोराशास्त्रे श्रीमदध्यड्ऽन्वयवे०शा०ज्योतिर्विच्छ्रीधरेण विरचितायां सु०टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

## भाषा।

जैसा आमलकी फल लिया होवै वैसा संपूर्ण जगत्का शुभाऽशुभ देखता है. यह शास्त्र पुत्रकूं, शिष्यकूं, बुद्धिमान्कूं मंत्रवेत्ता पुरुषकूं देना. यह शास्त्र समुद्र सरीखा अगाध है. यह शास्त्र दंभीकूं, क्रोधीकूं, दुष्टकूं देना नहीं. दिये तो कहनेवालेकी विद्या नष्ट होती है. और यह पूर्वोक्त दोषरहित बालकभी होवे तो उसकूं यह शास्त्र पढाना जैसा शिवजीने तपस्वी जो उपमन्यु बालक उसकूं पयोधि दिया. हे मैत्रेय! तेरे स्नेहके लिये यह जातकांश मैने कहा. आगे पुनः क्या श्रवण करनेकी इच्छा है सो कहो ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इति बृ० भाषाटीकायां सप्तदशोऽध्यायः ॥ १७ ॥

## मैत्रेय उवाच।

भगवन्प्रश्नशास्त्रं तु सूचिकानां प्रकाशितम्॥ कलौ युगे तु मंदानां यज्ज्ञातुं तद्वदस्वमे॥ १॥ कृते युगे तु धर्मस्य पूर्णत्वात्तपसान्विताः॥ सर्वे जानंति भूतं च भवद्भावि द्विजोत्तम॥ २॥ त्रेतायां तपसा युक्ताः केचिज्जानन्ति

## टीका।

अथाष्टादशकेऽध्याये शास्त्रज्ञानस्य सिद्धये॥ यथावत्कथितो मंत्रावन्य चापि प्रकीर्णकम्॥ १॥ गणेशो मां प्रेरयतु तद्व्याचिख्यासुमर्भकम्॥ अष्टादशतमेऽध्याये दयालुर्विश्वपालकः॥ २॥ अथ भगवान्महर्षिः अष्टादशेऽध्याये मैत्रेयाय यथार्थज्योतिर्ज्ञानप्रदौ मंत्रौ प्रश्नादिप्रकीर्णं चाह। मैत्रेयः पृच्छति भगवन्निति। मैत्रेयऋषिः पराशरात्सर्वं ज्योतिःशास्त्रं श्रुत्वा एतज्ज्ञानाय कलिजडधियां पूर्णज्ञानजनकोपायं ज्योतिःशास्त्रं पृच्छति भगवन्निति। हे भगवन्! सूचिकानां सूचीवद्वेधकबुद्धीनां बुद्धिमतामित्यर्थः ज्योतिःशास्त्रं ज्ञातुं अवगंतुं प्रश्नशास्त्रं प्रकाशितं किं तु अस्मिन्कलियुगे मंदानां यथावज्ज्ञातुं यच्छक्यं भवति तन्मे वदस्व॥ १॥ एवं प्रश्नं कृत्वोपायं वक्तुं उपक्रमते कृते इति चतुर्भिः। हे द्विजोत्तम मैत्रेय! कृते युगे धर्मस्य पूर्णत्वात्सर्वे जनाः तपसान्विताः अत एव एतच्छास्त्रं जानंति अज्ञासिषुरित्यर्थः तेन भूतं प्राक्कालीनं भवद्वर्तमानकालीनं भावि भविष्यत्कालीनं च विदुः ततस्त्रेतायां तपसा युक्ताः केचिद्द्विजाः जानंति। सर्वे द्वापरे तपसा

## भाषा।

अब यह अठारहवें अध्यायमें मैत्रेयऋषि पराशरगुरुके मुखसे संपूर्ण जातक शास्त्रका श्रवण करके मनमें विचार किया कि यह जातकशास्त्रका उत्तम ज्ञान कलियुगमें होना दुर्लभ है; कारण मानव, जडबुद्धि बहुत हैं. वास्ते कलीमें पूर्ण ज्ञान जिससे होवे, ऐसा ज्योतिःशास्त्र पूछते हैं. हे भगवन्! जिनोंकी सूक्ष्म वेधक बुद्धि हैं उनोंकूं ज्ञानदायक प्रश्नशास्त्र तुमने प्रकाशित किया. यह कलियुगमें मंदबुद्धिकूं जैसा ज्ञान होवे वो उपाय कहो॥ १॥ पराशरजी कहते हैं. हे मैत्रेय! सत्ययुगमें सब लोक तपश्चर्यामें रहते. वास्ते इस शास्त्रकूं जानते उससे त्रिकाल

वे द्विजाः ॥ पश्यंति द्वापरे शास्त्रज्ञानेन तपसाऽपि च॥३॥
कलौ युगे तु धर्मस्य पादमात्रव्यवस्थितिः ॥ तपःशक्त्या
तु तज्ज्ञानं न शक्ता मानवा भुवि ॥ ४ ॥ तथाऽत्र परमः
शंभुर्लोकानुग्रहकांक्षया ॥ लक्षीकृत्य निजां शक्तिं विद्या-
माधात्स ईश्वरः ॥ ५ ॥ कलावधि च भक्तानां त्रिकालज्ञा-
नदायिनी ॥ वेदादि वाग्भवं गौरीवदद्वयमथो गिरि ॥ ६॥
परमैश्वर्यसिद्ध्यर्थं वाग्भवं स्यादयं मनुः ॥ सर्वज्ञेतिपदं

## टीका।

शास्त्राभ्यासेन च पश्यंति । एवं युगत्रये एतच्छास्त्रस्य सम्यक् ज्ञातारो ब-भूवुः । अस्मिन्कलियुगे तु धर्मस्य पादमात्रव्यवस्थितिः धर्मपादावशेषत्वं अतः तपःशक्त्या तच्छास्त्रं ज्ञातुं भुवि मानवा न शक्ताः संति तस्माद्यथार्थ-स्तव प्रश्न इति ॥ १ । २ ॥ ३ ॥ ४॥ अथ ज्ञानोपायमाह तथेत्यादिसार्धाष्ट-श्लोकपर्यंतम् । तथाऽपकृष्टज्ञानानत्र भूमंडले मानवान्दृष्ट्वा परमः सर्वोत्कृष्टः शंभुः सदाशिवः लोकानुग्रहकांक्षया परोपकाराय निजां शक्तिं स्वकीयज्ञा-नशक्तिं लक्षीकृत्य स्मृत्वा सः ईश्वरः विद्यां आद्यान्निर्ममे इत्यर्थः । तत्र मंत्रो-द्धारः । वेदादिः प्रणवः वाग्भवं वाग्बीजं ऐमिति गौरीति संबोधनं वदद्वयं वदवदेत्येवं रूपं अथो नंतरं गिरि ततः परमैश्वर्यसिद्ध्यर्थं ऐमिति मंत्रनि-ष्कर्षः " ॐ ऐं गौरि वद २ गिरि परमैश्वर्यसिद्ध्यर्थं ऐं " अयं शक्तिमंत्रः । अथ

## भाषा।

ज्ञान कहते. बाद त्रेता युगमें लोक तपसे रहते. कितनेक ब्राह्मण उससे जानते हैं. सब जानते नहीं हैं. द्वापर युगमें तप और शास्त्राभ्याससे देखते हैं. ऐसा तीन युगमें इस शास्त्रकूं उत्तम तरहसे जाननेवाले होते भये. यह कलियुग-में धर्म एकपादमात्र रहा है. वास्ते तपशक्तिबिना इस शास्त्रकूं जाननेकूं पृथ्वीमें मनुष्य समर्थ नहीं हैं, वास्ते तुमारा प्रश्न यथार्थ है ॥ २ ॥ ३ ॥ ४ ॥ अब ज्ञान होनेका उपाय कहते हैं. इस भूमंडलमें अपकृष्टज्ञानी मनुष्योंकूं देखके सर्वोत्कृष्ट सदाशिवने परोपकारार्थ अपनी ज्ञानशक्तिका स्मरण करके विद्या निर्माण कियी. सो शक्तिशिवके दोनों मंत्र स्पष्ट दिखाते हैं. ॐ ऐं गौरि वद वद गिरि परमैश्वर्य

पूर्वं नाथा तं पार्वतीपते ॥७॥ सर्वलोकगुरो पश्चाच्छिवेति द्वयमक्षरम् ॥ शरणं तु पदं पश्चात्त्वाम्प्रपन्नोऽस्मि तत्परम् ॥ ८ ॥ पालयेति पदं ज्ञानं प्रदापय ततः परम् ॥ ऋषि-स्तु दक्षिणामूर्तिर्गौरी परमेश्वरी तथा ॥ ९ ॥ सर्वज्ञश्च शिवो देवो गायत्री च्छंद ईरितम् ॥ अनुष्टुप् च षडंगं स्याद्वाग्भवेन त्हृदादि च ॥ १० ॥ अनेनाभ्यां द्विजश्रेष्ठ बुद्धिस्तु विमला भवेत् ॥ जपमात्रेण सिद्धिः स्याद्देवज्ञत्वं

## टीका ।

शिवमंत्रोद्धारः पूर्वं सर्वज्ञ इति ततः नाथ इति पदं ततः पार्वतीपते इति पदं ततः सर्वलोकगुरो इति पदं ततः शिवेति पदं ततः शरणमिति पदं ततस्त्वां प्रपन्नोऽस्मीति पदं ततः पालयेति पदं ततः ज्ञानमिति पदं ततः प्रदापयेति पदम् । " सर्वज्ञ नाथ पार्वतीपते सर्वश्लोकगुरो शिव शरणं त्वां प्रपन्नोस्मि पालय ज्ञानं प्रदापय " इति स्पष्टमंत्रनिष्कर्षः एवं रूपौ ज्योतिःशास्त्रज्ञानाय शक्तिशिवमंत्रौ महाविद्येति निर्ममे इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अथ सर्वमंत्राणां ऋष्यादिस्मरणं विना मंत्रसिद्ध्यभावः न्यासेन विना मंत्रस्य भुजंगत्वापत्तिः ध्यानेन विना इष्टसिद्ध्यभावः तंत्रे प्रसिद्धः अतः ऋष्यादीनाह ऋषिरित्येकादशश्लोकपर्यंतम् । अनयोर्मंत्रयोः दक्षिणामूर्तिऋषिः गौरी परमेश्वरी सर्वज्ञःशिवश्च देवते गायत्र्यनुष्टुभौ छंदसी वाग्भवेन ऐं इत्याकारकेण त्हृदादि अंगुष्ठादि न्यासः हे द्विजश्रेष्ठ ! आभ्यां मंत्राभ्यां अनेन विधानेन जपाद्बुद्धिः विमला भवेत् जपमात्रेणैव सिद्धिः स्यात् न पुरश्चर्याद्याव-

## भाषा ।

शिवकार्य ऐं यह शक्तिका मंत्र. अब शिवका मंत्र कहते हैं. सर्वज्ञ, नाथ, पार्वतीपते, सर्वलोकगुरो, शिव, शरणं त्वां प्रपन्नोऽस्मि पालय ज्ञानं प्रदापय यह शिवका मंत्र कहा ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अब शक्तिशिवके दोनों मंत्रके ऋषि देवता छंद कहते हैं. " अनयोर्मंत्रयोः दक्षिणामूर्तिऋषिः गौरी परमेश्वरी सर्वज्ञः शिवश्च देवते गायत्र्यनुष्टुभौ छंदसी मम त्रिकालदर्शकज्योतिःशास्त्रज्ञानप्राप्तये जपे वि-

प्रकाशते ॥ ११ ॥ उद्यानस्यैकवृक्षाधः परे हैमवते द्विज ॥ क्रीडंतीं भूषितां गौरीं शुक्लवस्त्रां शुचिस्मिताम् ॥ १२ ॥ देवदारुवने तत्र ध्यानस्तिमितलोचनम् ॥ चतुर्भुजं त्रिनेत्रं च जटिलं चंद्रशेखरम् ॥ १३ ॥ शुक्लवर्णं महादेवं ध्यायेत्परममीश्वरम् ॥ द्विविधं गणितं ज्ञात्वा शाखास्कंधं वि-

## टीका ।

श्यकत्वमनेन दैवज्ञत्वं ज्योतिषिकत्वं प्रकाशते विराजते प्रश्नकथनपाटवं प्रवर्धते इत्यर्थः इति ॥ ९ ॥ १० ॥ ११ ॥ अथ ध्यानमाह उद्यानस्येत्यादिसार्द्धद्वयेन । उद्यानस्य आरामस्यैकवृक्षाधः मुख्यवटवृक्षाधोभागे हैमवते हिमवत्पर्वतोद्भूते परे उत्कृष्टे आसने इति शेषः भूषितामलंकृतां शुक्लवस्त्रां शुचिस्मितां गौरीं क्रीडंतीं ध्यायेत् तत्रोपवने ध्यानस्तिमितलोचनं ध्यानेन निमीलितदृष्टिं त्रिनेत्रं चतुर्भुजं जटिलं जटाधारिणं चंद्रशेखरं भालचंद्रं शुक्लवर्णं परमं सर्वोत्तमं ईश्वरं सर्वनियंतारं महादेवं सर्वदेवश्रेष्ठं दीव्यति प्रकाशयति सर्वेंद्रियादीनिति देवः महांश्चासौ देवश्च महादेवस्तेषां सर्वेषामपि श्रेष्ठः परब्रह्मेति भावः एवं ध्यायेदिति ॥ १२ ॥ १३ ॥ अथ गणकाधिकार-

## भाषा ।

नियोगः ॥ " ऐसा विनियोग पढके पीछे ऐं यह बीजसे अंगुष्ठादिक न्यास हृदयादि न्यास करना. हे मैत्रेय! यह दोनों मंत्रोंके पुरश्चरण करनेसे निर्मल बुद्धि और ज्योतिषका यथार्थ ज्ञान प्रकाशित होवेगा ॥ ९ ॥ १० ॥ ११ ॥ ऐसे न्यास करके पीछे शक्तिशिवका ध्यान करना. सो कहते हैं. हिमालय पर्वतके ऊपर एक बडा बगीचा है. उसमें एक वटका झाड है. उसकी छायानीचे उत्तम आसनके ऊपर बैठे हुवे शोभायमान, सुपेद वस्त्र जिनोंनें पैरे हैं, और पवित्र हास्यसहित जिनका मुख क्रीडा कर रहे हैं, ऐसी गौरीका ध्यान करना. और ओई बगीचेमें ध्यान करके जिनोंने दृष्टि मीच लिये हैं, तीन नेत्र चार भुजा हैं, जटा धारण किये हैं, जिनके भालमें चंद्र सुशोभित हैं, श्वेत जिनका वर्ण है, सबके नियंता, सर्वोत्तम, सर्वदेवमें श्रेष्ठ ऐसे साक्षान्महादेव परब्रह्म हैं ऐसा ध्यान करना ॥ १२ ॥ १३ ॥ अब ज्यो-

मृश्य च ॥१४॥ होरास्कंधस्य शकले श्रुत्वार्थमवधार्य च॥ वाङ्मी द्विजवरो यः स्यान्न वंध्या तस्य भारती ॥ १५ ॥ अलुब्धो नैष्ठिकः शुद्धो विनयप्रश्रयान्वितः ॥ रत्नं स्वर्णं धनं वस्त्रं पुष्पमूलफलानि तु ॥ १६ ॥ दैवज्ञपुरतो दत्वा पृच्छेदिष्टं प्रियान्वितः ॥ अथ प्राङ्मुख आसीनः शुचि-

## टीका।

माह द्विविधमितिपंचदशश्लोकपर्यंतम् ॥ यः द्विविधं खगोलभूगोलविषयं गणितं ज्ञात्वा शाखास्कंधं विमृश्य विचार्य होरास्कंधस्य शकले द्विप्रकारके श्रुत्वा गुरोः सकाशादधीत्येत्यर्थः अर्थमवधार्य निश्चित्य वाङ्मी प्रशस्तवाग्द्विजवरो भवति न तु जैनशूद्रादिज्योतिषिकः तस्य वाणी वंध्या विफला न भवति ॥ १४ ॥ १५ ॥ अथ प्रष्टुर्लक्षणमाह अलुब्ध इति सार्धेन । पृच्छकः नैष्ठिको निष्ठावाञ्छुद्धो निष्कपटः विनयप्रश्रयान्वितः विनयादियुक्तः अलुब्धो लोभरहितः सन्रत्नस्वर्णधनवस्त्रान्यतमं अशक्तश्चेत्पुष्पमूलफलान्यतमं वा दैवज्ञपुरतः ज्योतिषिकाग्रे दत्वा समर्प्य प्रियान्वितः प्रीतमनाः न तु दानेन खिन्नमानसः इष्टं मनीप्सितं पृच्छेदिति ॥ १६ ॥ अथ दैवज्ञकर्तव्यमाह अथेति द्वाविंशतिश्लोकपर्यंतम् । अथ प्रश्नानंतरं देवविद्दैवज्ञः शुचिः सन्प्राङ्मुख आसीनः प्राङ्मुखोपविष्टः अग्रतः पुरोभागे तिर्यगूर्ध्वाः प्राक्

## भाषा।

तिषिका लक्षण कहते हैं. जो पुरुष भूगोल, खगोल, गणितकूं जानता है और जातकके दो भाग उत्तम रीतिसे गुरुमुखसे जानके विचार करके जो उत्तम वाणीसे बोलता है, जो जाति ब्राह्मणही है, जैन या शूद्रजातका ज्योतिषी नहीं होना, वो उत्तम दैवज्ञ होता है. उसकी वाणी निष्फल नहीं होती ॥ १४ ॥ १५ ॥ पृच्छक निष्ठावान्, निष्कपट, नम्रतादिगुणयुक्त, लोभरहित होके अपने हाथमें सुवर्ण रत्न वस्त्र धान्यमेंसे कोई पदार्थ लेना. गरीब होवे तो पुष्प फल मूलमेंसे कोईभी पदार्थ लेके ज्योतिषिके सामने रखके प्रसन्नमन होके मनईप्सित प्रश्न पूछना ॥ १६ ॥ अब ज्योतिषिका कर्तव्य कहते हैं. पृच्छकने प्रश्न किया पीछे ज्योतिषिने पवित्रतासे पूर्वा-

दैवविदग्रतः ॥ १७॥ तिर्यगूर्ध्वाश्चतस्रस्तु रेखा रज्जुसमा लिखेत् ॥ एकीकुर्यात्तु चत्वारि मध्यस्थानि पदानि च ॥ १८ ॥ तत्र पद्मं लिखेद्रेखापद्ममध्यं सकर्णिकम् ॥ ई-शान्यकोष्ठादारभ्य मीनाद्या राशयः क्रमात् ॥ १९॥ मेष-वीथीवृषाद्यास्तु कौर्प्याद्या मिथुनस्य तु ॥ वीथयो मीनमेषौ तु तुलाकन्ये वृषस्य तु॥२०॥ आरूढाद्वीथिभं यावत्ता-वच्छत्रं तु लग्नतः ॥ आरूढराशिर्लग्नं चेच्छत्रं चाऽपि भवे-त्तथा ॥ २१ ॥ जन्मलग्नं समासाद्य यद्यत्प्रोक्तं तु जातके ॥ तत्सर्वम्प्रश्नलग्नेन प्रश्नकालाद्वदेद्बुधः ॥ २२ ॥ यत्काला-

## टीका ।

पश्चिमाः दक्षिणोत्तराश्च रज्जुसमाश्चतस्रः चतस्रो रेखाः लिखेत् तत्र मध्य-स्थानि चत्वारि पदानि एकीकुर्यात् तत्र पद्मं रेखापद्ममध्यस्थं सकर्णिकं लि-खेत् । ततः ईशान्यकोष्ठात् आरभ्य मीनाद्याः राशयः क्रमाल्लिखेत् तत्रवृ-षाद्या वृश्चिकाद्याश्च मेषवीथयो भवंति मिथुनस्य वीथयः मीनमेषौ वृषस्य तु तुलाकन्ये आरूढाल्लग्नतः यावद्वीथिभं तावच्छत्रं लग्नमेव आरूढराशिश्चे-त्तदेव छत्रं भवेत् एवं विचार्य जातके जन्मलग्नं समासाद्य यद्यत्प्रोक्तं तत्सर्वं प्रश्नकालल्लग्नाद्बुधो वदेदिति ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अ-

## भाषा ।

भिमुख बैठके राशिचक्र आगे लिखा है वैसा लिखना. बीचमें कमल लिखके आ-रूढ लग्नका विचार करना. पृच्छक जिस दिशामें बैठा होवे वो अरूढलग्न अथवा

| १२ | १ | २ | ३ |
|---|---|---|---|
| ११ | अथ राशिचक्रम् | | ४ |
| १० | | | ५ |
| ९ | ८ | ७ | ६ |
| [illegible] | [illegible] | [illegible] | [illegible] |

राशिको स्पर्श करे. बारहलग्नमें उसकू आरूढ जानना. वृ-षादि चार राशिमें मेषवीथी जानना. वृश्चिकादि चार रा-शिमें मिथुनवीथी जानना. मेष, मीन, कन्या, तुला, यह रा-शिमें वृषभवीथी जानना. आरूढलग्नसे जहांतक वीथीकी राशि होवें उतनी संख्यातुल्य तत्काल लग्नसे, संख्याराशिकूं आवे वो छत्रराशि जानना ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥ अब आरूढलग्नसे आयुष्यनिर्णय और द्रेष्काणफल कहते हैं.

वधि लग्नं तत्तत्कालावधि चेत्स्थिते ॥ तेषां बलवतां चैव निर्णयः स्वायुषः स्मृतः ॥ २३ ॥ आद्यद्रेष्काणमर्त्यं च मृत्युदं च क्रमाद्भवेत् ॥ मृगादिकर्कटानां च मीनस्यारूढलग्नतः ॥ २४ ॥ लग्ने पृष्ठोदये क्रूरवेश्मास्तव्ययगा यदि ॥ धने धर्मे कुजे मंदे चंद्रे रंध्रे मृतिर्भवेत् ॥ २५ ॥ पापैर्दुरुधरे जाते लग्नकामसुहृत्स्थिते ॥ चंद्रेऽर्के च विलग्नस्थे त्रि-

## टीका ।

थारूढलग्नतः आयुर्निर्णयं द्रेष्काणफलं चाह यदितिद्वाभ्याम् । अथ लग्नं यत्कालाऽवधि यत्कालपर्यन्तं तत्कालावधि तत्कालपर्यन्तं इच्छितं आयुर्निर्णये पृष्टे सतीत्यर्थः तेषां ग्रहाणां बलवतां सतां आयुषो निर्णयः स्मृतः ग्रहबलेनायुर्निर्णय इत्यर्थः ॥ अथ मृगालिकर्कटानां मकरवृश्चिककर्काणां मीनस्य च आरूढलग्नतः आद्यं तद्रेष्काणे सति लग्नं मृत्युदं भवेत् ॥ २३ ॥ २४ ॥ लग्ने पृष्ठोदय इति । अथ मृत्युलक्षणमाह । पृष्ठोदये प्रश्नलग्ने संति तथा क्रूरा ग्रहा यदि वेश्मास्तव्ययगाः प्रश्नलग्नाचतुर्थसप्तमव्ययस्थाः सति चेत् अथ धने धर्मे द्वितीयनवमे वा स्थाने कुजे मंदे मंगले शनौ वा सति तथा रंध्रे अष्टमस्थाने चंद्रे सति मृतिर्भवेत् ॥ २५ ॥ अथ पुनर्मरणयोगांतरमाह पापैरिति सार्धेन । पापैः पापग्रहैः दुरुधरे योगे जाते सति अथवा जन्मलग्नेऽथवा कामसुहृत्स्थिते सप्तमचतुर्थस्थे चंद्रे सति अथवा प्रश्नलग्नस्थेऽर्के

## भाषा ।

तत्काल लग्नको जो कालावधि है वहांतक आयुष्यनिर्णय कहा है. मकर, वृश्चिक, कर्क, मीन इनोंका आरूढलग्नसे आद्यंत द्रेष्काण होवे तो वो लग्न मृत्युकारक जानना ॥ २३ ॥ २४ ॥ अब मृत्युका लक्षण कहते हैं. प्रश्नलग्नमें पृष्ठोदय लग्न होवे और लग्नसे पापग्रह ४।७।१२ होवे अथवा २।९ मंगल होवे और ८ स्थानमें चंद्र होवे तो मृत्यु होवे ॥ २५ ॥ अब और मरणका योगांतर कहते हैं. प्रश्नलग्नमें वा जन्मलग्नमें पापग्रहका दुरुधरा योग होवे अथवा ७।४ चंद्र होवे अथवा प्रश्नलग्नमें सूर्य होवे और प्रश्नसमयमें राहुकालसमायोग होवे तो व्याधिके निमि-

यते व्याधिना भृशम् ॥ २६ ॥ राहुकालसमायोगे मरणं निश्चितं भवेत् ॥ मेषाद्व्युत्क्रमतो राहुर्वृषात्कालः क्रमाच्च-रेत् ॥ २७ ॥ राशौ राशौ तु पंचाशद्भोगकालो विनाडि-का ॥ अर्कोदयादितश्चोभौ भुंजते च पुनः पुनः ॥ २८ ॥ एका दृष्ट्यब्धिरामेषु षडष्टारंतराः क्रमात् ॥ अर्कवारादि-तो राहू रात्रावेवमुदीरितः ॥ २९ ॥ राहुरुत्क्रमशः प्रा-च्याः कालश्च क्रमशश्चरेत् ॥ उभौ सार्धविनाड्येन राशि-षु द्वादशस्वपि ॥ ३० ॥ इंद्रेंद्वग्निनिशाचरशमवारीशवाय-

## टीका ।

सति च व्याधिना भृशं म्रियते प्रश्नलग्ने राहुकालसमायोगे वा निश्चितं मरणं भवेत् ॥ २६ ॥ अथ राहुकालयोगज्ञानमाह मेषादीत्यादिसार्धचतु-स्त्रिराच्छ्लोकपर्यंतम् । राहुः मेषाद्व्युत्क्रमतः विलोमरीत्या क्रमाच्चरेत् कालः वृषात्क्रमात् द्वादशलग्नेषु चरेत् राशौ राशौ प्रतिराशिं पंचाशद्विनाडिकाः भोगकालः अर्कोदयादितः सूर्योदयलग्नमारभ्य उभौ पुनः पुनः लग्नादि भुंजते तत्रार्कवारादितः सप्तवारेषु क्रमात् राहुः १द्वि २ अधि ४ राम ३ इषु५ षट् ६ अष्ट ८ घटिका राहुः रात्रौ प्राच्याः दिशः सकाशादुत्क्रमशः विलोमगत्या दिक्षु उदीरितः कथितः तथा तेनैव मानेन कालः प्राच्या दिशः सकाशा-त्क्रमशः दिक्षु चरेत् संचरति उभौ द्वावपि सार्धद्विनाड्येन सार्धघटिकाद्व-

## भाषा ।

त्तसे मृत्यु होवे ॥ २६ ॥ अब राहुकालयोगका ज्ञान कहते हैं. राहु मेष, मीन, और कुंभ ऐसे क्रमसे चलता है. काल है वो वृषभ, मिथुन, कर्क ऐसे क्रमसे चलता है. एक राशिमें सूर्योदयसे लेके पचास पल भोगकाल है. इसरीतिसे राहु और काल यह दोनों वारंवार लग्नादिककूं भोगते हैं. उससे सूर्यादि सात वारके विषे क्रमसे १।२।४।३।५।६।८ घडी राहु. रात्रीकूं पूर्व, ईशान, उत्तर वायु यह क्रमसे भोगता है. वैसा काल पूर्व, अग्नि, दक्षिण, नैर्ऋत्य, ऐसे क्रमसे चलता है. यह दोनोंका प्रत्येक दिशामें भोगकाल घटी २ पल ३० तक रहता है. पहिले

वः ॥ रुद्रचंद्रजलेशेशपापकेंद्रयमस्थितः ॥ ३१ ॥ रक्षो वायुस्ततोग्नीशयमवारुणराक्षसाः ॥ वायुसोमशचीनाथ-रक्षोग्निजलपेंदवः ॥ ३२ ॥ वाय्वीशेंद्रयमाः पश्चाद्युग्मेंद्रौ च निशाचरः॥ मरुद्वरुणचंद्रेशपावको वरुणो यमः॥३३॥ वायुरुद्रशशींद्राग्नी राक्षसाश्च ततः परम् ॥ वायुरक्षःश-शींद्रेशपावकांतकवारुणाः ॥ ३४ ॥ अर्कवारादितो वामं राहुः संचरति क्रमात् ॥ रुद्रः समीरः सोमाग्नी यमोऽथ निर्ऋतिर्जलम् ॥ नक्षत्रेपि च वारे च तिथौ चोक्रमतः

## टीका।

येन द्वादशस्वपि राशिषु संचरेतां तत्र राहुः दिक्षु क्रमाद्वामं संचरति इति पं-चत्रिंशत्तमश्लोकार्द्धेनान्वयः तमेव क्रममाह । रविवारे इंद्रः, प्राक् इंदुः सोमः, उदक् अग्निः, आग्नेयी निशाचरः निर्ऋतिः, शमः शमनः दक्षिणः, वारीशः वरुणः पश्चिमः, वायुश्चेता दिशः क्रमेण संचरति इंदुवारे रुद्रः, चंद्रः, जलेशः, ईशः, पावकः, इंद्रः, यमः एषां दिक्षु. भौमवारे रक्षः, वायुः, अग्निः, ईशः, यमः, वरुणः, राक्षसः एषां दिक्षु. सौम्यवारे वायुः, सोमः, शचीनाथः, रक्षः, अग्निः, जलप, इंदुः एषां दिक्षु. गुरुवारे वायुः, ईशः, इंद्रः, यमः, पश्चात् युग्मः।पश्चिमायां इंद्रः, निशाचरः, एतद्दिक्षु. शुक्रवारे मरुत, वरुणः, चंद्रः, ईशः, पावकः, वरुणः, यमः, एतद्दिक्षु. शनिवारे वायुः, रुद्रः, शशी, इंद्रः, अग्निः, राक्षसः, वायुः अथवा रक्षः, शशी, इंद्रः, ईशः, पावकः, अंतकः, वरु-णः एषां दिक्षु. क्रमाद्रव्यादिसप्तवारेषु राहुः संचरतीति ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अथ नक्षत्रतिथिवारेषु दि-क्क्रममाह रुद्र इतिद्वयेन । अथ नक्षत्रे वारे तिथौ च रुद्रः ईशानी समीरः

## भाषा।

जो ५० पल भोगकाल कहा वो लग्न भोगका जानना. अब प्रत्येक वारमें दिशा भोगते हैं वो क्रम टीकामें स्पष्ट है ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ अब नक्षत्रतिथिवारके क्रमसे राहु और कालका परिभ्रमण कहते हैं. दिशाक्रम ईशान १, वायु २, उत्तर ३, अग्नि ४, दक्षिण ५, नैर्ऋत्य ६, प-

क्रमात् ॥ ३५ ॥ अंतिमादादिमाद्राहुः कालश्च चरतस्त-
था ॥ द्वयोर्योगे तु मरणमेकस्मिन्व्याधिरुच्यते ॥ ३६ ॥
नृपा मूर्छा शरास्तत्त्वं तिथिषोडश पंच च॥ द्वितीयेत्वष्टमे
भावस्त्वंतरे त्वनुपाततः ॥ ३७॥ नागाब्देषु गुणा रुद्रा वा-
जिवेदांगपंक्तयः ॥ दशपंचाष्टका मेषाद्रश्मयः संप्रकीर्ति-

## टीका।

वायुदिक् सोमः उदक् अग्निः आग्नेयी यमो दक्षिणा निर्ऋतिः स्पष्टा जलं पश्चिमा आसु दिशासु अश्विनीनक्षत्ररविवारप्रतिपत्तिथीः आरभ्यांतमाद्राहुरुत्क्रमतः आदिमात्कालः क्रमतः एवमुभावपि दिक्षु चरतः एवं संचारेणैकस्मिंस्तिथ्याद्यन्यतमयोगे व्याधिः द्वयोस्तिथ्याद्यन्यतमद्वियोगे मरणमित्युच्यते ॥ ३५ ॥ ३६ ॥ अथ द्वितीयभावादष्टमभावपर्यंतं रश्मीनाह नृपा इति । द्वितीयभावस्य नृपाः १६, तृतीयस्य मूर्च्छाः २१, चतुर्थस्य शराः ५, पंचमस्य तत्त्वं २५, षष्ठस्य तिथिः १५, सप्तमस्य षोडश १६, अष्टमस्य पंच५, ततः अंतरे ये भावाः संति तेषामंकास्तु अनुपाततो ग्राह्याः इति विषयः पूर्वं रश्मिप्रकरणे स्पष्टीकृतोऽस्त्येव॥३७॥अथ मेषादिराशिषु रश्मीनाह नागेत्यादिसार्धेन।नागाः ८, अष्ट ८, इषवः५, गुणाः३,रुद्राः११,वाजिनः७, वेदाः ४, अंगानि ६, पंक्तयः १०, दश १०, पंच ५, अष्ट८, एते रश्मयः रश्म्यंकाः मे-

## भाषा।

श्चिम ७, यह ७ दिशामें अश्विनीसे वर्तमाननक्षत्रतक, रविवारसे वर्तमानवारतक, प्रतिपदासे वर्तमानतिथितक, दिशामें फिरते हैं. सो ऐसा कि राहु अंतिमक्रमसे पश्चिम निर्ऋति ऐसा और काल आदिक्रमसे ईशान, वायु ऐसा पीछे यह दोनोंका संचार एक ठिकाने तिथ्यादिकका दो योग होवे तो मरण. एक होवे तो व्याधि जानना ॥ ३५ ॥ ३६ ॥ अब भावके रश्मि कहते हैं. द्वि. १६, तृ. २१, च. ५, पं. २५, ष. १५, स. १६, अ. ५, शेषभावके अनुपातसे पूर्वी कहे हैं वे जानने ॥ ३७ ॥ अब मेषादिराशिके रश्मि कहते हैं. मेष ८, वृषभ ८, मिथुन ५, कर्क ३, सिंह ११, कन्या ७, तुला ४, वृश्चिक ६, धन १०, मकर १०, कुंभ ५, मीन८,

ताः ॥ ३८ ॥ एकयोगे तु सर्वेषु व्याधिर्द्वाभ्यां भवेन्मृतिः ॥
लक्ष्मीयोगेषु सर्वेषु व्याधिस्तस्य नवाऽपि वा ॥ ३९ ॥
वैधृतौ च व्यतीपाते सार्पभेंतिमसंज्ञिते ॥ कुलीरे विष-
नाडीषु सूर्यदुष्टेषु पंचसु ॥ ४० ॥ पापयुक्ते च नक्षत्रे
राशौ तत्संयुतेऽपि च ॥ संधौ च मासशून्यर्क्षे तिथिरा-
शिषु जन्मभे ॥ ४१ ॥ व्ययाष्टमे च क्षीणेंदौशत्रुग्रहनि-

## टीका ।

षादिराशिषु क्रमात्संप्रकीर्तिताः एषु राहुकालयोर्द्वयोर्योगे व्याधितो मृत्युः स्यात् तथा एषु सर्वेषु एकयोगे व्याधिः स्यादिति ॥ ३८ ॥ अथाऽस्याप-वादमाह लक्ष्मीत्यर्धेन । सर्वेषु पूर्वोक्तेषु लक्ष्मीयोगेषु पूर्वोक्ते एकयोगे स-त्यपि तस्य व्याधिः कदाचित्स्यात्कदाचिन्नस्यादपि ॥३९॥ अथ व्याधितस्य प्रश्नकालमरणसूचककालराहुविशेषयोगांतराण्याह वैधृतौ चेत्यादिपंचच-त्वारिंशच्छ्लोकपर्यंतम् । वैधृतौ व्यतीपाते सार्पभे आश्लेषानक्षत्रे अंतिमसंज्ञिते रेवत्यां कुलीरे कर्कांशे विषनाडीषु नक्षत्रोद्भूतासु पंचसु भौमबुधगुरुशुक्रश-निषु सूर्यदुष्टेषु सूर्यदोषसहितेषु पापग्रहयुक्ते नक्षत्रे तत्संयुते पापग्रहयुते रा-शावपि संधौ प्रातः सायं मध्याह्नादिषु यस्मिन्मासे शून्यर्क्षतिथिराशयः संति तस्मिञ्जन्मभे जन्मनक्षत्रे प्रश्नलग्नाद्व्ययाष्टमे द्वादशाष्टमे क्षीणेंदौ क्षीणचंद्रे सति अथवा तस्मिँस्थानद्वये शत्रुग्रहनिरीक्षिते सति अथवा कालराहुः पादं

## भाषा ।

वह मेषादिराशिके रश्मि जानना ॥ ३८ ॥ अब पूर्वोक्तका अपवाद कहते हैं. पूर्वोक्त जो योग मरणके कहे हैं परंतु लक्ष्मीयोग होवे तो कभी व्याधि होवे कभी न होवे ॥ ३९ ॥ अब रोगीका मरणजीवनप्रश्न कहते हैं. प्रश्नकालमें वैधृति, व्यती-पात, आश्लेषा, रेवती, कर्कांश, विषघटिका, वार, मंगल, बुध, गुरु, शुक्र, शनि, पापग्रहयुक्त नक्षत्र, सायंकाल, प्रातःकाल, मध्यान्हकाल, मास शून्य तिथि वार नक्षत्र, जन्मनक्षत्र, प्रश्नलग्नसे १२।८ क्षीणचंद्र, अथवा १२।८ शत्रुग्रहकी दृष्टि होवे, कालराहु अंगस्पर्श करे तो व्याधि अथवा मरण होवे अथवा राहु आठवीं

रीक्षिते ॥ पादं पृष्ठं च जंघां च जानुनाभिं च गुल्फके ॥ ४२ ॥ कर्णौ च चक्षुषी भालमास्यं कंठं स्पृशेद्यदा ॥ व्याधिर्वा म्रियते तद्वन्मूर्तिं राशिं स्पृशेत्तु वा ॥ ४३ ॥ अष्टमर्क्षं स्पृशेद्यद्वा कलांशादिषु वा तथा ॥ विपद्वधप्रत्यृक्षे च वैनाशं ऋक्षमेववा ॥ ४४ ॥ संस्पृशेत्प्रश्नकाले तु व्याधिर्वा तस्य वा मृतिः ॥ ४५ ॥ शिरोललाटभ्रूनेत्रनासाकर्णकपोलकाः ॥ ओष्ठं च चुबुकं कंठमंसौ हृदयमेव च ॥ ४६ ॥ पार्श्वौ च वक्षः कुक्षिश्च नाभिश्च कटिरेव च॥ जघनं च नितंबं च लिंगमंडं च बस्ति च ॥ ४७ ॥ ऊरू च जानू जंघा च गुल्फांघ्री चाश्विभाक्रमात् ॥ तैलाभ्य-

## टीका।

पृष्ठं जंघां जानुं नाभिं गुल्फं कर्णौ चक्षुषी भालमास्यं कंठं वा यदा स्पृशेत्तदा प्रश्ने व्याधिः मरणं वाऽथ वा राहुर्मूर्तिं राशिं अष्टमं राशिं स्पृशेच्चेत्तदापि मृतिः अथ वाऽष्टमर्क्षं अष्टमलग्नं राहुः स्पृशेत् अथवा कलांशादिषु षोडशांशादिषु राहुः स्पृशेदथवा विपत्तारां वधतारां प्रत्यरितारां वैनाशं ऋक्षं वा स्पृशेत्तचेत्प्रश्नकाले तर्हि तस्य व्याधिर्वा मृत्युर्वा भवेदिति ॥ ४१ ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥ अथाश्विनीक्रमान्नक्षत्रेष्ववयवानाह शिरइतिसार्धद्वाभ्याम् । आश्विभात् अश्विनीनक्षत्रात्तत्काशाक्रमात् कालस्य शिरःप्रभृति अंघ्र्यन्तं सप्तविंशतिसंख्याकाः अवयवा ज्ञेयाः ॥ ४६ ॥ ४७ ॥ अथ प्रष्टुश्चिह्नज्ञानमाह तैलाभ्यक्त इति।तैलाभ्यक्तः वा अशुद्धः सूतकी वा जलद्रुद-

## भाषा।

राशिकूं स्पर्श करे तो मृत्यु होवे. अथवा राहु आठवे लग्नकूं वा षोडशांशकूं अथवा राहु आठवे लग्नकूं वा षोडशांशकूं अथवा विपत्ताराकूं वा वैनाशनक्षत्रकूं प्रश्नकालमें स्पर्श करे तो व्याधि वा मृत्यु होवे ॥४१॥४२॥४३॥४४॥४५॥ अब नक्षत्रपरत्व करके कालके अवयव कहते हैं. अश्विनीनक्षत्रसे लेके रेवतीपर्यंत क्रमसे कालके मस्तक आदि लेके चरणपर्यंत सत्तावीस अवयव जानना ॥ ४६ ॥ ४७ ॥ अब

क्तोऽथ वा शुद्धो जलगर्तसमीपगः ॥ प्रष्टा दैवविदे वाथ मरणं तस्य निर्दिशेत् ॥ ४८ ॥ लग्नत्रिसुतकामारिधर्मकर्मायगः शुभः ॥ रोगशांतिकरा नोचेद्रिपुनीचग्रहस्थिताः ॥४९॥एषु पापा मृति करा नोचेत्स्वर्क्षोच्चमित्रगाः ॥ यस्य यस्य शुभं वाथ रिःफस्थानगताः शुभाः ॥ ५० ॥ यद्वा त्रिकोणकेंद्रस्थास्तस्य तस्य शुभप्रदाः ॥ मृगकर्क्योदितः

## टीका।

निकटवर्ती एवं भूतः प्रश्नकाले प्रष्टा पृच्छकः अथवा दैवविज्ज्योतिषिको वापि चेत्तदा तस्य प्रष्टुर्मरणं निर्दिशेत् ॥ ४८ ॥ अथ लग्ने शुभाशुभग्रहान्प्रश्नकाले आह लग्नेतिसार्धेन। अथ लग्ने तृतीये पंचमे सप्तमे षष्ठे नवमे दशमे लाभे वा शुभग्रहाश्चेद्रोगशांतिकरा भवंति किं तु उक्तस्थानगता अपि रिपुग्रहनीचग्रहवर्तमाना नोचेत्तथा एषु स्थानेषु पापाश्चेन्मृतिकराः मृत्युदाः तथापि यदि ते स्वर्क्षस्वोच्चस्वमित्रराशिवर्तमाना नोचेन्नसंति चेदिति ॥४९॥ अथान्यच्च शुभाशुभमाह यस्येत्यर्धकद्वयेन। यस्य यस्य पुंसः रिष्फस्थानगताः द्वादशभावस्थाः यद्वा त्रिकोणकेंद्रस्थाः ९।५।१।४।७।१०। एषु स्थिताः शुभाः शुभग्रहाः तस्य तस्य पुंसः शुभं भवति यतस्ते शुभप्रदाः शुभदायका इति ॥ ५० ॥ अथ प्रश्नकाले वाऽयनर्तुज्ञानमाह मृगेति। मृगकर्क्योदितः

## भाषा।

पृच्छकके चुभिन्ह कहते हैं. तैलसे स्नान किया होवे, सूतकी, जलके डोहके पास बैठा हुवा प्रश्न करे, वा पूर्वोक्त लक्षणयुक्त ज्योतिषी प्रश्न कहे तो पृच्छकका मृत्यु जानना ॥ ४८ ॥ अब रोगप्रश्नका शुभाशुभ कहते हैं प्रश्नलग्नसे ३।५।६।९।१०। ११ शुभग्रह होवे तो रोग शांत होवेगा, और यह ३।५।६।९।१०।११ स्थानोंमें पापग्रह होवे तो मृत्यु होवेगा. परंतु शुभग्रह नीचादिस्थानगत न होवे तो और पापग्रह उच्चादि स्थानगत न होवे तो पूर्वोक्त फल जानना ॥ ४९ ॥ यह स्थानोंमें १२।९।५।१।७।१० जन्मकालमें या प्रश्नकालमें शुभग्रह होवे तो शुभदायक फल है ॥५०॥ अब प्रश्नकालमें जन्मकालमें अयनऋतुका ज्ञान कहते हैं. मकरराशिसे

सूर्यो राशिपूर्वापरार्धतः॥ शनिशुक्रारचंद्रज्ञगुरवः शिशिरादिषु ॥ ५१ ॥ अर्के ग्रीष्मस्ततोऽन्यैर्वा वाऽयनादृतुरेव

## टीका।

मकरराशितः षड्राशिवर्तमानः सूर्यश्चेदुत्तरायणं तथा कर्कराशितः षड्राशिवर्तमानः सूर्यश्चेद्दक्षिणायनमिति प्रश्नलग्नजन्माभ्यामयनं ज्ञेयं अथ राशिपूर्वार्धतः एतदुक्तं भवति मकरादिषड्राशिषु राशिपूर्वार्धे कर्कादिषड्राशिषु राश्यपरार्धे वर्तमानाः क्रमाच्छनिशुक्रारचंद्रज्ञगुरवः संति चेद्राशिपंचांशविभागेन शिशिरादिऋतुक्रमो जन्मनि ज्ञेयः तथा मकरकुंभमीनमेषवृषमिथुनराशिपूर्वार्धे शनिश्चेच्छिशिर ऋतुः तथा शुक्रश्चेद्वसंतः तथा भौमश्चेद्ग्रीष्मः तथा चंद्रश्चेद्वर्षा तथा बुधश्चेच्छरत् तथा गुरुश्चेद्धेमंतः एवं कर्कादिराशिषट्कोत्तरार्धे क्रमाच्छन्यादिषु स एव क्रमो ज्ञेयः इति अयं ग्रहाणां योगः प्रश्नजन्मलग्नयोरेव ऋतुसूचको ज्ञेयः यथा मकरं जन्मलग्नं प्रश्नलग्नं वा तत्र पूर्वार्धे शन्याद्यन्यतमे शिशिराद्यन्यतमः एवं कर्कादिषट्कान्यतमलग्ने सति तत्रोत्तरार्धे शन्याद्यन्यतमेऽपि शिशिराद्यन्यतम ऋतुर्ज्ञेय इति॥५१॥अर्के इति सार्धेन। प्रश्नलग्नेऽर्के रवौ सति ग्रीष्मः ततोन्यैः क्रमशः ऋतव इति वा एतदुक्तं भवति। लग्ने रव्यादिशुक्रांतषड्ग्रहान्यतमे क्रमशो ग्रीष्माद्यन्यतमः क्रमादृतुः इति वेति अथ तत्रापि अयनादृतुः मृगकर्क्यादितः सूर्य इति पूर्वोक्तायनः

## भाषा।

छः राशितक सूर्य होवे वो उत्तरायण. कर्कसे छः राशितक सूर्य होवे तो दक्षिणायन जानना. अब ऋतुज्ञान कहते हैं. प्रश्नलग्न, जन्मलग्न, मकर, कुंभ, मीन, मेष, वृषभ, मिथुन राशिके पूर्वार्धमें शनि होवे तो शिशिर ऋतु जानना. वैसा शुक्र होवे तो वसंत जानना, मंगल होवे तो ग्रीष्म जानना. चंद्र होवे तो वर्षा जानना. बुध होवे तो शरत् जानना. गुरु होवे तो हेमंत जानना. इस रीतिसे कर्क, सिंह, कन्या, तुला, वृश्चिक, धन इनोंके उत्तरार्धमें पूर्वसरीखे शनि आदि ग्रह होवे तो पूर्वी कहे हुवे ऋतु जानना. बहुधा यह नष्टपत्रिका करनेका विषय है ॥ ५१ ॥ प्रश्नलग्नमें सूर्य होवे तो ग्रीष्मऋतु, चंद्र होवे तो वर्षा, मंगल होवे तो शरत्, बुध होवे तो हेमंत, गुरु होवे तो शिशिर, शुक्र होवे तो वसंत जानना, अथवा शुक्र,

च ॥ शुक्रारमंदचंद्रज्ञजीवाश्च परिवर्तिताः ॥ ५२ ॥ लग्न-
द्रेष्काणकाः प्रोक्ता नवांशेनैव चापरे ॥ तत्पूर्वपरतो मासौ
तिथिः स्यादनुपाततः ॥ ५३॥ लग्नत्रिकोणगो जीवो नवां-
शस्थोऽथ वा भवेत् ॥ ज्ञात्वा वयोनुरूपेण ह्यनुमानवशा-

## टीका।

वशादनुज्ञानमिति। अथ च लग्ने ग्रहाभावे किमित्यत्राह शुक्रारेति। शुक्रा-
रमंदचंद्रज्ञजीवाः लग्नद्रेष्काणपाः प्रवर्तिताः संतः द्रेष्काणदृष्ट्या ग्रीष्मादि-
ऋतुग्रहणं अथवाऽपरे नवांशेन प्रश्नलग्ने यन्नवमांशतः ग्रहविहितः पूर्वोक्त-
रीत्या ऋतुग्रहणमिति मतांतरम् ॥ ५२ ॥ अथ मासतिथिज्ञानमाह तदित्य-
र्धेन। तत्पूर्वपरतो मासौ तस्य पूर्वोक्तरीत्या प्राप्तऋतोः पूर्वपरतो मासौ पू-
र्वार्धे एकमासः उत्तरार्धे द्वितीयमासः तदित्थं वृषभे मिथुने ग्रीष्मे इतिन्या-
येन पूर्वोक्तरीत्या ग्रीष्मर्तौ मासौ पूर्वार्धे वैशाख उत्तरार्धे ज्येष्ठः अथवा संतौ
मधुमाधवौ इति रीत्या ग्रीष्मर्तौ पूर्वार्धे ज्येष्ठः उत्तरार्धे आषाढ इति पक्षांत-
तरम्। एवमेव तिथिस्तु अनुपाततः स्यात् ऋतोः भुक्तभोग्यानुपातेन तिथि-
र्ज्ञेयेति ॥ ५३ ॥ अथ प्रश्नलग्नाद्वयोवर्षमाह लग्नेति। लग्नात्प्रश्नलग्नात्स-
काशात् त्रिकोणगो जीवश्चेत्तर्हि यस्मिन्राशौ वर्तमानस्तद्राशिस्थो यदा
जीव आसीत्तस्मिन्वर्षे जन्म ज्ञेयम्। लग्नत्रिकोणगो न चेद्यत्र कुत्रापि राशौ
यद्राशिनवांशे वर्तते तद्राशिस्थे जन्म बभूवेति ज्ञेयम्। ननु द्वादशवर्षवयो-

## भाषा।

मंगल, शनि, चंद्र, बुध, गुरु यह ग्रह लग्नके द्रेष्काणपति हैं इनके क्रमसे ग्रीष्मादि
ऋतु जानना. अथवा नवांशक्रमसे ऋतु जानना ॥ ५२ ॥ अब मास तिथिका
ज्ञान कहते हैं. पूर्वी जो ऋतु सिद्ध भया उसके पूर्वार्धमें पूर्व मास, उत्तरार्धमें उत्तर
मास. जैसा ग्रीष्मऋतुमें वृषभ, मिथुन मास जानना, अथवा ग्रीष्मके पूर्वार्धमें ज्येष्ठ,
उत्तरार्धमें आषाढ, यह मतांतर है ऐसी अनुपातसे तिथि जानना. ऋतुसे भुक्त-
भोग्य से ॥ ५३ ॥ अब वर्षज्ञान कहते हैं. प्रश्न लग्नसे त्रिकोणस्थानमें गुरु होवे
तो जो राशिका गुरु है वो राशिका गुरु पहिले हो गया है, वो वर्षमें जन्मलग्न
जानना. अवस्थाका अनुमान देखके वर्ष कहना. परंतु गुरु राशिका तो बारह वर्ष-

त्समाः ॥ ५४ ॥ सूर्यस्थितांशतुल्यां वा तिथिं प्रोवाच भार्गवः ॥ राशौ रात्रिदिवाख्ये च जन्मस्यात्तु विलोमतः ॥ ५५ ॥ गतप्राणैर्जन्मकाले ते च प्राणा भवंत्यथ ॥ यद्राशिगः शशी मासः समं वाऽस्पृशदंगकम् ॥ ५६ ॥

## टीका।

धिकस्य कथमिति चेदाह। वयोरूपेणानुमानवशात्समा ज्ञात्वा वदेत् यथा-गुरुनवांशराशिर्मेषः तथा संप्रति वृषे गुरुर्वर्तमानः वयस्तु द्वादशवर्षाधिकं अनुमानतो ज्ञात्वा प्राक्तनद्वितीयावृत्त्या मेषस्थे गुरौ वर्षे जन्म वक्तव्यं तथा चतुर्विंशाधिकेऽनुमानवयसि प्राक्तनतृतीयावृत्त्या मेषस्थे गुरौ जन्म ज्ञेयम्। एवमेवाग्रे षट्त्रिंशाऽधिकेऽनुमानवयसि प्राक्तनचतुर्थ्यावृत्त्या मेषार्के वर्षे जन्मेत्यादि वयोवर्षज्ञानम् ॥ ५४ ॥ अथ तिथिज्ञानं दिवारात्रिज्ञानंचाह सूर्येति। सूर्यस्य स्थिता वर्तमाना येंऽशास्त्रिंशांशास्तत्तुल्यां तिथिं शुक्लप्रतिपदाद्यमांतान्यतमां भार्गवः प्रोवाच तथा प्रश्नलग्नराशौ रात्र्याख्ये दिवाजन्म तस्मिंश्च दिवाख्ये रात्रिजन्मेति विलोमतो ज्ञेयम् । अथ प्राणज्ञानमाह गतेत्यर्धेन । गतप्राणैः जन्मकालात्प्राग्गतैरित्यर्थः तैः करणभूतैः जन्मकाले ये प्राणा उपलभ्यंते ते एव जन्मकालीनाः प्राणा ज्ञेयाः ॥५५॥ अथ प्रश्नकालान्मासराशिलग्नज्ञानमाह यदितिद्वाभ्याम्। प्रश्नकाले य-

## भाषा।

सका परावर्तन है. और वयोमान बीचमें आता होवे तो गुरुनवांश राशिलेके वर्ष कहना ॥ ५४ ॥ अब तिथिका ज्ञान, दिवारात्रिका ज्ञान कहते हैं. सूर्यके जितने अंश हैं उसके तुल्य तिथि शुक्राचार्य कहते हैं और प्रश्नलग्न रात्रिसंज्ञक होवे तो दिवा जन्म दिवस संज्ञक होवे तो रात्रि जन्म कहना ॥ ५५ ॥ प्रश्नकालसे पूर्वी जितने प्राण गये होवे उतने प्राण जन्मकालमें जानना ॥ ५६ ॥ अब प्रश्नकालसे मास, राशि लग्नज्ञान कहते हैं. प्रश्नकालमें जिस राशिका चंद्र होवे वो महिना जानना, मेष राशिका होवे तो चैत्रमास जानना. वैशाख चंद्रमा सम या विषम जिस लग्नकूं स्पर्श करे वहांसे नवम या पंचम घर बलवान् होवै, वो राशि जानना. प्रश्नलग्नसे जितनी राशिऊपर चंद्र होवे उतनी रशिका जन्मलग्न जानना. तीन

तत्त्रिकोणबलाधिक्यं राशिलग्नात्तु यावति ॥ चंद्रस्तावति भं चापि जन्मलग्नं विनिर्दिशेत् ॥ ५७ ॥ मीने मीनं तु लग्नं वा तथान्यैस्त्वन्यलग्नभम् ॥ छायया संयुता यामवा-रर्क्षतिथिराशयः ॥ ५८ ॥ यावंतस्तु धनिष्ठादि जन्मर्क्षं तद्विनिर्दिशेत् ॥ कलांशादिषु यत्प्रोक्तमृक्षं तद्वा भवेदिदम् ॥ ५९ ॥ कलांशाद्यर्धहोरांतप्रोक्तहोरैर्विभावयेत् ॥ पृथग्लि-

## टीका ।

द्राशिगः शशी स मासः मेषे चैत्र इत्यादिः तथा शशी समं वा विषमं यदंगकं लग्न अस्पृशत्तस्मात्त्रिकोणं पंचमनवमान्यतमं यद्बलाधिक्यं भवेत्स राशिर्ज्ञेयः तथा लग्नात्प्रश्नलग्नाद्यावति राशौ चंद्रस्तावति यद्वा राशिस्तज्ज-न्मलग्नं विनिर्दिशेत् मीने प्रश्नलग्ने मीन एव लग्नं एवमन्यैः प्रश्नलग्नैः अन्य-लग्नभमिति वा प्रकारांतरम् ॥ ५६ ॥ ५७ ॥ अथ जन्मर्क्षज्ञानमाह छाययेति । प्रश्नकाले छाया द्रष्टव्या तत्पदैः संयुता मिश्रिताः यामवारर्क्षतिथिराशयः प्रहरवारनक्षत्रतिथिराशयः यावंतो भविष्यंति तावत्संख्याकं धनिष्ठानक्षत्रादि-गणनयोपलब्धं जन्मर्क्षं जन्मनक्षत्रं विनिर्दिशेत्कथयेत् ॥ ५८ ॥ अथ प्रकारां-तरेण नक्षत्रज्ञानमाह कलांशादिष्वित्यर्धेन । पूर्वकलांशादिषु यद्भं प्रोक्तं तदे-वेदं जन्मर्क्षं वा भवेत् ॥ ५९ ॥ तत्र विशेषप्रकारमाह कलांशेत्यर्धेन । कलां-शेभ्यः सकाशादर्धहोरान्तं अर्धहोरापर्यंतं ये प्रोक्ता होराः तैः विभावयेज्जा-नीयादिति ॥ ५९ ॥ अथ प्रकारांतरेण मासादीनाह पृथगित्यादिसार्धेकव-

## भाषा ।

प्रश्नलग्न होवे तो मीनलग्न अन्य लग्न होवे तो अन्य लग्न जानना ॥ ५६ ॥ ५७॥ अब जन्मनक्षत्र ज्ञान कहते हैं. प्रश्नकालमें पादछाया करके उसमें प्रहर, वार, तिथि, नक्षत्रसंख्या मिलावे, सत्ताईससे ज्यादा होवे तो २७ का भाग लेवे जो संख्या है उतनी संख्यातुल्य धनिष्ठादि गणनासे जन्मनक्षत्र जानना ॥ ५८ ॥ अब प्रकारांतर कहते हैं. पूर्व कलांशादिकमें जो नक्षत्र कहा है वो नक्षत्र जानना कलांशसे अर्ध होरापर्यंत जो कहे हैं उतनी होरा जानना ॥ ५९ ॥ अब प्रकारांतरसे मासादिज्ञान कहते हैं. लग्न दो ठिकाने मांडके कला करके स-

लीकृतं लग्नं वर्गणाभिर्हतं पुनः ॥ ६० ॥ आरूढछत्रयोर्वीर्यबलस्य वर्गणाहतम् ॥ ओजे योगः समे हानिरिति तस्य विधीयते ॥ ६१ ॥ स्वैः स्वैर्भागैश्च भक्तं तत्तथा मासादयः स्मृताः ॥ यद्वा कलीकृतं लग्नं तथा कुर्याद्विचक्षणः ॥ ६२ ॥ भावकस्य च शुद्धिं च योगं चैव करोत्यतः ॥ नवभिश्च कलांशाद्यैस्तथैवोच्चादिभिः क्रमात् ॥ ६३ ॥ एकाशीति भिदाः संति नवकाद्यंगशोधनैः ॥ येषां योगगते काले समांतेषु सतां यतः ॥ ६४ ॥ राशिस्तु बलवान्स्वामिगुरुज्ञप्रेक्षणान्वितः ॥ अन्यैः पापैरदृष्टः स्याच्छु-

## टीका।

ष्टिपर्यंतम्। लग्नं पृथग्विधा स्थापयित्वा कलीकृतं वर्गणाहतं कृत्वा पुनः आरूढछत्रयोर्मध्ये यो वीर्येण बलवान् तस्य वर्गणाभिः हतं ओजे विषमे सति पृथक्कृतस्य योगः कार्यः समे सति तु हानिः पृथक्कृतास्यज्जात् इत्येवं प्रकारं तस्य विधानं ततः तत् स्वैः स्वैः मासे द्वादशभिः दिवसे त्रिंशद्भिरित्यादिभागैर्भक्तं तत्तथा पूर्वोक्तरीत्या मासादयः स्मृताः ॥ ६० ॥ ६१ ॥ अथ प्रकारांतरेण मासाद्यानयनमाह यद्वेतिचतुःषष्टिपर्यंतम्। यद्वाऽथवा लग्नं कलीकृतं सत् तथा पूर्वोक्तवत्कुर्यात् ततः भावशुद्धिं कृत्वा प्राग्वत्पृथक्कृतस्य योगं कृत्वा नवभिः कलांशाद्यैः प्रकारैः तयोच्चत्रिकोणादिप्रकारैश्च क्रमादेकाशीतिभिदाः भवंति तासु नवकाद्यंगशोधनैर्येषां सतां योगगते काले समाप्तेषु तेषु तत्त-

## भाषा।

वर्गसे गुणन करके पुनः आरूढछत्रमें जो बलवान् होवे उसके वर्गसे गुणन करके विषम होवे वो पृथक्में मिलाना. सम होवे तो पृथक्मेंसे कमी करना. पीछे १२ से भाग लेना तो मास जानना. तीससे भाग लिये तो दिवस जानना ॥ ६० ॥ ६१ ॥ अथवा लग्नकी कला करके पूर्वसरीखी सब गणितक्रिया करके भावशुद्धि करके पृथक्से मिलायके नवकलांशसे और उच्च त्रिकोणादि प्रकारसे इक्यासी भेद होते हैं उसमें नवकाद्यंगशोधनसे जहां अवसान

भदृष्ट्या प्रयोजयेत् ॥ ६५ ॥ चंद्रार्काचार्यशुक्रज्ञाः पादं मित्रं भकर्मणी ॥ पश्यंति च शनिः पूर्णमथ धर्मसुतौ गुरुः ॥ ६६ ॥ सर्वेऽर्धबंधुमृत्यू च पूर्णं पश्यति भूमिजः परे त्रिपादं पूर्णं च सर्वे पश्यंति सप्तमम् ॥ ६७ ॥ उच्चमूलसुहृत्स्वर्क्षस्वद्रेष्काणनवांशके ॥ स्थितस्य स्थानवीर्यं

## टीका ।

न्मासादिबोद्धव्यमिति ॥ ६२ ॥ ६३ ॥ ६४ ॥ अथ लग्नस्य बलवत्त्वमाह राशिरिति । राशिर्लग्नं स्वामिगुरुज्ञप्रेक्षणान्वितः पतिगुरुबुधानां पूर्णदृष्ट्या युतः बलवान् भवति अन्यैः पापैः स्वामिभिन्नैः पापग्रहैः अदृष्टः सन् शुभदृष्ट्या गुरुबुधव्यतिरेकेणापि अन्यशुभग्रहदृष्टिवशेन च तस्य बलवत्त्वं प्रयोजयेति ॥ ६५ ॥ अथ ग्रहणां दृष्टिमाह चंद्रेतिद्वाभ्याम् । चंद्ररविगुरुशुक्रबुधाः भौमश्च मित्रभकर्मणी तृतीयदशमस्थाने पादं पाददृष्ट्या पश्यंति शनिस्तु तृतीयदशमस्थानद्वयं पूर्णं पश्यति एवं धर्मसुतौ नवमपंचमस्थाने सर्वे ग्रहा अर्धं गुरुस्तु ९।५ एतत्स्थानद्वयं पूर्णं पश्यंति एवमेव बंधुमृत्यू चतुर्थाष्टमे भूमिजो भौमः पूर्णम्पश्यति परे सर्वे ४।८ एतत्स्थानद्वयं त्रिपादं त्रिपाददृष्ट्या पश्यंति अथ सर्वेऽपि रव्यादिशन्यताः सप्तमं स्थानं पूर्णं पूर्णदृष्ट्या पश्यंतीति ॥ ६६ ॥ ६७ ॥ एवं ग्रहणां दृग्बलमुक्त्वा स्थानबलं दिग्बलं चाह उच्चेति द्वाभ्याम् । अथ स्वोच्चमूलत्रिकोणस्वसुहृत्स्वराशिस्वद्रेष्काणस्वनवांशके

## भाषा ।

आवे वहां मासादिक जानना ॥ ६२ ॥ ६३ ॥ ६४ ॥ अब लग्नका बल कहते हैं. जिस लग्नकूं अपना गुरु, बुध, पूर्णदृष्टिसे देखते होवे तो लग्न बलवान् जानना. परंतु अपने स्वामिविना अन्य पापग्रहसे दृष्ट न होवे तो, बलवत्त्व योजना ॥ ६५॥ अब ग्रहोंकी दृष्टि कहते हैं. सू० चं० मं० बु० गु० शुक्र ३।१० वें घर ऊपर पाददृष्टिसे देखते हैं, शनि ३।१० वें घरऊपर पूर्णदृष्टिसे देखते हैं ९।५ वें घर ऊपर सब ग्रह द्विपाददृष्टिसे देखते हैं, परंतु गुरु पूर्णदृष्टिसे देखता है, वैसा चार ८ वे घरऊपर मंगल पूर्णदृष्टीसे देखता है. दूसरे सर्व ग्रह त्रिपाददृष्टिसे देखते हैं. और ७ घरमें सूर्यादि सात ग्रह पूर्ण दृष्टिसे देखते हैं ॥ ६६ ॥ ६७ ॥ अब

स्यात्कुजार्कौ दशमे शनिः ॥ ६८ ॥ सप्तमे ज्ञगुरू लग्ने च-न्द्रशुक्रौ तु वेश्मनि ॥ दिग्वीर्यसंयुता एते नाऽन्यत्र प्रश्न-कर्मणि ॥ ६९ ॥ मृगादिराशिषट्कस्थाश्चंद्रार्कज्ञार्यभार्ग-वाः ॥ बलवंतः कुजार्की तु कर्कटादिगतौ तथा ॥ ७० ॥ पूर्वपक्षे शुभे कृष्णे पापास्तु बलिनस्तथा ॥ वक्रिणो बलि-नः खेटा श्चेष्टाबलसमन्विताः ॥ ७१ ॥ शुभाः पापा दिवा

## टीका ।

समाहारे एकवचनं एषु स्थानेषु स्थितस्य स्थानवीर्यं स्यादिति ज्ञेयम् । अथ लग्नाद्दशमस्थाने कुजार्कौ सप्तमे शनिः लग्ने ज्ञगुरू वेश्मनि चतुर्थे चंद्रशुक्रौ चेति ग्रहाः प्रश्नकर्मणि दग्वीर्ययुता भवंति एतेऽन्यत्र विषयेनेति ॥ ६८ ॥ ॥ ६९ ॥ अथायनबलमाह मृगेति । मृगादि मकरादि यन्मिथुनांतं राशिषट्कं तत्रस्थाः चंद्ररविबुधगुरुशुक्राः तथा कुजार्की भौमशनी तु कर्कटादिगतौ कर्कादिधनुर्मर्यादराशिषट्कगतौ च बलवंतः अयनबलिनो भवंति अथ प-क्षचेष्टादिवारात्रिनिसर्गबलान्याह पूर्वेतिद्वाभ्याम् । शुभाः ग्रहाः पूर्वपक्षे शु-क्लपक्षे तथा पापाः खलास्तु कृष्णपक्षे बलिन इति प्रश्ने पक्षबलं ज्ञेयम् । अथ वक्रिणः वक्रंगताः खेटाः चेष्टाबलसमन्विताः बलिनः नाम चेष्टाबलवंत

## भाषा ।

ग्रहोंका स्थानबल दिग्बल कहते हैं. जो ग्रह स्वक्षेत्र उच्च मूल त्रिकोण मित्र अधिमित्र राशिका होवे और स्वनवांश स्वद्रेष्काणमें होवे तो स्थानवीर्य जानना. अब दिग्बल कहते हैं. प्रश्नलग्नसे १० घर सूर्य, मंगल दिग्बली जानने. ७ वेंघर शनि दिग्बली जानना. १ घरमें बुध गुरु दिग्बली जानने. ४ घरमें चंद्र शुक्र दिग्बली जानने. यह प्रश्नकर्ममें दिग्बल जानना. अन्य जातक मुहूर्तमें नहीं लेना ॥ ६८ ॥ ६९ ॥ अब अयनबल कहते हैं. मकरसे मिथुनपर्यंत छः राशीमें सूर्य, चंद्र, बुध, गुरु, शुक्र यह पांच ग्रह होवे तो अयनबली जानने. और कर्कसे धन-पर्यंत छः राशीमें मंगल, शनि, यह दोनों होवे तो अयनबली जानने ॥ ७० ॥ अब पक्षबल कहते हैं. शुक्लपक्षमें शुभग्रह बलवान् जानने. कृष्णपक्षमें पापग्रह बलवान् जानने. अब चेष्टाबल कहते हैं. वक्री ग्रह चेष्टाबली जानने. अब दिवारा-

रात्रौ बलिनः स्युः क्रमात्स्मृताः ॥ निसर्गबलिनः प्राग्वदेवं स्युः प्रश्नकर्मणि ॥ ७२ ॥ लग्नहोराद्रेष्काणार्कनवांशाः सप्तमांशकः ॥ कलांशः कालहोरा च त्रिंशांशः षष्टिभागकः ॥ ७३ ॥ पूर्वपूर्वो बली प्रोक्तो न बली चोत्तरोत्तरः ॥ प्रश्न-

## टीका ।

इति चेष्टाबलं अथ शुभाः दिवाबलिनः पापाः रात्रौ बलिनः क्रमात्स्मृताः इति दिनरात्रिबलम् । निसर्गबलिनः प्राग्वत्पूर्वोक्तरीत्या ज्ञेयाः एवं प्रश्नकर्मणि षड्बलं कथितमिति ॥ ७१ ॥ ७२ ॥ अथ दशवर्गबलमाह लग्नेतिसार्धेन । लग्नं १ होरा २ द्रेष्काणः ३ अर्को द्वादशांशः ४ नवांशः ५ सप्तांशः ६ कलांशः षोडशांशः ७ कालहोरांशः ८ त्रिंशांशः ९ षष्टिभागकः १० एवं दशवर्ग्यां पूर्वपूर्वः उत्तरापेक्षया पूर्वो बली प्रोक्तः उत्तरोत्तरः पूर्वापेक्षया न बली हीनबली इत्यर्थः इति दशवर्गबलम् ॥ ७३ ॥ अथ प्रश्नलग्नाज्जन्मलग्नमाह प्रश्नलग्नं कलीकृत्येत्यादिभिस्त्रिभिः श्लोकैः । प्रश्नलग्नस्य कलां कृत्वा नवसंख्यया गुणितं कृत्वा पश्चाद्वेन सप्तविंशतिसंख्यया भागः कार्यः ततश्च यल्लब्धं तन्नवमांशसंज्ञकं ज्ञेयम् । ततश्च यच्छिष्टं तदेकत्र संस्थाप्य लब्धसंख्यां सप्तभिर्गुणितां कृत्वा चतुर्भिर्विभज्य च यल्लब्धं तन्नवमांशसंज्ञकं जातं तादृशनवमांशसंज्ञकसंख्या जन्मलग्नस्य बोद्धव्या अथवा पूर्वोऽवशिष्टसंख्यया त्रिगुणीकरणं कृत्वा द्वादशभिर्विभज्य यदवशिष्टं तज्जन्मलग्नं बोद्धव्यं अ-

## भाषा ।

त्रिबल कहते हैं. शुभग्रह दिवाबली जानना. पापग्रह रात्रिबली जानना. निसर्गबल पहिले सरिखा जानना. इसतरह प्रश्नकालके षड्बल कहे ॥ ७१ ॥ ७२ ॥ अब दशवर्ग उत्तरोत्तरबली कहते हैं. लग्न १, होरा २, द्रेष्काण ३, द्वादशांश ४, नवांश ५, सप्तांश ६, षोडशांश ७, कालहोरांश ८, त्रिंशांश ९, षष्ट्यंश १०, यह उत्तरोत्तर हीनबली जानने ॥ ७३ ॥ अब प्रश्नसे जन्मकाल कहते हैं. प्रश्नलग्नकी कला करके नवसे गुणन करना. पीछे सत्तावीससे भाग लेना. लब्ध जो आवे सो नवमांश जानने. शेषकूं एकतरफ रख छोडना. पीछे लब्धकूं सातगुणे करके चारसे भाग लेना. जो लब्ध है वो नवांश जानना. वो नवांशसदृश लग्न

लग्नं कलीकृत्य नवघ्नं भेनभाजितम् ॥ ७४ ॥ लब्धं नवांशकं ज्ञेयं शिष्टमात्मकसंस्थिते ॥ लब्धं सप्तगुणं वेदभक्तं शिष्टमिहांशकः ॥ ७५ ॥ नवांशसदृशं लग्नं यद्वा त्रिघ्नार्कभाजितम् ॥ सप्ताप्तशिष्टं लग्नं च सप्तमे मासि निश्चिते ॥ ७६ ॥ सौम्ये तदेव कमर्क्षं जन्मर्क्षं वा भवेद्बलम् ॥ इदं शास्त्रं मया प्रोक्तमाद्यन्तं तव सुव्रत ॥ ७७ ॥ नाशिष्याय प्रदातव्यं नापुत्राय कदा चन ॥ गुणशीलयुतायैव शिष्यायैव द्विजातये ॥ ७८ ॥ दातव्यं तु प्रयत्नेन वेदांगमिदमु-

## टीका ।

थवा शेषसंख्यां सप्तभिर्विभाज्य यल्लब्धं तत्सप्तममासस्य लग्नमवगंतव्यं सराशिः शुभग्रहयुक्तः स्याच्चेत्तदेव कर्मनक्षत्रं जन्मनक्षत्रं वा ज्ञातव्यम् ॥ ७४ ॥ ॥ ७५ ॥ ७६ ॥ अथास्य शास्त्रस्य वेदांगत्वं प्रतिपादयन्नध्याध्यधिकारं च प्रतिपादयन्नुपसंहरति इदमिति द्वाभ्याम् । हे सुव्रत ! उत्तमाचारसंपन्न मैत्रेय ! इदमुक्तप्रकारकं शास्त्रं ज्योतिःशास्त्रं आद्यंतं समग्रमित्यर्थः तव प्रोक्तं अशिष्याय कुशिष्यायेत्यर्थः तथाऽपुत्राय कुपुत्रायेत्यर्थः कदा च न न प्रदातव्यं यत इदं उत्तमं त्रिकालजनकत्वादुत्कृष्टं तथा वेदांगं वेदानामवयवीभूतं वेदमूलत्वात्सर्वमान्यमिति भावः ॥ ७७ ॥ ७८ ॥ इति होरागमे त्वार्षे पराशरगुरूदिते ॥ उत्तरार्धेऽष्टादशेचाध्याये ऽऽख्यापितं मया ॥१॥ इति बृ०

## भाषा ।

जन्मका जानना. अथवा उस्कूं त्रिगुणित करके बारहसे भाग लेना. वो शेष जन्मलग्न जानना. अथवा शेषकूं सातसे भाग लेके जो आवे वो लग्न सातवे महिने जानना. शुभग्रहकी राशि होवे तो ओई कर्मनक्षत्र वा जन्मनक्षत्र जानना ॥ ७४ ॥ ॥ ७५ ॥ ७६ ॥ ७७ ॥ अब शास्त्रका वेदांगत्व प्रतिपादन करते हैं. हे मैत्रेय! यह जो कह्या आद्यन्त ज्योतिःशास्त्र सो कुपुत्रकूं और कुशिष्यकूं कदापि देना नहीं. जो गुणवान्, शीलवान् होवे. उसकूं प्रयत्न करके देना. यह शास्त्र त्रिकाल-

च्यते ॥ इति श्रीबृहत्पाराशरहोरोत्तरभागे प्रश्नकरणं नामाऽष्टादशोऽध्यायः ॥ १८ ॥

अध्यायानुक्रमं वक्ष्ये त्वादौ शास्त्रावतारणम्॥ प्रादुर्भावोग्रहाणां तु द्वितीये च प्रकीर्तितः ॥ १ ॥ ततो राशिस्वभावश्च चतुर्थे दृष्टिवर्णनम् ॥ गर्भाधानं ततः पश्चात्सूतिकाविधिरेव च ॥ २ ॥ अरिष्टं सप्तमाऽध्याये सुतस्य तदनंतरम् ॥ पित्रोश्च मातुलादीनां तद्भंगो दशमात्स्मृतः ॥३॥

## टीका ।

उत्तरभागे श्रीम०ज्योतिर्विच्छ्रीधरेण विरचितायां सुबोधिनीटीकायां प्रश्नकरणं नाम अष्टादशोध्यायः ॥ १८ ॥

एकोनविंशेऽध्यायेस्मिन्ननुक्रम उदीर्यते ॥ श्रीगणेशः प्रेरयतु सम्यग्व्याख्याकृताविह ॥ १ ॥ अथ श्रीमहर्षिः उक्तशास्त्रानुक्रमं सुखेनेष्टविषयोपलब्धये कथयति अध्यायेत्यादिसार्धसप्तभिः । हे मैत्रेय ! उक्ताध्यायानामनुक्रमं वक्ष्ये कथयिष्ये तत्रादौ प्रथमाध्याये शास्त्रावतारणं शास्त्रोत्पत्तिः ततः द्वितीये ग्रहाणां रव्यादीनां प्रादुर्भावः प्रकटीभावः तृतीये राशीनां मेषादीनां स्वभावश्चतुर्थे दृष्टिवर्णनं ततः पश्चात्पंचमे गर्भाधानं षष्ठे सूतिकाविधिः सप्तमेऽरिष्टं अनंतरमष्टमाध्याये सुतस्य पुत्रादिसंततेः पित्रोर्जननीजनकयोश्च विचारः नवमे मातुलादीनां विचारः दशमात्तेषां पूर्वयोगानां भंगविचारः एकादशे

## भाषा ।

ज्ञानदायक हैं. उत्तम वेदांग वेदके नेत्र हैं. वेदमूल हैं. वास्ते सर्वमान्य है ॥७७॥ ॥ ७८ ॥ इति बृ० भाषाटीकायामष्टादशोध्यायः ॥ १८ ॥

अब यह उगनीसवें अध्यायमें पूर्व भाग और उत्तर भागका विषयानुक्रम कहते हैं. पहिले अध्यायमें शास्त्रोत्पत्ति कही. दूसरेमें सूर्यादिग्रहोंका प्रादुर्भाव कहा. तीसरेमें मेषादिराशिका स्वभाव कहा. चौथे अध्यायमें दृष्टिका वर्णन. पांचवें अध्यायमें गर्भाधाननिर्णय. छठे अध्यायमें सूतिकाविधान कहा. सातवें अध्यायमें अरिष्टयोग. आठवें अध्यायमें पुत्र, माता, पिता इनोंका विचार. नवमें मातुलादिकका विचार. दसवें अध्यायमें योगभंगविचार. ग्यारहवें अध्यायमें धूमादिग्रहोंका विचार.

धूमाद्येकादशे मिश्रः पंचांगानां फलं तथा ॥ कारकादि फलं तद्भावानां च फलं तथा ॥ ४॥ द्वादश द्वादशाऽध्याये द्विग्रहाद्याश्च षट् स्मृताः ॥ अष्टवर्गादिचैकस्मिन्नाभसादिस्तु चापरे ॥ ५॥ चिरायुषादियोगश्च पंचाध्यायास्ततः परम् ॥ राजयोगास्तथावस्था अंतर्दायविधिस्ततः ॥ ६ ॥ दायानां च फलं सप्तस्वंतर्दायस्त्रयोदश ॥ लक्षणं भूपवर्गाणां योगादिषु बलं ततः ॥ ७ ॥ एवं त्वशीतिरध्यायाः पू-

## टीका ।

धूमादिग्रहविचारः द्वादशमारभ्य त्रयोविंशत्यध्यायपर्यंतं द्वादशाध्यायेषु मिश्रफलं वा मिश्रफलाध्यायः पंचानां फलं च तथा कारकादिफलं द्वादशभावानां फलं च द्विग्रहाद्याः षट् योगास्तत्र षडध्यायाः स्मृताः एकस्मिन्नध्यायेऽष्टवर्गादिकथितं अपरे विंशत्यध्यायास्तेषु नाभसादियोगानाह ततः पंचाध्यायाः एषु चिरायुषादियोगः ततः राजयोगाः ततोऽवस्थाविचारः ततोंतर्दायविधिः ततः दायानां फलं सप्तस्वध्यायेषु ततः अंतर्दायास्त्रयोदशाध्यायाः ततः भूपवर्गाणां लक्षणं ततोवशिष्टेषु योगादिषु यद्बलं तदुक्तमिति पूर्वभागेऽशीतिरध्याया उक्तविषयज्ञापकाः क्रमात्समीरिताः कथिता इति पूर्वार्धानुक्रमः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अथोत्तरार्धानुक्रमणिकामाह

## भाषा ।

बारहवें अध्यायसे लेके तेवींस अध्यायतक ( बारह अध्यायमें ) मिश्रफल. पंचांगका फल. कारकादिग्रहोंका फल. बारह भावोंका फल कहे हैं. द्विग्रहादि छः योगके फलके छः अध्याय. अष्टकवर्गका वर्णन. २० अध्यायमें नाभसादियोगोंका वर्णन. अध्यायमें चिरायुष्यका योगविचार उसके अध्याय ५ आगे राजयोगवर्णन फिर अवस्थाविचार. १ अध्यायमें. पीछे अंतर्दायविधि एक अध्यायमें. दायका फल सात अध्यायमें. अंतर्दशाका विचार. १३ अध्यायमें. राजवर्गका लक्षण १ में फिर बाकीके जो अध्याय रहे उसमें योगादिकके विषयमें जो बलाबल कहा है, उसका विचार ऐसा ( ८० ) अध्याय पूर्वभागका विषयानुक्रम कहा ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अब उत्तरभागका अनुक्रम कहते हैं. प्रथमाध्यायमें

[illegible]भागे समीरिताः ॥ कलौ युगे ततः प्रोक्तं प्रथमेऽष्टकव-[illegible]कः ॥ ८ ॥ द्वितीये भावदृग्वीर्यमिष्टकष्टबलं ततः ॥ चतु-र्थे रश्मिसंभूतिरिष्टकष्टं द्विजोत्तम ॥ ९ ॥ लोकयात्रैकदेशं च पंचमे च ततः परम् ॥ भंगं च लोकयात्राणामेकदेशस्य [illegible]ष्टमे ॥ १० ॥ नवमे लोकयात्रा च दशमे दाय एव च ॥ अंतर्दायस्तथाध्याये दायानां विषयस्ततः ॥ ११ ॥ त्र-योदशे तथा भाग्यं कलांशादिफलं द्विज ॥ चतुर्दशेऽब्द-चर्यां च विजानीहि ततः परम् ॥ १२ ॥ अब्दचर्याफलं पश्चान्मासचर्याफलं ततः ॥ दिनचर्या ततः प्रश्नजातकं

## टीका ।

[illegible]विंतिसार्धसप्तभिः । ततः पूर्वार्धकथनानंतरं उत्तरार्धे कलियुगे कलियु-[illegible]विषये यत्प्रोक्तं तस्यानुक्रमो यथा-प्रथमेऽध्यायेष्टकवर्गः द्वितीये भावदृ-[illegible] भावबलं दृष्टिबलं च तृतीयेऽष्टवर्गश्चतुर्थे रश्मिसंभूतिः रश्म्युत्पादितेष्ट-[illegible]लं पंचमे लोकयात्रैकदेशः षष्ठे सप्तमे च तद्भंगः अष्टमे पुनर्लोकयात्रैक-[illegible] नवमे लोकयात्रा दशमे दायः एकादशेऽन्तर्दायः ततः द्वादशाध्याये दा-[illegible] विषयः त्रयोदशाध्याये भाग्यं कलांशादिफलं षोडशांशादिफलं हे [illegible] चतुर्दशेऽब्दचर्या विजानीहि ततः परं तदनंतरं पंचदशाध्याये उक्ता-[illegible]र्यायाः फलं पश्चात् षोडशाध्याये मासचर्याफलं ततः सप्तदशे दिनचर्या [illegible]ष्टादशेऽध्याये प्रश्नजातकं ब्रवीति कथयति इति निश्चयेन पश्चादेको-

## भाषा ।

[illegible]का विचार दूसरेमें भावबल, दृष्टिबलविचार, तीसरे अध्यायमें इष्टकष्टका [illegible] और चौथे अध्यायमें रश्मिकी संभूति, इष्टकष्टबल, पांचवें अध्यायमें लो-[illegible]सुखदुःखविचार, छठे, सातवेंमें उसका भंग, आठवेंमें लोकयात्रा, नवम अ-[illegible] लोकयात्रा, दशवें अध्यायमें दायविचार, ग्यारहवें अध्यायमें अंतर्दायवि-[illegible] बारहवें अध्यायमें दायविषय, तेरहवें अध्यायमें भाग्यविचार, कलांशादिफल, [illegible]दिफल, चौदहवें अध्यायमें वर्षचर्याविचार, पंधरवें अध्यायमें वर्षचर्याफल, [illegible] अध्यायमें मासचर्या, सतरावेंमें दिनचर्या, अठारवें अध्यायमें प्रश्नविचार,

प्रब्रवीति हि ॥ १३ ॥ अध्यायानुक्रमं पश्चाद्विंशे शास्त्रफलं द्विज ॥ एवं होराशताध्यायी सर्वपापप्रणाशिनी॥१४॥युगेषु च चतुर्ष्वेव प्रत्यक्षफलदायिनी॥१५॥ इति श्रीबृ०होरोत्तरभागेऽध्यायानुक्रमवर्णनंनामैकोनविंशोऽध्यायः॥१९॥

होराशास्त्रमिदं सर्वं श्रद्धाविनयसंयुतः ॥ श्रुत्वा गुरुमु-

## टीका ।

नविंशेऽध्यायानुक्रमं अनुक्रमणिका हे द्विज ! विंशे शास्त्रफलं कथितं एवं होराशास्त्रे पूर्वार्धोत्तरार्धवर्तमानशताध्यायी सर्वपापप्रणाशिनी पठतः श्रोतुश्चेतिशेषः । चतुर्ष्वपि युगेषु प्रत्यक्षफलदायिनी परोक्षस्यापि प्रत्यक्षवज्ज्ञानरूपफलदायिनीति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४॥१५॥ एकोनविंशत्यध्याये कृता व्याख्या यथामति ॥ बुद्धिदाता गणेशोऽयं प्रसन्नोऽस्तु सदा मम ॥ १॥ इति श्रीमद्बृहत्पाराशरहोरोत्तरभागे श्रीमदध्यद्ध्यन्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदशादि ग्मण्डलजटाशंकरसूनुज्योतिर्विच्छ्रीधरेण धौरेयोपाभिधश्रीकृष्णसहायेन विरचितायां सुबोधिनीटीकायां अध्यायानुक्रमवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

श्रीगणेशमथो नत्वा विंशे टीकां यथामति ॥ कुर्वे शास्त्रफलं चाऽत्र शास्त्रस्यापि परंपराम् ॥ १ ॥ श्रीमन्महर्षिरस्मिन्विंशाऽध्याये शास्त्रफलं शास्त्रपरंपरां चाह होरेति पंचश्लोकाध्यायेन । तत्राद्यसार्धद्वयेन फलं चाह । इदं मयोक्तं सर्वं होराशास्त्रं श्रद्धाविनयसंयुतः शास्त्रगुरुवचनविश्वासरूपा श्रद्धा

## भाषा ।

उन्नीसवें अध्यायमें ग्रंथानुक्रमणिका, वीसवें अध्यायमें शास्त्रफलादेश, ऐसा यह होराशास्त्र पूर्वार्द्ध उत्तरार्ध सहित सौ १०० अध्यायका जो कोई पठन करे, या श्रवण करे उसके पापनाश करनेवाला चारीयुगमें प्रत्यक्षफलदायक है. उसमें कलियुगमें विशेष करके है ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५॥ इति बृ. भा. टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥

अब शास्त्रका फल और शास्त्रपरंपरा कहते हैं. यह जो होराशास्त्र मैंने कहा उसकूं गुरुमुखसे पढके उसका विचार करना, तो ज्ञान होवेगा, पीछे गुरुशास्त्रके

खादेव बुद्धिमानवलोक्य च ॥ १ ॥ यो जानाति स शास्त्रार्थं सर्वपापैः प्रमुच्यते ॥ श्रावयेद्दर्शयेद्विद्वानन्यो गर्गो द्वि-

टीका।

विनयो गुर्वादिषु लीनत्वं ताभ्यां संयुतः गुरुमुखादेव न स्वयमेव एतच्छास्त्रं श्रुत्वा बुद्धिमान्सन्नवलोक्य स्वयं सम्यग्विचार्य य एतच्छास्त्रार्थं जानाति स गुरुशास्त्रप्रभावेण सर्वज्ञः स्यादेव किं तु फलांतरमपि सर्वपापैः प्रमुच्यते इति । ततोऽधिकारी सन्नन्यान्श्रावयेत् दर्शयेच्च । ननु नक्षत्रसूचकः श्राद्धप्रकरणे मन्वादिभिः सदोषत्वादग्राह्यः श्राद्धे उक्तः अतः अस्य पातशंकेति चेत्सर्वोत्तमगतिमस्य ज्ञातुर्दर्शयति ब्रह्मलोकं स गच्छतीति ॥ १ ॥ २ ॥ नन्वस्य शास्त्रस्य स्वीकाराद्ब्रह्मलोकावाप्तिवचनमर्थवादः वेदपठनवद्विशेषपुण्यदर्शनाभावात्कृतकत्वाच्चेति चेन्नेत्याह वेदेभ्य इत्यर्धकद्वयेन । ब्रह्मा वेदेषु विस्मृतं विशेषेणोक्तं वेदेभ्यः समुद्धृत्यैतदाद्यं [illegible]शं प्रोवाच गर्गायेति शेषः । ननु पराशरकृतस्य कथमाद्यत्वं तदाह [illegible]गमिति । नैवैतदन्यवत्कृतकमितिशंकनीयमितिध्वनिः । ननु इति चे[illegible]वाऽयंवेदस्यावयव इति तत्राह वेदचक्षुषी "ज्योतिषामयनं चक्षुः" [illegible]शक्षोक्तेः वेदनयने सर्वोऽवयवेषु विशेषज्ञानशक्तिमान्नयनाऽवयवः त[illegible]ापन्नत्वाद्विशेषज्ञानोत्पादकमतिश्रेष्ठमिति भावः । तस्मादेतत्पठना[illegible] वेदपठनादिवद्ब्रह्मलोकाप्तफलैकवचनं यथार्थम् नार्थवाद इति दिक् अथास्य परंपरामाह गर्ग इति । इदं शास्त्रं तस्माद्ब्रह्मणोऽवगम्य गर्गः [illegible]मिति शेषः अहमपि तस्माद्गर्गाद्यथा जानामि तथा तच्छास्त्रं आ[illegible]दितोऽन्तपर्यंतं सर्वमेव मया तवोक्तं हीति निश्चयेन इति ॥ ४॥५ ॥ [illegible]रे होराशास्त्रेऽस्मिन्नुत्तरार्धके ॥ यथामति कृता टीका गणेशायाऽ[illegible]म् ॥ १० ॥ आर्षमाद्यमिदं शास्त्रं सुबोधं बहुसंग्रहम् ॥ लुप्तसूतं

भाषा।

[illegible] होवेगा, और पापसे मुक्त होवेगा, और दूसरे सज्जनकूं श्रवण कर[illegible]ना, और इस शास्त्रके सम्यक्ज्ञानसे ब्रह्मलोककूं जाता है ॥ १॥२॥ [illegible]कालमें वेदोंमेसे उद्धार करके यह आद्य ज्योतिःशास्त्र, गर्गमुनीकूं

जोत्तमः॥२॥सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति॥ वे-देभ्यश्च समुद्धृत्य ब्रह्मा प्रोवाच विस्मृतम्॥ ३ ॥ शास्त्रमाद्यं तदेवेदं वेदांगं वेदचक्षुषी॥ गर्गस्तस्मादिदं प्राह मया तस्माद्यथा तथा॥ ४ ॥ तदुक्तं तव मैत्रेय शास्त्रमाद्यंतमेव हि॥ ५ ॥ इति श्रीबृहत्पाराशरहोरायामुत्तरभागे फलश्रुतिकथनं नाम विंशोऽध्यायः॥ २० ॥

## टीका।

समालोक्यैतत्प्रवृत्तिधिया मया॥ २ ॥ भ्रामं भ्रामं बहून्देशान्वर्षैः कतिपयैरयम्॥ यतो यतो यथा लब्धो यावान्यावांस्ततस्ततः॥ ३ ॥ तथा तावन्समादाय ग्रंथः संपादितो मया॥ अकारि टीकाऽपि बुधानाश्रित्येह यथामति॥ ४ ॥ अनेकपुस्तकालाभात्प्रमादाल्लेखकस्य च॥ अशुद्धे पुस्तकेऽप्यस्मिन्यावद्बुद्धिबलोदयम्॥ ५ ॥ कृत्वा शोधं कृता टीका न्यूनमत्राऽधिकं च यत्॥ क्षमाप्य सर्वं विद्वांसः कृपया शोधयंत्वपि॥ ६ ॥ इति श्रीबृहत्पाराशरहोराशास्त्रे उत्तरार्धे श्रीमद्ध्यङ्गन्वयवेदशास्त्राद्यनवद्यविद्याविद्योतितदिग्दिङ्मंडलजटाशंकरसूनुना ज्योतिर्विच्छ्रीधरेण धौरेयोपाभिधश्रीकृष्णसहायेन विरचितायां सुबोधिनीटीकायां फलश्रुतिकथनं नाम विंशतितमोऽध्यायः॥ २० ॥

## भाषा।

कह्या. यह शास्त्र वेदका नेत्ररूपी अंग है॥ ३ ॥ ऐसा यह शास्त्र गर्गमुनिनें ब्रह्माजीके पाससे पढके पीछे मेरेकूं कह्या. हे मैत्रेय! मैने यह आद्यंत शास्त्र तुमारेकूं कह्या॥ ४ ॥ ५ ॥

इति श्रीबृहत्पाराशरहोराशास्त्रे उत्तरार्धे श्रीमद्ध्यङ्गन्वयवे॰ जटाशंकर सुनुज्योतिर्विच्छ्रीधरेण ज्योतिर्विद्वेंकटरामतनयहरिकृष्णसहायेन विरचितायां भाषाटीकायां फलश्रुतिकथनं नाम विंशतितमोऽध्यायः॥ २० ॥